# श्रीमद्भागवतम् ।

## एकादशस्कन्धः ।

### प्रथमोऽध्यायः ।

॥ ॐ नमो भगवते वासुदेवाय ॥

श्रीबादरायणिरुवाच ।

कृत्वा दैत्यवधं कृष्णः सरामो यदुभिर्वृतः ।
भुवोऽवतारयद्भारं (१) जविष्ठं जनयन् कलिम् ॥ १ ॥

ये कोपिताः सुबहु पाण्डुसुताः सपत्नैर्दुर्द्यूतहेलनकचग्रहणादिभिस्तान् ।
कृत्वा निमित्तमितरेतरतः समेतान् हत्वा (२) नृपान्निरहरत्क्षितिभारमीशः ॥ २ ॥

भूभारराजपृतना यदुभिर्निरस्य गुप्तैः स्वबाहुभिरचिन्तयदप्रमेयः ।
मन्येऽवनेर्ननु (३) गतोऽप्यगतं हि भारं यद्यादवं कुलमहो अविषह्यमास्ते ॥ ३ ॥

नैवान्यतः परिभवोऽस्य भवेत्कथञ्चिन्मत्संश्रयस्य विभवोन्नहनस्य नित्यम् ।
अन्तः कलिं यदुकुलस्य विधाय (४) वेणुस्तम्बस्य वह्निमिव शान्तिमुपैमि धाम ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।
श्रीकृष्णाय नमः ॥
श्रीगणेशाय नमः ॥

ॐ नमः श्रीपरमहंसास्वादितचरणकमलचिन्मकरन्दाय भक्तजनमानसनिवासाय श्रीरामचन्द्राय ॥

विजयन्ते परानन्दकृष्णपादरजः स्रजः ।
या धृता मूर्ध्नि जायन्ते महेन्द्रादिमहः स्रजः ॥
एकैकत्रिंशताऽध्यायैर्मुक्तिरेकादशे ततः ।
जायन्तेयतिहासाद्यैः समासव्यासरूपतः ॥
नारदो वसुदेवाय समासेन न्यवर्णयत् ।
भगवानुद्धवायाथ विस्तरेणोपपत्तिभिः ॥
तत्र तु प्रथमेऽध्याये यदुवंशस्य सङ्क्षयः ।
उपक्षिप्तो विरागाय मौसलव्यपदेशतः ॥

प्रवृत्तितः परानन्दकृष्णक्रीडाऽनुवर्णिता ।
तन्निवृत्त्या परानन्दपदारोहोऽनुवर्ण्यते ॥

एवं तावद्दशमस्कन्धे भूभारावतारणाय निजविभूतिविभूषितयदुवंशस्य यदुवंशावतारितसकलसुरांशस्य भगवतः श्रीकृष्णस्य तदुचितप्रवृत्तिविलक्षणेन तदुद्भवकर्मपरम्परया परेषामानन्दकारणी क्रीडा निरूपिता, अथेदानीमपरिमितयोगमायावैभवस्य भक्तानामात्मतत्त्वोपदेशपूर्वकं क्रीडार्थं भूतलेऽवतारितानां चाधिकारिणां सुरांशानां मौसलापदेशेन तत्तदधिकारपदप्रापणपूर्वकं च ब्रह्माद्यनुग्रहाय निजपदारोहो निरूप्यते; तत्र कुरुवंशयायामभिवरकस्य वसुदेवस्य "कर्मणा कर्मनिर्हारो यथा स्यात्तदुच्यताम्" इत्येवं कर्मयोगं पृष्टवतो नारदादिभिः कर्मयोगो निरूपितः—

"कर्मणा कर्मनिर्हार एष साधु निरूपितः ।
यच्छ्रद्धयाप्तवित्तेन शुक्लेनेज्येत पूरुषः" ॥

---

(१) वर्षिष्ठम् । (२) परान् । (३) गतोऽप्यगतोऽपि भारः । (४) वेणुस्तम्बस्यतीमि विज० पाठाः ।

### श्रीधरस्वामिकृतभावार्थदीपिका ।

इत्यादिना तेन च विशुद्धसत्त्वस्य श्रीकृष्णरामौ परमेश्वरत्वे ज्ञातवतः पञ्चाशीतितमाध्याये श्रीकृष्णेनात्मतत्त्वमुपदिष्टम्—

"वचो वः समवेतार्थं तातैतदुपमन्महे ।
यन्नः पुत्रान् समुद्दिश्य तत्त्वग्राम उदाहृतः" ॥

इत्यादिना तच्च विषयभोगातिशयेन पुनस्तिरोहितमासीत्तदेव इदानीं नारदमुखेन प्रथमं पञ्चाध्याय्या निरूप्यते; तत्र प्रथमेऽध्याये वैराग्योत्पादनाय यदुकुलस्य ब्रह्मशापापदेशेनात्युन्नतविषयसुखानामप्यनित्यता प्रतिपाद्यते, ततश्चतुर्भिर्निमिजायन्तेयसम्वादेन सपरिकरं परमतत्त्वनिरूपणम् । ततः षष्ठे भगवदुद्धवसम्वादप्रस्तावः ततस्त्रयोविंशत्या उद्धवं प्रति भगवत्तत्त्वनिरूपणम् । ततो द्वाभ्यां मौसलक्रीडेत्येवमेकत्रिंशताऽध्यायैरेकादशस्कन्धस्य प्रवृत्तिः तस्य च यथामति व्याख्यानमारभ्यते, तत्र मौसलप्रसङ्गार्थं पूर्वस्कन्धार्थमनुवदति श्लोकद्वयेन, कृत्वेति । अवतारयदवातारयदित्यडागमो द्रष्टव्यः जविष्ठं वेगवत्तरमतिशीघ्रम् हिंसापर्यवसायिनमित्यर्थः । कलिं कलहम् ॥ १ ॥

एतद्विवृणोति—ये कोपिता इति । सपत्नैर्दुर्योधनादिभिः कोपिताः कोपं कारिताः सुबहु यथा भवति तथा बहुवारानित्यर्थः । तदेवाऽऽह—दुर्द्यूतहेलनकचग्रहणादिभिरिति । दुर्द्यूतं कपटद्यूतम् हेलनमवज्ञा कचग्रहणं दुःशासनेन द्रौपद्याः केशाकर्षणम् एतान्यादिर्येषां गरदानजतुगृहदाहादीनां तैः कृत्वा ये कोपितास्तान् पाण्डुसुतान्निमित्तं कृत्वा इतरेतरत उभयोः पक्षयोः समेतान् मिलितान्नृपान् हत्वा क्षितेर्भारं निरहरज्जहार यद्वा, ये कोपिताः तैश्च कोपितास्तान्निरन्तरतः परस्परं निमित्तं कृत्वेत्यन्वयः । ये तावत्प्रकटदैत्याः पूतनादयस्तान्स्वयमेव हतवान् ये तु दैत्या राजन्यच्छद्मना स्थितास्तान्परस्परं निमित्तं विधाय हत्वा भूभारमपाकृतवानित्यर्थः ॥ २ ॥

अपि च भूभारेत्यादि अन्याश्च भुवो भारभूता राजपृतनाः येषां पृतनाः सेनाः राज्ञः नरास्तेषां पृतनाश्चेति वा स्वबाहुभिर्गुप्तैः परिरक्षितैर्यदुभिर्यादवकुलेन निरस्य हत्वा बाहुभिरिति बहुवचनं चतुर्भुजाभिप्रायेण नन्वेवं कृष्णश्चिकीर्षतीति ज्ञात्वा कथं तस्मै यादवाः न क्रुध्यन्ति स्म तत्राऽऽह—अप्रमेयः प्रमातुमशक्यः । चिन्तामाह—मन्य इति । नन्विति वितर्के भवनेर्भूमेर्भारो यद्यपि लोकप्रतीत्या गतस्तथाऽप्यहमगतमेव मन्ये हि निश्चितम् यद्यस्माद्विपक्षं सोढुमशक्यं यादवं कुलमित्यनेनैव स्वपक्षत्वात्स्वयं हननमनुचितमिति सूचितम् ॥ ३ ॥

तर्हीदमप्यन्यैर्नाश्यतां तत्राऽऽह—नैवेति । अन्यतो देवादिभ्योऽपि यादवकुलस्य परिभवादिरपकारो न भवेत् कुतः मत्संश्रयस्य मां संश्रयत इति मत्संश्रयं कुलं तस्य । किञ्च, नित्यं विभवोद्धतस्य विभवैर्गजतुरगादिभिरुच्छृङ्खलस्य । यद्वा, तर्हीदं किमिति संहर्तव्यमित्यत्राऽऽह—विभवोद्धतस्येति । तस्मादेवं करिष्यामीत्याह—अन्तःकलिमिति । शान्तिमुपशममुपैमि "वर्तमानसामीप्ये वर्तमानवद्वा" (३।३।१३१) उपैष्यामि तदनन्तरं धाम च वैकुण्ठाख्यमुपैष्यामीत्यर्थः ॥ ४ ॥

---

### श्रीराधारमणदासगोस्वामिकृतदीपिकादीपिनी टिप्पणी ।

श्री श्रीराधारमणो जयति ।

श्रीचैतन्यं प्रपद्येऽहं साद्वैतं च सनित्यकम् ।
श्रीमद्गोपालभट्टञ्च षट्सन्दर्भप्रकाशकम् ॥
श्रीमद्भागवतं वन्दे सर्वशास्त्रप्रकाशकम् ।
तद्व्याख्यातॄन् गुरून् वन्दे श्रीधरस्वामिपादकान् ॥
गोस्वामि पितरं वन्दे श्रीगोवर्द्धनलालकम् ।
किशोरीमातरं वन्दे वृषभानुपुराङ्गनाम् ॥
पितुश्च पितरं वन्दे श्रीमज्जीवनलालकम् ।
मन्त्रराजोपदेशेन येन निस्तारितोऽस्म्यहम् ॥
पितामहीं प्रपद्येऽहं श्रीकृष्णकुवराभिधाम् ।
गीतगोविन्दकाव्यं हि यस्याः कण्ठे विराजते ॥

अथ भगवद्वाक्यत्वेन परमप्रामाण्यापन्नमेकादशस्कन्धं व्याकुर्वन् श्रीश्रीधरनामा यतीन्द्रः स्वोपास्यपादकमलस्य श्रीरघुनन्दनस्य प्रणतिलक्षणं मङ्गलं प्रत्यूहनिकरनिर्मूलकं शिष्यशिक्षार्थं निबध्नाति—श्रीं नम इति । श्रिया प्रेमसम्पत्त्या युक्ता ये भागवतपरमहंसास्तैरास्वादितश्चरणकमलयोश्चिद्रूपो मकरन्दो यस्य तस्मै चिदानन्दापरपर्यायमनुकूलज्ञानमेव भक्तजनानां मानसमेव निवासो गृहं यस्य तस्मै श्रीरामाय नमः । श्रीभागवते परमप्रतिपाद्यस्य श्रीकृष्णस्य पादरजःसौभाग्यं वर्णयति—विजयन्त इति । "सच्चिदानन्दरूपाय कृष्णाय" इति श्रुतेः । परानन्दविग्रहो रूपं यः श्रीकृष्णस्तस्य पादरजसां सम्बन्धिन्यो याः स्रजो मालाः श्रेण्यो वा ता विजयन्ते सर्वोत्कर्षेण वर्तन्ते, कीदृश्यः ? याः स्रग्रूपाः स्रजः महेन्द्रादिभिर्मूर्ध्नि धृताः सत्यस्तेषां महेन्द्रादीनां महसामुत्सवानां स्रजः समूहाः जायन्ते तेऽप्यस्तत्तत्पादोत्सवान् वहन्तीत्यर्थः । "मह उद्धव उत्सवः" इत्यमरः । पक्षे परानन्दरूपनामा स्वगुरुरेव कृष्णस्तस्य अन्यत् सर्वं पूर्ववत् । अथैकादशार्थं सामस्त्येन वर्णयति—उक्तेति । ततः प्राथमिकक्रममनुसृत्य दशमे दृष्टे भूभुङ्निरोधपर्यालानन्तरम् एकादशे एकत्रिंशताध्यायैः शुकेन मुक्तिः समाम्नायस्वरूपतः सङ्क्षेपविस्तारप्रकारेणोक्ता वर्णिता कैश्चैः जायन्तेयाः जयन्तीनन्दनाः ये नव योगेश्वरास्तेषां च इतिहासः पुरावृत्तं स आद्यो येषां तैरितिहासैर्बहुरूपैः सङ्ग्रहवाक्यमुक्त्वा विवृतिवाक्यमाह—नारद इति । समासेन सङ्क्षेपेण मुक्तिं व्यवर्णयत् अथ नारदवर्णनानन्तरम् उपपत्तिसंयुक्ताभिः कथैकत्रिंशदध्यायमध्ये यः प्रथमोऽध्यायस्तत्र तु उपक्षिप्तः यदुपितुमारणः विरागाय विरागं जनयितुं प्रवृत्तिः मुनिसमागमानुकरणं कृत्वा परानन्दविग्रहस्य कृष्णस्य क्रीडा यथाऽनुवर्णिता इदानीमेकादशे कामान् निषेव्य द्वारवत्यामसक्तः साङ्ख्यमाश्रितः इत्युक्तेस्तस्याः प्रवृत्तेः सकाशान्निवृत्त्या परमानन्दपदे द्वारकायाम् अप्रकटप्रकाशे कृष्णस्यावस्थानं निरूप्यते शुकेनेति शेषः । एवं श्लोकैर्वर्णयित्वा प्रथमश्लोकेन तमेवार्थमाह एतामिति । निजविभूतिभिरैश्वर्यादिभिः विभूषितोऽलङ्कृतो यदुवंशो येन तस्य तत्र हेतुः यदुवंशोऽतीति यदुवंशेऽवतारिताः सकलसुरांशाः येन तस्य एतेन सुरांशोऽपि यदुवंशस्य पृथक्त्वं व्यञ्जितं तदुक्तं पाद्मे कृष्णेन सत्यभामां प्रति "एते हि यादवाः सर्वे मद्गणा एव भामिनि । मत्तुल्यगुणशीलाश्च मत्तुल्याचारवादिनः"

श्रीराधारमणदासगोस्वामिकृतदीपिकादीपिनीटिप्पणी ।

इति तदुचितप्रवृत्तिविडम्बनेन यदुवंशोचितप्रवृत्त्यनुकरणेन तच्छ्रुत्वगोऽसि तस्याः क्रीडायाः अवगाहपरायां श्रीकृष्णस्य तदुचितप्रवृत्तिविडम्बनेन परेषां ब्रह्मादीनामानन्दकारिणी क्रीडा दशमस्कन्धे श्रीशुकेन निरूपिता इत्यन्वयः तदुक्तं दशमे ।

"प्रपञ्चं निष्प्रपञ्चोऽपि विडम्बयसि भूतले ।
प्रपन्नजनतानन्दसन्दोहं प्रथितुं प्रभो" । इति.

अथ दशमस्कन्धवर्णनानन्तरम् उपरमितेति उपरमितम् अन्तर्धापितं योगमायायाः स्वाचिन्त्यशक्तेर्वैभवं येन तस्य भगवतः निजपुरे द्वारकाख्याप्रकटप्रकाशे आरोहः शुकेन निरूप्यते, कथम्? उद्धवोपलक्षितभक्तानामात्मतत्त्वोपदेशपूर्वकं यथा स्यात् तथा एवं क्रियार्थमित्यादिकमपि क्रियाविशेषणं तत्र सामान्यतस्तात्पर्यनिर्णये सति विशेषतः पूर्वस्कन्धेन प्रसङ्गसङ्गतिमाह—कृतवानिति । तेन च कर्मयोगेन तत्त्वात्मतत्त्वं तत्र पञ्चाध्याय्यां मध्ये ततः प्रथमाध्यायानन्तरं सपरिकरोऽसि ससायकेनेत्यर्थः । ततः पञ्चाध्यायानन्तरं पुनस्ततः षष्ठाध्यायानन्तरं ततः ऊनत्रिंशदध्यायानन्तरं प्रवृत्तिः प्रचारः तस्य च एकादशस्कन्धस्य तत्र आरम्भे म.य.कृतिः आरम्भः ॥ १ ॥

एतद्धिंसापर्यवसानेन भारावतरणं तदेवं बहुवारप्रकोपनमेव पूर्वार्थे पदस्यार्थवाचकतेनास्योभयपक्षवाचकत्वं लाक्षणिकं किञ्च द्वयोरपि निमित्तत्वे वाच्ये पाण्डवानामेव तत्प्रोक्तमित्यरुचौ यद्वेति नैमित्तिकसंहारे पूतनादौ व्यासचारमाशङ्क्य व्यञ्जनया तदपि संगृह्णन् व्याचष्टे एतावदिति अत एवेत्यर्थं इत्युक्तम् ॥ २ ॥

चतुर्भुजाभिप्रायेण गोपमध्ये चतुर्भुजत्वप्रकाशनाभिप्रायेणेत्यर्थः । एवं सर्वसंहारेऽस्मत्संहारमपि चिकीर्षति अत्र तेषामधार्मिकत्वाभावेन भूभारत्वं नाशङ्क्यम् 'ब्रह्मण्यानां वदान्यानां नित्यं वृद्धोपसेविनाम्' इत्यादौ "शय्यासनाटनालापक्रीडास्नानाशनादिषु" इत्यादौ च तेषां परमैकान्तित्वप्रसिद्धेः न च व्यक्तिबाहुल्यमात्रं भारत्वप्रयोजकमिति वाच्यम् अनन्तानां पर्वतादीनां सत्त्वेऽपि भाराप्रसिद्धेः तस्माद्भगवदन्तर्धाने तद्वियोगेनातिक्षोभाकुलमनस्तया लुठद्भिस्तैः पृथिवी चूर्णिता स्यादिति भारत्वमारोपितं तत एव तेषां प्रथममन्तर्धापनमिति ज्ञेयम् ॥ ३ ॥

यद्यनिष्टा तर्हि इदं यादवकुलं पूर्वार्थे किञ्चेत्युक्त्वा विभवत्वादिविशेषणद्वय पूर्णत्वपर्यवसिता प्रतीतोऽतो वक्ष्यति तस्मादस्यैवयोग्यतात्समयात् तदनन्तरं शान्तिमाप्स्यत्यनन्तरम् उपैमीत्यायुक्तिचकाराध्याहारगौरवादित्यर्थं इत्युक्तम् ॥ ४ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

श्रीमते रामानुजाय नमः ॥

कालिः कलहः ॥ १—२ ॥

विमर्शासहनस्य विमर्शासद्रूपस्य शान्तम् ऊर्मिषट्करहितम् ॥ ४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ॥

श्रीमते रामानुजाय नमः ॥

इत्थं ब्रह्मादिभिरभ्यर्थितस्य भूभारापजिहीर्षयाऽवतीर्णस्य भगवतः सा(ति)दैवमानुषाणि चेष्टितानि भूभारापहारधर्मसंस्थापनसाधुपरित्राणादिगर्भाणि बाल्ययौवनक्रीडाद्यात्मकान्यनुवर्णितानि अथ भूभारावशेष(भूत)यदुकुलमन्त्रिद्रोहियोर्निदानविप्रशापापनोदनव्याजेन प्रभासं प्रस्थितवतः स्वकुलगुप्तयामसक्ततत्त्वोपदेशस्वपदारोहणात्मकं चेष्टितमनुवर्णयत्येकादशस्कन्धेन—कृत्वा दैत्यवधं कृष्णा इत्यादिना । तत्र तावद्भूसवार्तिर्भ्यमाणयोः मङ्गलसूचनाय वृत्तमनुवदति श्लोकद्वयेन—कृतवानिति । दैत्यवधं पूतनाशकटयमलार्जुनधेनुकारिष्टचाणूरतोसलकंसादिदैत्यवधं कृत्वा सरामः इत्यनेन कांश्चिद्रामेण घातितवानित्यभिप्रेतम् एवं यदुभिर्वृत इत्यनेनापि जविष्ठं बलवत्तमम् आशु हिंसापर्यवसायिनमित्यर्थः । तं कलिं कलहजनयन् कुरुपाण्डवादिष्वतिशेषः । तेष्वपि कलहापादनेनाधर्मिष्ठान् घातितवानिति भावः । इत्थं भुवो भारमवतारयत् भगवान् भारं अवतारयामासेत्यर्थः ॥ १ ॥

तदेव प्रपञ्चयति—ये कोपिता इति । सुबहु बहुवारं यथा तथा धूर्तादिभिः साधनैः सपत्नैर्दुर्योधनादिभिः कर्तृभिर्ये पाण्डुपुत्राः [सुताः] कोपिताः कोपं प्रापिताः तान् पाण्डुसुतान् निमित्तं द्वारं कृत्वा "मयैवैते निहताः पूर्वमेव निमित्तमात्रं भव सव्यसाचिन् !" इति भगवदुक्तेरिति भावः । समुद्रितान् नृपानिकरेसरतः अन्यान्येनिमित्तभूतैः हत्वा इत्थम् ईशो भगवान् क्षितेर्भारं निरहरत् अहारि तत्र द्युतेन कपटद्यूतं हेलनमवज्ञा कचग्रहणं दुःशासनेन द्रौपद्याः केशग्रहणम् आदिशब्देन गरलदानजतुगृहदाहादिसङ्ग्रहः ॥ २ ॥

एवं वृत्तमनूद्य तेन सह वर्तिष्यमाणस्य सन्दर्भं वदन् वर्तिष्यमाणप्रश्नावसरं प्रवा[प्रदर्श]नाय संगृह्णाति—भूभारराजेति पञ्चभिः श्लोकैः । स्वस्य बाहुभिर्गुप्तैः रक्षितैर्यदुभिर्निमित्तभूतैर्भुवो भारभूतानां राजन्यानां पृतनाः सेनाः निरस्य हत्वा स्वबाहुशालिना बहुधान स्वासाधारणचतुर्भुजत्वाभिप्रायकम् अप्रमेयः अपरिच्छिन्नस्वरूपस्वभावः अनवगतस्वरूपस्वभावो वा भगवान् चिन्तयत्, चिन्ताप्रकारमेवाह— मन्ये इत्याविना उपैति यादवेन । नन्विति वितर्के अवनेर्भूमेर्भारो गतो इत्येव मन्ये भारैकदेशस्य गतत्वेऽपि कार्त्स्न्येनागतत्वात् इत्येव मन्ये मम निःशेषभूभारस्वरूपायापतीर्यास्थावीति भावः । अगतत्वं कुत इत्यत आह—यद्यस्माद्धि असह्यं सोढुमशक्यम् यदुकुलमवशिष्टं शेषः । यादवं कुलमास्ते तस्मादगतः इति भावः ॥ ३ ॥

तत्रापि तदपि केनचिदपि किरिष्यत इत्यत आह—नैवेति । अस्य यादवकुलस्य ततः पुरुषान्तरादिभ्यः कथञ्चिदपि न अपमानकत्वं न भवेच्च पराजयोऽपि न कथञ्चिद्भवेदित्यभिप्रायेण परिभव इत्युक्तम्, तत्र हेतुं वदन् विशिनष्टि—मत्संश्रयस्याऽहमेव

एवं व्यवसितो राजन् ! सत्यसङ्कल्प ईश्वरः ।
शापव्याजेन विप्राणां संजह्रे स्वकुलं विभुः ॥ ५ ॥
स्वमूर्त्या लोकलावण्यनिर्मुक्त्या लोचनं नृणाम् ।
गीर्भिस्ताः स्मरतां चित्तं पदैस्तानीक्षतां क्रियाः ॥ ६ ॥
आच्छिद्य कीर्तिं सुश्लोकां (१)वितत्य ह्यञ्जसा नु कौ ।
तमोऽनया तरिष्यन्तीत्यगात्स्वं पदमीश्वरः ॥ ७ ॥

राजोवाच ।

ब्रह्मण्यानां वदान्यानां नित्यं वृद्धोपसेविनाम् ।
विप्रशापः कथमभूद्वृष्णीनां कृष्णचेतसाम् ॥ ८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

इत्थमुनिमेषणावीनान्तैरुपायैः सुहृद् ये पाण्डुसुताः दुर्योधन-शकुन्युलूकदुःशासनजयद्रथादिभिः सपत्नैः कोपिताः तान् निमित्तं कृत्वा समेतान् नृपानितरेतरतो हत्वा इशः क्षितिभारं निरहरत् जहारे ईश इति पदं भगवतः स्वातन्त्र्यं सर्वेश्वरत्वं तदा-यत्तत्वं च द्योतयति ॥ २ ॥

क्षितिभारनिर्हरणानन्तरं किं कृतवानित्यपेक्षायामाह—भूभारेति । अप्रमेयः साकल्येन प्रमातुमशक्यः अनन्तस्वरूपगुण इत्यर्थः । स्वबाहुभिर्गुप्तैः परिरक्षितैः यदुभिः भूभारभूतानां राज्ञां पृतनाः निरस्य सुराशयैर्दैवैः असुरांशानां चात्रियाणां समूहाग्विनाशयित्वेत्यर्थः । अचिन्तयत् चिन्तामिवाह—मन्ये इति, अवनिभारः गत इत्यहं मन्ये । ननु शङ्कायां यतः अहो यादवं कुलमविषह्यमास्ते अतो अवनिभारमगतमपि मन्ये अवनौ यदुकुलं प्रवरं दृष्ट्वा तद्द्वेषवशात्पुनरप्यवनिभारभूता असुरा अपि तेपुरितिभावः । अतो यादवं कुलं भूमेर्भूयोऽप्यसुरापतनशङ्काजनकत्वात् कृतकार्यस्याप्यसह्यत्वमिति ॥ ३ ॥

तत्संहारचिन्ताप्रकारमप्याह—नेति । अस्य यदुकुलस्य अन्यतोऽन्येभ्यः प्रतिभटेभ्यः किञ्चिदपि परिभवस्तिरस्कारः पराजयो नैव भवेत् तत्र हेतुमाह—विभवोन्नहनस्य विभवैर्दिव्यशस्त्रास्त्रादिभिः उन्नहनस्य समुन्नद्धस्य तत्रापि हेतुः अहम् स्वकीयतया स्वयमपि हन्तुमयुक्तमिति च सूचयन् यदुकुलं विशिनष्टि—मत्संश्रयस्येति । मां संश्रयते इति मत्संश्रयं तस्य अतोऽस्यमुपायं इत्याह—अन्तः कलिमिति । वेणुस्तम्बस्य अन्तर्मध्ये वह्निं तत्राश्रहेतुमिव यदुकुलस्य मध्ये कलिं कलहं तत्संहारहेतुं विधाय शान्तिं प्रशमं "शान्तिः प्रशमसङ्गज" इति यादवः । उपैमीति वर्तमान-सामीप्ये वर्तमानवन्निर्देशः । उपैष्यामीत्यर्थः । तदनन्तरं धाम निजलोकमुपैष्यामीत्यर्थः । यद्वा, धाम तम् मद्रूपं आमोति वोच्यम् ॥ ४ ॥

भाषा टीका ।

श्रीरुक्मिणीदेवीसमेतभगवद्वारकाधीशाय नमः ।

यो वदान्त रहस्यस्य वक्ता वेद्यः स्वयं हरिः ।
तमुद्धवोपदेष्टारं रुक्मिणीशमहं भजे ॥
एकादशस्कन्धभाववोधिनीं भक्ततोषिणीम् ।
भाषां भागवताचार्यः कुरुते हि यथामति ॥

श्रीबादरायणिरुवाच ।

श्रीशुकदेव जी बोले, कि—हे राजन् ! यदु लोग और बलदेव जी सहित श्रीकृष्णचन्द्र ने दैत्यों को मारकर भूमि के भार को उतारा, परन्तु ऐसा उपाय रचा कि—जिसमें थोड़े ही काल में बड़ा हिंसा पर्यवसायी कलह पैदा हो ॥ १ ॥

क्योंकि ? वैरी दुर्योधनादिकों ने कपट की द्यूत क्रीडा, तिरस्कार, द्रौपदी के केश ग्रहण, इत्यादि दुष्ट चेष्टाओं से जिन पांडवों को कुपित किये रहे । उन्हीं पांडवों को निमित्त बनाकर चारों तरफ से परस्पर में इकट्ठे होनेवाले राजाओं को मारकर श्रीकृष्णचन्द्र परमात्मा ने भूमि के भार को दूर किया ॥ २ ॥

सो किस प्रकार ? कि—भूमि के भार रूप राजा लोगों की सेनाओं को अपने बाहु बल से रक्षित जो यदु लोग तिन के द्वारा नष्ट कराकर, अप्रमेय श्रीकृष्ण महाराज विचार करते हुए, कि—अब मैं ऐसा समुझता हूं कि—भूमि का भार दूर होगया तो भी नहीं दूर होने के ही सदृश है क्योंकि ? यह बड़ा असह्य यदुकुल तो बना ही है ॥ ३ ॥

और सदा वैभव से उच्छृंखल और मेरे आश्रय रहने वाले इस यदुकुल का अन्य किसी से पराभव नहीं होसक्ता है, इस लिये इसी कुलके बीच में कलह कराकर जैसे कि वेणुस्तम्ब (तृणविशेष) में अग्नि को डाल कर नष्ट कर देते हैं इसी प्रकार इस कुल का संहार कर मैं अपने धाम को प्राप्त होऊं ॥ ४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

व्यवसितः कृतनिश्चयः संजह्रे उपसंहृतवान् ॥ ५ ॥

तदेवमवतारप्रयोजनं सर्वं सम्पाद्य स्वं लोकं जगामेत्याह

(१) वितत्यव्यञ्जसेति विज० पा० ।

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

विप्राणां शापव्याजेनेति ब्राह्मणमाहात्म्यदर्शनमप्यत्र प्रयोजनमिति भावः । सञ्जह्रे पूर्वोक्तस्वपदं सामस्त्येन नीतवान् प्रवेशितवानित्यर्थः ॥ ५ ॥

तदिदं यत्पदं तदेव श्रीदशमस्कन्धोक्तलीला महाप्र(भ)क्तिप्राप्तिपूर्वकं फलमित्याह—स्वमूर्त्येति युग्मकेन । तस्मात्तद्ध्यानमयः संसारः तरिष्यन्ति तीर्त्वा तत्पदमप्राप्स्यन्तीत्यर्थः । तदेवं यदूनामप्येवमवस्थाचेत्तर्हि सुतरां यादवानामस्माविति भूभारेऽत्र दर्शित एव सिद्धान्तः स्वस्थानं ॥ ६ ॥ ७ ॥

अथ यो विप्रशापव्याजः कृतः स एव न सम्भवतीति शौनकः सम्भावितवाह—ब्रह्मण्यानामिति विप्राणां विदुषां तेषां श्रीभगवदात्मीयजनपरिभवदोषमपि जानतां तेषां शापः कथमभूदित्यर्थः । तत्रात्मीयत्वमेवाह—वृष्णीनां कृष्णचेतसामिति । तच्छापाप्रभुत्वेऽपि हेतुरयम् ॥ ८ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

एवमेव व्यवसितं मनोनिश्चयो यस्य सः शापव्याजेन विप्राणामिति ब्राह्मणमाहात्म्यप्रख्यापनमप्येकमेव प्रयोजनमिति भावः ॥ ५ ॥

तदेव स्वाविर्भावप्रयोजनं सर्वं सम्पाद्यान्तर्धानमाह, लोकेभ्यो लावण्यस्य निर्मुक्तस्त्यागो दानं यतस्तया मूर्त्या पश्यतां लोचनमाच्छिद्येति ततोऽन्यस्यावलोकने लोचनस्याप्रवृत्तेर्लोचनेन्द्रियमपहृत्येत्यर्थः । तथा स्वगीर्भिस्तां गिर आच्छिद्येति वागिन्द्रियापहार उक्तः वागिन्द्रियराहित्यानां च कर्णेन्द्रियाभावदर्शनात् गीर्भिः कर्णेन्द्रियं वागिन्द्रियं चापहृत्येत्यर्थः । तथा स्मरतां चित्तम् आच्छिद्य तथैव पदैश्चरणचिन्हैस्तानि ईक्षतामीक्षमाणानां अन्यतो गमनादिकाः क्रियाश्चाच्छिद्याकृष्य गृहीत्वा अगात् (अगमत्) कृष्णोऽवतीर्य नृणां चक्षुरादिसर्वस्वं हृत्वा ताननन्धमूकबधिरोन्मत्तजडानेवाकरोदित्यतः कस्त दयालुं वदेन्महाचौर एव स इति व्याजस्तुतिः । वस्तुतस्तु वृन्दायापि सुहृत्य मुक्तिर्दत्तौ तद्व्यप्यस्तु स्वसौन्दर्याद्विलावण्यसिन्धौ निमज्य प्रेमाणमेव दत्तवानित्यतो निरुपाधिदयालुर्नास्ति कोपीति भावः । किञ्च शोभनाः श्लोकाः कवीनां यत्र तां वितत्य विस्तार्य अतः परं क्षौ पृथिव्यां जनिष्यमाणा जनाः तमः संसारसमुद्रम् अनया नौकयैव सुखेन तरिष्यन्तीति मत्वैवागादिति मविष्यज्जनेष्वपि ताविती दयेति भावः । स्वपदं स्वीयं व्यवसायम् अगात् "पदं व्यवसितित्राणस्थानलक्ष्माङ्घ्रिवस्तुषु" इत्यमरः । स्वपादपद्मस्पर्शान्ते सर्वस्मिन्नेव स्वीयचिकीर्षिते निष्पन्ने सति साम्प्रतं प्रापञ्चिकलोकादृश्यो भविष्यामीत्युपलक्षितो यः स्वव्यवसायस्तं प्राप्तेत्यर्थः । ननु सर्वथैव स्वीयं पदं प्रसिद्धवैकुण्ठम् अगादिति व्याख्यायताम् स्वस्य तस्य द्वारकादिधामस्वपि नित्यविहारित्वस्य पूर्वस्कन्धान्ते व्याख्यातत्वादेतत्स्कन्धान्ते च श्रुतिस्मृत्यादिप्रमाणतो व्याख्यास्यमानत्वाच्च तृतीयादावुद्धवोक्तौ च कृष्णद्युमणि निम्लोच इत्यत्राजोऽपि जातो भगवान् यथाग्निरित्यत्र च द्युमणयाविरुद्धत्वेन तस्य द्वारकादिस्वधामत्यागासम्भवस्य दृष्टीकृतत्वाच्च ॥ ६ ॥ ७ ॥

[illegible]

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एवमुक्तप्रकारेण व्यवसितः कृतनिश्चयः सत्यसङ्कल्पः विप्राणां शापव्याजेन शापार्थं विप्रप्रेरणे सामर्थ्यं द्योतयति, विभुः सर्वगः ईश्वरः सर्वनियन्ता स्वकुलं सञ्जह्रे उपसंहृतवान् ॥ ५ ॥

स्वाविर्भावप्रयोजनं विधाय निजलोकं गतवानित्याह, स्वमूर्त्येति श्लोकद्वयेन लोकनयनेभ्यो लोकेभ्यो लावण्यस्तेन्दर्यस्य निर्मुक्तिर्वृष्टिर्यस्याः सकाशात्तया स्वीयया स्वासाधारणया मूर्त्या "वदात्मको भगवांस्तदात्मिका व्यक्तिः" इत्यादिश्रुतिप्रसिद्धया तामीक्षमाणानां नृणां लोचनं लोचनानि स्वासाधारणाभिः गीर्भिः तास्तदीयाः गिरः स्मरतां चित्तं च पदैस्तत्र तत्र विलिखितैः ईक्षतां क्रियाः गमनादिकाः ॥ ६ ॥

आच्छिद्य आकृष्य श्रावयितारः श्रोतारश्च अनया मदीयया कीर्त्या अञ्जसा सुखेनैव तु निश्चितं तमः संसारं तरिष्यन्तीति सद्रूपया सुष्ठु श्लोकाः मुनीनां यस्यां तां कीर्तिं च क्षौ भूमौ वितत्य विस्तार्य ईश्वरः सर्वनियन्ता स्वपदं स्वकीयं स्थानं अगात् ॥ ७ ॥

शापव्याजेन विप्राणां सञ्जह्रे स्वकुलं विभुः इत्युक्तम् तत्र अब्रह्मण्यानामवदान्यानामवृद्धसेविनां कृष्णपराङ्मुखानां च विप्रशापः प्रादुर्भवति तद्विपरीतानां वृष्णीनां विप्रशापः कथमभूदिति पृच्छति—ब्रह्मण्यानामित्यादिना । ब्रह्मण्यानां ब्राह्मणेभ्यः हितकर्तॄणां वदान्यानामत्युदाराणां वृद्धाः ज्ञानेन वयसा तपसा च श्रीनारदादयः तदुपसेविनां मुख्यं तेषां शापाविषयत्वं दर्शयितुं तान्विशिनष्टि—कृष्णचेतसां वृष्णीनां विप्रशापः कथमभूत् ? ॥ ८ ॥

### भाषा टीका ।

हे राजन् ! सत्यसंकल्प ईश्वर श्रीकृष्णचन्द्र ने इस प्रकार विचार कर ब्राह्मणों के शाप के मिष से अपने यदुकुल का संहार किया ॥ ५ ॥

लोकोत्कृष्टलावण्य वाली अपनी श्रीमूर्ति से मनुष्यों के नेत्रों को, तथा, अपनी मधुर वाणी से उन वाणियों के स्मरण करने वाले मनुष्यों के चित्त को, तथा अपने चरणों से अथवा चरण चिन्हों से उनके दर्शन करने वालों की गमनादि क्रियाओं को छीनकर, तथा कविजनों से प्रशंसित उत्तम कीर्त्ति को भूमि में सुख पूर्वक विस्तार कर, इस हमारी कीर्त्ति से हमारे अनुरक्त भक्तजन संसार को तर जावेंगे इस प्रकार विचार कर श्रीकृष्ण भगवान् अपने निजधाम को जाते हुए ॥ ६—७ ॥

(१)यन्निमित्तः स वै शापो यादृशो द्विजसत्तम ! ।
कथमेकात्मनां भेद एतत्सर्वं वदस्व मे ॥ ९ ॥

श्रीशुक उवाच ।

बिभ्रद्वपुः सकलसुन्दरसन्निवेशं कर्माचरन् भुवि सुमङ्गलमाप्तकामः ।
आस्थाय धाम रममाण उदारकीर्तिः संहर्तुमैच्छत कुलं स्थितकृत्यशेषः ॥ १० ॥
कर्माणि पुण्यनिवहानि सुमङ्गलानि गायज्जगत्कलिमलापहराणि कृत्वा ।
कालात्मना निवसता यदुदेवगेहे पिण्डारकं समगमन् मुनयो निसृष्टाः ॥ ११ ॥
विश्वामित्रोऽसितः कण्वो दुर्वासा भृगुरङ्गिराः ।
कश्यपो वामदेवोऽत्रिर्वसिष्ठो नारदादयः ॥ १२ ॥
क्रीडन्तस्तानुपव्रज्य कुमारा यदुनन्दनाः ।
उपसंगृह्य पप्रच्छुरविनीता विनीतवत् ॥ १३ ॥
ते वेषयित्वा स्त्रीवेषैः साम्बं जाम्बवतीसुतम् ।
एषा पृच्छति वो विप्रा अन्तर्वत्न्यसितेक्षणा ॥ १४ ॥
प्रष्टुं विलज्जती साक्षात् प्रब्रूताऽमोघदर्शनाः ! ।
प्रसोष्यन्ती पुत्रकामा किंस्वित्सञ्जनयिष्यति ॥ १५ ॥
एवं प्रलब्धा मुनयस्तानूचुः कुपिता नृप ! ।
जनयिष्यति वो मन्दाः ! मुसलं कुलनाशनम् ॥ १६ ॥

भाषा टीका।

राजोवाच ॥

राजा परीक्षित् बोले, कि—हे ब्रह्मन् ! ब्राह्मणों का सत्कार करने वाले, वदान्य और सदा वृद्धों की सेवा करने वाले, तथा श्रीकृष्ण में चित्त लगाने वाले, ऐसे यदु लोगों को ब्राह्मणों का शाप कैसे हुआ ? ॥ ८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अतः एतस्य निमित्तस्याभावान्निमित्तान्तरं पृच्छति—यन्निमित्त इति । एकात्मनामेकचित्तानां कथं भेदः कलहः ॥ ९ ॥

ईश्वरेच्छैवात्र निमित्तमिति परिहरति—बिभ्रदिति । सकलानां सुन्दरवस्तूनां सन्निवेशो विन्यासविशेषो यस्मिंस्तद्वपुर्बिभ्रत् तर्हि किमिति सोऽन्यवद्विषयपरः ? न सुमङ्गलं कर्माचरन् तर्हि किं कदापि कामनया ? न आप्तकामः तर्हि किमिति कर्माचरति ? धाम द्वारकाख्यमेव गृहमास्थाय रममाणः गृहे रममाणात्कर्म ग्राहयितुमित्यर्थः । ननु, किमाप्तकामस्य गृहस्था कर्मभिर्वा तत्राऽऽह, उदारकीर्तिः उदारा बहुफलप्रदा कीर्तिर्यस्य सः कीर्तिवितानार्थमित्यर्थः । एवं परमैश्वर्येण वर्तमान एव कुलं संहर्तुमैच्छत् तत्रकस्य हेतोः ? स्थितः कृत्ये भूभारहरणे शेषो यस्य सः ॥ १० ॥

ईश्वरेच्छयैवेत्थं ब्रह्मशापनिमित्तं वक्तुमाह—कर्माणीति । कर्माण्यद्भुताः कर्माणि कृत्वा निसृष्टा मुनयः पिण्डारकं समगमन्नित्यन्वयः । निसृष्टाः प्रस्थापिताः पूर्वोक्तामुदारकीर्तिं विवृण्वन्कर्माणि विशिनष्टि—पुण्यनिवहानीत्यादिभिस्त्रिभिः पदैः । कानिचिदश्वमेधादिकर्माणि पुण्यमेव जनयन्ति शुभोपलालनादीनि तु तत्काले सुखमेव कुर्वन्ति प्रायश्चित्तादीनि तु पापमेव हरन्ति एतानि तु सर्वात्मकानीत्याह—पुण्यनिवहानि कीर्तनादिना पुण्यानि निवहन्ति प्रापयन्तीति तथा सुमङ्गलानि अतिसुखात्मकानि गायतो जगतः कलिमलापहराणि कृत्वा मुनिप्रस्थापने हेतुः कालात्मना संहारकरूपेण यदुदेवगेहे वसुदेवगृहे निवसता स्वकुलं संजिहीर्षतेत्यर्थः । पिण्डारकं ततो नातिदूरं तीर्थविशेषम् ॥ ११—१२ ॥

उपसंगृह्य पादग्रहणं कृत्वा ॥ १३ ॥

प्रश्नप्रकारमाह—ते वेषयित्वेति, द्वयेन । हे अमोघदर्शना विप्राः ! एषा अन्तर्वत्नी गर्भिणी ॥ १४ ॥

(१) अन्निमित्तो यदोः शाप इति विज० पा० ।

तच्छ्रुत्वा तेऽतिसन्त्रस्ता विमुच्य सहसोदरम् ।
साम्बस्य ददृशुस्तस्मिन् मुसलं खल्वयस्मयम् ॥ १७ ॥
किं कृतं मन्दभाग्यैर्नः किम्वदिष्यन्ति नो जनाः ।
इति विह्वलिता गेहानाऽऽदाय मुसलं ययुः ॥ १८ ॥
तच्चोपनीय सदसि परिम्लानमुखश्रियः ।
राज्ञ आवेदयाञ्चक्रुः सर्वयादवसन्निधौ ॥ १९ ॥
श्रुत्वाऽमोघं विप्रशापं दृष्ट्वा च मुशलं नृप ।
विस्मिता भयसन्त्रस्ता बभूवुर्द्वारकौकसः ॥ २० ॥

भाषा टीका ।

दुर्वासा, भृगु, अंगिरा, कश्यप, वामदेव, अत्रि, वसिष्ठ और नारदादिक बहुत से रहे ॥ १२ ॥

यदु लोगों के कुमार खेलते २ मुनि लोगों के समीप आकर चरणा छूकर अविनीत होकर भी बड़े नम्र सरीखे बनकर मुनि लोगों से पूछते हुए ॥ १३ ॥

वे सब यदु कुमार जाम्बवती के पुत्र साम्ब को स्त्री के वस्त्र भूषण पहिनाकर, स्त्री का वेष बनाकर मुनि लोगों के समीप आकर बोले, कि—हे विप्रो ! यह कृष्ण कटाक्ष वाली स्त्री गर्भवती है, और आप लोगों से पूँछती है ॥ १४ ॥

परन्तु साक्षात् आप लोगों से पूँछने में लज्जा करती है, इससे आप दिव्यदृष्टि वाले हैं आप लोग कहिये तो कि—यह पुत्र की कामना वाली है पर क्या जनेगी सो आप लोग कथन कीजिये ॥ १५ ॥

हे राजन् ! इस प्रकार जब यदु कुमारों ने उन को बहँकाये तब वे मुनि लोग कुपित होकर बोले, कि—हे मन्द हो ! यह तुमारे कुल के नाश करने वाले मूसल को पैदा करेगी ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तस्मिन्नुदरे अयस्मयं लोहमयम् ॥ १७ ॥

मन्दभाग्यैर्नोऽस्माभिः किमेतत्कृतम् ? नोऽस्मान् किम्वदिष्यन्तीति विह्वलिताः सन्तो मुसलमादाय गेहान् ययुः ॥ १८ ॥

राज्ञे उग्रसेनाय न तु श्रीकृष्णाय ॥ १९—२० ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

तच्छापात्मकं वाक्यं विमुच्य उल्लूनवस्त्रसङ्घात् पृथक्कृत्य साम्बस्य समारत्वेन सर्वसम्पद्वचनत्वादिति भावः । तस्मिन् मुसलाभावति उदरे खचितेति विस्मये अयस्मयं यापदात्त्वा लोहमयम् ॥ १७ ॥

किं कृतमिति भीतानां पश्चात्तापवाक्यम् ॥ १८ ॥

उग्रसेनायेत्यपि श्रीकृष्णोपलक्षणम् ॥ १९ ॥

अमोघमव्यर्थं, तादृशापकार्थं मुसलञ्च दृष्ट्वा ॥ २० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तच्छ्रुत्वेति । तन्मुनिवचः श्रुत्वा ते यदुकुमारा अतीव सन्त्रस्ताः सहसा आशु साम्बस्योदरं विमुच्य तस्मिन्नुदरे अयस्मयम् लोहमयं मुसलं ददृशुः ॥ १७ ॥

मन्दभाग्यैरस्माभिः किम् एतत्कृतं नोऽस्माकं जनाः नोऽस्मान् प्रति किं वदिष्यन्तीत्येवं विह्वलिताः विशङ्कितचित्ताः सन्तो मुसलमादाय गेहान् ययुः ॥ १८ ॥

ततस्तं मुसलं सदसि राजसभायाम् उपनीय परिम्लाना मुखश्रीर्येषां ते सर्वेषां यादवानां सन्निधौ राज्ञे उग्रसेनायाऽऽवेदयाञ्चक्रुः स्वकृतं सर्वं विज्ञापयामासुः ॥ १९ ॥

श्रुत्वेति अमोघमप्रतिहतं विप्रशापं श्रुत्वा मुसलं च दृष्ट्वा तावद्विस्मितास्ततो भयसंत्रस्ता भयेन कम्पितगात्राश्च बभूवुरित्यर्थः "त्रसी उद्वेगे" "ओविजी भयचलनयोः" इत्यनुशासनात् अन्यथा पौनरुक्त्यात् ॥ २० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तस्मिन्नुदरे ॥ १७ ॥

किं दुष्कृतम् ॥ १८—२१ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

विमुच्य उल्लूनवस्त्रसङ्घात् पृथक्कृत्य साम्बस्य समारत्वा सर्वसम्पद्वचनत्वेति भावः ॥ १७—२४ ॥

---

तच्चूर्णयित्वा मुसलं यदुराजः स आहुकः।
समुद्रसलिले प्रास्यल्लोहं चास्यावशेषितम् ॥ २१ ॥
कश्चिन्मत्स्योऽग्रसील्लोहं चूर्णानि तरलैस्ततः।
उह्यमानानि वेलायां लग्नान्यासन् किलैरकाः ॥ २२ ॥
मत्स्यो गृहीतो मत्स्यघ्नैर्जालेनान्यैः सहार्णवे।
तस्योदरगतं लोहं (१)सशल्ये लुब्धकोऽकरोत् ॥ २३ ॥
भगवान् ज्ञातसर्वार्थ ईश्वरोऽपि तदन्यथा।
कर्तुं नैच्छद्विप्रशापं कालरूप्यन्वमोदत ॥ २४ ॥
इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
वैयासिक्याम् एकादशस्कन्धे विप्रशापो नाम
प्रथमोऽध्यायः ॥ १ ॥

**श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।**

राज्ञे उग्रसेनायैव, न तु श्रीकृष्णाय लज्जाभयाभ्यामिति भावः ॥ १९ ॥ २० ॥

**श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।**

सहसा सद्यः "सद्योऽर्थे सहसा हेतुशून्ये युक्तेऽपि साम्प्रतम्" इति यादवः। उदरं कल्पतं विमुच्य तस्मिन्नुदरे अयस्मयं लोहमयं मुसलं ददृशुः ॥ १७ ॥

मन्दभाग्यैर्नोऽस्माभिः किं कृतम् ? नोऽस्मान् किं वदिष्यन्तीति विह्वलिताः सन्तो मुसलमादाय गेहान् ययुः ॥ १८—२० ॥

**भाषा टीका।**

बस इतना सुनकर यदु कुमार घबड़ाये, और जल्दी से साम्ब के उदर को खोलकर क्या देखते हैं, कि—उसमें एक लोह का मूसल निकला ॥ १७ ॥

तब तो बालक लोग पछताने लगे, कि—हम मन्द भागियों ने यह क्या किया ? और लोग हमसे क्या कहेंगे ? इस प्रकार बड़े विह्वल होकर उस मूसल को लेकर घर आये ॥ १८ ॥

मुख जिनका सूख रहा ऐसे वे यदु बालक, उग्रसेन महाराज की सभा में उस मूसल को लेजाकर सब यादव लोगों के सन्मुख उस वृत्तान्त को राजा से निवेदन करते हुए ॥ १९ ॥

हे नृप ! उस अमोघ ब्राह्मणों के शाप को सुनकर, और उस मूसल को देखकर द्वारका वासी बड़े विस्मय को प्राप्त होकर भय भीत होते हुए ॥ २० ॥

**श्रीधरस्वामिकृतभावार्थदीपिका।**

आहुक उग्रसेनः सोऽपि श्रीकृष्णमपृष्ट्वैव प्रास्यत् मचिन्तत्वात्। अस्य मुसलस्य चूर्णीक्रियमाणस्यावशेषितं लोहं च प्रास्यत् ॥ २१ ॥

तरलैस्तरङ्गैः ॥ २२ ॥

अन्यैर्मत्स्यैः सह शल्ये शराग्रे ॥ २३ ॥

ज्ञाताः सर्वेऽर्था येन सः ईश्वरोऽपि समर्थोऽपि सन्नन्यथा कर्तुं नैच्छत् किन्त्वन्वमोदत यतः कालरूपी ॥ २४ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
प्रथमोऽध्यायः ॥ १ ॥

**श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी।**

स आवेदितः ॥ २१ ॥

उह्यमानानि इतस्ततः प्रक्षिप्यमाणानि तत्र एव हेतोः वेलायां तटे लग्नानि एरकाः पटेरेति ख्यातास्तृणविशेषाः ॥ २२ ॥

स जरेति प्रसिद्धः ॥ २३ ॥

ईश्वरोऽपि अन्यथा कर्तुं समर्थोऽपि तदिष्टव्ययं न मित्यर्थः ॥ २४ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीराधारमणदासगोस्वामिविरचितायां दीपिकादीपिन्यां
टिप्पण्यां प्रथमोऽध्यायः ॥ १ ॥

(१) शल्येषुमिति विज० पा०।

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

ईश्वरोऽपि अन्यथा कर्तुं समर्थोऽपि ॥ २४ ॥

इति श्रीमद्भागवतव्याख्याने एकादशस्कन्धीये
श्रीसुदर्शनसूरिकृतशुकपक्षीये
प्रथमोऽध्यायः ॥ १ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

स यदूनां राजा आहुकः उग्रसेनः मुसलं सलपूर्वं चूर्णं कारयित्वा समुद्रसलिले प्राक्षिपत् प्राचिक्षिपत् अस्य मुसलस्य चूर्णीक्रियमाणस्यावशेषितं लोहशकलञ्च प्रास्यत ॥ २१ ॥

तस्मिन्निति । तस्मिन् समुद्रसलिले कश्चिन्मत्स्यः लोहं पातितं लोहशकलमग्रसीत् चूर्णानि तु तरलैस्तरङ्गैस्तत्र तत्र वेलायां तीरे ऊह्यमानानि प्राप्यमाणानि अत एव लग्नान्येरकाख्या दीर्घाः स्थूलाश्च धाराग्रयोपेतास्तृणविशेषा आसन् ॥ २२ ॥

मत्स्य इति । योऽग्रसील्लोहं स मत्स्यः अन्यैर्मत्स्यैः सह जालेन मत्स्यघ्नैर्गृहीतः लुब्धकस्तेषां मत्स्यघ्नानां मध्ये कश्चिल्लुब्धक इत्यर्थः । तस्य मत्स्यस्योदरगतं लोहं शल्यं शराग्रेऽकरोच्छराग्रं कारितवानित्यर्थः ॥ २३ ॥

भगवानिति । ज्ञाताः सर्वेऽर्थाः कालत्रयगोचरा येन स तं विप्रशापमन्यथाकर्तुं विफलीकर्तुमीश्वरः समर्थोऽपि तदन्यथा कर्तुं नैच्छत किन्तु कालरूपी हेतुगर्भमिदं कालरूपेण संहर्तुं कृतसङ्कल्पत्वादन्वमोदत ॥ २४ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
प्रथमोऽध्यायः ॥ १ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तरलैस्तरङ्गैः वेलायां तीरे लग्नानि संसक्तानि एरकाः दीर्घसूचीमुखतृणविशेषाः ॥ २२ ॥

शल्येषु शल्याख्यशरं लुब्धको व्याधः ॥ २३ ॥

सर्वेषामर्थः पुरुषार्थो यस्मात्स तथा सर्वैरर्थ्यत इति वा ॥२४॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
प्रथमोऽध्यायः ॥ १ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
प्रथमोऽध्यायः ॥ १ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

साम्बादीनां लज्जामये मा भूतामिति सोऽप्याहुकः कृष्णमपृष्ट्वा तन्मुसलं चूर्णयित्वा अवशेषितं लोहं च किञ्चिन्मात्रमतस अकिञ्चित्करमिति मत्वा सलिले प्रास्यत् ॥ २१ ॥

तरलैस्तरङ्गैः ॥ २२ ॥

अन्यैर्मत्स्यैः सह शल्ये शराग्रे स प्रसिद्धो लुब्धकः ॥ २३ ॥ २४ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
एकादशस्य प्रथमः सङ्गतः सङ्गतः सताम् ॥ १ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

स आहुकः उग्रसेनः मुसलं चूर्णयित्वा समुद्रसलिले प्रास्यत् प्राक्षिपत् अस्य मुसलस्य अवशेषितं लोहं च प्रास्यत् ॥ २१ ॥

तत्र लोहं मुसलशेषं मत्स्योऽग्रसीत् चूर्णानि तु तरलैस्तरङ्गैः ततस्ततस्तस्माद्देशात् ऊह्यमानानि वेलायां समुद्रतीरे लग्नानि एरका आसन् दीर्घसूचीमुखाग्रितृणविशेषा बभूवुः ॥ २२ ॥

स मत्स्यः अन्यैर्मत्स्यैः सह मत्स्यघ्नैः गृहीतः तस्य मत्स्यस्योदरगतं निर्गतं लोहं शल्ये शराग्रे अकरोत्संयोजितवान् स प्रसिद्धः जराभिधः लुब्धको व्याधः ॥ २३ ॥

ईश्वरोपि सर्वं कर्तुं समर्थोऽपि ॥ २४ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
प्रथमाऽध्यायार्थप्रकाशः ॥ १ ॥

---

भाषा टीका ।

राजा श्रीउग्रसेन महाराज ने भी उस मुसल का चूर्ण कराकर समुद्र में डलवा दिया और उसका कुछ लोह अवशिष्ट रहा उसको भी समुद्र में डलवा दिया ॥ २१ ॥

उस लोहे के टुकड़े को तो कोई मत्स्य निगल गया, और जो चूर्ण रहा सो तरंगों की टक्करों से किनारे पर लगकर एरका अर्थात् जिसकी चटाई बिनी जाती है वह पटेरे नामक तृण विशेष होगया ॥ २२ ॥

जिस मच्छ ने वह लोह निगला रहा, उस मच्छ को अन्य मत्स्यों के साथ मत्स्य मारने वालों ने जाल डालकर पकड़ा, और उसके पेट में निकला जो लोह तिसको लुब्धक ने अपने बाण के अग्र भाग में लगा लिया ॥ २३ ॥

श्रीकृष्ण भगवान् इन सब बातों को जानकर चुप लगा गये, और उस ब्राह्मणों के शाप को अन्यथा कर देने में आप समर्थ भी रहे तो भी आपने उलटने की इच्छा नहीं करी किन्तु आप स्वयं कालरूप भी तो हैं इस लिये अपने मनमें अनुमोदन किया ॥ २४ ॥

इति श्रीमद्भागवत एकादशस्कन्ध में प्रथम अध्याय की,
श्रीवृन्दावनस्थ पं० माधवाचार्यकृत
भाषाटीका समाप्ता ॥ १ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे प्रथमोऽध्यायः ॥ १ ॥

## द्वितीयोऽध्यायः ।

—:o:—

श्रीशुक उवाच ।

गोविन्दभुजगुप्तायां द्वारवत्यां कुरूद्वह ! ।
अवात्सीन्नारदोऽभीक्ष्णं कृष्णोपासनलालसः ॥ १ ॥
को नु राजन्निन्द्रियवान् मुकुन्दचरणाम्बुजम् ।
न भजेत्सर्वतोमृत्युरुपास्यममरोत्तमैः ॥ २ ॥
तमेकदा तु देवर्षिं वसुदेवो गृहागतम् ।
अर्चितं सुखमासीनमभिवाद्येदमब्रवीत् ॥ ३ ॥

वसुदेव उवाच ।

भगवन् ! भवतो यात्रा स्वस्तये सर्वदेहिनाम् ।
कृपणानां यथा पित्रोरुत्तमश्लोक(१)वर्त्मनाम् ॥ ४ ॥
भूतानां देवचरितं दुःखाय च सुखाय च ।
सुखायैव हि साधूनां त्वादृशामच्युतात्मनाम् ॥ ५ ॥
भजन्ति ये यथा देवान् देवा अपि तथैव तान् ।
छायेव कर्मसचिवाः साधवो दीनवत्सलाः ॥ ६ ॥
ब्रह्मंस्तथाऽपि पृच्छामो धर्मान् भागवतांस्तव ।
यान् श्रुत्वा श्रद्धया मर्त्यो मुच्यते सर्वतो भयात् ॥ ७ ॥
अहं किल पुराऽनन्तं प्रजार्थो भुवि मुक्तिदम् ।
अपूजयं न मोक्षाय मोहितो देवमायया ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

द्वितीये निमिजायन्तसंवादेनाऽऽह नारदः ।
धर्मान् भागवतान् भक्त्या वसुदेवाय पृच्छते ॥

अभीक्ष्णं प्रस्थापितोऽपि पुनः पुनरवात्सीदित्यर्थः । ननु, नारदस्य दक्षादिशापान्नैकत्र वासः सम्भवतीत्याशङ्क्याह—गोविन्दभुजगुप्तायामिति । न तस्यां शापादेः प्रभाव इत्यर्थः । कृष्णोपासने लालसा औत्कण्ठ्यम् यस्य सः ॥ १ ॥

यद्भजने मुक्तानामपीदृशमौत्सुक्यं तं को नाम न भजेदित्याह—को न्विति । इन्द्रियवानिति इन्द्रियवत्त्वमात्रमेव भजनाधिकारिविशेषणमित्यर्थः । सर्वतः सर्वेष्वपि लोकेषु मृत्युर्यस्य सः ॥ २-३ ॥

यथा पित्रोर्यात्रा आगमनमपत्यानां स्वस्तये मङ्गलाय यथा चोत्तमश्लोकस्य वर्त्मभूतानां महतां यात्रा कृपणानां स्वस्तये तथा भगवद्रूपस्य भवतो यात्रा सर्वदेहिनां स्वस्तय इति ॥ ४ ॥

देवैरपि महतामुपमानमनुचितमित्याह—भूतानामिति । देवानां चरितमतिवृष्ट्यादिना भूतानां दुःखायाऽपि भवति, त्वादृशां त्वया सदृशानाम् अच्युते आत्मा येषां तेषाम् ॥ ५ ॥

किञ्च, सुखं कुर्वन्तोऽपि देवा भजनानुसारेण कुर्वन्ति न तथा साधव इत्याह—भजन्तीति । छायेव यथा पुरुषो यावत्करोति तावदेव तस्य छायाऽपि तथा कर्मसचिवाः कर्मसहायाः ॥ ६ ॥

तदेवं यद्यपि भवत आगमनमात्रेणैव वयं कृतार्थास्तथाऽपि पृच्छामः तवेति तव धर्मैः प्रसन्नो भगवांस्तानित्यर्थः ॥ ७ ॥

---

(१) वर्त्मनाम् इति शुक० पाठः ।

### श्रीधरस्वामिकृतभावार्थदीपिका ।

ननु, त्वत्तोऽपि किमन्यो भगवत्प्रसादपात्रमस्ति यत्राऽऽग्रहं किलेति । भुवि प्रजार्थोऽपूज्यं पुत्रलाभप्रयोजनः सन् पूजितवान् किलेति सूतीगृहे भगवदुक्तमनुस्मरति ॥ ८ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

निमेर्जायन्तनां जयन्तीनन्दनानां नवयोगेश्वराणाञ्च संवादेन प्रश्नोत्तररूपेण पुनः पुनरित्यस्य प्रख्यापितोऽपीति व्यङ्ग्योऽर्थः अतएवेत्यर्थः इत्युक्तं प्रख्यापने च लोकवृत्तान्तजिज्ञासादिलीलैव कारणं कृष्णस्योपासने दर्शनादिना भजने यद्वा कृष्णस्य उपसमीपे आसने स्थितौ लालसा यस्य सः तथा ॥ १ ॥

यद्भजने यस्य चरणाम्बुजस्य भजने सेवने तच्चरणारविन्दम् इन्द्रियवत्त्वमात्रमेवेति वर्णाश्रमाद्युपेक्षापि निरस्ता अधिकारिविशेषणमिति यथा "स्वाराज्यकामो राजा राजसूयेन यजेत"इत्यत्र स्वाराज्यकामस्य राज्ञः सतो राजसूयेऽधिकारो नान्यस्य तथा इन्द्रियवतः सर्वस्यापि तद्भजनेऽधिकार इत्यर्थः । तदुक्तं पाद्मे माघमाहात्म्ये "सर्वेऽधिकारिणो ह्यत्र हरिभक्तौ यथा नृप"इति । भागवते च "सर्वेषां मदुपासनम्" इति अमरोत्तमैरिन्द्रादिभिरपि तदेवं विषयिमुमुक्षुमुक्तानामपि तद्भजनीयमिति स्थिते महाभक्तराजो नारदो वा कथं तन्न भजेदिति भावः ॥ २ ॥

अभिवाद्य नमस्कृत्य ॥ ३ ॥

कृपणानां सर्वसाधनहीनानां भगवद्रूपस्य भगवदावेशावतारस्य देवर्षित्वमुपेत्य स इति अवतारमध्ये तत्परिग्रहादेवञ्च यथा महतामित्युपमानोपमेययोर्न साङ्कर्यमिति ज्ञेयम् ॥ ४ ॥

उपमानं सादृश्यम ॥ ५ ॥

साधवस्तु कर्मानुगता न भवन्ति प्रत्युत दीनेषु तद्दीनत्वेव वत्सला दयालवः ॥ ६ ॥

तदेवं साधूनां दीनवत्सलत्वाभिधानप्रकारेण तथापीति बलादेव यद्यपीत्याद्यध्याहृतं तव सत्सन्निधनो धर्मानुसन्धित्वेञ्च भगवत्प्रसादजनकत्वेनेत्यभिप्रेत्य तव वैधैरित्यादिव्याख्यातमिति प्रतिपत्तिगौरवादित्यर्थः इत्युक्तम् । ननु कृतार्थस्य तव मद्धर्मप्रश्ने किं प्रयोजनमित्याशङ्कायामाह—यानिति । मत्प्रसङ्गेन श्रुत्वा मर्त्योऽपि ॥ ७ ॥

न मोचयेति ब्रह्मशापभयेन श्रीकृष्णवियोगभ्रमव्यग्रतया निर्वेदोक्तिः भगवदुक्तमिति "न ममायेऽपवर्गे मे मोहितो मम मायया"इति ॥ ८ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

॥ १ ॥

इन्द्रियवान् चक्षुष्मान् ॥ २—३ ॥

उत्तमश्लोकवर्त्मना: भगवच्छरीरभूतस्य तवागमनं पित्रोरागमनामिव कृपणानां देहिनां स्वस्तये भवति ॥ ४—५ ॥

कायेनेत्युपकारकत्वात्संभवणीयत्वं विवक्षितम् ॥ ६—८ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

कालशापमन्यथाकर्तुं समर्थोपीत्युक्तं किं कश्चिदन्यथाकरणं प्राप्तमित्यपेक्षायां तद्दर्शयंस्तत्प्रसङ्गादितिहासान्तरं प्रस्तोतुमाह, गोविन्देत्यादिना—हे कुरूद्वह । अभीक्ष्णं प्रस्थापितोपि नारदः पुनः पुनः द्वारकायामवात्सीदुषितवान् । ननु, नारदस्य दक्षशापान्नैकत्र वासस्सम्भव इत्याशङ्कामपनुदन् द्वारकां विशिनष्टि—गोविन्दभुजगुप्तायामिति । न तस्यां शापादेः प्रभाव इति भावः । किमर्थमवात्सीदित्यत्र नारदं विशिनष्टि—कृष्णोपासनलालस इति । कृष्णोपासनायां लालसा औत्सुक्यं यस्य सः ॥ १ ॥

ननु, नित्यं ज्ञानाधिकस्य देवर्षेः कृष्णोपासनायामौत्सुक्यं कथं(किमर्थं)मित्यत्राह—को न्विति । हे राजन् । इन्द्रियवान् चक्षुष्मान् को वा पुमान् मुकुन्दस्य श्रीकृष्णस्य चरणाम्बुजं न सेवेत सेवमानो नावतिष्ठेत ज्ञानविभागमन्तरेण सर्वोपीन्द्रियवान् सेवेतैवेत्यर्थः । तत्र हेतुत्वेन तत्पादाम्बुजं विशिनष्टि—सर्वतः प्रमृत्युम् इतिच्छेदः सर्वेष्वपि भजत्सु न विद्यते मृत्युर्यस्मात्सेव्यमानात्तथाभूतं सर्वेषामपि विदुषामविदुषाञ्च मुकुन्दचरणाम्बुजसेवयैव संसृतिनिवृत्तिरित्यर्थः । अत एवामरोत्तमैर्ज्ञानाधिकैर्ब्रह्मरुद्रादिभिरुपास्यं सर्वतो मृत्युरिति पाठे सर्वेष्वपि लोकेषु मृत्युर्येन स चक्षुष्मान् कोवा न सेवेतेत्यर्थः ॥ २ ॥

ननु, परावरतत्त्ववित्त्वो देवर्षेस्तत्रावस्थितावदवश्यमभ्यागमवादः सम्भावि न तत्र संशयः किन्तु कोसौ पृष्टवानाहेत्यत्रमिति । गृहागतं स्वगृहं प्रत्यागतम् अभिवाद्य प्रणम्येदं वक्ष्यमाणम् अब्रवीत् ॥ ३ ॥

तदेवाह—भगवन्नित्यादिभिः षड्भिः । किञ्च तत् पृष्टकामस्तावत् तदागमनमभिनन्दति—भगवन्निति । हे भगवन् ! भवतो यात्रा सञ्चारः सर्वेषां देहिनां मादृशां स्वस्तये मङ्गलाय सुखायेति यावत्, तथा हि यथा पित्रोरागमनं पुत्राणां सुखायैव तथा उत्तमश्लोकवर्त्मभूतानां तत्स्वरूपस्वभावादिज्ञानद्वारभूतानां महात्मनां यात्रा कृपणानां तापत्रयपीडितानां स्वस्तय एव, उत्तमश्लोकवर्त्मना इति पाठान्तरं तदा भगवच्छरीरभूतस्य भवतः आगमनं पित्रोरागमनामिव कृपणानां देहिनां स्वस्तय एव भवतीत्यर्थः ॥ ४ ॥

ननु, किं विशेषेण मादृशामेव यात्रा कृपणानां स्वस्तये इति ब्रूषे ? यतो देवादीनामपि यात्रादि कर्म लोकानां स्वस्तये भवतीत्यत आह—भूतानामिति । देवानां पर्जन्यादीनां चरितं भूतानां दुःखाय (सुखाय) च भवत्यतिवृष्ट्यादिना दुःखजनकत्वादिति भावः । त्वादृशां त्वद्विधानां साधूनान्तु चरितं सुखायैव तत्र हेतुत्वेन विशिनष्टि—अच्युतात्मनामिति । अच्युते आत्मा मनो येषां तेषां नित्यमच्युतैकचित्तत्वाद्वितरेषामपि ह्यच्युतवत्सदा तापत्रयनिरसनशीलत्वात्सुखायैवेति भावः ॥ ५ ॥

किञ्च, सुखं कुर्वन्तोपि देवा भजनानुसारेण कुर्वन्ति साधवस्तु न तथेत्याह—भजन्तीति । ये देवान् यथा भजन्ति

यथा विचित्रव्यसनाद्भवद्भिर्विश्वतो भयात् ।
मुच्येमह्यञ्जसैवाद्धा तथा नः शाधि सुव्रत ॥ ९ ॥

श्रीशुक उवाच ।

राजन्नेवं कृतप्रश्नो वसुदेवेन धीमता ।
प्रीतस्तमाह देवर्षिर्हरेः संस्मारितो गुणैः ॥ १० ॥

नारद उवाच ।

सम्यगेतद्व्यवसितं भवता सात्वतर्षभ ।
यत्पृच्छसे भागवतान् धर्मांस्त्वं विश्वभावनान् ॥ ११ ॥
श्रुतोऽनुपठितो ध्यात आदृतो वाऽनुमोदितः ।
सद्यः पुनाति सद्धर्मो देवविश्वद्रुहोऽपि हि ॥ १२ ॥
त्वया परमकल्याणः पुण्यश्रवणकीर्तनः ।
स्मारितो भगवानद्य देवो नारायणो मम ॥ १३ ॥
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
आर्षभाणां च संवादं विदेहस्य महात्मनः ॥ १४ ॥
प्रियव्रतो नाम सुतो मनोः स्वायम्भुवस्य यः ।
तस्याग्नीध्रस्ततो नाभिरृषभस्तत्सुतः स्मृतः ॥ १५ ॥

भाषा टीका।

श्रीभागवतधर्मेभ्यो नमः।

श्रीशुक उवाच ॥

श्रीशुकदेवजी बोले, कि—हे कुरूद्वह, हे राजन्! श्रीकृष्ण की भुजाओं से रक्षित श्रीद्वारका पुरी में श्रीकृष्ण की उपासना की लालसा से नारदजी निरन्तर वास करते हुए ॥ १ ॥

हे राजन्, सब लोकों में मनुष्य, जिसके पीछे सभी हैं फिर ऐसा पुरुष कौन है, कि—जो इन्द्रियों का भाजन होकर ब्रह्मादि देवताओं से उपास्य किये मुकुन्द के चरणारविन्द का न भजन करै ॥ २ ॥

एक समय अपने महलों में आये हुए नारदजी का वसुदेवजी ने पूजन किया, और आसन पर बैठाये, और नारदजी को वन्दना कर वसुदेवजी इस प्रकार बोलते हुए ॥ ३ ॥

वसुदेव उवाच ॥

वसुदेवजी बोले, कि—हे भगवन्! जैसे माता पिता का आगमन अपनी सन्तान के मङ्गल के लिये होता है, और जैसे, परमेश्वर के मार्ग रूप महात्मा लोगों का आगमन विचारे कृपणों के मङ्गल के लिये होता है। इसी प्रकार यह आपका शुभागमन सब प्राणियों के मङ्गलार्थ है ॥ ४ ॥

देवताओं का चरित्र प्राणियों को सुख देने वाला है और दुःख देने वाला भी है, परन्तु आप सदृश अच्युत में चित्त लगाने वाले साधुओं का चरित्र तो सदा सुख ही के देने वाला है ॥ ५ ॥

जो लोग देवताओं को जिस प्रकार भजते हैं, वे देवलोग भी उनको उसी प्रकार भजते हैं। जैसे, कि—पुरुष जितनी चेष्टा करता है छाया भी उतनी ही चेष्टा करती है इसी प्रकार पुरुष, जितना कर्म करता है, देवता भी उतनीही सहाय करते हैं। ऐसे साधु लोग नहीं होते हैं, किन्तु वे लोग तो बिना उपकार भी दीन मात्र को देखकर दया करते हैं ॥ ६ ॥

हे भगवन्! इस रीति से हम तो आपके आगमन मात्र से ही कृतार्थ हुए, तो भी हे ब्रह्मन्! मैं आप से भागवत धर्मों को पूछता हूं, कि—जिनके सुनने मात्र से ही पुरुष सर्व भय से छूटजाता है ॥ ७ ॥

हे श्रीनारदजी! मैंने तो पूर्व जन्म में इस पृथिवी पर मुक्ति देने वाले श्रीअनन्त भगवान् को सन्तान हेतु अर्थ पूजा, मोक्ष के लिये नहीं, क्योंकि? मैं देवमाया से मोहित होगया ॥ ८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

अतो यथा मुच्येमहि तथा नोऽस्मान् शाधि शिक्षय विचित्राणि व्यसनानि यस्मिन् संसारे तस्मात् संसारात् तथा विश्वतः सर्वतो भयं यस्मिंस्तस्मात् भवद्भिर्हेतुभूतैः अञ्जसाऽनायासेन अद्धा साक्षात् ॥ ९ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तत्रापि विशेषप्रश्नो लोकहितायेति ज्ञातव्यम् ॥ ९ ॥

वसुदेवेन पृष्टो नारदः किञ्चित्तुष्णीभूदिति राज्ञो हार्दं चोद्यं परिहरति—राजन्निति । हरेर्गुणैः संस्मारितो हरिरिति शेषः ॥ १० ॥

बुद्धेर्विकासाय प्रष्टारं स्तौति—सम्यगिति । विश्वस्याभीष्टस्य भावनमुत्पादनं येऽयस्ते तथा तान् ॥ ११ ॥

एतदेव विवृणोति—श्रुत इति । सम्प्रश्नस्य निश्वान्तर्भावेपि पृथक् ग्रहणमनिवर्त्यं दोषपरिहारसामर्थ्यसूचनार्थं कृतम् एतदेवापिशब्देनासूचयत्—

"ब्रह्महत्यासहस्रस्य पापं शाम्येत्क्षणाद्ध्रुवम् ।
न पुनस्त्वदवज्ञाने कल्पकोटिशतैरपि" ॥

इममर्थं हिशब्देन सूचयति ॥ १२ ॥

ममाद्यनेन पुण्यबुद्धिरभूदित्याशयेनाह—त्वयेति । नित्यं स्मृतोपि इदानीं विशेषतः स्मारितो गुणकथनप्रश्नेन ॥ १३ ॥

धीमत्त्वेन वसुदेवस्य नारदोक्तौ विश्रम्भेपि स्वकपोलकल्पितत्वेन न श्रद्धेयमिति मन्दाशङ्कापनोदाय तत्प्रश्नपरिहारत्वेन अनकादिमहत्संवादमितिहासं वक्ति अत्रेति ॥ १४ ॥

निश्चयजननायान्वयशुद्धिं कथयति—प्रियव्रत इत्यादिना ॥१५॥

अवतारप्रयोजनमाह—मोक्षेति ॥ १६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

विश्वतोभयात् सर्वतोपि भयहेतोरपि ब्रह्मशापात् ॥ ९ ॥

हरेर्गुणैस्तस्मिन्नवतीर्णत्वात्सद्दर्शने प्रकाशितैः ॥ १० ॥

तत्र तदीयस्वप्रयोजनस्योत्तरं सर्वान्ते दास्यति भगवद्धर्मस्योत्तरमाह सम्यगिति ॥ ११—१२ ॥

नारायणस्तादृशधर्मे मदीयगुरुरूपो नारायणर्षिः स्मारित इति कृष्णोपासनावेशेन तस्यापि विस्मरणात् ॥ १३ ॥

अत्र श्रीनारायणोपदिष्टधर्मेष्युदाहरन्ति स्मरन्ति तदिच्छया इति माहात्म्यविशेषावोक्तम् ॥ १४—२१ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

विश्वतो भयात् संसारात् ॥ ९ ॥

हरेरिति "अधीगर्थदयेशां कर्मणि"(२।३।५२) इति षष्ठी गुणैः सहितं हरिं संस्मारित इत्यर्थः ॥ १०—१४ ॥

आर्षभाणामित्युक्तं तत्र ऋषभ एव क इत्यत आह—प्रियव्रत इति ॥ १५—१८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अतो विचित्रव्यसनात् विचित्राणि नानाविधानि व्यसनानि क्लेशानि यस्मिन् तस्मात् विश्वतः सर्वतो भयं यस्मिन् तस्मात्संसारात् भवद्भिर्हेतुभूतैः अञ्जसा अनायासेन यथा मुच्येमहि तथा नोऽस्मान् अञ्जः प्रत्यक्षं सत्यं वा आधिशिक्षय "अञ्जः प्रत्यक्षसत्ययोः" इति यादवः ॥ ६ ॥



हे राजन्! हे परीक्षित् कृताः प्रश्नाः येन स कृतप्रश्नः स चासौ वसुदेवश्च तेन हरेर्गुणैर्वर्णनीयत्वेन प्रस्तुतैर्हरिः देवर्षि प्रति संस्मारितः यतः अतः प्रीतः देवर्षिस्तं वसुदेवं प्रत्याह ॥ १० ॥

तत्र तावत्प्रीतिमेवाह—सम्यगिति त्रिभिः । हे सात्वतर्षभ सात्वतमुख्य ! भवता एतत्सम्यक् व्यवसितं चिन्तितं यत् यस्माद्विश्वं सर्वं भावयन्ति शोधयन्तीति विश्वभावनान् सर्वशोधकान् भागवतान् धर्मान् पृच्छसे पृच्छसि ॥ ११ ॥

भागवताः धर्माः सर्वशोधका इत्युक्तमेव विवृणोति—श्रुत इति । धर्मानिति बहुवचनेन भगवद्धर्माणां बाहुल्यं दर्शितं तत्रैकोपि सद्धर्मो भगवद्धर्मः श्रवणाद्येकतमेन यत्नेनापि हि निश्चयेन सद्य एव मतु विलम्बेन देवविश्वद्रुहोपि पुनाति किम्पुनर्निर्दोषान् साधून् पुनातीति वक्तव्यम् किं पुनः सर्वे भगवद्धर्माः सर्वैर्यत्नैः पुनन्तीति वक्तव्यं देवाय विश्वस्मै च द्रुह्यन्तीति देवविश्वद्रुहः देवस्य विश्वविलक्षणत्वेन पृथग्ग्रहणम् अतिदोषवतो देवद्रुहोपि पुनाति किम्पुनर्विश्वद्रुह इति कैमुतिकन्यायप्रदर्शनार्थं तत्र श्रुतः श्रवणमात्रेण गृहीतः अनुपठितः वाङ्मात्रेण गृहीतः ध्यातः मनसा चिन्तितः आदृतः स्वधर्मतया स्वीकृतः अनुमोदितः सस्तुतः ॥ १२ ॥

भागवतधर्मप्रश्नेन ममाप्युपकारो भवता कृत इत्याह—त्वयेति । मम साम्प्रतं त्वया अद्य भगवान् स्मारितः । ननु, नित्यं साक्षाद्भगवान् श्रीकृष्णस्तव दृष्टिगोचर इह वर्तते एव पुनरद्य स्मारित इति तव वचनं किंविषयमत्राह, परमकल्याण पुण्यश्रवणकीर्तन इति हे परमकल्याण ! परमपुरुषवात्सल्यरसभागित्वेनोत्कृष्टमङ्गलरूप ! पुण्ये श्रोतृभावयितृपरमफलदे श्रवणकीर्तने अध्ययनाध्यापने यस्य शास्त्रविचारलक्षणस्य स तथा चक्षुर्दृश्यकृष्णासक्त्या शास्त्रचिन्त्यांशेन स विस्मृतः । पुनस्तेनांशेनापि भागवतान् पृच्छता भवता शास्त्राध्ययनाध्यापनाभ्यासेन सुनिश्चेयोऽयं श्रीकृष्ण इत्येवं स्मारित इत्यर्थः । यद्वा, परमं भगवत्प्राप्तिरूपं कल्याणं याभ्यां ते पुण्यश्रवणकीर्तने यस्येत्येकं पदम् ॥ १३ ॥

उपदिश्यमानस्यार्थस्य स्वोत्प्रेक्षितत्वदोषपनोदनाय शिष्टनिर्णीतत्वेन प्राचीनत्वद्योतनाय च जनकार्षभसंवादमाह—अत्रापीति । त्वत्सम्पृष्टभगवद्धर्मनिर्णयेऽपि ऋषभस्यापत्यान्यार्षभास्तेषाम् ॥ १४ ॥

आर्षभाः कस्य वंशे जाताः ? कीदृशं च तेषां चरित्रमित्याकाङ्क्षायां तेषां मनुवंशे उत्पत्तिं पारमहंस्यं चरित्रञ्चाह—प्रियव्रत इत्यादिना त्रिभिः ॥ १५ ॥

ऋषभं वासुदेवांशमवतीर्णमाहुः अवतारप्रयोजनमाह—मोक्षधर्मविवक्षयेति । मोक्षोपायभूतानां भगवद्धर्माणां प्रवर्तनेच्छयेत्यर्थः ॥ १६ ॥

---

भाषा टीका ।

हे सुन्दर व्रत धारण करने वाले हे नारदजी ! आपकी कृपा से जैसे हम लोग इस विचित्र दुःख वाले संसार से छूट जावें आप हमको उसी प्रकार की शिक्षा दीजिये ॥ ६ ॥

तेषां वै भरतो ज्येष्ठो नारायणपरायणः ।
विख्यातं वर्षमेतद्यन्नाम्ना भारतमद्भुतम् ॥ १७ ॥
स भुक्तभोगां त्यक्त्वेमां निर्गतस्तपसा हरिम् ।
उपासीनस्तत्पदवीं लेभे वै जन्मभिस्त्रिभिः ॥ १८ ॥
तेषां नव नवद्वीपपतयोऽस्य समन्ततः ।
कर्मतन्त्रप्रणेतार एकाशीतिर्द्विजातयः ॥ १९ ॥
नवाऽभवन् महाभागा मुनयो[1] ह्यर्थशंसिनः ।
श्रमणा वातरशना आत्मविद्याविशारदाः ॥ २० ॥
कविर्हरिरन्तरिक्षः प्रबुद्धः पिप्पलायनः ।
आविर्होत्रोऽथ द्रुमिलश्चमसः करभाजनः ॥ २१ ॥
त एते भगवद्रूपं विश्वं सदसदात्मकम् ।
आत्मनोऽव्यतिरेकेण पश्यन्तो व्यचरन् महीम् ॥ २२ ॥
अव्याहतेष्टगतयः सुरसिद्धसाध्यगन्धर्वयक्षनरकिन्नरनागलोकान् ।
मुक्ताश्चरन्ति मुनिचारणभूतनाथविद्याधरद्विजगवां भुवनानि कामम् ॥ २३ ॥
त एकदा निमेः सत्रमुपजग्मुर्यदृच्छया ।
वितायमानमृषिभि[2]रजनाभे महात्मनः ॥ २४ ॥

भाषा टीका ।

श्रीशुक उवाच ।

श्रीशुकदेवजी बोले, कि—हे राजन् ! बड़े बुद्धिशाली वसुदेवजी ने जब ऐसा प्रश्न किया, तब देवर्षि श्रीनारदजी को श्रीहरि के गुणों का स्मरण हो आया, और नारदजी प्रसन्न होकर वसुदेवजी से कहने लगे ॥ १० ॥

नारद उवाच ।

श्रीनारदजी बोले, कि—हे यदुश्रेष्ठ ! हे वसुदेवजी ! यह तुमने बहुत ही अच्छा विचार किया, कि—जो विश्व को पवित्र करने वाले भागवत धर्मों का प्रश्न किया ॥ ११ ॥

हे वसुदेवजी ! यह सद्धर्म अर्थात् भागवत धर्म कैसा है, कि—इसका श्रवण किया हो, पठन किया हो, ध्यान किया हो, आदर किया हो, अथवा अनुमोदन किया हो, आचरण करे तब तो कहना ही क्या है, परंच श्रवणादि से भी यह भागवत धर्म विश्व के द्रोह करने वालों को भी तत्काल पवित्र करता है ॥ १२ ॥

हे वसुदेवजी ! तुम धन्य हो, तुमने भागवत धर्मों के प्रश्न करने से, पवित्र करने वाला श्रवण कीर्तन जिनका ऐसे परमकल्याण रूप भगवान् जो श्रीनारायण देव हैं, तिनका मुझको स्मरण करा दिया ॥ १३ ॥

इस भागवत धर्म के विषय में भी लोग इस प्राचीन इतिहास का उदाहरण देते हैं। इस इतिहास में श्रीऋषभदेव के पुत्र नव योगेश्वर और महात्मा श्रीविदेहराज राजा निमि का संवाद है ॥ १४ ॥

स्वायंभुव मनु के जो प्रियव्रत पुत्र हुए, तिनके आग्नीध्र हुए, तिन से नाभि महाराज, तिन नाभि महाराज के पुत्र श्रीऋषभ देवजी हुए हैं ॥ १५ ॥

उनको मोक्ष धर्म के प्रवर्त्तन करने की इच्छा से अवतार लेने वाले श्रीवासुदेव भगवान् के अंश रूप कहते हैं। उनके सौ १०० पुत्र वेद में पारंगत होते हुए ॥ १६ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

तेषामृषभसुतानां मध्ये नवयोगीश्वराणां चरितं वक्तुमितरेषां चरितं ततो विविच्याऽऽह—तेषामिति । एतद्जनाभं नाम वर्षं यस्य नाम्ना भारतमित्यद्भुतं विख्यातमासीत् एतेन तस्य धर्मातिरेको निरूपितः ॥ १७ ॥

इमां पृथ्वीं गृहान्निर्गतः हरिमुपासीनः सेवमानः सन् ॥ १८ ॥

नव सुताः नवद्वीपपतयो नवानां ब्रह्मावर्त्तादिभूखण्डानां

(१) ह्यूर्ध्वमन्थिनः (२) राजनाम इति विज० पा० ।

### श्रीधरस्वामिकृतभावार्थदीपिका ।

पतयः अस्य भारतस्य वर्षस्य एकाशीतिसुताः कर्ममार्गप्रवर्त्तका ब्राह्मणा अभूवन् ॥ १९ ॥

अर्थशंसिनः परमार्थनिरूपकाः श्रमणाः श्रमवन्तः आत्माभ्यासे कृतश्रमा इत्यर्थः । वातरशना दिगम्बराः आत्मविद्यायां विशारदा निष्णाताः ॥ २० ॥ २१ ॥

तेषां पारमहंस्यचरितमाह—त एत इति द्वाभ्याम् । भगवद्रूपं विश्वं पश्यन्तः सदसदात्मकं स्थूलसूक्ष्मरूपम् तच्च स्वाऽव्यतिरेकेण पश्यन्तः ॥ २२ ॥

अव्याहता अप्रतिहता इष्टा अभिप्रेता गतिर्येषां ते मुक्ताः अनासक्ताः ॥ २३ ॥

महात्मनो निमेः वितायमानमनुष्ठीयमानम् आजनाभे भारतवर्षे ॥ २४ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

तेषां भरतादीनाम् एकोत्तरशततमानां तेभ्यो नवयोगेश्वरेभ्यः विविच्य पृथक्कृत्य एतेन स्वनाम्ना वर्षप्रख्यापनेन तस्य भरतस्य धर्मातिरेको धर्माधिक्यम् ॥ १७ ॥

तपसा ध्यानलक्षणेन "तप आलोचने" इत्यस्मात् "यस्य ज्ञानमयं तपः" इति श्रुतेः । मन इन्द्रियैकाग्र्येणेति वा "मनसश्चेन्द्रियाणाञ्च ह्यैकाग्र्यं परमं तपः" इति स्मृतेः ॥ १८ ॥

तेषाम् ऋषभसुतानां मध्ये ये नवसुतास्ते अस्य भारतवर्षस्य समन्ततो ये नव द्वीपाः ब्रह्मावर्तादिभूखण्डास्तेषां पतयो बभूवुरित्यन्वयः ॥ १९ ॥

द्विरत्र पादपूरणे रशनाशब्दस्य वस्त्रे लक्षणा "श्यामो हिरण्यरशनोऽर्ककिरीटजुष्टः" इत्यत्र चतुर्थे स्वामिभिरेव तथा व्याख्यानात् वातवसना इति गौडीय एव पाठो न तु स्वामिसम्मतः ॥ २० ॥

द्रुमिल इत्येव पाठः नतु द्रविड इति निरर्थकत्वेन वक्ष्यमाणानुपयोगित्वात् ॥ २१ ॥

भगवान् परं ब्रह्मैवाधिष्ठानतया रूपं यस्य तादृशं पश्यन्तः कल्पितस्याधिष्ठानरूपमन्तरा स्वतोऽनिरूप्यत्वात् तच्च ब्रह्मस्वरूपमपि स्व ऽव्यतिरेकेण स्वं पदार्थाभेदेन स्थूलसूक्ष्मरूपं महदाद्याकाशादिरूपम् ॥ २२ ॥

सुरादीनां भुवनानि च कामं यथेच्छम् ॥ २३ ॥

महात्मनो विमुक्तचित्तस्य "यदृच्छया स्वैरितया" इति भक्तरूपाया यादृच्छिकत्वमभिप्रेतम् ऋषिणाऽनुष्ठीयमानम् ॥ २४ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

नव पुत्राः नवानां द्वीपानां पतयः ॥ १९—२१ ॥

सदसदात्मकम् आत्मनः परमात्मनः अव्यतिरेकेण शरीरतया नित्यसम्बन्धत्वेन ॥ २२-२४ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तेषां शतसङ्ख्यानां ज्येष्ठो भरतः स च नारायणः परायणं परं प्राप्यम् उपायश्च यस्य सः एतदजनाभं नाम वर्षं यस्य नाम्ना भारतमित्यद्भुतं विख्यातमासीत् स भरत इति सम्बन्धः अनेन तस्य धर्मानतिक्रम उक्तः ॥ १७ ॥

स भरतः भुक्ताः भोगाः यस्यां ताम् इमां स्ववशां पृथ्वीं त्यक्त्वा गृहान्निर्गतस्तपसा वर्णाश्रमोचितधर्मेण हरिमुपासीनस्त्रिभिर्जन्मभिस्तस्य हरेः पदवीं प्रकारं साधर्म्यमिति यावत् लेभे प्राप्तवान् वा (वै) इत्यनेन प्रसिद्धिः सूच्यते ॥ १८ ॥

तेषां भरतानुजानामेकोनशतसङ्ख्यानां मध्ये नव इलावर्त्तब्रह्मावर्त्तार्यावर्तमलयकेतुभद्रसेनेन्द्रस्पृग्विदर्भकीटकनामानो नव समन्ततः समन्तादस्य भारतवर्षस्य ये नव द्वीपाः खण्डाः स्वतुल्यनामानः तेषामधिपतयः बभूवुरित्यर्थः । एकाशीतिसङ्ख्यास्तु द्विजातयः कर्मतन्त्रप्रवर्त्तका बभूवुः ॥ १९ ॥

अवशिष्टा नव तु मुनयो बभूवुः तानेव विशिनष्टि—महाभागा ज्ञानवैराग्यादिभाग्ययुक्ताः अर्थशंसिनः परमार्थनिरूपकाः श्रमणाः श्रमवन्तः अध्यात्मविद्यापरिश्रमयुक्ता इत्यर्थः । अत एवात्मविद्यायां विशारदाः प्रवीणाः वातरशना दिगम्बरा नतु नग्नाः ॥ २० ॥

नामभिस्तान्निर्दिशति—कविरिति ॥ २१ ॥

तेषां पारमहंस्यं चरितमाह—त इति द्वाभ्याम । भगवच्छरीरभूतं चिदचिदात्मकं विश्वं परमात्मनोऽपृथग्भावेन पश्यन्तो व्यचरन् । २२ ॥

अव्याहता अप्रतिहता इष्टा अभिमता गतिर्येषां ते मुक्ताः काप्यनासक्ताः सुरादीनां लोकान् मुनिप्रभृतीनां भुवनानि स्थानानि च कामं यथेष्टं चरन्ति चेरुरद्यापि चरन्तीत्यभिप्रायेण वर्त्तमाननिर्देशः अनेन तेषां जनकस्य च कथं सङ्गमोऽभूदित्याशङ्का शमिता ॥ २३ ॥

तदेवाभिप्रेत्याह—त एकदेति । ते कदाचिद्यस्तत्र तत्र सञ्चरन्तः एकदा अजनाभे भारतवर्षे ऋषिभिर्वितायमानमनुष्ठीयमानं महात्मनो निमेर्जनकस्य सत्रं यदृच्छयोपजग्मुः ॥ २४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

यन्नाम्ना भारतमिति यस्य नाम्ना एतद्वर्षं भारतमिति विख्यातम् अद्भुतं पुण्यसाधननिमित्तत्वेन ॥ १७ ॥

तत्पदवीं तस्य हरेः पदवीम् अयनं लोकमित्यर्थः ॥ १८ ॥

तेषां मध्ये नवास्य भूमण्डलस्य नवद्वीपपतयः अभवन् तेषां मध्ये एकाशीतिसङ्ख्याता द्विजातयो बभूवुः किं कर्माणा इत्यत्राह—कर्मेति । कर्मतन्त्रप्रणेतारः कर्मकाण्डप्रणेतारः ॥ १९ ॥

तेषां मध्ये नव सङ्ख्याता मुनयोऽभवन् तत्रापि विशेषमाह, ऊर्ध्वमन्थिन इति । ऊर्ध्वं मन्था रेत एषामस्तीति ऊर्ध्वमन्थिनः ऊर्ध्वरेतसः सम्यक्ब्रह्मचर्यधारिण इत्यर्थः । स्पष्टमाह—श्रमणा इति, श्रमणा भिक्षवः तत्रापि विशेषमाह—वातरशना इति । वात एव रशना कटिसूत्रं येषां ते तथा दिगम्बराः परमहंसा इत्यर्थः । आत्मविद्यायां वेदान्तशास्त्रे विशारदाः पटवः ॥ २० ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

एतन्नामनिरुक्तिज्ञानादयमर्थः सिद्ध इति तन्नामान्याह—कविरित्यादिना । द्रुतं मिलं मिथो मेलनं वेदार्थानामेकीकरणं येन स तथा चाम्यन्ति वेदतीर्थम् इति चमस वेदतीर्थपायिनः तेषु सारश्रमसः "द्रु गतौ" इति धातोः डप्रत्ययः करे भान्तजनयति प्रकाशयतीति करभाजनः हस्तामलकवत् प्रतिभातवेदार्थ इत्यर्थः ॥ २१ ॥

आत्मविद्याविशारदा आत्मभेदज्ञानेनेति भावनाद्—त एत इति । ये मुनित्वेनोक्तास्त एते महीं व्यचरन्नित्यन्वयः । किं विशिष्टाः विश्वं पूर्णं सदसदात्मकं कार्यकारणरूपं भगवद्रूपम् आत्मना जीवाद्व्यतिरेकेण वैलक्षण्येन पश्यन्त इति, यद्वा, सदसदात्मकं भगवद्रूपं भगवतो मूर्त्तं प्रतिमास्थानीयं विश्वं प्रपञ्चमात्मनो हरेर्व्यतिरेकेण पश्यन्त इति यद्वा, विश्वमन्तः प्रविश्य वर्त्तमानं सदसदात्मकं बहिश्च जगत् व्याप्य वर्त्तमानं भगवद्रूपं ब्रह्मसंज्ञमात्मनोऽन्तर्यामिणो हरेर्व्यतिरेकेणाभेदेन पश्यन्तः "अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः" इति श्रुत्यर्थं समनुभवन्त इत्यर्थः । विश्वस्य परमात्मनोऽभेददर्शनं सदसदात्मकमिति विशेषणेन विरुद्धमङ्गीकारात् जहदजहल्लक्षणाप्रामाणिकीत्युपेक्षणीयं तन्मतमिति ॥ २२ ॥

महीसञ्चरणं चारकाणामप्यस्ति किं विशेषमाहात्म्यमेषामत्राह—अव्याहतेति । मुक्ताः जीवन्मुक्ताः मुनिचारणादीनां भुवनानि लोकांश्चेति सुरसिद्धादीनां लोकांश्चरन्तीति किं कामवशात्रेति आह, काममिति । बलवता प्रतिबन्धे कामतोऽपि सञ्चरणं दुःशकं कथाविख्यात उक्तम् अव्याहतेति ॥ २३ ॥

किमनेन प्रकृत इति तत्राह—त एकदेति । अजनाभस्य हरेः पुत्राः आजनाभाः ॥ २४ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

भगवतो रूपं स्फूर्त्तिर्यत्र तादृशं पश्यन्तः सदसदात्मकं स्थूलसूक्ष्मरूपं तच्चात्मनो व्यतिरेकेण आत्मानमपि तदनुगतं पश्यन्त इत्यर्थः ॥ २२ ॥

मुख्यादीनां भुवनानि च ॥ २३—२७ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तेषाम् ऋषभपुत्राणां मध्ये नवद्वीपपतयो नवानां ब्रह्मावर्त्तादिभूखण्डानां पतयः अस्य भारतवर्षस्य एकाशीतिः पुत्राः कर्ममार्गप्रवर्त्तका ब्राह्मणा अभवन् ॥ १९ ॥

अर्थशंसिनः परमार्थनिरूपकाः श्रमणा आत्माभ्यासे कृतश्रमा इत्यर्थः । वातरशना इति वसनापदेन वसनं लक्ष्यते दिगम्बरा इत्यर्थः ॥ २० ॥ २१ ॥

आत्मनः परमात्मनः सकाशादव्यतिरेकेण विश्वस्य तच्छक्तिरूपत्वादिति भावः ॥ २२—२५ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

प्रस्तुतानां नवार्षभाणां चरितं वक्तुमन्येषां चरितानि तेभ्यो विविच्याऽऽह—तेषामिति । तेषां शतसङ्ख्याकानामृषभसुतानां मध्ये भरतो ज्येष्ठः जन्मनेति शेषः । गुणतोऽपि स ज्येष्ठ इत्याशयेन तं विशिनष्टि—नारायणपरायण इति । एतदजनाभं नाम वर्षं यदस्य नाम्ना भारतमिति विख्यातम् सर्वेषां वर्षाणां मध्ये भगवत्प्राप्तिसाधनस्थानत्वेन भारतस्य श्रैष्ठ्यं दर्शयितुं तद्विशिनष्टि—अद्भुतमिति ॥ १७ ॥

स भरतः इमां वसुधां त्यक्त्वा निर्गतः गृहादिति शेषः तपसा हरिमुपासीनः सेवमानस्सन् तत्पदवीं हरिभावापत्तिं त्रिभिर्जन्मभिर्लेभे प्राप ॥ १८ ॥

तेषां मध्ये नव भरतस्य भारतस्य वर्षस्य समन्ततः नवानां द्वीपानां ब्रह्मावर्त्तादिभूखण्डानां पतयोऽभवन् एकाशीतिश्च कर्मतन्त्रस्य कर्मकाण्डस्य प्रणेतारः प्रवर्त्तकाः द्विजातयोऽभवन् ॥ १९ ॥

नव तु महाभागाः अतो मुनयोऽभवन् तत्रापि विशेषमाह—वात एव रशना कटिसूत्रं येषां ते तथा दिगम्बरा इत्यर्थः । अर्थशंसिनः वेदान्तार्थभूतभगवत्तत्त्वोपदेष्टारः यतः श्रमणाः वेदान्तेषु कृतश्रमाः तत्रापि आत्मविद्यायां वेदान्तशास्त्रे विशारदाः पटवः ॥ २० ॥

तेषां नामान्याह—कविरिति ॥ २१ ॥

आत्मविद्याविशारदा इत्युक्तं तदात्मविद्यावैशारद्यं विश्वभिन्नाभिन्नब्रह्मज्ञानेन भवत्यतस्तेषां विश्वभिन्नाभिन्नब्रह्मज्ञानकौशलमाह—त एते इति । ते च मुनयः सदसदात्मकं स्थूलसूक्ष्मरूपं विश्वं चिदचिदात्मकं सर्वं कार्यजातं भगवद्रूपं भगवतः चिदचिच्छक्तेः विश्वकारणस्य रूपम् अवस्थाविशेषं तदव्यतिरिक्तं पश्यन्तः आत्मनः भगवतो विश्वकारणात् व्यतिरेकेण च पश्यन्तो महीं व्यचरन्नित्यन्वयः । तथाह भगवान् सूत्रकारः "उभयव्यपदेशात्त्वहिकुण्डलवत्" (३।२।२७) इति अस्यार्थो वेदान्तकौस्तुभे द्रष्टव्यः ॥ २२ ॥

अव्याहता अनिवार्या इष्टगतिर्येषां ते मुक्तास्तत्र तदासक्तिरहिताः कामं यथेष्टं सुरादिलोकान् मुख्यादिभुवनानि च चरन्ति ॥ २३ ॥

एवं सर्वत्र चरमाणाः एकदा अजनाभे भारते वर्षे ऋषिभिः वितायमानमनुष्ठीयमानं निमेः सत्रं बहूपकारकं यज्ञं यदृच्छया उपजग्मुः न तु पाण्डित्यख्यापनादिप्रयोजनाय महात्मन इत्यनेन निमिभाग्यमेव तेषां तत्समीपगमने हेतुरिति द्योतयति ॥ २४ ॥

---

### भाषा टीका ।

तिन सबों के मध्य में जेष्ठ पुत्र बड़े नारायण परायण महाराज भरत हुए, जिनके नाम से यह अद्भुत भारतखण्ड विख्यात हुआ है ॥ १७ ॥

वे भरत महाराज इस पृथिवी के भोगों को भोगकर इस पृथिवी को त्यागकर गृह से निकल गये, वन में जाकर

तान् दृष्ट्वा सूर्यसङ्काशान् महाभागवतान् नृप !।
यजमानोऽग्नयो विप्राः सर्व एवोपतस्थिरे ॥ २५ ॥
विदेहस्तानभिप्रेत्य नारायणपरायणान्।
प्रीतः सम्पूजयाञ्चक्र आसनस्थान् यथाऽर्हतः ॥ २६ ॥
तान् रोचमानान् स्वरुचा ब्रह्मपुत्रोपमान्नव।
पप्रच्छ परमप्रीतः प्रश्रयावनतो नृपः ॥ २७ ॥

विदेह उवाच।

मन्ये भगवतः साक्षात्पार्षदान् वो मधुद्विषः।
विष्णोर्भूतानि लोकानां पावनाय चरन्ति हि ॥ २८ ॥
दुर्लभो मानुषो देहो देहिनां क्षणभङ्गुरः।
तत्रापि दुर्लभं मन्ये वैकुण्ठप्रियदर्शनम् ॥ २९ ॥
अत आत्यन्तिकं क्षेमं पृच्छामो भवतोऽनघाः !।
संसारेऽस्मिन् क्षणार्धोऽपि सत्सङ्गः शेवधिर्नृणाम् ॥ ३० ॥
धर्मान् भागवतान् ब्रूत यदि नः श्रुतये क्षमम्।
यैः प्रसन्नः प्रपन्नाय दास्यत्यात्मानमप्यजः ॥ ३१ ॥

नारद उवाच।

एवं ते निमिना पृष्टा वसुदेव ! महत्तमाः।
प्रतिपूज्याब्रुवन् प्रीत्या ससदस्यर्त्विजं नृपम् ॥ ३२ ॥

---

भाषा टीका।

तप से श्रीहरि की उपासना करते हुए तीन जन्मों में श्री-हरि की पदवी को प्राप्त होते हुए ॥ १८ ॥

अवशिष्ट जो रहे निन्यानवे (९९) पुत्र तिन में नव पुत्र इस भारत वर्ष के नवद्वीपों (खंडों) के पति हुए, और इक्यासी ८१ पुत्र कोई महदनुग्रहादिरूप कारण से कर्ममार्ग के प्रवृत्त करने वाले ब्राह्मण होते हुए ॥ १९ ॥

और भी शिष्ट रहे जो बड़ भागी नव पुत्र वे नव योगेश्वर होते हुए, तथा परमार्थ के निरूपण करने वाले, आत्माभ्यास के लिये परिश्रम शाली, दिगंबर और वेदान्त विद्या में निष्णात होते हुए ॥ २० ॥

वे नव योगेश्वर ये हैं—कवि, हरि, अन्तरिक्ष, प्रबुद्ध, पिप्पलायन, आविर्होत्र, द्रुमिल, चमस, और करभाजन, ॥२१॥

ये नव योगेश्वर भगवद्रूप स्थूल सूक्ष्म इस विश्व को परमात्मा से अपृथक् सिद्ध देखते हुए, इस पृथिवी पर विचरते हुए ॥ २२ ॥

और इन योगेश्वर लोगों की अभीष्ट गति कहीं भी प्रतिहत नहीं होती है, ये योगेश्वर लोग, सुर सिद्ध साध्य गन्धर्व यक्ष नर किन्नर नाग इनके लोकों में; तथा मुनि चारण भूतनाथ श्रीमहादेवजी तथा विद्याधर द्विज और सुरभि प्रभृति गायें, इनके भुवनों में यथेष्ट विचरते रहते हैं, कहीं भी रुक नहीं सके हैं ॥ २३ ॥

वे ही योगेश्वर एक समय इसी भारतवर्ष में विदेहराज महात्मा राजा निमि के यज्ञ में जिसमें कि—बहुत से ऋषि लोग अनुष्ठान कर रहे थे उसमें हरिइच्छा से पहुंच गये ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

यजमानो निमिः अग्नय आहवनीयादयः विप्रा ऋत्विगादयः ॥ २५ ॥

अभिप्रेत्य ज्ञात्वा ॥ २६ ॥

स्वरुचैव रोचमानान्स्वाभरणादिप्रकाशैः ब्रह्मपुत्रोपमान् सनत्कुमारादिसदृशान् ॥ २७ ॥

परमप्रीत्या तद्दर्शनमभिनन्दति द्वाभ्याम्—मन्य इति। ननु, भगवतः पार्षदानां कथमत्रोपलब्धिस्तत्राऽऽह, विष्णोरिति। विष्णुभक्ता लोकपावनार्थं सर्वत्र पर्यटन्तीत्यर्थः ॥ २८ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

जीवदशायां नित्यमच्युतस्य यत्पादाम्बुजोपासनं तदकुतश्चिद्भयं मन्ये न कुतश्चिद्भयं यस्मात्तथा आगामिदुःख(हेतु) दर्शनजं प्रातिकूल्यं ज्ञानं भयं कुतश्चिदपि तदभावस्तु मुक्तावेव सा चाच्युतपादाम्बुजोपासनादेवेत्युक्तं भवति । अनेनात्यन्तिकक्षेमो मुक्तिरेव तत्साधनं तु भगवत्पदाम्बुजोपासनमेव तदेव भागवतो धर्म इति च फलितम् । एतदेवोपपादयति असति प्रकृतिपरिणामरूपे देहे आत्मभावादात्माभिमानाद्धेतोरुद्विग्ना भययुक्ता बुद्धिर्यस्य तस्य पुंसः एवं पूर्वावस्था कथिता यत्र यस्मिन्नच्युतस्य पादाम्बुजोपासने कृते सति सर्वात्मना सर्वप्रकारेण भीर्भयं निवर्त्तते निःशेषभयनिवृत्तिमान् मोक्षः स्यादित्यर्थः । यद्वा, कीदृशं तदुपासनमित्यत्राह—विश्वात्मना यत्रेति विश्वात्मनेति भावप्रधानो निर्देशः । विश्वस्य कृत्स्नस्य चिदचिदात्मकस्य जगत आत्मत्वेनान्तरात्मतया यत्रोपासने कृते सति इत्यर्थः । सर्वत्र ब्रह्मभावाज्जीवदशायामपि भीर्भयं निवर्त्तते इति भावः ॥ ३३ ॥

ननु, सत्यं भगवदुपासनमेवात्यन्तिकक्षेमसाधनो भागवद्धर्म इति के के वा तदुपासनानुग्राहका भागवता धर्मा इत्यत आह—ये वा इति । अविदुषां पुंसामञ्जः सुखेनात्मलब्धये परमात्मप्राप्तये ये उपायाः श्रवणकीर्तनस्मरणपादसेवनार्चनवन्दनदास्यसख्यात्मनिवेदनादयः प्रोक्ताः पञ्चरात्रादिमुखेन कथितास्तानेव हि भागवतान् धर्मान् विद्धि । यद्वा, हि तान् उपासनानुग्राहकान् तानित्यध्याहियते तान् भागवतान् विद्धीत्यर्थः ॥ ३४ ॥

तान् विशिनष्टि—यानिति । यान् भगवता प्रोक्तान् उपायानधिष्ठाय सम्यक्ताननुतिष्ठन्नित्यर्थः हे राजन् ! कर्हिचिदपि न प्रमाद्येत उपायान्तरनिष्ठानामिव भगवद्धर्मनिष्ठानां प्रमादो नास्तीत्यर्थः विघ्नोपहतिर्नास्तीति भावः । तथा चोक्तम् भगवता "नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते" इति किञ्चेह भागवतधर्मेषु नेत्रे निमील्य धावन्नपि अयथावदाश्वनुतिष्ठन्नपीत्यर्थः न स्खलेत् इतस्ततो न सञ्चरेत् फलाविनाभूतः स्यात् न पतेच्च संसरेच्च महाराजपथे यथेयत्र दृष्टान्तो अभिसंहितः यथा तस्मिन्नेत्रे निमील्य धावन्नपि न स्खलेन्न पतेच्च तद्वदित्यर्थः । तथा च स्मर्यते—

"याः क्रियाः सम्प्रयुक्ताः स्युरेकान्तगतमानसैः ।
ताः सर्वाः शिरसा देवः प्रतिगृह्णाति वै स्वयम्" ॥

इति इतरोपायनिष्ठानां त्वयथावदनुष्ठितेभ्यस्तेभ्यः स्खलनं ततः पतनं चावश्यं भावीति सूचितम् ॥ ३५ ॥

कुतस्तस्य स्खलनादिशङ्कापि यतः सर्वशरीरेन्द्रियव्यापाराणां स्वान्तरात्मभूतपरमात्मप्रयोज्यस्वकर्तृकत्वानुसन्धानेनात्मनि कर्तृत्वानभिमानिनस्तदभिमानप्रयुक्तस्खलनादिदूरापेत इत्यभिप्रेत्याह—कायेनेति । वाचा वागिन्द्रियेणेन्द्रियैर्वागिन्द्रियव्यतिरिक्तैर्ज्ञानकर्मोभयेन्द्रियैरात्मना चित्तेनानुसृतः स्वभावः संसारवासना येन स तथाभूतोपीत्यर्थः । अनुसृतस्वभावादिति पाठे भावप्रधानो निर्देशः अनुसृतस्वप्रकृतिजगुणत्वादवश्यं कायादिभिः किञ्चित्करोति मनआदिभिः किञ्चित्सङ्कल्पयति अध्यवस्यति चेत्यर्थः । तथाचोक्तं भगवता—

"नहि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत् ।
कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः" ॥

इति एवं च कायादिभिर्यद्विहितमविहितप्रतिषिद्धञ्च कर्म करोति तत्सर्वं नारायणायेति समर्पयेत्तादर्थ्यचतुर्थ्यन्तनारायणपदोच्चारणेन तदर्थतामनुसन्दधीतेत्यर्थः—

"मयि सर्वाणि कर्माणि सन्न्यस्याध्यात्मचेतसा ।
निराशीर्निर्ममो भूत्वा युद्ध्यस्व विगतज्वरः ॥
यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत्तपस्यसि कौन्तेय ! तत्कुरुष्व मदर्पणम्" ॥

इत्युक्तं सर्वकर्मणामीश्वरार्पणं नाम इदमेव यत्स्वान्तरात्मभूतपरमात्मार्थत्वानुसन्धानमिति आचार्यास्तु यद्यत्करोतीत्यत्र शास्त्राविरुद्धं लौकिकं वैदिकञ्च यद्यत् करोतीत्यर्थ इति व्याचख्युः ॥ ३६ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अकुतश्चिदिति बहुवचनात् यद्भयमुत्पन्नं तदल्पबुद्धेरेकस्य बहुभिर्विचक्षणैर्युगपदुच्यमानवचनार्थावधारणं दुःशकमिति निवारयति अत्र संसारे असत्यमङ्गले देहादावहमित्याद्यात्मभावाद्बुद्धिभ्रमबुद्धेः पुरुषस्य नित्यमच्युतस्य हेयोपादेयांशरहितस्य हरेः श्रीपादपद्मोपासनमकुतश्चिद्भयं न कुतश्चिद्भयं यस्मात्तथा तदहं मन्य इति मम राद्धान्त इत्यर्थः । विशिनष्टि विश्वात्मनेति यत्र यस्मिन्नुपासने कृते विश्वात्मना सर्वात्मना संसा भीतिर्निवर्तते तदेवानुष्ठेयं पुरुषेणेति ॥ ३३ ॥

हरेरङ्घ्रिनिषेवणमेव मुख्यो भागवतो धर्म इति मनसि निधाय तदङ्गत्वेनोच्यमाना योगा अपि भागवतधर्मा इत्याह—ये वा इति । आत्मलब्धये परमात्मज्ञानाय भागवतान् धर्मानिति शेषः ॥ ३४ ॥

न प्रमाद्येत अनवधानवान्न भवति "प्रमादोऽनवधानता" इत्यभिधानात् आत्मानात्मविवेकज्ञानवान् स्यादित्यर्थः । कथमिवेत्यस्मिन्नर्थे लुप्तोपमामाह धावन्निति । यथा नेत्रे उन्मील्य धावन्निह शर्करावति स्थले न स्खलेन्न पतेत्तथा भागवतधर्मरथाधिरूढ ॥ ३५ ॥

भगवत्कथितोपायविधिः कीदृश इति तत्राह—कायेनेति । स्वभावं योऽयतामनुसृतोऽनुगतः मनसा सङ्कल्पाद्यधिकरणेन बुद्ध्या निश्चयज्ञानाधिकरणेन आत्मना मत्या मननलक्षणज्ञानाधिकरणेन अहं हरिमर्चयामीत्यादिलक्षणेनाहङ्कारेण वा कायादिना यदर्चनादिकं करोति सर्वक्रियासु स्वस्य स्वात्रन्त्र्यज्ञानेन तत्सर्वं परस्मै नारायणायास्त्विति समर्पयेत् स्वीयमात्मप्रसादजनकत्वेन तज्ज्ञानोपाय इति भावः ॥ ३६ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

स्वमतमेव मन्यमान आह—मन्य इत्यादिभिः । न कुतश्चिद्भयं यस्मात्तदकुतश्चिद्भयम् आत्यन्तिकं क्षेमं नित्यं पादाम्बुजोपासनमनवरतस्फूर्त्यादि विश्वात्मनेति तत्साधनावस्थायामपि क्रमशो भयनिवृत्तिर्दर्शिता ॥ ३३ ॥

भागवतधर्मलक्षणमाह—ये वै इति । स्वयं भगवता "कायेन

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

नष्टा प्रलये वाणीयम्" इत्याद्यनुसारेण अविदुषां पुंसां तन्माहात्म्यमविद्वद्भिरपि कर्तृभिः आत्मनो ब्रह्म परमात्मभगवानित्याविर्भावभेदवतः स्वस्य कर्मभूतस्य अञ्जः अव्यवधानेनैव लब्धये लाभाय ये उपायाः साधनानि प्रोक्ताः तानुपायान् भागवतान् धर्मान् विद्धि हि प्रसिद्धौ तत्र साक्षाद्भक्तेरपि भागवतधर्माख्यत्वम् "एतावानेव लोकेऽस्मिन्" इत्यादौ परधर्मत्वख्यापनाय दर्शितम् तत्रात्मलब्धये प्रोक्ता इति तटस्थलक्षणम् अन्येन तद्लाभाव्यभिचारि आत्मलब्धये ये उपाया इति तु स्वरूपलक्षणं तल्लाभोपायो हि तदनुगतिरेव ॥ ३४-३५ ॥

एते च श्रीप्रबुद्धेनापि विविच्य वक्ष्यन्ते स्वयमपि संक्षेपेणाभिप्रेत्य प्रथमतस्तत्राव्यवसानां तद्द्वारमाह, कायेनेति ॥ ३६ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

भो राजन् ! सर्वे धर्मा एव समया दृष्टाः किन्तु भागवतधर्म एव निर्भय इत्याह—मन्ये इति । अत्र संसारे न कुतश्चिदपि कालकर्मविघ्नादिभ्यो भयं यतस्तत्पादाम्बुजोपासनं तत्र मुख्यमधिकारिणमाह—असति असाधौ देहे गृहकुटुम्बादौ च आत्मा इति आत्मीय इति यो भावः भावना दुस्त्यजा तत एव उद्विग्ना धीर्यस्य तस्य भक्तिप्रतिकूलदेहगेहादिष्वासक्तिं त्यक्तुकामस्येत्यर्थः । यत्रोपासने सति विश्वात्मना सर्वात्मनैव भीर्निवर्त्तते ॥ ३३ ॥

भागवतधर्मलक्षणमाह—ये वै इति । मन्वादिमुखेन वर्णाश्रमादिधर्मानुक्त्वा अतिरहस्यत्वात् स्वमुखेनैव भगवता अविदुषामपि पुंसाम् अञ्जः शीघ्रमेव आत्मलब्धये स्वप्राप्त्यै ये उपायाः प्रोक्तास्तान् भागवतान् धर्मान् विद्धि ॥ ३४ ॥

तेषां प्रभावमाह—यान् आस्थाय आश्रित्य यद्वा आस्था विश्वासः यान् धर्मानास्तिक्येन विश्वासविषयीकृत्यापि किं पुनराचर्येत्यर्थः न प्रकर्षेण माद्येत मत्तो गर्वस्तद्वान् कर्मीव योगीव न भवेदित्यर्थः । यद्वा प्रमादोऽनवधानता असावधानो न भवेदित्यर्थः । अतोऽत्र विघ्नानां न प्रभविष्णुतेति भावः किञ्च, यान् भगवन्मार्गभूतान् धर्मानाश्रित्य नेत्रे निमील्य उन्मील्य वा धावन् न स्खलेत् न वा पतेत् यथा केनापि कश्चिदतिसमीचीनमतिसुगमं मार्गमानीतो जन उच्यते मदुपदिष्टेनानेन मार्गेण नेत्रे मुद्रयित्वा सुखेनाभिद्रवन्नेव याहि न कश्चिदपि ते संशय इति यथा पदन्यासस्थानगतिक्रमस्य परतः पादन्यासेन गतिधावनं तस्यापरत्वे स्खलनं बहुतरत्वे पतनमपि सम्भवेत् अत्र तु भक्तिमार्गे भजनधर्मस्याङ्गिनो विहिताङ्गानाम् अल्पतरातिक्रमे बहुतरातिक्रमे वा कर्ममार्ग इव न प्रत्यवायी भवेत् अतः फलान्न भ्रश्येत् तत्रापि नेत्रे निमील्येति वर्त्तमाने अपि नेत्रे मुद्रयित्वेत्यनेन शास्त्राद्यतिक्रमे न दोषः किमुताज्ञात इति ज्ञापितम् यान् धर्मानास्थायेत्युक्तत्वादङ्गिनस्त्वतिक्रमो दोष एव तथा सति मार्गच्युत एव स्यात् भगवत्प्राप्त्यर्थं पृथङ्मार्गकरणन्त्वातिदूषणावहमेव "श्रुतिस्मृतिपुराणादिपञ्चरात्रविधिं विना । ऐकान्तिकी हरेर्भक्तिरुत्पातायैव कल्पते" ॥ इत्युक्तेः अत्र भागवतधर्मे प्रवर्तमानस्य वर्णाश्रमधर्मेऽधिकार एव नास्तीति तदनुष्ठानाननुष्ठानविचारो नात्र प्रवेशयितव्यः—

"तावत् कर्माणि कुर्वीत न निर्विद्येत यावता ।
मत्कथाश्रवणादौ वा श्रद्धा यावन्न जायते" ॥

इति भगवदुक्तेः "भक्त्यैकयेशं गुरुदेवतात्मा" इत्यग्रिमवाक्ये भक्त्येत्यस्य एकयेति विशेषणोपन्यासात् कर्मादिमिश्रा भक्तिर्नात्र प्रस्तुतेत्यवसीयते ॥ ३५ ॥

शृण्वन् सुभद्राणीत्युपरिष्टाद्वर्णयितव्येषु भागवतधर्मेषु प्रवर्तमानेन सुधिया जनेन कायिकादिव्यापारा अपि भगवद्धर्मान्तरे प्रवेशनीया इत्याह—कायेनेति । अयमर्थः यथा विषयिभिः प्रातरारभ्य मूत्रपुरीषोत्सर्गमुखक्षालनदन्तधावनस्नानदर्शनश्रवणकथनादिव्यापाराः विषयसुखभोगार्थमेव कर्मिभिस्तु देवपित्रादिपूजार्थमेव क्रियन्ते तथैव भगवद्भक्तेन तेते भगवत्सेवार्थमेव कर्तव्या इति ते तेऽपि तेषां भक्त्यङ्गानि भवेयुरिति अनुसृतस्वभावात् देहाध्यासेन अनादिनैव योऽनुसृतः अनुवृत्तः स्वभावस्तस्मात् वर्णाश्रमधर्मादिकादित्यर्थः । कायादिभिर्यत् यद्यत्करोति तत् सर्वं नारायणार्थमेव नारायणं स्वामिनमेवेति वा समर्पयेत् विनियोजयेत् तादर्थ्ये क्रियार्थोपपदस्य ... नेन वा चतुर्थी ॥ ३६ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अत एव मुख्यं मोक्षसाधनं सर्वसम्मत्या कविः कथयति, मन्ये इति । अत्र संसारे यत्र यस्मिन्पादाम्बुजोपासने कृते असदात्मभावात् असति देहादावनात्मनि स्वात्मभावना अनीश्वरे जीवे परमात्मभावना वा ततो नित्यमुद्विग्नबुद्धेः विश्वात्मना सर्वप्रकारेण भीर्निवर्त्तते अनात्मनि आत्मभ्रान्त्या अनीश्वरे ईश्वरभ्रान्त्या वा उद्विग्नबुद्धिरपि यस्मिन् कृते संसारात् मुक्तो भवति किमुत तत्त्ववित् न विद्यते कुतश्चिद्भयं यस्मात्तदेवम्भूतमात्यन्तिकं क्षेममच्युतस्याप्रच्युतगुणस्वरूपस्य भगवतः पादाम्बुजोपासनमहं मन्ये ॥ ३३ ॥

अवान्तरोपायानाह-ये वै इत्यादिना । भगवद्गीतापञ्चरात्रागमादिषु भगवतैव श्रीमन्मुखेन हि निश्चये अविदुषामपि पुंसां किमुत विदुषाम् अञ्जसा सुखेनैव आत्मलब्धये भगवल्लब्धये ये प्रोक्तास्तान् हि निश्चये भागवतान् धर्मान् उपायान् मुख्योपाये चरणोपासनेऽवान्तरोपायान्विद्धि ॥ ३४ ॥

यान् भागवतान् धर्मान् आस्थाय आश्रित्य नरः कर्हिचिदपि न प्रमाद्येत अनवधानतां न गच्छेत् प्रमादोऽनवधानतेत्यभिधानात् अनवधानताञ्च पुरुषार्थहानिता भगवद्धर्मनिष्ठः पुरुषार्थहीनो न भवेदपि तु सर्वपुरुषार्थभागी भवेदित्यर्थः । नरः इत्यनेन सर्वेषां नराणां भागवतधर्माधिकारित्वं द्योतितम् । ननु—

"वर्णाश्रमाचारवता पुरुषेण परः पुमान् ।
विष्णुराराध्यते पन्था नान्यत्तत्तोषकारणम्" ॥

इति विष्णुपुराणवाक्यविरोध इति चेन्न अदृष्टवर्णाश्रमधर्मस्यापि

भयं द्वितीयाभिनिवेशतः स्यादीशादपेतस्य विपर्ययोऽस्मृतिः ।
तन्माययाऽतो बुध आभजेत्तं भक्त्यैकयेशं गुरुदेवतात्मा ॥ ३७ ॥
अविद्यमानोऽप्यवभाति हि द्वयो ध्यातुर्धिया स्वप्नमनोरथौ यथा ।
तत्कर्म सङ्कल्पविकल्पकं मनो बुधो निरुन्ध्यादभयं ततः स्यात् ॥ ३८ ॥
शृण्वन्सुभद्राणि रथाङ्गपाणेर्जन्मानि कर्माणि च यानि लोके ।
गीतानि नामानि तदर्थकानि गायन् विलज्जो विचरेदसङ्गः ॥ ३९ ॥
एवं व्रतः स्वप्रियनामकीर्त्या जातानुरागो द्रुतचित्त उच्चैः ।
हसत्यथो रोदिति रौति गायत्युन्मादवन्नृत्यति लोकबाह्यः ॥ ४० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

"अनेकजन्मसंसिद्धस्ततो याति परां गतिम्" इति भगवद्वाक्येन जन्मान्तरीयवर्णाश्रमधर्मनिष्ठासम्भवात् भागवतधर्मानुष्ठानेन सर्वपुरुषार्थसिद्धेः किञ्च राजमार्गे प्रसिद्धे नेत्रे निमील्य धावन्नपि न स्खलेन्न पतेत् यथा तथा इहास्मिन् भागवते धर्मे—

"श्रुतिस्मृती उभे नेत्रे विप्राणां परिकीर्तिते ।
एकेन विकलः काणः द्वाभ्यामन्धः प्रकीर्त्तितः" ॥

इति स्मृत्युक्तेः । नेत्रे निमील्य श्रुतिस्मृत्युक्तं विधिं मङ्क्त्वापि धावन् अनुष्ठानक्रमे किञ्चित्किञ्चिदुल्लङ्घयन्नपि न स्खलेत् न प्रत्यवायी स्यात् न पतेत् न भ्रश्येत् अत्र इवार्थवाचकेन वाशब्देन यथेति लभ्यते लुप्तोपमालङ्कारमाश्रित्य राजमार्गे इत्याक्षिप्यते ॥ ३५ ॥

के ते भागवता धर्मा इत्याकाङ्क्षायां शास्त्राचार्याज्ञया यथाशक्त्यनुष्ठितं भगवत्यर्पितं सर्वं कर्म भागवतो धर्म इत्याह—कायेनेति। अनुसृतः शास्त्राचार्याऽनुगतो यः स्वभावस्तस्मात् कायेन वाचा वागिन्द्रियेण अन्यैरिन्द्रियैश्च मनसा वा मनसा हेतुभूतेन करणेन बुद्ध्या बोधनहेतुभूतेन करणेन आत्मना चिन्तनहेतुभूतेन करणेन वा यद्यदर्चनादिकं करोति तत्सर्वं परस्मै नारायणाय परब्रह्मणे सर्वनरसमूहनिकेतायास्त्विति समर्पयेत्—

"यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत्तपस्यसि कौन्तेय ! तत्कुरुष्व मदर्पणम्" ॥

इति श्रीमुखवचनाच्च एवं सति परस्मिन्नर्पितं शास्त्रीयं सर्वं कर्म भागवतो धर्म इति भावः ॥ ३६ ॥

———

भाषा टीका ।

कविरुवाच ॥

कवि नामक योगेश्वर बोले, कि—हे निमिराज ! हम तो इसी को आत्यन्तिक क्षेम मानते हैं, कि—इस संसार में सदा निर्भय अच्युत चरणाम्बुज की उपासना करना, जिस उपासना के करने से असत् देहादिक में आत्माभिमान होने से उद्विग्न बुद्धिवाले पुरुष की सर्व प्रकार भय की निवृत्ति होजाती है ॥ ३३ ॥

जो उपाय भगवान् ने अपनी प्राप्ति के लिये स्वयं आपने कहे हैं, कि—जिनसे अविद्वान् पुरुष भी सुख पूर्वक आपको प्राप्त होसकै उनहीं उपायों को आप भागवत धर्म समुझो ॥ ३४ ॥

हे राजन् ! वे भागवत धर्म कैसे हैं ? कि—जिनका अनुष्ठान करता हुआ पुरुष कभी भी प्रमाद को नहीं प्राप्त हो सकता है । अर्थात् उपायान्तर निष्ठों की तरह भागवत धर्म निष्ठ पुरुषों का प्रमाद से कार्य प्रतिहत नहीं होता है, अन्य उपाय में लगने से तो किञ्चित् चूकने पर भी पतन होजाता है, परंच राज मार्ग में जैसे नेत्र निमीलन कर दौड़ने से भी नहीं गिरता है इसी प्रकार भागवत धर्मों के अनुष्ठान करने में नेत्र बंद कर दौडने पर भी पतन नहीं होता है । यहां पर श्रुति स्मृति दोनों का ज्ञान होना ही दोनों नेत्रों का खोलना है, और वर्णाश्रम के विहित धर्मों का नहीं उलुंघन करना ही मार्ग में चलना है, किंतु भागवत धर्मनिष्ठ होकर श्रुति स्मृति का ज्ञान भी न करें तब मानों नेत्र बंद करना भया, और विहित धर्मों का बीच २ में उलुंघन करना ही मानों दौड़ना भया, तथापि भागवत धर्म निष्ठको पतन का भय नहीं है क्योंकि—वह राज मार्ग का प्रभाव है ॥ ३५ ॥

काय वाणी मन इन्द्रिय बुद्धि चित्त अथवा अपने स्वभाव से जो २ कुछ शास्त्राविरुद्ध लौकिक और वैदिक कर्म करै, तिसको परम पुरुष श्रीनारायण को समर्पण करता जावै, अपने शरीरादि के व्यापारों को ऐसा मानें कि—मैं प्रयोज्य कर्त्ता हूं नारायण की प्रेरणा से इन कार्यों को करता हूं इस प्रकार स्वतंत्र कर्तृत्व का अनुसंधान न होने से तत्प्रयुक्त पतनादि इसको नहीं होता । और कुत्सित कर्म से निवृत्ति तो स्वरूपानुसंधान से ही सिद्ध है ॥ ३६ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

ननु, किमेवं परमेश्वरभजनेन अज्ञानकल्पितभयस्य आत्यन्तिकनिवर्त्तकत्वादित्याशङ्क्याह—भयमिति । यतो भयं तन्मायया भवेदतो बुधो बुद्धिमांस्तमेवाऽऽभजेत् ननु, भयं देहाद्यभिनिवेशतो भवति स च देहाहङ्कारतः स च स्वरूपास्मरणात्किमत्र तस्य

### श्रीधरस्वामिकृतभावार्थदीपिका ।

माया करोत्यत आह, ईशादपेतस्येति । ईशाद्विमुखस्य तन्मायया स्मृतिर्भगवतः स्वरूपास्फूर्तिस्ततो विपर्ययो देहोऽस्मीति ततो द्वितीयाभिनिवेशाद्भयं भवति एवं हि प्रसिद्धं लौकिकेष्वपि मायासु उक्तं च भगवता—

"दैवी ह्येषा गुणमयी मम माया दुरत्यया ।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते" ॥ इति ।

एकयाऽव्यभिचारिण्या भक्त्या भजेत् किञ्च, गुरुदेवतात्मा गुरुरेव देवता ईश्वर आत्मा प्रेष्ठश्च यस्य तथादृष्टः सन्नित्यर्थः ॥ ३७ ॥

ननु, विषयविक्षिप्तचित्तस्य कुतोऽव्यभिचारिणी भक्तिः सम्भवति? कुतस्तरामभयम्? तत्र न तावद्विषयो नाम वास्तवोऽस्ति किन्तु मनोविलासमात्रमतो मनो नियमनेन भजनादभयं स्यादित्याह—अविद्यमानोपीति । द्वयः द्वैतप्रपञ्चः ध्यातुः पुंसो धिया मनसा स्वप्नश्च मनोरथश्च यथेत्यर्थः । तत्तस्मात्कर्माणि सङ्कल्पयति विकल्पयति च यन्मनस्तन्निरुध्य नियच्छेत् ततश्च एकया भक्त्या भजनादभयं स्यादित्यर्थः ॥ ३८ ॥

एतदत्यन्ताशक्यमित्याशङ्क्य सुगमं मार्गमाह—शृण्वन्निति । तदर्थकानि तान्येव जन्मानि कर्माणि चार्थो येषां तानि एतान्यपि साकल्येन ज्ञातुमशक्यानीत्याशङ्क्याऽऽह, यानि लोके गीतानि प्रसिद्धानि तानि शृण्वन् गायंश्च विचरेत् असङ्गो निःस्पृहः ॥ ३९ ॥

एवं च भजतः सम्प्राप्तप्रेमलक्षणभक्तियोगस्य संसारधर्मातीतां गतिमाह—एवंव्रत इति । एवं व्रतं वृत्तं यस्य सः स्वप्रियस्य हरेर्नामकीर्त्या जातोऽनुरागः प्रेम यस्य सः अत एव द्रुतचित्तः श्लथहृदयः कदाचिद्भक्तपराजितं भगवन्तमाकलय्योच्चैर्हसति एतावन्तं कालमुपेक्षितोऽस्मीति रोदिति अत्यौत्सुक्याद्रौति क्रोशति हे हरे ! मामनुगृहाणेति अतिहर्षेण गायति जितं जितमिति नृत्यति, किं दाम्भिकवत्परान्प्रति प्रकाशयितुम् ? न, उन्मादवद्ग्रहगृहीतवत् लोकबाह्यः विवशः ॥ ४० ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

ज्ञानैकनिवर्त्यत्वात् रज्ज्वां भुजङ्गबुद्ध्या जातस्य भयस्य यथा रज्जुस्वरूपज्ञानेन निवृत्तिः स्यात् तथा स्वरूपाज्ञानकल्पितभयस्य स्वरूपज्ञानमात्रेण निरस्यत्वात् परमेश्वरभजनेन किमित्याक्षेपः स च देहाद्यभिनिवेशः सच देहाद्यहङ्कारः स्वरूपास्फुरणात् स्वस्वरूपाज्ञानात् अत्र भयादिषु मध्ये माया किं कार्यं करोति तन्मायया तस्य भगवतो जगदधिकारिण्या यमवद्भक्तदण्डकारिण्या अज्ञ्यां स्वरूपास्फूर्त्तिः जीवस्वरूपविस्मृतिः कार्यते ततः स्वरूपाऽस्फूर्तेः ततो विपर्ययात् गीतायां मामेव ये प्रपद्यन्ते इति स्वरूपासिद्धेव मायानिवारकत्वेनाभिप्रेता नतु ज्ञानमात्रं तस्माज्ज्ञस्यैव ज्ञातं न वाक्यमात्रात् "रहूगणैतत्तपसा न याति चेज्यया निर्वपणाद्गृहाद्वा" इत्याद्युक्तेः सर्वभयादिरोगस्य वैमुख्यनिदानत्वाच्चेति ॥ ३७ ॥

नन्विति शङ्कासमाधानाभासस्तत्र नन्वित्यारभ्य कुतस्तरामभयमित्येतत्पर्यन्तः शङ्काग्रन्थोऽग्रतः समाधानमिति अव्यभिचारिणी सन्तता यदि भक्त्यभावे मायोपशान्तिपूर्वकस्वरूपज्ञानादिकमेव न स्यात्तदा कुतस्तरामभयमित्यर्थः । तत्र तस्यामाशङ्कायाम् अतः विषयस्य मनोविलासमात्रत्वात् भजनात् मायादिनिवृत्तिद्वारा अभयं स्यादित्यर्थः । अविद्यमानोऽपि वस्तुतोऽसन्नपि स्वप्नमनोरथौ यथेति असन्तोऽपि मनसा भाने दृष्टान्तः स्वप्नश्च मनोरथश्चेति विग्रहवाक्यं स्वप्नमनोरथौ यथेति पाठे सर्वोऽपि द्वन्द्वो विभाषयैकवद्भवतीति न्यायात् "ऊकालोऽज्झ्रस्वदीर्घप्लुतः" इति वदेकवचनं पुंस्त्वञ्च अत एवेत्यर्थः इत्युक्तं तस्माद्द्वैतप्रपञ्चस्य मनोविलासमात्रत्वात् सङ्कल्पविकल्पयोः सामान्यविशेषचिन्तनत्वेन भेदो ज्ञेयः । ततश्च मनोनिरोधे सति एकया अव्यभिचारिण्या मूले तच्छब्देन मनोनिरोध एव वाच्यः स्यादेकयेत्यादिकन्तु आर्थिकमेवाकृष्टमत्र इत्यर्थं इत्युक्तम् ॥ ३८ ॥

एतन्मनोनिरोधेन भजनम् अत्यन्ताशक्यं दुष्कराष्टाङ्गमयत्वात् "अज्ञः पुंसामविदुषाम्" इत्युक्तेः सुगममार्गमाह—अर्थो वाच्यार्थः "नागृहीतविशेषणा" इति न्यायेन तत्तन्नामभिर्जन्मकर्माण्यपि वाच्यानि तत्र जन्मार्थकानि नामानि देवकीनन्दनो यशोदानन्दन इत्यादीनि कर्मार्थकानि तु कंसारिर्मुरारिर्मधुसूदन इत्यादीनीति ज्ञेयम् ॥ ३९ ॥

एवञ्च श्रवणकीर्त्तनादिप्रकारेण वृत्तं जन्मकर्मनामश्रवणगानाद्याचरणम् अत एव जातानुरागत्वादेव कदाचिद्दामबन्धनादिवेलायां नामकीर्त्यैति तृतीया श्रुत्या सर्वाङ्गभक्तौ नामकीर्त्तनस्यैवानुरागजनने साधकतमत्वं व्यञ्जितम् ॥ ४० ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

भयं द्वितीयेति । द्वितीयाभिनिवेशात् अब्रह्मात्मकस्वतन्त्राभिनिवेशतः लोके सद्वितीयव्यवहारो हि स्वरसतः शरीरव्यतिरिक्तद्वितीयपरः यथा देवदत्तः सद्वितीय आगत इत्युक्तेः शरीरमन्तरेण सद्वितीयत्वमुक्तं स्यान्न तु स्वशरीरेण "यस्यात्मा शरीरम्" इति श्रुतिश्च जीवानां परमात्मशरीरव्यतिरिक्तस्वतन्त्राभिमान उक्तः अत एव ईशादपेतस्य भगवद्विमुखस्य विपर्ययस्मृतिः विपर्ययः देहात्माभिमानः तद्विषयस्मृतिः तन्मायया भगवदधीनया प्रकृत्या देहात्मभ्रान्तिरब्रह्मात्मकस्वतन्त्रात्मभ्रान्तिश्चेत्युभयविधापि भ्रान्तिः भगवन्मायायत्ता तस्मात्तन्निवृत्तये भगवन्तं भजेदित्यर्थः । गुरुदेवतात्मा गुरुरेव देवतेति बुद्धिर्यस्य सः ॥ ३७ ॥

अविद्यमानोऽपि द्वितीयः द्वयः स्वतन्त्रात्मभ्रमश्चेत्युभयमविद्यमानमप्रामाणिकम् उभयविभ्रमोऽपि मामम्: अतस्तदुभयनिवृत्तये कर्माधीनं सङ्कल्पविकल्पकं सङ्कल्पो देहादिरक्षार्थचिन्ता विकल्पः स्वकचन्दनादिचिन्ताविस्तारः एतत्सर्वं मनःकृतं तस्मात् मनो निरुध्यादित्यर्थः । तत अभयं स्यात् भगवान्मत्स्वशरीरभूतोऽस्मीति बुद्धिः स्यादित्यर्थः ॥ ३८—३९ ॥

एवंव्रत इति बहुव्रीहिः स्वप्रियस्य स्वस्य प्रीतिविषयो भगवान् तस्य नामकीर्तनादित्यर्थः ॥ ४० ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

"विश्वात्मना यत्र निवर्तते भीः" इति सर्वात्मकब्रह्मोपासनेन भयनिवृत्तिकथनेन तदभावे तदनुवृत्तिः सूचिता तदेव सहेतुकमुपपादयति—भयमिति । द्वितीयाभिनिवेशतः भयं स्यात् अब्रह्मात्मकस्वतन्त्रवस्त्वभिमानो द्वितीयाभिनिवेशस्तस्मात् लोके हि सद्वितीयत्वव्यवहारः स्वरसतः शरीरव्यतिरिक्तस्वतन्त्रे वस्तुनि सत्येव दृष्टः सद्वितीय आगत उक्ते हि शरीरान्तरेण हि सद्वितीयत्वमुक्तं स्यात् नतु स्वशरीरेण "यस्यात्मा शरीरम्" इतिश्रुतिश्च जीवानां परमात्मशरीरत्वमाह अतः परमात्मशरीरव्यतिरिक्तस्वतन्त्रत्वाभिमानाद्भयं स्यादित्युक्तं भवति अत एवेशादपेतस्य भगवद्विमुखस्य विपर्ययः स्मृतिः विपर्ययः देहात्माभिमानः तद्विषयस्मृतिः देहात्मभ्रमरूपस्मरणं वा विपर्ययोऽस्मृतिरितिपाठेऽस्मृतिः परमात्मशरीरभूतत्वेन स्वात्मस्मरणाभावः द्वितीयाभिनिवेशविपर्ययादयः किं निबन्धना इत्यत्राह—तन्माययेति । तन्मायया भगवदधीनया मायया प्रकृत्या देहात्मभ्रान्तिरब्रह्मात्मकभ्रान्तिश्चेत्युभयविधा भ्रान्तिस्तन्मूला स्मृतिश्च भगवन्मायायत्तेत्यर्थः । अतः यत एवमतस्तस्माद्बुधः अधीतवेदान्तजन्यज्ञानः गुरुरेव देवतेति आत्मा बुद्धिर्यस्य तथाभूतस्सन्नेकयाऽव्यभिचारिण्या ऽनन्यप्रयोजनयेति यावत् भक्त्या तमेवेशं भजेत तन्माया निवृत्तये सर्वशरीरकं परमपुरुषमेव भजेदित्यर्थः ॥ ३७ ॥

ननु अनात्मनो देहस्यात्मत्वेनास्वतन्त्रस्यात्मनः स्वतन्त्रतया च प्रतीतिर्भगवन्माययापि कथमित्यत आह—अविद्यमानोपीति आत्मतया स्वतन्त्रतया चाविद्यमानोपि देह आत्मा च ध्यातुर्धिया मनसा द्वयोर्द्वयत्वेनावभात्यात्मतया स्वतन्त्रतया च प्रतीयत इत्यर्थः । द्वयोरिति पाठे द्वयोर्देहात्मनोरविद्यमानोपि आत्मताकारः स्वतन्त्रताकारश्च ध्यातुर्धिया ऽवभातीत्यर्थः । यद्वा द्वयोरात्माकारस्वतन्त्राकारयोर्ध्यातुर्मनसाऽविद्यमानो ऽपि आत्माकारं स्वतन्त्राकारश्च प्रतीयत इत्यर्थः । धियेत्यनेन प्रकृतिपरिणामात्मकस्य मनसोऽतथाभूतस्य तथात्वेन प्रतीतौ कारणत्वमुक्तं यथा स्वप्नमनोरथः यथा स अस्थिरोपि स्थिरत्वेनावभासते तद्वदित्यर्थः हि यस्मादेवं तस्मात्कर्मसङ्कल्पविकल्पकं कर्मणा निमित्तभूतेन सङ्कल्पयति विकल्पयतीति तथा तन्मनो निरुन्ध्यात् तज्जीवनादि कर्मानुगुणं सङ्कल्पयति समित्येकीकारे "ईश्वरोहमहं भोगी" इत्याद्युक्तविधं देहात्मनावेकीकृत्यानुसन्धापयति तयोस्तादात्म्यभ्रमं जनयतीति तथा विकल्पयति परमात्मपरतन्त्रैकस्वरूपमात्मानं विकल्पयति विरुद्धं कल्पयति तस्मिन् तत्पारतन्त्र्यविरुद्धस्वातन्त्र्यभ्रमं जनयतीति तथा तन्मनः "एषाभिहिता साङ्ख्ये" इत्युक्तया बुद्ध्या देहात्मयाथात्म्यनिश्चयात्मिकया निरुध्यान्नियच्छेदित्यर्थः ततो मनोनिरोधादभयं स्यान्मोक्षः स्यादिति निरोधस्य फलमुक्तम् ॥ ३८ ॥

नन्वतिचञ्चलं मनः कथं निरुन्ध्यादित्यत्रोपायमाह—शृण्वन्निति । रथाङ्गं चक्रं पाणौ यस्य तस्य भगवतो लोके जन्मान्यवताराः कर्माणि चेष्टितानि सुभद्राणि शृण्वतां मङ्गलावहानि शृण्वंस्तथा स रथाङ्गपाणिः यैः प्रतिपाद्यो येषु तानि गीतानि नामानि च निर्मुक्तलज्जो गायन्नसङ्गः काङ्क्षासक्तिरहितो विचरेत् एवंचेद्भगवत्प्रवणं तन्मनः शनैस्तद्विमिश्रकं भवतीत्यर्थः ॥ ३९ ॥

एतदेवोपपादयन्निरुद्धमनसोऽवस्थामाह—एवं व्रत इति । एवम् इत्थम्भूतं भगवज्जन्मकर्मगीतनामादिश्रवणगानाद्यात्मकं व्रतं यस्य स इति बहुव्रीहिः स्वकीयप्रियो भगवाँस्तस्य नाम्नो कीर्त्या कीर्तनेन जात अनुरागस्तस्मिन्प्रेम यस्य स अत एव द्रुतचित्तः श्लथहृदयः कदाचिद्भक्तपराजितं भगवन्तमाकलय्य उच्चैर्हसति कदाचिद्विच्छेदे सत्यतावन्तं कालं उपेक्षितवानस्मीति रोदिति क्वचिदत्यौत्सुक्याद्रौति क्रोशति तथातिहर्षेण गायति जितं जितमिति नृत्यति किन्दाम्भिकत्वपरीत्वश्रायुतं नेत्याह उन्मादवद्ग्रहगृहीत इव लोकबाह्यो लोकविलक्षणः ॥ ४० ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

विपक्षे बाधकतर्कमुद्भाव्य विपर्ययऽवसानमाह—भयमिति । अस्मृतिरज्ञानं विपर्ययोऽन्यथाज्ञानम् एते ईशादपेतस्य ईशानुग्रहरहितस्य प्रकृतिबद्धस्य पुंसो यस्य हरेर्माययेच्छया स्तः ताभ्याम् अज्ञानान्यथाज्ञानाभ्यां द्वितीयाभिनिवेशतः द्वितीये देहगृहादौ अहं ममेत्यभिनिवेशनाद्दूराभिमानः स्यात्तस्माद्भयं संसारलक्षणं स्यादिति यस्मात् अतो गुरौ परमात्मदेवतायां च आत्मा मनो यस्य स तथा तस्मात्तज्ज्ञानवान् यथायोग्यं गुरुपरमपुरुषयोर्भक्तिं कुर्वाणो बुधस्तं हरिमाभजेत् सर्वसमर्पणपूर्वकमुपासीतेत्यर्थः ॥ ३७ ॥

एतदेव सोदाहरणं विवृणोति—अविद्यमान इति । धिया ध्यातुर्विषयानिति शेषः "ध्यायतो विषयान्पुंसः" इति स्मृतेः पुंस ईशाधीनत्वेन स्वरूपाविद्यमानोऽपि द्वयो देहगृहादि स्वकीयत्वेनावभाति हि यस्मात् कथमिव यथा स्वप्नमनोरथः स्वप्ने जाग्रत्त्वेन निधिमास्थाय कोशमापाद्य प्रकृतिवर्गमावर्ज्य राज्यं करिष्यामीति मनोरथः सत्त्वेन प्रतीयते तथा देहादावीशाधीने स्वाधीनताबुद्धिः संसारः तस्मात्तादृशसंसारनिवृत्तये तत्कर्मतद्देहादिकर्मविषयो यस्य तत्तथा तत्सङ्कल्पविकल्पवृत्तियुक्तं मनः श्रीनारायणे निरुध्यात् ततो हरिप्रसादादभयं संसारनिवृत्तिलक्षणो मोक्षः स्यादित्यन्वयः । सर्वसमर्पणलक्षणोपासनाभावे ब्रह्मज्ञानं न स्यात्तदभावे संसारनिवृत्तिर्न स्यात् अतस्तदर्थं सर्वसमर्पणलक्षणमुपासनं कर्तव्यमिति भावः

> आत्मना देहगेहादिद्वयशब्देन भण्यते ।
> अविद्यमानं जीवस्य प्रतिभाति मदीयवत् ॥
> जाग्रद्वत्तु यथा स्वप्नः प्रतिभाति मनोरथः ।
> विद्यमानवदेवैवं देहादीशवशे स्थितम् ॥
> विभाति स्वाश्रयत्वेन सैषा संसृतिरुच्यते ।
> तस्मात्तद्विषयं त्यक्त्वा मनो विष्णौ निवेशयेत् ॥

इत्येतन्मानासिद्धमेतदर्थजातम् । नन्वत्र देहादेरसत्त्वाभिप्रायेण स्वप्नादिदृष्टान्तः किं न स्यादिति चेन्न, उदाहृतस्मृतिविरोधात् तस्मात्स्वातन्त्र्यस्यैव निषेधः क्रियत इति द्वयशब्देन भेदमनूद्य तन्निषेधः क्रियत इत्ययोऽयुक्तप्रमाणविरुद्धः इत्युक्तमनाकुलमिति ॥ ३८ ॥

अयमपि भागवतो धर्म इत्याह—शृण्वन्निति । एवमात्मज्ञानोत्पादनसमर्थभगवदुपासनाङ्गभूतसमर्पणाख्यभागवतधर्ममनुतिष्ठतो देहाद्यभिमानविधुरस्य भगवदेकस्वातन्त्र्यज्ञानिनो निरं-

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तरं हरौ मनो नियुञ्जमानस्य इयं प्रवृत्तिरित्यतो वाह—शृण्वन्निति । तदर्थकानि जन्मकर्मविषयाणि ॥ ॥ ३९ ॥

एवं व्रतमाचरतो परोक्षज्ञानजननी भक्तिः स्यादित्याह, एवं व्रत इति । प्रियस्य हरेर्नामकीर्त्या जातानुरागः संवर्धितभक्त्युद्रेकः अनेन भक्त्युद्रेकोऽनुमन्तव्य इति भावेनाह—हसतीति । लोकबाह्य इत्यनेन भक्तबाहुविध्यं दर्शयति—कश्चिल्लोकबाह्यो लोकविलक्षणः कश्चिल्लोकवत् बाह्यलिङ्गप्रदर्शकः कश्चिल्लोकवत् बाह्यवदुभयलक्षणोपेतश्च, तदुक्तम्—

"केचिदुन्मादवद्भक्ता बाह्यलिङ्गप्रदर्शकाः ।
केचिदान्तरभक्ताः स्युः केचिच्चैवोभयात्मकाः ॥
मुखप्रसादाद्धर्षाश्रु भक्तिर्ज्ञेया न चान्यतः" ॥

हसनादिलक्षणमुन्मादाद्भवतीत्याप्तमित्यत उक्तं मुखप्रसादादिति, नन्वयमर्थो मुखेन नोक्त इत्यत उक्तमथो इति, अथोशब्दस्य अयमर्थः । हसनादेरातव्याप्तत्वान्मुखप्रसादाद्युपात्तमित्यर्थः । विकल्पार्थो वा स च लोकबाह्य इत्यनेन स्पष्टीकृत इति ॥ ४० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

मन्ये कुतश्चिदित्येव स्थापयन् क्रमेण तत्रैव निष्ठापयति—भयमिति । यतो भयं तन्मायया भवेत् अतो बुधो बुद्धिमान् तमेवाभजेत् प्रथमतः कायेनेत्याद्युक्तप्रकारेण ईषदपि भजेत् ततो गुरुदेवतात्मा सन् भक्त्या साक्षाद्भागवतधर्मरूपया तत एकया नित्यतत्पादाम्बुजोपासनरूपयेति विशेषतोऽर्थः ॥ ३७ ॥

अथ साक्षात्तद्धर्मरूपामेव आह्वयन् मनोनिरोधोक्त्या कायेनेत्याद्युक्तमनिकरयति—अविद्येति द्वाभ्याम् ॥ ३८ ॥

मनोनिरोधश्चायं यदि पृथक् स्यात्तर्हि दुष्करोऽष्टाङ्गयोगमयश्चेत्यङ्गत्वहानिरित्याशङ्क्य स्वत एव मनोनिरोधश्च परमोपयुक्तोऽयमिति साक्षाद्भगवदङ्गमेवाह—शृण्वन्निति । यानि शास्त्रद्वारा सत्परम्पराद्वारा च लोके गीतानि जन्मानि कर्माणि च तानि शृण्वन् गायंश्च तथा तदर्थकानि तानि जन्मानि कर्माणि च अर्थो येषां तानि नामानि च गायन् विचरेदित्यन्वयः ॥ ३९ ॥

ततोऽन्तला तृतीया फलरूपा भक्तिः स्यादित्याह—एवं व्रत इति । अत्र नामकीर्त्तेनि तृतीयाश्रुत्या तत्रापत्यतिशयः साधकतमत्वव्यञ्जनात् तत एवं शृण्वन्नित्यादिप्रकारं व्रतं यस्य तथाभूतोऽपि सन् स्वप्रियाणि तन्नामरूपसङ्कीर्त्तनेषु मध्ये यानि स्ववासनापोषकाणि तेषां कीर्त्या कीर्त्तनेन मुख्येन कारणेन जातानुराग आविर्भूतमहाप्रेमेत्यर्थः । हासादीनां कारणानि भक्तिभेदानन्त्यादनन्तान्येव ज्ञेयानि ॥ ४० ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

किञ्चात्र भक्तेः संसारबन्धान्न भेतव्यं स हि भक्तौ प्रवर्त्तमानस्य स्वत एवापयातीत्याह—भयमिति । द्वितीये देहगेहस्रक्चन्दनवनितादिभोगप्रपञ्चेऽभिनिवेशात ईशादपेतस्य ईशविमुखस्य जीवस्य भयं संसारः स्यात् तत्त्वीशोन्मुखस्य—

"तावद्रागादयस्तेनास्तावत्कारागृहं गृहम् ।
तावन्मोहोऽङ्घ्रिनिगडो यावत्कृष्ण ! न ते जनाः" ।

इति ब्रह्मोक्तेः । तच्च भयं द्विविधं विपर्ययोऽस्मृतिश्च विपर्ययरूपमस्मृतिरूपं चेत्यर्थः । तत्र विपर्ययः आत्मभिन्ने देहादौ आत्मबुद्धिः अस्मृतिः आत्मनि स्मृतिभ्रंशः कोऽहं किङ्करोमि पूर्वं कीदृश आसमग्रे वा कीदृशो भविष्यामीति पूर्वापरानुसन्धानराहित्यम् एतदेव तस्य भगवतो मायया भयं यदुक्तं "स्मृतिभ्रंशाद्बुद्धिनाशो बुद्धिनाशात् प्रणश्यति" इति अत एव हेतोः बुधः श्रीगुरुचरणप्रसादालब्धविवेकः तमेव मां सम्यक् कामनान्तरराहित्येन एकया केवलयैव नतु ज्ञानकर्मादिमिश्रया भक्त्या भजेत् गुरुरेव देवता ईश्वरः आत्मा प्रेष्ठश्च यस्य तथादृष्टिः सन्नित्यर्थः ॥ ३७ ॥

ननु, स्रक्चन्दनवनितादिभोगप्रपञ्चो यस्य नैव विद्यते विद्यमानमपि तं परित्यज्य यो वा वने वसति तस्य भयं न भवेदिति केचिदेव वादीरित्याह—अविद्यमान इति । द्वयो भोगप्रपञ्चो ह्यविद्यमानोऽपि ध्यातुः पुंसोऽवभाति मानसप्रत्यक्षो भवति धिया मनसा स्वप्नश्च मनोरथश्च यथेत्यर्थः । सर्वो द्वन्द्वो विभाषयैकवद्भवतीत्येकत्वं तत्तस्मात् कर्माणि सङ्कल्पयति विकल्पयति च यन्मनस्तन्निरुन्ध्यात् स च मनोनिरोधो गुरुचरणभक्त्या विना प्रकारान्तरेण न भवेत् यदुक्तं श्रुतिभिः "विजितहृषीकवायुभिरदान्तमनस्तुरगम्" इत्यत्र समवहाय गुरोश्चरणमिति सप्तमे च "सर्वं चैतद्गुरौ भक्त्या पुरुषो ह्यञ्जसा जयेत्" इति अत एव गुरुदेवतात्मेत्यत्राप्युक्तम् ॥ ३८ ॥

एकया भक्त्या तमाभजेदित्युक्तं सैव भक्तिः का भवेदित्यत आह—शृण्वन्निति । यानि शास्त्रद्वारा सत्परम्पराद्वारा च जन्मानि कर्माणि वर्त्तते यानि च लोके लोकमात्रे गीतानि अपभ्रंशभाषयापि निबद्धानि तथा नामान्यपि तदर्थकानि नानादेशभाषाभेदेनापि वाथो वाच्यो येषां तानि कान्हा इति कानडे इति कान इत्येवमादीन्यपि गायन् असङ्गः वस्त्वन्तरासक्तिशून्यः ॥ ३९ ॥

एवं भजतः सम्प्राप्तफलभूतप्रेमभक्तियोगस्य तस्य संसारभ्रमातीतां चेष्टामाह—एवमेव व्रतं नियमो यस्य सः भक्तेष्वपि मध्ये नामकीर्त्तनस्य सर्वोत्कर्षमाह स्वप्रियस्य कृष्णस्य नामकीर्त्या स्वप्रियं वा यद्भगवन्नाम तस्य कीर्त्या कीर्त्तनेन जातोऽनुरागः प्रेमा यस्य सः दर्शनोत्कण्ठाद्रुतीकृतचित्तः जाम्बूनदः अये हैयङ्गवीनं चोरयितुं यशोदासुनश्चौरो गृहं प्रविष्टस्तदयन्धियेतां मां विधनागीति बहिर्जरतीगिरमाकर्ण्य पलायितुं प्रवृत्तं कृष्णं स्फूर्तिप्राप्तमालक्ष्य हसति स्फूर्तिभङ्गे सत्यहो प्राप्तो महानिधिर्मे हस्ततश्च्युत इति निर्विन्नः रोदिति हे प्रभो क्वासि क्वासि देहि मे प्रत्युत्तरमिति फूत्कृत्य रौति भो भक्त त्वत्फूत्कारं श्रुत्वैवायातोऽस्मीति पुनः स्फूर्तिप्राप्तं तमालक्ष्य गायति अद्याहं कृतार्थोऽस्मीत्यानन्देन उन्मत्तवन्नृत्यति लोकबाह्यः लोकानां हास्यप्रशंसासम्मानावमानादिष्ववधानशून्यः ॥ ४० ॥

खं वायुमग्निं सलिलं महीं च ज्योतींषि सत्त्वानि दिशो द्रुमादीन् ।
सरित्समुद्रांश्च हरेः शरीरं यत्किञ्च भूतं प्रणमेदनन्यः ॥ ४१ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ननु, स्वकृत्यार्पणादिनेश्वरभजने को हेतुरित्यत्राह-भयमिति । "मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्" इति श्रुतिप्रोक्तया मायया अनादिरूपया त्रिगुणया ईशादपेतस्य भगवत्पराङ्मुखस्य अस्मृतिः एष परस्यांशः "ममैवांशो जीवलोके" इति श्रुतिस्मृतिप्रसिद्ध-भगवदीयत्वस्मृत्यभावः अभगवदीयत्वाभिमान इत्यर्थः । ततो विपर्ययः देहात्माभिमानः ततो द्वितीयाभिनिवेशतः द्वितीये अनात्मनि आत्मत्वाभिमानस्ततः भयं पुनः पुनः जन्ममरणलक्षणसंसारभयं स्यात् अतो हेतोः स्वकृत्यार्पणादिना एकया अव्यभिचारिण्या भक्त्या तमीशं भयनिवृत्तये आभजेत् । ननु, संसारस्तु हरिमायया भवति तद्भजनरुचिः कुतः स्यादित्याह, गुरुदेवतात्मा बुध इति गुरौ उपदेशकर्त्तरि देवतायां उपदेश्ये उपास्ये भगवति आत्मा तद्भजनरुचिप्रार्थना परा बुद्धिर्यस्य सः तयोः कृपया बुधः सन् ईशादपेतत्वहेतुभूतायाः मायया उपास्योपासकयोश्च स्वरूपादिविस्मृतं तमाभजेदित्यर्थः ॥ ३७ ॥

अभिमानद्वये हेतुभूतस्य मायाकार्यस्य मनसो नियमनं तन्नियमनफलञ्चाह-अविद्यमान इति । यथा स्वप्नमनोरथौ मर्त्यस्यामरभावरूपौ जागरस्वप्नावस्थयोः अविद्यमानावपि कर्मविशेषफलसिद्धये परमेश्वरेण प्रवर्त्तितौ प्रतीयेते तथोक्ताभिमानयोर्द्वयः ज्ञानर्थे विद्यमानोऽपि ध्यातुरभिमन्तुर्धिया मनसा यतो अवभाति प्रतीयते तस्मात् कर्माणि सङ्कल्पयति विकल्पयति च यन्मनस्तद्बुधः निरुन्ध्यात् शास्त्रोक्तात्मानात्मपरमात्मतत्त्वनिष्ठं कृत्वोक्ताभिमानद्वयान्निवारयेत् ततस्तत्त्वज्ञाने जाते भगवद्भजनेनाभयं स्यात् ॥ ३८ ॥

शास्त्रोक्ततत्त्वत्रयविवेकवतो निवृत्ताभिमानद्वयस्य कर्त्तव्यविशेषमवस्थाविशेषञ्चाह—शृण्वन्निति त्रिभिः । रथाङ्गपाणेः चक्रहस्तस्य विष्णोः सुभद्राणि शृण्वतां कल्याणावहानि जन्मानि कर्माणि शृण्वन् कथयन् च तदर्थकानि जन्मकर्मविषयाणि गीतानि नामानि गायन् शृण्वन् च असङ्गः अन्यत्रासक्तिरहितो बुधो विचरेत् रथाङ्गपाणिजन्मादीनामानन्त्यं सूचयितुं तानि विशिनष्टि यानि लोके इति ॥ ३९ ॥

एवमिति । एवम्भूतं रथाङ्गपाणिजन्मादिश्रवणाद्यात्मकं व्रतं यस्य सः बुधः स्वप्रियस्य हरेर्नाम्नाम् अनिच्छयापि जिह्वया गृह्यमाणानां या कीर्तिः सकलतपोयज्ञतीर्थस्नानादिफलदं परा तया जातानुरागः उत्पन्नप्रेमोद्रेकः अत एव द्रुतचित्त-उत्कण्ठितस्वान्तः अत एव लोकविलक्षणः उन्मादवत् ग्रहादिष्टवत् मानापमानव्यवहारातीत इत्यर्थः । आत्मानं भगवदीयत्वेन सनाथं ज्ञात्वा हसति अनादिकालतो मायामोहिततया भगवत्पराङ्मुखमात्मानं संस्मृत्य संस्मृत्य कदाचित्कृतापराधवत् रोदिति कदाचिद्रौति क्रोशति भक्तिकण्टकं प्रति आक्रोशं करोतीत्यर्थः । प्रेमातिशयेन गायति नृत्यति च ॥ ४० ॥

भाषा टीका ।

द्वितीय के अभिनिवेश से अर्थात् अपने आत्माको परमात्मा परतंत्र शरीर रूप न मानकर तद् व्यतिरिक्त स्वतन्त्रात्माभिमान से भय होता है, अत एव श्रीहरि से विमुख पुरुष का देह में आत्माभिमान रूप विपर्यय होजाता है, तब परमात्मा का शरीर रूप यह मेरा आत्मा है इसका विस्मरण होजाता है, ये सब भी उनही की माया से होता है इसी हेतु से बुद्धिमान् पुरुष गुरु में देव बुद्धि रखकर एक भक्ति से उसी परमेश्वर को भजे, कि—जिससे माया दूर रहे ॥३७॥

भला ईश्वर की माया से भी देह में आत्म बुद्धि और भगवत्परतंत्र आत्मा में स्वतन्त्रात्म बुद्धि कैसे होसक्ती है ? तहां कहते हैं, कि—अनात्मभूत शरीर में आत्माभिमान और अस्वतंत्र आत्मा में स्वातंत्र्याभिमान ये दोनों अविद्यमान भी हैं, तौ भी ध्याता पुरुष के मन से भान होते हैं । जैसे कि—स्वप्न का मनोरथ अस्थिर है, तौ भी स्थिर सरी का भान होता है । तस्मात् बुद्धिमान् पुरुष कर्मों का सङ्कल्पविकल्प करने वाले मनही का निरोध करै तब आपही अभय होजायगा ॥ ३८ ॥

यदि विचारो कि मन तौ वडा चंचल है उसका निरोध कैसे होगा ? तहां उपाय वतलाते हैं, कि—श्रीचक्रपाणि भगवान् के सुन्दर मंगलरूप जन्म और कर्मों की कथाओं का श्रवण करता हुआ, और लोक में जो आपके तदर्थक नाम महात्माओं ने गाये हैं, उन नामों का गान करताहुआ, निःसंग और निर्लज्ज होकर संसार में विचरैं ॥ ३९ ॥

इस प्रकार के व्रत को धारण कर अपने परम प्रेष्ठ परमानन्द के नाम संकीर्तन से जब अनुराग उत्पन्न हो जाता है, तब उसी चित्त से कभी भगवान् को भक्तों से पराजित समझकर ऊंचे स्वर से हंसने लगता है, कभी उत्कंठा वढनेपर चिल्लाने लगता है, कभी हर्ष होने से गाने लगता है, कभी अब मैं जीत गया ऐसा विचार कर नाचनें लगता है, तौ क्या ये सब औरों को दिखाने के लिये करता है ? नहीं, जैसे कोई उन्माद से विवश होजावे उसी प्रकार यह भक्त भी विवश होकर चेष्टा करता है ॥ ४० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

किञ्च खमिति सत्त्वानि भूतानि आकाशादि यत्किञ्चिद्भूतमात्रं हरेः शरीरमिति मत्वा प्रणमेत् सम्भावनायां लिङ् ॥ ४१ ॥

---

भक्तिः परेशानुभवो विरक्तिरन्यत्र चैष त्रिक एककालः ।
प्रपद्यमानस्य यथाऽश्नतः स्युस्तुष्टिः पुष्टिः क्षुदपायोऽनुग्रासम् ॥ ४२ ॥

इत्यच्युताङ्घ्रिं भजतोऽनुवृत्त्या भक्तिर्विरक्तिर्भगवत्प्रबोधः ।
भवन्ति वै भागवतस्य राजंस्ततः परां शान्तिमुपैति साक्षात् ॥ ४३ ॥

( सन्न्यस्तदण्डः कृतभूतमैत्रो विगाढचेता भगवत्यधोक्षजे ।
पुनाति लोकत्रयमङ्घ्रिरेणुभिः शुद्धस्वभावस्तरणिर्यथोदितः ॥ ० ॥ ) इति वीर० अ० पाठः ।

राजोवाच ।

अथ भागवतं ब्रूत यद्धर्मो यादृशो नृणाम् ।
यथा चरति यद्ब्रूते यैर्लिङ्गैर्भगवत्प्रियः ॥ ४४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

नन्वियमारूढयोगानामपि बहुजन्मभिर्दुर्लभा गतिः कथं नाम-कीर्तनमात्रेणैकस्मिन्नेव जन्मनि भवेदित्याशङ्क्य सदृष्टान्तमाह, भक्तिरिति । प्रपद्यमानस्य हरिं भजतः पुंसो भक्तिः प्रेमलक्षणा परेशानुभवः प्रेमास्पदभगवद्रूपस्फूर्तिः तथा निर्वृतस्य ततोऽन्यत्र गृहादिषु विरक्तिरित्येष त्रिक एककालो भजनसमकाल एव स्यात् यथाऽश्नतो भुञ्जानस्य तुष्टिः सुखं पुष्टिरुदरभरणं क्षुन्निवृत्तिश्च प्रतिग्रासं स्युः उपलक्षणमेतत् प्रतिसिक्थमपि यथा स्युस्तद्वत् एवमेकैकस्मिन् भजने किञ्चित्प्रेमादित्रिके जायमाने अनुवृत्त्या भजतः परमप्रेमादि जायते बहुग्रासभोजिन इव परमतुष्ट्यादि ॥ ४२ ॥

ततश्च भगवत्प्रसादेन कृतार्थो भवतीत्याह—इत्यच्युताङ्घ्रिमिति ॥ ४३ ॥

भागवतस्य भवन्तीत्युक्ते तस्य लक्षणं पृच्छति—अथेति । यद्धर्मो यस्मिन् धर्मे परिनिष्ठितः यादृशो यत्स्वभावः यथा चरति वर्तते ब्रूते वा यैश्च लिङ्गैर्भगवतः प्रियो भवति ॥ ४४ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

हरेः शरीरं श्यामसुन्दरपीतवसनादिरूपं सम्भावनायां लिङिति अनुरागेण सर्वत्र तत्स्फूरणं तत्प्रणामः सम्भवत्येवेत्यर्थः । सर्वभूतेषु यः पश्येदिति वक्ष्यमाणत्वात् तत्र हेतुः अनन्यः स्फूरणान्तरशून्य इत्यर्थः । "या निशा सर्वभूतानाम्" इत्यादेः "नारायणमयं धीराः पश्यन्ति परमार्थिनः जगद्धनमयं लुब्धाः कामुकाः कामिनीमयम्" इत्यादेश्च ॥ ४१ ॥

इयं गतिः सर्वत्र तत्स्फूर्तिलक्षणा सदृष्टान्तामिति सदृष्टान्तं यथा स्यात्तथा प्रेमस्फूर्तिविरक्तीनां यौगपद्यमाह, तत्र जातानुराग इत्यनेन प्रेमोक्तं खं वायुमित्यनेन स्फूर्तिः लोकबाह्य इत्यनेन च विरक्तिरिति अत्र तु तत् त्रयमुद्दिश्यैककालत्वमात्रं विधीयते 'अप्राप्ते शास्त्रमर्थवत्' इति न्यायात् "प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः । अप्राप्ते तु विधीयन्ते बहवोऽप्येकयत्नतः" इत्युक्तेश्च । तथा स्फूरणं ततो भगवद्रूपादन्यत्र अत्र भक्तितुष्ट्योः सुखरूपत्वात् साम्यम् परेशानुभवपुष्ट्योरात्मभरणरूपत्वात् साम्यम् विरक्तिक्षुदपाययोश्चान्यत्र वैतृष्ण्यरूपत्वात् साम्यमिति ज्ञेयम् ॥ ४२ ॥

ततश्च भक्त्यादित्रिकोत्पत्त्यनन्तरम् अनुवृत्त्याऽभ्यासेन परां शान्तिमात्यन्तिकं क्षेमम् ॥ ४३ ॥

तस्य भागवतस्य अथ तज्ज्ञानार्थम् अनन्तरमेव भागवतं ब्रूत यस्मिन् धर्मे परिनिष्ठितस्तं धर्मं ब्रूत यत्स्वभावस्तं स्वभावं ब्रूत यथा वर्त्तते तद्वर्त्तनं ब्रूत यद्ब्रूते तद्वचनं ब्रूत यैर्लिङ्गैस्तानि लिङ्गानि ब्रूत ॥ ४४ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

सत्त्वानि जन्तूनि ॥ ४१ ॥

परेशानुभवः ईश्वरस्वरूपगुणादिविषयं तत्त्वज्ञानम् अन्यत्र शब्दादौ विरक्तिः तुष्टिः अलम्बुद्धिः पुष्टिः शरीरपोषणं क्षुदपायः जाठराग्निना शरीरगतास्थ्यादिदाहः क्षुत्तन्निवृत्तिः अनुग्रासं प्रतिग्रासम् ॥ ४२ ॥

शान्तिम् अशनायापिपासाशोकमोहजरामरणाख्योर्मिषट्कप्रशमम् ॥ ४३ ॥

भागवतं भगवद्भक्तं यद्धर्म इति श्रीभगवति सर्वकर्मार्पणरूपन्यासधर्मयुक्तः यादृशवासनायुक्तः चरतीति यद्ब्रवीति यज्जानाति श्रीभगवत्प्रसादं तत्त्वत्रयं च मन्त्रं श्रीभगवद्गुणान् लिङ्गानि च शङ्खचक्रधारणोर्ध्वपुण्ड्रतुलसीमालिकादीनि पञ्चरात्रादिप्रसिद्धानि अन्यानि चेति प्रश्नार्थः ॥ ४४ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

उपायान्तरमप्याह—खमिति । खमाकाशं सत्त्वान् जन्तून् आकाशादीनि यत् किञ्चिद्भूतमात्रं च हरेः शरीरमिति मत्वा प्रणमेत्, कथम्भूतः ? अनन्यः स्वयमप्यपृथक्सिद्धः स्वात्मन्यपि भगवच्छरीरतां भावयन्नित्यर्थः । इत्थं जगच्छरीरकब्रह्मभावनया शान्तं सन्मनो निरुद्धं भवतीति भावः ॥ ४१ ॥

ननु, मनोनिरोधोपायानुष्ठानेनैवायुरत्यल्पमुपैति कदा वा मनोनिरोधः ? कदा वा भगवद्भक्तिश्च स्यात् ? इत्यत आह—भक्तिरिति । परेशानुभवः ईश्वरस्वरूपरूपगुणादि-विषयं तत्त्वज्ञानं भक्तिः प्रीतिरूपं ध्यानमन्यत्र शब्दादि-विषयेषु विरक्तिश्चेत्येतत्त्रिकं प्रपद्यमानस्यैककालं युगपदेव भव-तीत्यर्थः । प्रपद्यमानस्येत्यनेन युगपद्भक्त्यादि(त्रिक)साधनतया ताव-द्भगवच्छरणागतिरत्रोपदिश्यते नन्वेकया प्रपत्त्यापि कथमेतत्त्रिकं युगपत् स्यादित्यत्र (तद्) दृष्टान्तमुखेनोपपादयति—तथाऽश्नत इत्या-दिना भवन्ति वै भागवतस्येत्यन्तेन । तुष्टिरखबुद्धिः पुष्टिः शरीर-पोषः क्षुदपायः जाठराग्निना शरीरगतास्थ्यादिदाहः क्षुत् तन्निवृत्ति-श्चेत्येतत् त्रिकमनुघासं प्रति ग्रासमश्नतः भुञ्जानस्य युगपदेव भवतीति ॥ ४२ ॥

इतीत्थं तथेत्यर्थः । भागवतस्य भगवत्प्रपन्नस्यानुवृत्त्या शनै-रच्युताङ्घ्रिं भजतः पुंसः भक्तिर्विरक्तिर्भगवत्प्रबोधः परेशानु-भवश्च भवन्ति, भवन्तु. ततः किमत आह—राजन्नित्यादि । हे राजन् ! ततो भक्त्यादिभ्यः साक्षात्परां शान्तिमशनायापिपासा-शोकमोहजरामरणाख्योर्मिषट्कप्रशमं मोक्षमिति यावत् उपैति प्राप्नोति परं शान्तमितिपाठे अशनाद्यूर्मिषट्करहितं परं परमात्मानम् उपैति ॥ ४३ ॥

न केवलमित्थंभूतः स्वयमेवोपैत्यपितु अन्यानपि तत्प्राप्ति-योग्यान् करोतीत्यभिप्रेत्याह—सन्न्यस्तदण्ड इति । सन्न्यस्तदण्डः भूतद्रोहरहितः भगवत्पदाम्बुजे विगाढं निमग्नं चेतो यस्य सः अत एव शुद्धस्वभावोऽङ्घ्रिरेणुभिर्लोकत्रयं पुनाति तत्र दृष्टान्तः यथोदितस्तरणिः सूर्यस्तद्वदित्यर्थः ॥ ० ॥

भवन्ति वै भागवतस्येत्युक्तं तस्य लक्षणं पृच्छति—अथेति । भागवतं भगवत्प्रपन्नं ब्रूत यद्धर्मः यो मोक्षधर्मो यस्य स इति बहु-व्रीहिः नृणां मध्ये यादृशः यत्स्वभावः यथा चरति तस्याचारः कीदृश इति प्रश्नः यैर्लिङ्गैर्भगवत्प्रियः लक्ष्यत इति शेषः ॥४४॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

इदानीमेवंविधोपासकस्य हरेरुपासनार्थमधिष्ठानविशेषमाह—खं वायुमित्यादिना । खादीनां यानि यानि शब्दप्रवृत्तिनिमित्तानि तानि सर्वाणि हरेरधीनत्वेन तदेकनिष्ठगुणावेदकानि उपासकानां च दृष्टयोग्यतावशात् तत्तदधिष्ठानबाहुल्यं चोपयुज्यते. हरेरावास स्थानत्वाद्येषु तदुपासनाविधानामिति भावेनाह—हरेरिति । यत्किञ्च भूतमुत्पन्नं तत्सर्वं हरेः शरीरं विषयभोगायतनत्वाद्वावासस्थानं "यः पृथिव्यां तिष्ठन् पृथिव्या" इत्यादिश्रुतेः । प्रकर्षेण नमस्तत्कुर्यात् किं तदभेदेन ? नेत्याह, अनन्यमिति । अन्यः स्वामी न विद्यते यस्य सोऽनन्यः तं ब्रह्मपरिणामत्वेन सर्वस्य तच्छरीरत्वात्तदभेदेन उपासनोच्यते चेतिचेन्न "सर्वं हरेर्वशत्वेन शरीरं तस्य भण्यते" इत्यादिविरोधात् ॥ ४१ ॥

एवं खाद्यधिष्ठानेषु सन्निहितस्य हरेस्ततो भिन्नत्वेन न तत्स्वा-मित्वेन चोपासना भक्त्यादिपुष्टिं करोति नान्यथेति सोदाहरणमाह, भक्तिरिति । खादिषु स्थितं हरिं प्रपद्यमानस्योपासीनस्य तथा परे परमात्मनि भक्तिः स्वे स्वस्मिन्ननुभवो स्वातन्त्र्यज्ञानम् अन्यत्र संसारे विरक्तिरित्येष त्रिकः त्रिकात्मसङ्ख्यां प्राप्त एककालः स्यादिति शेषः । यथा बुभुक्षोरश्नतः पुंसोऽनुघासं प्रति-कवलं क्षुदपायः पुष्टिरुदरपूर्तिलक्षणा तुष्टिरलम्बुद्धिश्चेत्येतत्त्रयं स्यात् ॥ ४२ ॥

पूर्वोक्तार्थमनूद्य तत्फलमाह—इतीति । प्रीत्या भजतोऽप्यनन्तरं भगवत्प्रबोधः भगवदपरोक्षज्ञानमनन्तरं पूर्वस्मादधिका संसार-विरक्तिरनन्तरम् अधिका भक्तिरित्येतानि साधनानि भागवतस्य भवन्तीति यस्मात्ततोऽनन्तरं साक्षात्तुर्यावस्थालक्षणां परामुत्तमां शान्तिं स्वयोग्यां मुक्तिमुपैतीत्यन्वयः । अत्र पूर्वाधिक्यविवक्षया प्रबोधादीनां हेतुमद्भावकथनं न विरुद्धमिति ज्ञातव्यम् ॥ ४३ ॥

भगवत्सम्बन्धी भागवत इति सामान्यतो ज्ञातवतोऽपि विशेष-विवक्षया लोकोपकाराय पृच्छति—अथेति । अथ प्राप्तावसरः पृच्छामीति शेषः । किं तत्राह, भागवतमिति । भागवतमुत्तममध्य-माधमसंज्ञं यद्धर्मः किं धर्मः यादृशः कीदृशः यथा कथम् ॥ ४४ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

ततः श्रीभगवतः सर्वत्र स्फूर्त्तेः खं वायुमिति सर्वाणि भूतानि आकाशादिकं यत्पश्यति तदनुरागातिशयेन "जगद्धनमयं लुब्धाः कामुकाः कामिनीमयम्" इतिवद्धरेः शरीरं श्यामसुन्दरपीतवसनादिरूपमेव पश्यन् प्रणमेत् तत्र तत्र भक्त्या नम्रात्मा भवतीत्यर्थः । तत्र हेतुः अनन्यः स्फूर्त्यन्तर-रहित इत्यर्थः । "या निशा सर्वभूतानाम्" इत्यादेः ॥ ४१ ॥

ननु, पूर्वं पादाम्बुजोपासनमित्यादिना तादृशतत्स्फूर्त्तिमेव फलमुद्दिष्टम् एवं अत इत्यादिना तत्प्रेम, लोकबाह्य इत्यनेन वैराग्यं चेति क्रमो गम्यते । सच न सम्भवति मिथः सापेक्षत्वात् यौगपद्ये च परस्पराश्रयो दोषः स्यात् तदेतदाशङ्क्य यौग-पद्यमेव दृष्टान्तेन साधयति—भक्तिरिति । तत्र भक्तितुष्ट्योः सुखरूपत्वात् परेशानुभवपुष्ट्योरात्मभरणरूपत्वात् विरक्ति-क्षुदपाययोरन्यत्र वैतृष्ण्यरूपत्वात्साम्यम् ॥ ४२ ॥

परां शान्तिम् आत्यन्तिकं क्षेममित्यर्थः ॥ ४३ ॥

अथेति । अथानन्तरं भागवतं ब्रूत तज्ज्ञानार्थं स्वत्र नृणां मध्ये यद्धर्मो यः स्वभावस्तं स्वभावं ब्रूत यथा च स आचरति अनुतिष्ठति तदनुष्ठानं ब्रूत यद्ब्रूते तद्वचनं च ब्रूतेति मानस-कायिकवाचिकलिङ्गपृच्छा । ननु, पूर्वं "शृण्वन् सुभद्राणि रथाङ्ग-पाणेः" इत्यादिग्रन्थेन तल्लिङ्गं श्रीकविनैवोक्तम् सत्यं तथापि पुनस्तत्तदनुवादेन तेषु लिङ्गेषु यैर्लिङ्गैः स भगवत्प्रियो यादृश उत्तममध्यमतादिभेदो विविक्तो भवति तानि लिङ्गानि विविच्य ब्रूतेत्यर्थः ॥ ४४ ॥

---

हरिरुवाच ।

सर्वभूतेषु यः पश्येद्भगवद्भावमात्मनः ।
भूतानि भगवत्यात्मन्येष भागवतोत्तमः ॥ ४५ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ततश्च—

"नारायणमयं धीराः पश्यन्ति परमार्थिनः ।
जगत्धनमयं लुब्धाः कामुकाः कामिनीमयम्" ॥

इति पौराणिकवाक्यस्योदाहरणीभवतीत्याह—खमिति । प्रणमेदिति सम्भावनायां लिङ् खवाय्वादिषु यत्र यत्र दृष्टिः पतेत्तत्र हरेः शरीरं श्यामसुन्दराकारमेव स्फुरितं पश्यतीत्यर्थः । यद्वा, भक्तस्य फलप्राप्तिदशां निर्धार्य पुनः साधनदशायां किञ्चिच्छिद्दधाति, खमिति । हरेः शरीरमधिष्ठानं ज्ञात्वा प्रणमेत् प्रणाम्रो भवेत् न विद्यतेऽन्यः कृष्णं विना सेव्यो यस्य सः ॥ ४१ ॥

भक्तिमार्गेऽतिमज्ञातिसुखदे साधनदशायामपि फलप्राप्तिसदृष्टान्तमाह—भक्तिः श्रवणकीर्तनादिः परेशस्येष्टदेवस्य कृष्णस्य यदा भवेत्तदैव अनुभवो माधुर्यास्वादोऽपि तदनुरूपो भवेत् सदैव अन्यत्र मायिकविषयसुखे विरक्तिरपि तदनुरूपा भवेदेवेत्येष त्रिक एक कालः समकालोत्पन्न एव प्रपद्यमानस्य कृष्णं भजतो जनस्य भवति यथाऽश्नतो भुञ्जानस्य जनस्य तुष्टिः सुखं पुष्टिरुदरभरणं क्षुन्निवृत्तिश्च अनुघासं प्रतिग्रासं स्युः उपलक्षणमेतत् प्रतिसिक्थमपि यथा स्युस्तद्वत् यथा भुञ्जानस्य किञ्चिन्मात्र्यां तुष्टौ सत्यां किञ्चिन्मात्री पुष्टिः किञ्चिन्मात्र एव क्षुदपायस्तथैव भजतो जनस्य किञ्चिन्मात्रे श्रवणकीर्तनादिभजने वृत्ते किञ्चिन्मात्र एव परेशानुभवः किञ्चिन्मात्र्येव विरक्तिश्च भवेत् यथैव च बहुभोजिनः सम्पूर्णा एव पुष्टितुष्टिक्षुदपायः तथैव बहुभजतः सम्पूर्णा एव भक्तिपरमेश्वरानुभवविरक्तय इति किन्तु बहुभोजनासामर्थ्यं भवति बहु भजतस्तु भजनसामर्थ्यातिशयो भवतीति विशेषो द्रष्टव्यः ॥ ४२ ॥

उक्तमर्थमेव पुष्टीकुर्वन्नाह—इतीति । परां शान्तिमात्यन्तिकं क्षेमम् ॥ ४३ ॥

भागवतस्य भवन्तीत्युक्ते तस्य लक्षणं पृच्छति—अथेति, यद्धर्मो यत्स्वभाव इति मानसलिङ्गप्रश्नः यादृश इति तस्यैव तारतम्यप्रश्नः यथा आचरतीति कायिकलिङ्गप्रश्नः यद्ब्रूते इति वाचिकलिङ्गप्रश्नः किमेतैः प्रश्नैरिति चेत्तत्र आह, यैर्मानसादिलिङ्गैर्भगवत्प्रियोऽनुमीयते ॥ ४४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

खादिकं हरेः सर्वव्यापकस्य शरीरम् आवासस्थानमिति मत्वा अनन्यः हर्येकशरणः सन् प्रणमेत् ॥ ४१ ॥

एवं व्रतस्य भक्तिः भगवत्साक्षात्कारलक्षणं परमं ज्ञानं संसारात् परमं वैराग्यं च भवतीत्याह—भक्तिरिति । प्रपद्यमानस्य भक्त्यादित्रिकास्त्रये भगवन्तं शरणं गच्छतः भक्तिः परेशानुभवः अन्यत्र संसारे विरक्तिरित्येष त्रिकः एककालः शरणागतिसमकालः जायते यथा अनुघासं प्रतिग्रासम् अश्नतः भुञ्जानस्य तुष्टिः पुष्टिः क्षुदपायाः स्युः ॥ ४२ ॥

साधनत्रिकसम्पन्नस्य भगवत्प्राप्तिमाह—इतीति । परां शान्तिं भगवत्साधर्म्यलक्षणां मुक्तिमुपैति प्राप्नोति ॥ ४३ ॥

भक्त्युपायं श्रुत्वा मुक्त्यधिकारिणं पृच्छति—अथेति, भक्त्यादयो मुक्त्युपायाः भागवतस्य भवन्तीति भवद्भिरुक्तम् अथ नृणां मध्ये मुक्त्यधिकारिणं भागवतं ब्रूत यद्धर्मः यः उत्तमत्वादिलक्षणो धर्मो यस्य सः यादृशः यत्स्वभावः यथाऽऽचरति वर्तते यद्ब्रूते च यैर्लिङ्गैः भगवत्प्रियो भवति ॥ ४४ ॥

भाषा टीका ।

और वह भागवत धर्म निष्ठ क्या करता है, कि—आकाश वायु अग्नि जल पृथिवी तारागण और सब प्राणी तथा दिशायें द्रुमादिक एवं सरित् समुद्रादिकों को अथवा और जो कोई भूत प्राणी हैं तिन सबों को श्रीहरि का शरीर मानकर प्रणाम करता है, और सबों को प्रणाम करने पर भी भाव की शुद्धि होने से सर्वत्र भगवत्स्फूर्ति होने के कारण अनन्य ही रहता है ॥ ४१ ॥

जो पुरुष श्रीहरि के शरणागत होता है; उसको भक्ति, परमेश्वर का अनुभव, और अन्यत्र वैराग्य, ये तीनों बातें एक समय में होने लगती हैं । जैसे कि—भोजन करने वाले पुरुष को भोजन करते २ ही ग्रास २ में तुष्टि पुष्टि और क्षुधाकी निवृत्ति ये तीनो बातें साथ ही साथ होती जाती हैं ॥ ४२ ॥

हे राजन् ! इकार श्री अच्युत भगवान् के चरणारविन्द भजन करने वाले भागवत को श्रीहरि की अनुवृत्ति करने से भक्ति वैराग्य और भगवद्विषयक ज्ञान ये सब साथही साथ होजाते हैं, तदनन्तर साक्षात् परम शान्ति [मोक्ष]को को प्राप्त होजाता है ॥ ४३ ॥

राजोवाच ।

राजा निमि बोले, कि—हे प्रभो ! अब आप भागवतों के लक्षण कहो, कि भागवतों के कैसे धर्म होते हैं ? और भागवत लोग कैसे होते हैं ? और वे कैसे आचरण करते हैं ? और वे क्या बोलते हैं ? एवं वे भगवत् के प्यारे कौनसे चिह्नों से जाने जाते हैं ॥ ४४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

यद्धर्म इत्यस्योत्तरमाह त्रयेण—सर्वभूतेष्विति । आत्मनः स्वस्य सर्वभूतेषु ब्रह्मभावेन समन्वयं पश्येत् तथा ब्रह्मरूपे आत्मनि

ईश्वरे तदधीनेषु बालिशेषु द्विषत्सु च ।
प्रेममैत्रीकृपोपेक्षा यः करोति स मध्यमः ॥ ४६ ॥
अर्चायामेव हरये पूजां यः श्रद्धयेहते ।
न तद्भक्तेषु चान्येषु स भक्तः प्राकृतः स्मृतः ॥ ४७ ॥
गृहीत्वापीन्द्रियैरर्थान् यो न द्वेष्टि न हृष्यति ।
विष्णोर्मायामिदं पश्यन् स वै भागवतोत्तमः ॥ ४८ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

अधिष्ठाने भूतानि च यः पश्येत् यद्वा "आततत्वात्प्रमातृत्वादात्मा हि परमो हरिः" इति तन्त्रोक्तेरात्मनो हरेः सर्वभूतेषु मशकादिष्वपि नियन्तृत्वेन वर्तमानस्य भगवद्भावं निरतिशयैश्वर्यमेव यः पश्येन्नतु तस्य तारतम्यम् तथाऽऽत्मनि हरावेव भूतानि च यः पश्येत् कथम्भूते भगवति अप्रच्युतैश्वर्यादिरूपे न पुनर्जडमलिनभूताश्रयत्वेन जाड्यादिप्रसक्त्या ऐश्वर्यादिप्रच्युतिं पश्येत स सर्वत्र परिपूर्णं भगवत्तत्त्वं पश्यन् भागवतोत्तम इत्यर्थः ॥ ४५ ॥

प्रेम च मैत्री च कृपा च उपेक्षा च ता ईश्वरादिषु चतुर्षु यः करोति स मध्यमो भागवतः एवम्भूतस्य भेदस्य दर्शनात ॥ ४६ ॥

अर्चायां प्रतिमायां पूजामीहते करोति न तद्भक्तेष्वन्येषु च सुतरां न करोति प्राकृतः प्रकृतप्रारम्भः अधुनैव प्रारब्धभक्तिः शनैरुत्तमो भविष्यतीत्यर्थः ॥ ४७ ॥

पुनरष्टभिः श्लोकैरभ्यर्हितत्वादुत्तमभागवतस्यैव लक्षणान्याह—गृहीत्वाऽपीति । श्रीवासुदेवाविष्टचेता न गृह्णाति तावदिन्द्रियैरर्थान् गृहीत्वाऽपीत्यपिशब्दार्थः इदं विश्वम् ॥ ४८ ॥

---

### श्रीराधारमणदासगोस्वामिभिर्विरचिता दीपिकादीपिनी टिप्पणी ।

तत्र "हरिर्हरति पापानि" इति स्मृतेः हरिशब्दस्य परममुख्यावृत्तिः श्रीभगवत्येवेति भागवतलक्षणं च भगवतैव वक्तव्यं नतु स्वमुखेन स्वलक्षणं भागवतेन वक्तव्यमन्यथाऽऽत्मसम्भावनाप्रसङ्ग इति तन्नामत्वाद्धरिरेवोवाचेति ज्ञेयं तत्र मानसधर्मोत्तरमाह—स्वस्य स्वं पदार्थस्य ब्रह्मभावेन ब्रह्मास्मीति भावनया सर्वभूतेषु कल्पितेषु अधिष्ठानत्वेन समन्वयमनुस्यूतत्वम् अधिष्ठाने कल्पितानि नतु वास्तवानीति यः पश्येत् स भागवतोत्तम इत्यर्थः । पूर्वार्धे ब्रह्मज्ञानिलक्षणमुक्तं नतु भागवतलक्षणमिति आग्नेनिम्वप्रश्नोत्तरन्यायापत्तिरित्यरुचौ यद्वेति आततत्वात् सर्वव्यापकत्वात् मातृत्वात सर्वज्ञातृत्वाच्चेत्यत्रारसाम्यान्निरुक्तिः तस्य भगवद्भावस्य हरावेव भूतानि चेति "मत्स्थानि सर्वभूतानि" इति भगवदुक्तेः सर्वाश्रये भगवत्येवाश्रितानि भूतानि यः पश्येत् इति सर्वस्य तद्व्याप्यत्वात्तदायत्तवृत्तिकत्वाच्च कस्यापि स्वातन्त्र्येण सत्तां यः प्रश्येदित्यर्थः जडानि मलिनानि च यानि भूतानि चराचरशरीराणि तान्याश्रयो यस्य तेषां चाश्रयस्तस्य भावस्तत्ता तया या जाड्यमालिन्यादिप्रसक्तिस्तयैश्वर्यादीनां प्रच्युतिं न पश्येत् स्वाभाविकचिच्छक्त्या मायाभिभावकत्वादिति भावः । "मायां व्युदस्य चिच्छक्त्या कैवल्ये स्थित आत्मनि" इति श्रीमदर्जुनवाक्यात् प्रेमविलासमयमर्थान्तरं तु सन्दर्भे द्रष्टव्यम् ॥ ४५ ॥

ईश्वरे परमेश्वरे यः प्रेमभक्तिं करोति तथा तदधीनेषु भक्तेषु च मैत्रीं बन्धुभावं "वैष्णवे बन्धुसत्कृत्या" इति भगवता वक्ष्यमाणत्वात् बालिशेषु भक्तिमजानत्सु कृपां "शोचे ततो विमुखचेतस इन्द्रियार्थमायासुखाय भरमुद्वहतो विमूढान्" इति श्रीप्रह्लादोक्तेः स्वस्य द्विषत्सु उपेक्षं चित्ताऽक्षोभेणौदासीन्यं भक्तभगवद्द्वेषिषु तु चित्तक्षोभस्यावश्यकत्वादुपेक्षां तत्सान्निध्यत्यागं "निन्दां भगवतः शृण्वन् तत्परस्य जनस्य वा । ततो नापैति यः सोऽपि यात्यधः सुकृताच्च्युतः" इति श्रीशुकोक्तेः । मध्यमत्वे हेतुमाह—एवम्भूतस्येति । मैत्रीकृपोपेक्षारूपस्य भेदस्य दर्शनात् नतु पूर्ववत् सर्वत्र तत्स्फूर्तिरिति मध्यमत्वम् ॥ ४६ ॥

मूले अर्चायामेवेति विशेषासङ्गत्या एवकारस्यान्ययोगव्यवच्छेदार्थमाह—न तद्भक्तेष्विति । श्रद्धया लोकपरम्पराप्राप्तयैव नतु शास्त्रार्थविश्वासमय्या तस्यां यस्यात्मबुद्धिः कुणपे इत्यादि तथा "अर्चयित्वा तु गोविन्दं तदीयान्नार्चयेत्तु यः । न स भागवतो ज्ञेयः केवलं दाम्भिकः स्मृतः ॥ इति शास्त्रज्ञानसम्भवे तद्भक्तपूजाया आवश्यकत्वान्न तद्भक्तेष्विति कथं प्रयुज्येत तस्माद्भक्ताभासो गौणः कनिष्ठोऽयं जातप्रेमा शास्त्रीयश्रद्धावान् साधकस्तु मुख्यः कनिष्ठो ज्ञेयः ॥ ४७ ॥

अभ्यर्हितत्वात् परमपूज्यत्वात् मायां मायिकत्वाद्येवं पश्यन् जानन् ॥ ४८ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

पञ्चरात्रादिप्रसिद्धान्येतानि रहस्यानीति हृदि निधाय तेषां प्राप्त्यर्थम् अन्तरायेवैतदुपायभूतानि लक्षणानि वर्णयति, हरिः जीवस्य भगवच्छरीरत्वं भगवति आत्मनि भूतानि सजीवशरीराणि इति वैशिष्ट्यज्ञानवानित्यर्थः ॥ ४५ ॥

ईश्वरादिषु प्रेमादीनां क्रमेणान्वयः ॥ ४६ ॥

अर्चायामेव अन्येषु सूर्यादिषु आनेषु तद्भक्तेषु च श्रद्धया

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

नाति पूजाम् एवं न सेवारूपं कैङ्कर्य्यम् ईहते स प्राकृतः प्रकृतिसम्बन्धवश्यो भवति भक्त इवेति ॥ ४७ ॥

एवं भागवतमुक्त्वा अन्तरलक्षणाविन्यासविशेषोपयोगी-त्याह—गृहीत्वेत्यादिना । विष्णोः सम्बन्धीदं शरीरं विश्वं मायां तदिच्छावशं पश्यन् ॥ ४८ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

कवेरनन्तरो हरिराह—सर्वभूतेष्विति । सर्वेष्वाब्रह्मस्तम्ब-पर्य्यन्तेषु[भूतेषु]आत्मनः स्वस्य च औपश्लेषिकस्याधारस्य शेषत्व-विवक्षया षष्ठी आत्मनि चेत्यर्थः । भगवद्भावं भगवतः सद्भावं पश्येत् मनेत्, व्यापिरूपका आत्मनि परमात्मनि भगवति च भूतानि च पश्येदिति भगवत आधारत्वमुक्तं वासुदेवार्थमनु-सन्दधदुत्तमभागवत इत्यर्थः । यद्वा, सर्वभूतेष्वात्मनश्च भगवद्भावं भावः प्रकारः भगवत्प्रकारतां भगवच्छरीरतया तदपृथक्सिद्ध-धर्मतां पश्येदित्यर्थः । उत्तरार्द्धन्तु यथोक्तार्थमेव ॥ ४५ ॥

अनेन यद्धर्म इत्यस्योत्तरमुक्तं भवति भागवतोत्तम इत्युक्तं तर्हि मध्यमाधमौ कीदृशौ ? इत्यतस्तावाह द्वाभ्याम्—ईश्वर इति । ईश्वरे प्रेम ईश्वरस्य सर्वव्यापितया सर्वशरीरत्वमजानन् केवलं देवतेति बुद्धिं मत्त्वा यः करोति स मध्यम इत्यर्थः । तदधीनेष्वी-श्वराधीनेषु भागवतेषु बालिशेष्वज्ञेषु भागवतेषु ईश्वरादिषु क्रमेण प्रेममैत्रीकृपोपेक्षाः यः करोति स मध्यम इत्यर्थः ॥ ४६ ॥

अर्चायामेवेति ग्रन्थो नार्चावतारार्चनापकर्षपरः किन्तु भागवतभक्तिरहितभगवदर्चार्चनस्य मन्दफलत्वपरः अर्चायां प्रतिमायामेव हरये पूजामीहते करोति तद्भक्तेषु हरिभक्तेषु नेहते अन्येषु च गोब्राह्मणाग्न्यादिषु च सुतरां न करोति स प्राकृतः भक्त अधमभक्त इत्यर्थः । प्राकृतोऽधुनैव प्रारब्धभक्तिरिति केचिद्व्याचक्षते ॥ ४७ ॥

पुनस्त्रिभिः श्लोकैरुपर्युदितस्योत्तमभागवतलक्षणान्येवाह, गृहीत्वेति । अर्थानिष्टानिष्टरूपान् विषयान् गृहीत्वा न मुह्यति मोहं न प्राप्नोति नाऽऽसक्तो भवतीति यावत्. तत्र हेतुत्वेन विशि-नष्टि-इदम् इष्टानिष्टजातं विष्णोर्मायां प्रकृतिपरिणामात्मकं पश्यन् अनिष्टविषयवदिष्टविषयस्यापि बन्धकत्वेन तस्य हेयत्वादिति भावः ॥ ४८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तत्र प्रथमप्रश्नं परिहरति—सर्वभूतेष्विति । सर्वभूतेषु स्थित-स्यात्मनः पूर्णस्य हरेः भगवान् सर्वगुणपूर्णः तस्य भावो भगवद्भावः सर्वगुणपूर्णताम् आत्मन्यात्मनि भगवति भूतानि च पश्येत् पश्यति सर्वभूतेष्वात्मनः स्वस्य भगवद्भावं ब्रह्मत्वं पश्यन् भागवतोत्तम इत्यर्थस्य पूर्णत्वादात्मशब्द उक्तः कश्चित्-सर्वनरोत्तम इति वाक्यविरुद्धत्वादनादरणीयम् ॥ ४५ ॥

मध्यमभागवतमाह-ईश्वर इति । ईश्वरे प्रेम तदधीनेषु सत्सु मैत्रीं बालिशेषु अज्ञेषु कृपां द्विषत्सु उपेक्षां चशब्दात् सर्वस्य जगतस्तद्वशत्वं न जानाति ॥ ४६ ॥

अधमभागवतमाह—अर्चायामिति । एवशब्देनार्चाया अन्यत्र स्थितविष्णुज्ञानं तत्पूजां च व्यावर्तयति तद्भक्तेषु न केवलं पूजां नेहते अपितु तारतम्यं न जानाति अन्येषूपेक्षकेषु शत्रुषु द्वेष-प्रकारं न जानाति विष्णुज्ञानं च किञ्चिन्न्यूनत्वेन प्राकृतः प्रकृति-निर्मितं स्वर्गादिकं प्राप्यातोऽधोलोकं याति मध्यमभक्तस्यापि स्वर्ग एव निरयो नैव ॥ ४७ ॥

यथाचरतीत्येतं प्रश्नं परिहरति—गृहीत्वेति । इमां लोक-यात्रां विष्णोर्मायाम् इच्छाधीनाम् पश्यन्निन्द्रियैरर्थाञ्छब्दादीन् विषयान् गृहीत्वापि योग्यतातिरेकेणाधिकं न द्वेष्टि न हृष्यति अयमेव यद्धर्म इत्यस्य परिहारः सदसत्सु यथायोग्यं हर्षद्वेषौ सदसतां वृद्धिह्रासकरो धर्मः—

> "सर्वं हरेर्वशत्वेन शरीरं तस्य भण्यते ।
> अनन्याधिपतित्वाच्च तदनन्यमुदीर्यते ॥
> नचाप्यभेदो जगता विष्णोः पूर्णगुणस्य तु" ॥

इति एतद्धरेः शरीरं यत्किञ्च भूतं प्रणमेदनन्यमित्यत्र प्रमाणं—

> "पूर्णत्वादात्मशब्दोक्तः कश्चित्सर्वनरोत्तमः ।
> सोपि नारायणो नान्यः स च सर्वेषु संस्थितः ॥
> तद्वशा इतरे सर्वे श्रीब्रह्मेशपुरस्सराः ।
> स एव तु स्वभक्तेषु स्थित्वाऽनुग्रहकारकः ॥
> अज्ञेष्वज्ञानयन्ता च द्विषत्सु द्वेषकारकः ।
> तत्प्रेरितास्तदन्ये तु प्रियद्वेषादिकारिणः ॥
> अतस्तत्प्रेरणादेव प्रेमाद्या मम जज्ञिरे ।
> इति पश्यति यो बुद्ध्या स तु भागवतोत्तमः ॥
> सर्वाधिकं पृथग्विष्णुं क्षीरसागरवासिनम् ।
> ज्ञात्वा तत्र प्रेमयुक्तस्तद्भक्तेषु च मैत्र्ययुक् ॥
> कृपावांश्च तदज्ञेषु तद्द्वेषीणामुपेक्षकः ।
> तद्वशत्वं न जानाति सर्वस्य जगतोऽपि तु ॥
> तमाहुर्मध्यमं भक्तमर्चायामेव संस्थितम् ।
> विष्णुं ज्ञात्वा तदन्यत्र नैव जानाति यः पुमान् ॥
> तारतम्यं च तद्भक्तेर्न जानाति कथञ्चन ।
> अवज्ञानञ्च तद्भक्तानात्मनो भक्तिदर्पतः ॥
> उपेक्षकोपि वा तेषु न स्मरेदथवापि तान् ।
> मानुषेषु यथाकश्चित्किञ्चिन्न्यूनः प्रदृश्यते ॥
> एवमेवोच्चतां विष्णोरल्पां पश्यति चान्यतः ।
> ते तु भक्ताधमाः प्रोक्ताः स्वर्गादिफलभोगिनः ॥
> ते विघ्निता अधो यान्ति तद्भक्तानामुपेक्षकाः ।
> कुर्युर्विष्णावपि द्वेषं देवा देवावमानिनः ॥
> पूजिता विष्णुभक्तिं च नाशयेयुस्ततः सुराः ।
> उपेक्षकेषु देवानां भक्तिनाशं स्वयं हरिः ॥
> करोति तेन विभ्रष्टाः संसरन्ति पुनः पुनः ।
> अधो वा यान्ति विद्वेषात्पूज्या देवास्ततः सदा ॥
> यस्तान्द्वेष्टि स तं द्वेष्टि यस्तानु स्तौति तम् ।
> एकान्तमागतं विद्धि देवैस्तद्भक्तिपूजितैः ॥
> उपेक्षकस्तु देवानां यदैव निरयोपमः ।
> तदा तु तेषु भक्तत्वमुपेक्षायां जनार्दने ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

विष्णोरुपेक्षकं सर्वे विद्विषन्त्यधिकं सुराः ।
पतत्यवश्यं तमसि हरिणा तैश्च पातितः ॥
भुङ्क्ते स्वर्गफलं नित्यं निरयं नैव गच्छति ।
विष्णोस्तु मध्यमो भक्तो जायते मानुषेषु च ॥
अस्मरन्देवता यस्तु भजते पुरुषोत्तमम् ।
योग्यः संस्मरते देवा न योग्यो द्वेष्टि केशवम् ॥
यस्तूत्तमो भागवतः स मुक्तिं परमां व्रजेत् ।
विष्णुना सर्वदेवैश्च मोदते स हि नित्यदा ॥

इति समाख्यानबलात्सिद्धोयं सर्वभूतेष्वित्याद्युक्तार्थं इति विष्णुमायां विविधवच्छायानाम्—

"विष्णोरिच्छानुसार्येतज्ज्ञात्वा योग्याश्च चाधिकम् ।
हृष्यति द्वेष्टि वा यस्तु स वै भागवतोत्तमः" ॥

इत्येतद्गृहीत्वापीन्द्रियैरर्थानित्यर्थे मानम्—

"सतां वृद्धिकरो धर्मस्त्वसतां ह्रासकारणः ।
अयं तु निश्चितो धर्मो ह्यधर्मोऽन्यो विनिश्चितः ॥
हर्षः सत्सु तथा सत्सु धर्मो धर्मविपर्ययः ।
तेषां वृद्धौ तथा हानौ सर्वं ज्ञेयमशेषतः ॥
एतदर्थं च धर्माणां मर्यादा वैदिकादिका ।
मूलधर्मविरुद्धा तु सा न ग्राह्या कथञ्चन" ॥

इत्येतदपि गृहीत्वापीत्यत्र मानम् ॥ ४८ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तत्रोत्तमं तत्तदनुभवद्वारा गम्येन मानसलिङ्गेन महाभागवतं लक्षयति—सर्वभूतेष्विति । "एवं व्रतः स्वप्रियनामकीर्त्या जातानुरागः" इति श्रीकविवाक्योक्तरीत्या यश्चित्तद्रवहासरोदनाद्यनुभावकानुरागवशात् खं वायुमग्निमित्यादि तदुक्तप्रकारेणैव चेतनाचेतनेषु सर्वभूतेषु आत्मनो भगवद्भावम् आत्माभीष्टो यो भगवदाविर्भावस्तं पश्येदनुभवति अतस्तानि च भूतानि आत्मनि स्वचित्ते स्फुरति यो भगवान् तस्मिन्नेव तदाश्रितत्वेनैवानुभवति एष भागवतोत्तमो भवति इत्थमेव श्रीव्रजदेवीभिरुक्तम् "वनलतास्तरव आत्मनि विष्णुं व्यञ्जयन्त्य इव पुष्पफलाढ्याः" इत्यादि यद्वा आत्मनो यो भगवति भावः प्रेमा तमेव चेतनाचेतनेषु भूतेषु पश्यति शेषं पूर्ववत् अत एव भक्तरूपतदधिष्ठानबुद्धिजातभक्त्या तानि नमस्करोतीति खं वायुमित्यादौ पूर्वमुक्तमिति भावः । तथैव चोक्तं ताभिरेव "नद्यस्तदा तदुपधार्य मुकुन्दगीतमावर्तलक्षितमनोभवभग्नवेगाः" इत्यादि श्रीपट्टमहिषीभिरपि "कुररि विलपसि त्वम्" इत्यादि अत्र न ब्रह्मज्ञानमभिधीयते भागवतैस्तज्ज्ञानस्य तत्फलस्य च हेयत्वेन जीवभगवद्विभागाभावेन च भागवतत्वविरोधात् "अहैतुक्यव्यवहिता या भक्तिः पुरुषोत्तमे" इत्यादिकात्यन्तिकभक्तिलक्षणानुसारेण सुतरामुत्तमत्वविरोधाच्च नच निराकारेश्वरज्ञानं "प्रणयरशनया धृताङ्घ्रिपद्मः" इत्युपसंहारगतलक्षणपरमकाष्ठाविरोधादेवेति विवेचनीयम् ॥ ४५ ॥

अथ मानमात्रलिङ्गविशेषेणैव मध्यमभागवतं लक्षयति, ईश्वर इति । परमेश्वरे प्रेम करोति तस्मिन् भक्तियुक्तो भवतीत्यर्थः । तथा तदधीनेषु भक्तेषु च मैत्रीं बन्धुभावं बालिशेषु तद्भक्तिमजानत्सु उदासीनेषु कृपां यथोक्तं श्रीप्रह्लादेन "शोचे ततो विमुखचेतस इन्द्रियार्थमायासुखाय भरमुद्वहतो विमूढान्" इति आत्मनो द्विषत्सु उपेक्षां तदीयद्वेषेण चित्तक्षोभेणौदासीन्यमित्यर्थः । तेष्वपि बालिशत्वेन कृपांशसद्भावात् यथैव श्रीप्रह्लादो हिरण्यकशिपौ भगवतो भागवतस्य वा द्विषत्सु तु सत्यपि चित्तक्षोभे तत्रानभिनिवेशमित्यर्थः । अस्य बालिशेषु कृपाया एव स्फुरणं द्विषत्सूपेक्षाया एव नतु प्राग्वत्सर्वत्र तस्य तत्प्रेम्णो वा स्फुरणं ततो मध्यमत्वम् ॥ ४६ ॥

अथ भगवद्धर्माचरणरूपेण कायिकेन किञ्चिन्मानसेन च लिङ्गेन कनिष्ठं लक्षयति—अर्चायामिति । अर्चायां प्रतिमायामेव न तद्भक्तेषु अन्येषु च सुतरां न भगवत्प्रेमाभावात् भक्तमाहात्म्याज्ञानाभावात्सर्वादरलक्षणभक्तगुणानुदयाच्च स प्राकृतः प्रकृतिप्रारम्भः अधुनैव प्रारब्धभक्तिरित्यर्थः । इयञ्च श्रद्धा न शास्त्रार्थावधारणजाता "यस्यात्मबुद्धिः कुणपे" इत्यादिशास्त्राज्ञानात् तस्माल्लोकपरम्पराप्राप्तैवेति पूर्ववत् अतश्चाज्ञातप्रेमा शास्त्रीयश्रद्धायुक्तः साधकस्तु मुख्यः कनिष्ठो ज्ञेयः ॥ ४७ ॥

पूर्वोक्तप्रकारेण मायां बहिरङ्गशक्तिविलासरूपाञ्चेयमित्यर्थः । अत्रापि कायिकमानसयोः साङ्कर्यम् ॥ ४८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

आत्मनः स्वस्य उपास्यो यो भगवांस्तस्य भावं विद्यमानतां सर्वभूतेषु यः पश्येत् यथा स क इति हिरण्यकशिपुना पृष्टः प्रह्लादः सर्वत्रैवेत्युक्त्वा स्तम्भेऽपि मत्प्रभुर्दृश्यत इति स्वोपास्यं भगवन्तं दृष्टवानेवेत्यर्थः । तथा आत्मन्यात्मीये आत्मोपास्ये भगवति च भूतानि पश्येत् यथा श्रीयशोदा कृष्णस्य जठरे एव सर्वभूतान्यपश्यत् । यद्वा, आत्मनि स्वमनसि स्फुरति यो भगवांस्तस्मिन्नेव भूतानि तद्विषयकप्रेमवन्ति यः पश्येत् यथा "वनलतास्तरव आत्मनि विष्णुं व्यञ्जयन्त्य इव पुष्पफलाढ्याः" इति "नद्यस्तदा तदुपधार्य मुकुन्दगीतम्" इत्यादिकं व्रजसुन्दर्यः । "कुररि विलपसि त्वम्" इति "क्षितिधर ! चिन्तयसे स्तनैर्विधर्तुम्" इत्यादिकं पट्टमहिष्यश्चोक्तवत्यः । अत एव आत्मनो भगवद्भावं सर्वभूतेषु यः पश्यति भाववन्ति च भूतानीत्यस्यार्थः सम्मतः सतामिति श्रीसनातनगोस्वामिचरणानां कारिका प्रसिद्धा अत्र पश्येदिति तथा दर्शनयोग्यतैव विवक्षिता "शकि लिङ् च" ३।३।१७२ इति लिङ् नतु तथा दर्शनस्य सार्वकालिकता तथात्वे नारदव्याससुकादावप्यव्याप्तिः स्यान्नहि ते सर्वदैव सर्वत्र भगवन्तं पश्यन्ति किन्तु तद्दिदृक्षाधिक्य एवाऽतस्तद्दर्शनौत्कण्ठ्यमत्याधिकं यदा वर्त्तेत तदैव कामुकाः कामिनीमयमिति न्यायेन सर्वं जगदेव भगवन्मयं पश्येत् तथैव "आत्मवन्मन्यते जगत्" इति न्यायेन सर्वभूतान्येव प्रेमौत्कण्ठ्यव्याकुलान्येव पश्येदिति ज्ञेयम् । अत्र दर्शनार्थत्वे व्याख्याते भगवतः सर्वभूताधेयत्वाधारत्वज्ञानवतः शास्त्रज्ञमात्रस्यैव भागवतोत्तमत्वं स्यादिति तत्र व्याख्यातम् ॥ ४५ ॥

देहेन्द्रियप्राणमनोधियां यो जन्माऽप्ययक्षुद्भयतर्षकृच्छ्रैः।
संसारधर्मैरविमुह्यमानः स्मृत्या हरेर्भागवतप्रधानः॥ ४९॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

ईश्वरे स्वोपास्ये भगवति प्रेम करोति तस्मिन्नासक्तो भवतीत्यर्थः। तदधीनेषु स अधीनो येषां तेषु भक्तेषु मैत्रीं बन्धुभावं बालिशेषु तद्भक्तिमजानत्सु कृपामिति भरतव्यासशुकादीनामपि कृपायाः सार्वत्रिकत्वादर्शनात् येषु बालिशेषु कृपा स्वयमुदेति तेष्विति व्याख्येयम्"गिरयो मुमुचुस्तोयं क्वचिन्न मुमुचुः शिवम्" इति गिरिदृष्टान्तात् भगवन्तं द्विषत्सु उपेक्षां तत्र कृपाया वैफल्यदर्शनादिति भावः। आत्मानं द्विषत्सु तु बालिशत्वमननात् दूरतः स्थित्वैव तच्छुभानुध्यानमात्रमिति सदाचारः अत्र सर्वभूतेषु भगवद्दर्शनयोग्यता यस्य कदाचिदपि न दृष्टा तस्यैवैतल्लक्षणचतुष्टयवत्त्वे मध्यमत्वं यस्य तु सा दृष्टा तस्य तूत्तमत्वमेवेति विवेचनीयम् अत एव भागवतोत्तमेषु नारदादिष्वपि प्रेममैत्रीकृपोपेक्षा दृश्यन्त एव॥ ४६॥

अर्चायां प्रतिमायां हरये हरिं प्रीणयितुं न तद्भक्तेष्वपि अन्येषु च सुतरां प्राकृतः प्रकृतिप्रारम्भः अधुनैव प्रारब्धभक्तिः शनैरुत्तमो भविष्यतीत्यर्थः इति श्रीस्वामिचरणाः तदेवं त्रिभिर्मंत्रैर्मौ वाक्य इति प्रश्नस्योत्तरमुक्तम्॥ ४७॥

लक्षितस्योत्तमभागवतस्य जातिभेदादन्यान्यपि लक्षणानि सम्भवन्तीत्याह पुनरष्टभिः—गृहीत्वेति॥ ४८॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

एवं पृष्टा मुनयः हरिमुखेनोत्तरमाहुः—सर्वभूतेष्वित्यादिभिरेकादशभिः श्लोकैः। तत्र यदुक्तं इत्यस्योत्तरं त्रिभिः "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च। खं वायुर्ज्योतिरापश्च पृथ्वी विश्वस्य धारिणी" इत्यादिश्रुतिप्रसिद्धस्यात्मनः सर्वभूतकारणस्य भगवतः सत्स्वपि तेषु कार्यरूपेषु चराचरेषु यः भगवद्भावं पश्येत् स्वासाधारणैश्चेतनत्वाचेतनत्वपरिच्छिन्नादिभिर्धर्मैर्भिन्नेष्वपि कार्येषु कारणात्कार्यभूतानां पृथक्स्थितिप्रवृत्त्याद्यभावात् कारणाभिन्नत्वं पश्येत् "सर्वं खल्विदं ब्रह्म" इति श्रुतेः "तदनन्यत्वमारम्भणशब्दादिभ्यः"(२।१।१५) इति न्यायाच्च अतः सर्वभूतेषु भगवद्दृष्ट्या भगवति तु विशेषतः सप्रेममात्रं परमशान्तिहेतुं करोति केवलाभेदभ्रान्तिवारणायाह—भूतानीति। आत्मनि जगदात्मनि भगवति स्वासाधारणैर्धर्मैः सृष्टेः पूर्वं सृष्ट्यनन्तरं च सूक्ष्मरूपेण स्थूलरूपेण च भूतानि पश्येत् "सदेव सोम्येदमग्र आसीत्" "एतस्मिन् द्यावापृथिव्यौ विधृतौ तिष्ठतः" इत्यादिश्रुतिभ्यः एष कार्यकारणयोर्जगद्ब्रह्मणोर्भेदाभेदसम्बन्धवित् भागवतेषूत्तमः जगद्ब्रह्मणोः केवलभेदस्वीकारे अभेदशास्त्रव्याकोपः केवलाभेदस्वीकारे च भेदशास्त्रव्याकोप इत्यलं विस्तरेण॥ ४५॥

यस्तु यथार्थशास्त्रार्थज्ञानाभावात् यथा सङ्ख्यमीश्वरादिषु प्रेम च मैत्री च कृपा च उपेक्षा च प्रेममैत्रीकृपोपेक्षाः करोति स मध्यमः भागवतः॥ ४६॥

यस्तु मध्यमादप्यल्पज्ञानः आचार्यादिभ्यः अर्चापूजनमाहात्म्यं श्रुत्वा श्रद्धया अर्चायामेव हरये पूजामीहते तद्भक्तेषु हरिभक्तेषु तु नेहते अन्येषु भूतेषु च नेहते इति किं वक्तव्यम् स भक्तः प्राकृतः प्रकृतिप्रारम्भस्तत्र भवः कृतभजनारम्भ इत्यर्थः। एवकारेण सर्वगतत्वभक्तप्रियत्वादिभगवद्गुणान् स न जानातीति सूचितम्, अर्चायामेव हरये पूजामीहते इत्यनेन पतिमेव सेवते कामुकी न तत्परिकरमितिवत्प्राकृतभक्तस्वभावापकर्षः वर्णितः न त्वर्चापूजापकर्ष इति ज्ञेयम्॥ ४७॥

प्रशस्तत्वादुत्तमभागवतस्य गुणान् पुनराहाष्टभिः तत्र तावत् कथं चरतीत्यस्य प्रश्नस्य हरिभजनावेशेन द्वेषहर्षमोहकामादिरहितश्चरतीत्युत्तरं चाह—गृहीत्वापीति त्रिभिः। प्रथमतस्तु हरिणामादिपरैः श्रोत्रादिभिरिन्द्रियैः शब्दाद्यर्थान् गृह्णाति अथ कदाचिदसाधून् साधूंश्चार्थान् शब्दादीन् विषयान् गृहीत्वापि इदं सर्वं जगत् मायां प्रकृतिपरिणामात्मना वर्तमानां पश्यन् न द्वेष्टि न हृष्यति असाधूनामिव साधूनामपि विषयाणां बन्धकत्वादुपेक्षा युक्तैवेति भावः॥ ४८॥

भाषा टीका।

हरिरुवाच।

हरि नामक योगेश्वर बोले, कि—सर्व भूत प्राणियों के विषें तथा अपने विषें भी भगवद्भाव देखे अर्थात् भगवान् का यह प्रकार है भगवान् प्रकारी है, ऐसे देखे, तथा सम्पूर्ण भूत प्राणियों को परमात्मा श्रीभगवान् के विषय में देखे अर्थात् सब का आधार परमात्मा को समुझे वही भागवतोत्तम है॥ ४५॥

और जो ईश्वर में प्रेम, भक्तों में मित्रता, मूर्खों पर कृपा, और द्वेषियों पर उपेक्षा करनेवाला है वह मध्यम भागवत है॥४६॥

जो अर्चा मूर्ति मात्र में श्रद्धा से हरि का पूजन करता है, अन्य हरि भक्तों के विषैं नहीं करता वह प्राकृत भक्त है, अर्थात् अल्प भक्त है, पूर्णभक्त वही है जो भागवतों में प्रीति पुरःसर भगवत्सेवा करता है॥ ४७॥

भागवत धर्मनिष्ठ अधिकारी इन्द्रियों से विषयों का सेवन नहीं करता है, यदि विषयों को ग्रहण भी करै तौ प्रिय अप्रिय विषयों में राग द्वेष जो नहीं करता है, और इस विश्व को भगवान् की माया से मुझता है, वह भागवतोत्तम है॥ ४८॥

श्रीधरस्वामिकृतभावार्थदीपिका।

किञ्च देहादीनां संसारधर्मैर्जन्माप्ययादिभिर्यो हरेः स्मृत्याऽविमुह्यमानः सः भागवतप्रधानः तत्र देहस्य जन्माप्ययौ प्राणस्य क्षुत्पिपासे मनसो भयम् बुद्धेस्तर्षस्तृष्णा इन्द्रियाणां कृच्छ्रं श्रमस्तैः॥ ४९॥

न कामकर्मबीजानां यस्य चेतसि सम्भवः।
वासुदेवैकनिलयः स वै भागवतोत्तमः ॥ ५० ॥
न यस्य जन्मकर्मभ्यां न वर्णाश्रमजातिभिः।
सज्जतेऽस्मिन्नहंभावो देहे वै स हरेः प्रियः ॥ ५१ ॥
न यस्य स्वः पर इति वित्तेष्वात्मनि वा भिदा।
सर्वभूतसमः शान्तः स वै भागवतोत्तमः ॥ ५२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

कामश्च कर्माणि च बीजानि च वासनास्तेषाम्। वासुदेव एवैकनिलय आश्रयो यस्य सः एतेन गृहीत्वापीन्द्रियैरित्यादिश्लोकत्रयेण द्वेषहर्षमोहकामादिरहितश्चरतीति यथा चरतीत्यस्योत्तरमुक्तम् ॥ ५० ॥

यैर्लिङ्गैर्भगवत्प्रिय इत्यस्योत्तरमाह—न यस्येति। जन्म सत्कुलम् कर्म तप आदि जातयोऽनुलोमप्रतिलोमजा मूर्धावसिक्ताद्यः अस्मिन् देहे अहङ्काररहितैः सत्कुलकर्मादिलिङ्गैर्हरेः प्रियो भवतीत्यर्थः ॥ ५१ ॥

वित्तेषु स्वीयं परकीयमिति आत्मनि स्वः पर इति ॥ ५२ ॥

———

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी।

संसारः जीवस्य जन्माद्यभिमानस्तज्जनकैर्देहादीनां धर्मैर्जन्माव्ययादिभिरित्यर्थः। तत्र देहादिमध्ये ॥ ४९ ॥

काम्यन्त इति कामाः विषयाः चरति वर्तत इति व्यवहारात्मकवर्तनस्योत्तरम् ॥ ५० ॥

मूर्धावसिक्तो क्षत्रियजातीयस्त्रियां ब्राह्मणाज्जातः अम्बष्ठो वैश्यात् क्षत्रियायां जातः अहङ्काररहिताः सत्कुलधर्मादय एव लिङ्गानीति तात्पर्यार्थविवक्षेत्यर्थः इत्युक्तम् ॥ ५१ ॥

आत्मनि स्व इति अहमन्योऽसावन्य इति ॥ ५२ ॥

———

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

देहस्य जन्माप्ययौ प्राणस्य क्षुत् इन्द्रियाणां कृच्छ्राणि मनसो भयं तर्षः तृष्णा बुद्धेः एवम्भूतैः संसारधर्मैः सर्वथा देहात्माभिमानरहित इत्यर्थः ॥ ४९ ॥

कामकर्मवासनानामुत्पत्तिः यस्य चेतसि मनसि न भवेत् श्रीवासुदेवाश्रयः अन्तर्यामिदृष्टिबलेन तदेव वसति ॥ ५० ॥

सत्कुलजन्म श्रौतस्मार्तकर्मभ्यां वर्णाश्रमविशिष्टजातिभिश्च देहनिष्ठाभिः अहम्भावो यस्य नास्ति देहनिष्ठक्षुत्तृड्यादिकर्मवत् अवर्जनीयशास्त्रीयकर्माण्यपि कुर्वन्न तत्कृताऽहङ्कारविवशः आत्मनि देहपुत्रदारादिके भिदा अब्रह्मात्मकत्वतत्प्रदृष्टिः ॥ ५१-५२ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

देहेन्द्रियेति। यो हरेः स्मृत्या देहादीनां जन्मादिभिः संसारधर्मैरविमुह्यमानः सः प्रधान उत्तमो भागवत इति सम्बन्धः तत्र देहस्य जन्माप्ययौ उत्पत्तिविनाशौ प्राणस्य क्षुत् मनसो भयं बुद्धेस्तर्षः तृष्णा इन्द्रियाणां कृच्छ्र श्रम इति योजना ॥ ४९ ॥

यस्य चेतसि कामकर्मबीजानां काममूलकर्माण्येव बीजानि तेषां कामाश्च कर्माणि च बीजानि वासनाश्च तेषां वा कामकर्माणि काम्यकर्माणि तान्येव बीजानि संसृतिहेतुत्वात्तेषामिति वा न सम्भवः वासुदेव एक एव निलय आश्रयो यस्य सः ॥ ५० ॥

एवं गृहीत्वेत्यादिश्लोकत्रयेण द्वेषहर्षमोहकामादिरहितश्चरतीति यथा चरतीत्यस्योत्तरमुक्तं भवति। यैर्लिङ्गैर्भगवत्प्रिय इत्यस्योत्तरमाह—न यस्येति द्वाभ्याम्। तत्राद्योऽहङ्कारनिवृत्तिपरः द्वितीयस्तु ममकारनिवृत्तिपर इति विवेकः तत्र जन्म त्रिविधं यौनं सावित्रं [ शौक्लं ] याज्ञिकं चेति. कर्म गर्भाधानादिचौलान्तं वर्णो ब्राह्मणत्वादिः आश्रमो ब्रह्मचर्यादिः जातिर्देवत्वमनुष्यत्वादिः आभिर्देहगताभिर्निमित्तभूताभिर्यस्य देहेऽहम्भावो न सज्जते नासक्तो भवति नास्तीति यावत् स हरेः प्रियः प्रियतमः ॥ ५१ ॥

स्वो बन्धुः परः शत्रुः इति वा भिदा तथा वित्तेष्वात्मनि देहे च भिदा ममेदं धनमन्यस्येदं मम शरीरमन्यस्येदं शरीरम् इति वा भिदा भेदः तत्प्रयुक्तं हिताहिताचरणं च यस्य नास्ति स भागवतोत्तम इति सम्बन्धः तदभावे हेतुत्वेन विशिनष्टि सर्वभूतसमः ब्रह्मात्मकत्वेनात्मनां ज्ञानैकाकारत्वेन देहानां प्रकृतिपरिणामरूपत्वेन सर्वभूतेषु समबुद्धिरित्यर्थः। तत्रापि हेतुः शान्तः जितान्तःकरणः समत्वेन शिक्षितमना इत्यर्थः। अहम्ममाभिमानादिभिर्लिङ्गैर्लक्ष्यत इति कैर्लिङ्गैरित्यस्योत्तरमुक्तं भवति वित्तेष्वात्मनि च भिदा नास्तीत्यनेन धनशरीराद्यपि काष्ठलोष्ठादिवत्प्रतिपत्तिरभिप्रेता नत्वात्मभेदनिषेधः तथा सति सर्वभूतसम इत्यनन्तरोक्तिविरोधात् भूतशब्दो देहविशिष्टात्मपरः सर्वशब्देनापि बहुत्वमवगम्यते ॥ ५२ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

कैर्लिङ्गैरित्येतं प्रश्नं परिहरति—देहेन्द्रियप्राणधियामिति। संसारधर्मैः संसारस्वभावैः देहादीनां जन्मादिकृच्छ्रैरविमुह्यमानः

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

नसद्वस्तु तत्तत्त्वं यथावज्जानन् यो वर्त्तते स भागवतप्रधान इत्यन्वयः । तत्र हेतुमाह—स्मृत्येति । देहादीनामचेतनत्वेन जन्मादिकृच्छ्रानुभवोऽनुपपन्न इत्यतस्तत्पर्यायोऽन्यो युक्तो वक्तव्यः स क इत्याशङ्का—

"देहेन्द्रियप्राणधियां त्रिधैव त्वभिमानिनः ।
तत्रोत्तमा देवतास्ताः सर्वदोषविवर्जिताः ॥
गुणैः सर्वैः सुसम्पन्ना विरिञ्चादुत्तरोत्तरम् ।
मध्यमा गुणदोषैस्ता अधमा असुरा मताः ॥
ते सर्वे दोषसंयुक्ता आकिसादुत्तरोत्तरम् ।
तेभ्योऽन्यो मानुषो जीवस्ताभ्यां देवासुरावपि ॥
जीवाभिमानिनश्चैव त्रिविधाः सम्प्रकीर्त्तिताः ।
जीवमान्युत्तमो ब्रह्मा मध्यमः स्वयमेव तु ॥
अधमः कलिरुद्दिष्टस्तत्र मध्यमनीचयोः ।
मृतिजन्मक्षुधादुःखप्रभूताखिलमेव तु ॥
नोत्तमस्य तु जीवस्य देहादेश्च कथञ्चन ।
जन्मादिकृतदुःखन्तु देहमान्यसुरस्य ह ॥
सुप्त्याद्यप्रयत्नजं दुःखमसुरेन्द्रियमानिनः ।
क्षुन्निमित्तं तु यद्दुःखं प्राणमान्यसुरस्य तत् ॥
भयतर्षादिजं दुःखं मनोमान्यसुरस्य च ।
केवलश्चान्तरं दुःखं बुद्धिमान्यसुरस्य तत् ॥
नीचोऽस्मीति तु यद्दुःखमहमान्यसुरस्य तत् ।
अतीतादेः स्मृतेर्दुःखं चित्तमान्यसुरस्य च ॥
जीवमान्यसुरस्य स्यात्सर्वं तत्समुदायतः ।
एवमेव सुखं देवेषूभयं मध्यमेषु च ॥
असुराणामधर्मस्य वृद्ध्या सुखमपीष्यते ।
देवानां नैव केनापि दुःखं प्रीतिस्तु धर्मतः ॥
मध्यमेऽपि पतिते स्यादसुराणां तमोगतेः ।
देवानां पुण्यपापाभ्यां सुखमेवोत्तरोत्तरम् ॥
तेषां दुःखादिकं किञ्चिदसुरावेशतो भवेत् ।
प्राणस्य नासुरावेशो हरिणा च समो हि सः ॥
सम्पूर्णानुग्रहाद्विष्णोः प्राणः पूर्णगुणो मतः ।
असुराणां सुखाद्याश्च देवावेशादुदीरिताः ॥
स्वतस्तु निर्गुणाः सर्वे सर्वदोषात्मका मताः ।
त्रिविधैवं जगत्सर्वं स्वात्मानं च पृथक् स्थितम् ॥
सर्वतश्च पृथक् सन्तं विष्णुं सर्वोत्तमोत्तमम् ।
जानन्ति ये भागवतास्त उक्ता उत्तमोत्तमाः" ॥

इत्यनेन परिहृतेति ज्ञातव्यम् ॥ ४९ ॥

कामकर्मबीजान्यविद्याप्रकृत्यादीनि एषां कामादीनाम् ॥ ५० ॥

जन्मकर्मभ्यां ब्राह्मणादिजन्मना गुरुकुलवासादिकर्मणा ब्राह्मणादिवर्णैः ब्रह्मचर्याद्याश्रमैः ब्राह्मणत्वादिजातिभिश्च संश्लिष्टे सङ्केतिते यः कामकर्मबीजैरुत्पन्नस्तस्मिन्देहे यस्याहम्भावो ब्राह्मणोऽहमित्यादि लक्षणो नास्ति स भागवतोत्तम इति ॥ ५१ ॥

इदमप्येकं लक्षणमित्याह—न यस्येति । यस्य भागवतस्य चित्ते प्राकृतान्तःकरणे विद्यमाने संसारे स्वात्मनि केवलात्मभावे स्वरूपावस्थाने मोक्षे वा यः स्वो जीवः परः परमात्मेति जीवपरयोरभिदा अभेदो नास्ति अभेदज्ञानं नास्तीत्यर्थः । अथ* सर्वभूतसमः ब्रह्मादिमानुषान्तानि भूतानि यथावत् तारतम्येन पश्यति स भागवतोत्तमः—

"न क्वापि जीवं विष्णुत्वे संसृतौ मोक्ष एव वा ।
यः पश्यति सुरांश्चैव यथोत्कर्षं प्रपश्यति ॥
स सर्वभूतसमदृग्विष्णोः सर्वोत्तमं स्मरन्" ।

इत्यतः—

"नैवं त्वयाऽनुमन्तव्यं दृष्टो जीवो मयेति ह ।
सर्वभूतगुणैर्युक्तं दैवं त्वं ज्ञातुमर्हसि" ॥

इत्यतश्च—

"नैवं त्वयाऽनुमन्तव्यं जीवात्माहमिति क्वचित् ।
सर्वगुणैः सुसम्पन्नं दैवं मां ज्ञातुमर्हसि" ॥

इत्यतश्च प्रमाणत्रयस्य स्वकीयपरकीयबुद्धिभेदो नास्तीत्यर्थो नोपपन्नः । किन्तूक्त इति शान्तो भगवन्निष्ठायुक्तः ॥ ५२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अथ केवलमानसलिङ्गेनाह यावत्प्रकरणम्—यो हरेः स्मृत्या देहादीनां संसारधर्मैर्जन्माप्ययादिभिर्विमुह्यमानो न भवति स भागवतप्रधानः उक्तं च श्रीगीतासु—

"येषां त्वन्तगतं पापं जनानां पुण्यकर्मणाम् ।
ते द्वन्द्वमोहनिर्मुक्ता भजन्ते मां दृढव्रताः" ॥

इति ॥ ४९ ॥ ५० ॥

एताभिर्यस्य अस्मिन् देहे अहम्भावो न सज्जते किन्तु भगवत्सेवौपयिके साध्ये देह एव सज्जन इत्यर्थः । स हरेः प्रियो भागवतोत्तम इति पूर्वेणैवान्वयः । प्रकरणार्थत्वात् हरेः प्रिय इति हि भागवतमात्रधाच्यभागवतत्वादेव ॥ ५१ ॥

तथा वित्तेषु ममतास्पदमात्रेषु अत्र विसवदात्मनि च स्वपक्षपातमात्रं निषिध्यते न व्यक्तिभेदः ॥ ५२ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

देहादीनां जन्मादिभिः संसारधर्मैरविमुह्यमानः तत्र देहस्य जन्माप्ययौ प्राणस्य क्षुत्पिपासे मनसो भयं बुद्धेस्तर्षः तृष्णा इन्द्रियाणां कृच्छ्रं श्रमस्तैः ॥ ४९ ॥

न कामेति चेतस्यादौ बीजानि वासना उत्पद्यन्ते ततः रूपादिविषयकः कामस्ततः कर्म इन्द्रियद्वारा तत्तद्व्यापारः एतत्त्रितयस्य यच्चेतसि न सम्भवः तदेव गृहीत्वापीन्द्रियादिभिर्द्वैषहर्षमोहकामादिरहितश्च भवतीति यथा चरतीत्यस्योत्तरमुक्तम् अतःपरमध्यायसमाप्तिपर्यन्तं यद्धर्म इत्यस्योत्तरमेव प्रपञ्चयिष्यते ॥ ५० ॥

जन्म सत्कुलोद्भवत्वं कर्म जपध्यानादि जातयोऽम्बष्ठाद्याः एताभिर्यस्य देहे अहम्भावोऽहङ्कारो न भवति ॥ ५१ ॥

स्वः स्वपक्षः परो विपक्षः वित्तेष्वपि स्वस्यैवेदं वित्तं न परस्येति आत्मनि स्वशरीरे एव प्रीतिर्न परशरीरे इति ॥ ५२ ॥

---

* शत्रुषु शत्रुत्वेन मित्रेषु मित्रत्वेन उदासीनेषु उदासीनत्वेन ज्ञानं समत्वम् एतद्विपरीतं असमत्वम् ।

त्रिभुवनविभवहेतवेऽप्यकुण्ठस्मृतिरजितात्मसुरादिभिर्विमृग्यात् ।
न चलति भगवत्पदारविन्दाल्लवनिमिषार्धमपि यः स वैष्णवाग्र्यः ॥ ५३ ॥
भगवत उरुविक्रमाङ्घ्रिशाखानखमणिचन्द्रिकया निरस्ततापे ।
हृदि कथमुपसीदतां पुनः सः प्रभवति चन्द्र इवोदितेऽर्कतापः ॥ ५४ ॥
विसृजति हृदयं न यस्य साक्षाद्धरिरवशाभिहितोऽप्यघौघनाशः ।
प्रणयरशनया धृताङ्घ्रिपद्मः स भवति भागवतप्रधान उक्तः ॥ ५५ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां वैयासिक्याम्
एकादशस्कन्धे वसुदेवनारदसम्वादे जायन्तेयोपाख्याने
द्वितीयोऽध्यायः ॥ २ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

देहादीनां जन्मादिभिः अन्यैश्च संसारधर्मैः संयोगवियोगादिभिः विमोहकैः यो हरेः स्मृत्या सर्वमोहध्वान्तचन्द्रिकया अविमुह्यमानः स भागवतप्रधानः । तत्र देहस्य जन्माप्ययाभ्यां प्राणस्य क्षुत्पिपासाभ्यां मनसो भयेन बुद्धेस्तर्षेण तृष्णया इन्द्रियाणां कृच्छ्रैः श्रमैः ॥ ४९ ॥

यस्य चेतसि कामस्य कर्मणां वासुदेवाराधनविरुद्धक्रियाणां बीजस्य अविद्यायाः वासनाया वा सम्भवो न यतः वासुदेवस्य एको निलयः वासस्थानभूतः वासुदेवाश्रितः चेतस्यतस्तस्मिन् कामादेरनवकाशाभाव इत्यर्थः । स भागवतोत्तमः ॥ ५० ॥

यैर्लिङ्गैर्भगवत्प्रिय इत्यस्योत्तरमाह—नेति । अस्मिन् पाञ्चभौतिके प्रसिद्धे देहे जन्मादिभिः उत्कृष्टैर्निकृष्टैर्वा उत्कृष्टोऽस्मीत्युत्कृष्टः निकृष्टोऽस्मीति निकृष्टो वा यस्याहम्भावो न सज्जते वैराग्यात् भक्तिहीनानां जन्मादीनामुत्कृष्टानामपकृष्टानामपि—

"किं जन्मभिस्त्रिभिर्वेह शौक्लसावित्रयाज्ञिकैः ।
कर्मभिर्वा त्रयीप्रोक्तैः पुंसोऽपि विबुधायुषा ॥
किं वा साङ्ख्येन योगेन न्यासस्वाध्याययोरपि ।
श्रेयोभिर्विविधैर्वापि न यत्रात्मप्रदो हरिः" ॥

इत्यादिप्रमाणादकिञ्चित्करत्वमाकलय्य भक्त्यनुगुणानामुत्कृष्टानां निकृष्टानां च तेषां तज्जन्म तानि कर्माणि तदायुस्तद्बहुज्ञानतोऽप्येते येन सर्वात्मा भगवान् हरिरीश्वरः इत्यादिप्रमाणात्पुरुषार्थप्रदत्वमाकलय्य सर्वत्राहङ्कारशून्यतया दृढविश्वासेन हरिं यो भजते स एवम्भूतैर्लिङ्गैर्हरेः प्रियो भवति जातयः अनुलोमप्रतिलोमजाः मूर्धावसिक्तादयः अन्त्यजपर्यन्त आश्रमलिङ्गान्युक्तानि ऊर्ध्वपुण्ड्रादीनि बाह्यलिङ्गानि तु "धृतोर्ध्वपुण्ड्रः कृतचक्रधारी" इत्यादिष्वभ्युक्तानि सतिप्रतिबन्धकत्वेनोक्तानि ॥ ५१ ॥

याहृदय इत्यस्योत्तरमाह—न यस्येति त्रिभिः । वित्तेषु भोग्यपदार्थेषु आत्मनि भोक्तरि च असौ स्वः स्वाधीनः भोग्यपदार्थः आत्मा भोक्ता च असौ परः परकीयः परभोग्यपदार्थः परमात्मा च इति यस्य भिदा भेदः नास्ति सर्वस्य भोग्यभोक्तृरूपस्य ब्रह्माधीनत्वात् "सदासीत्तदधीनमेवासीत्" इति श्रुतेः अत एव सर्वभूतसमः स भागवतोत्तमः ॥ ५२ ॥

भाषा टीका ।

जो निरन्तर श्रीहरि की स्मृति से देह इन्द्रिय मन प्राण और बुद्धि के जन्म नाश क्षुधा भय तृष्णा दुःख इत्यादिक धर्म हैं, तिनमें तथा अन्य संसार के धर्मों से कभी मोह को नहीं प्राप्त होता है वह भागवत प्रधान है ॥ ४९ ॥

जिसके चित्त में काम कर्म और वासनाओं की कदापि उत्पत्ति नहीं होती, और सदा एक श्रीवासुदेव के आश्रय लेकर रहने वाला है वह भागवतों में उत्तम है ॥ ५० ॥

जिसका जन्म कर्मों से तथा वर्ण आश्रम जाति से इस शरीर में अहंभाव ( अहङ्कार ) नहीं होता है, वह श्रीहरि का प्रिय है ॥ ५१ ॥

जिसका वित्तादि में तथा देह में यह अपना है, यह पराया है यह भेद बुद्धि नहीं है, किन्तु सब भगवान् का पदार्थ है ऐसा ज्ञान है, और सर्वभूतप्राणियों में सम और शांत होकर रहता है वह भागवतों में उत्तम है ॥ ५२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

किञ्च, त्रिभुवनविभवहेतवेऽपि त्रैलोक्यराज्यार्थमपि लवार्धमपि निमिषार्धमपि भगवत्पदारविन्दभजनाद्यो न चलति स वैष्णवाग्र्यः । ननु, सर्वादिमाश्रभजनोपरमे चेत्तावद्वासो भवेत् सत्कृतो न चलेत् ? तत्राऽऽह—अकुण्ठस्मृतिः भगवत्पदतोऽन्यत्सारं नास्तीत्येवंरूपाऽकुण्ठाऽनपगता स्मृतिर्यस्य यः भगवत्पदारविन्दादन्यत्सारं नास्तीति कुतोऽस्त आह—अजितेति । सुरादिभिरात्मा येषां तथाभूतैः सुरादिभिरपि दुर्लभात् किन्तु केवलं विमृग्यात् तदप्राप्त्या सर्वस्य तुच्छत्वं स्मरन् यो न चलतीत्यर्थः ॥ ५३ ॥

अपि च विषयाभिसन्धिना चलनं कामनातिसन्तापे सति भवेत्स तु भगवत्सेवानिवृत्तौ न सम्भवतीत्याह—भगवत इति । उरवो विक्रमौ च तावङ्घ्री च तयोः शाखा अङ्गुलयस्तासु नखानि च तानि मणयश्च तेषां चन्द्रिका शीतला दीप्तिस्तया निरस्तः कामादिलापो यस्मिंस्तस्मिन्नुपसीदतां भजतां हृदि कथं

श्रीधरस्वामिकृतभावार्थदीपिका ।

सन्तापः प्रभवति चन्द्र उदिते सत्यर्कस्य ताप इव "न ह्यस्य स्वः परः" इत्यादिना श्लोकत्रयेण यादृश इत्यस्योत्तरमुक्तं ज्ञातव्यम् । यदूब्रूत इत्यस्य च हरिनामानीति ज्ञातव्यम् ॥ ५४ ॥

उक्तसमस्तलक्षणसारमाह—विसृजतीति । हरिरेव स्वयं साक्षाद्यस्य हृदयं न विसृजति न मुञ्चति । कथम्भूतः अवशेनाप्यभिहितमात्रोऽप्यघौघं नाशयति यः स । ननु किं न विसृजति ? यतः प्रणयरशनया धृतं हृदयं निबद्धमङ्घ्रिपद्मं यस्य स भागवतप्रधान उक्तो भवति ॥ ५५ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
द्वितीयोऽध्यायः ॥ २ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

तदपेक्षया भगवदपेक्षया ॥ ५३ ॥

विषयाभिसन्धिना विषयेच्छया खलु तापः भगवत्सेवानिवृत्तौ भगवद्भजनानन्दे सति चन्द्रिका शीतला दीप्तिः यस्य इत्युदाहरणमिति स्वतन्त्रतया भेददर्शनाभावपूर्वकाविरततत्पदारविन्दभजनानन्दात्मकप्रमेय तत्स्वरूप इत्यर्थः । एवं प्रश्नः स्वप्रियनामकीर्तयेति गीतानि नामानि गायन्निति चाक्षरत्वाद्धरिनामानि ब्रूत इति ज्ञातव्यम् ॥ ५४ ॥

भक्तो न विसृजतीति किं वक्तव्यं हरिरेव स्वयमिति एवकारार्थः साक्षादिति भक्तस्यान्तरस्फूर्तिविषयः ननु अभक्तस्य न कस्यापि हृदयं विसृजति सर्वान्तर्यामित्वात् इति साक्षात्पदमितरव्यावर्त्तकम् अवशेनापि किं पुनः सावधानतया अभिहितमात्रोऽपि किं पुनर्ध्यातः सन् तद्भक्तहृदयं किं कुतः उक्तो भवति भागवतप्रधानशब्देन मुख्यतया वाच्यो भवति विरक्तलक्षणानां सामस्त्येनात्र समन्वयादिति भावः ॥ ५५ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीराधारमणदासगोस्वामिविरचितायां दीपिकादीपिन्यां
टिप्पण्यां द्वितीयोऽध्यायः ॥ २ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

सम्पन्न इति स्पष्टत्वेन श्रीविदिताद्विभः ॥ ० ॥

त्रिभुवनवैभवकारणाय भगवत्पादारविन्दाल्लवनिमिषार्द्धं कालमपि न चलति ॥ ५३ ॥

एवमेतत्पञ्चाध्यायं आत्मस्वरूपवर्णनेन यादृश इति प्रश्नोत्तरमुक्त्वा इदानीं उपसीदताम् इत्यनेन यदुक्तं इत्यस्योत्तरमाह—भगवत इति । उपसीदतां व्यासविद्यया श्रीभगवदुपसन्नानां भागवतानां रहस्यम् अनेन यैर्लिङ्गैरित्यस्याप्युत्तरमुक्तं वेदितव्यम् । आचारवैशेष्य लिङ्गानां श्रीवैष्णवचिह्नानां तप्तशङ्खचक्राङ्कनयुगलमालोर्ध्वपुण्ड्रकौपीनकटिसूत्रवस्त्रद्वयधारणादि श्रीमद्द्वयमन्त्रार्थानुसन्धानेन प्रपत्तिज्ञानादीनां दानात् यदूब्रूत इत्यस्याप्युत्तरमुक्तम् । "मन्यन्ते यदहोऽखिलजीवचन्मत्र न यस्य स्वपर इति त्रिभुवनविभवहेतव इत्यादिभिर्बहुभिः पद्यैर्यथा चरति इत्युत्तरमत्र वेदितव्यम् ॥ ५४ ॥

विसृजतीति कृतकृत्यत्वमुच्यते हरति संसारमिति हरिः अवशाभिहितोऽपि इत्यनेन शरणागतानां मन्त्रानुसन्धानेऽननुसन्धानेऽपि अघौघं स्वप्राप्तिविरोधिनं नाशयतीति प्रपत्तेः पूर्वकाले प्रणयरशनया धृताङ्घ्रिपद्मः यस्य हृदयं न विसृजतीति ॥ ५५ ॥

इति श्रीमद्भागवतव्याख्याने एकादशस्कन्धीये
श्रीसुदर्शनसूरिकृतशुकपक्षीये
द्वितीयोऽध्यायः ॥ २ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

किञ्च त्रिभुवनेति । त्रिभुवनभवहेतवे विभवहेतवेऽप्यकुण्ठस्मृतिरिति पाठान्तरं त्रिभुवनविभवहेतवेऽपि त्रैलोक्यैश्वर्यार्थमपि "त्रैलोक्यैश्वर्यं प्रयच्छामि" इत्युक्तेऽपीत्यर्थः । अकुण्ठस्मृतिरकुण्ठा भगवत्पादारविन्दादन्यत्रासां नाकलितैव रूपा अकुण्ठा ऽनपगता स्मृतिर्यस्य सः भगवत्पादारविन्दादन्यत्र सारं नाकलितवानपि कुतः तत्राह—अजितात्मभिर्विमृग्यादिति । अजिते भगवति श्रीकृष्णे हरावेव आत्मा मनः [ चित्तं ] येषां तैः सुरादिभिः ब्रह्मादिभिरपि दुर्लभात् किन्तु केवलं विमृग्यात् इष्टाद्भगवत्पादारविन्दात्तद्भजनादित्यर्थः । यो न चलति स वैष्णवाग्र्य इत्यर्थः ॥ ५३ ॥

किञ्च चलनं हि विषयान्तराभिलाषात् तच्च कामैः सन्तापे सति भवति स ताप एव न सम्भाव्यत इत्यभिप्रेत्याह—भगवत इति । भगवत उरवः विपुलाः विक्रमाः पादविन्यासाः यस्य तस्याङ्घ्रिशाखानां तदङ्गुलीनामङ्गुलीनां ये नखास्त एव मणयस्तेषां चन्द्रिकया शीतलदीप्त्या निरस्तः तापः कामसन्तापो यस्मिन् तस्मिन् उपसीदतां प्रपन्नानां हृदि कथं पुनः स सन्तापः प्रभवति चन्द्रे उदिते सत्यर्कस्य ताप इव चन्द्र इत्यनेन नखानां चन्द्रस्वरूपत्वमप्यभिप्रेतम् अत एव दीप्त्येत्यनुक्त्वा चन्द्रिकयेत्युक्तम् ॥ ५४ ॥

अनेन श्लोकद्वयेन यादृश इत्यस्योत्तरमुक्तं भवति यदूब्रूत इत्यस्य तु हरिनामानीत्युत्तरस्य स्पष्टत्वान्नोक्तम् उक्तसमस्तलक्षणसारमाह—विसृजतीति । यद्वा यदूब्रूत इत्यस्योत्तरमाह—विसृजतीति । अवशाभिहितोऽवशेनाप्यभिहितमात्रोऽप्यघौघं पापसमुदायं नाशयतीति तथा स हरिः साक्षाद्यस्य हृदयं न विसृजति स भागवतप्रधान इत्युक्तो भवति ॥ ५५ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
द्वितीयोऽध्यायः ॥ २ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

विकुण्ठस्य स्मृतिर्येषां ते तथा तैः त्रिभुवनविभवहेतुभिः कारणभूतैरजेशसुरादिभिर्ब्रह्मरुद्रपूर्वदेवादिभिर्विमृग्यपादारविन्दात् भगवत्पदारविन्दात् यो लवनिमिषार्धमपि न चलति स वैष्णवाग्र्यः स्मृत इत्यन्वयः ॥ ५३ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

उरुविक्रमः पदन्यासविशेषः ययोस्तौ उरुविक्रमौ तावङ्घ्री तयोः शाखा अङ्गुलयस्तासां नखमणयः नखा एव मणयः तेषां चन्द्रिकया ज्योत्स्नया निरस्ततापे उपसीदतां भजमानानां हृदये ऽनुपसीदतां हृदि प्रभवति स तापः कथं पुनः प्रभवतीत्यन्वयः ॥ ५४ ॥

स्खलनादिना अवशेनाभिहितः कथितः प्रणयरशनया भक्तिलक्षणपाशेन धृताङ्घ्रिपद्मः बद्धपादपद्मः यादृशो यदुक्तं इत्यनयोः प्रश्नयोः परिहारौ भूतौ षड्विधनामानि अनन्तगुणनामसङ्कीर्तनत्वञ्चेति "ये शङ्खचक्राङ्कितबाहुमूलाः" इत्यादिषु प्रसिद्धत्वादनुक्तावित ॥ ५५ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
द्वितीयोऽध्यायः ॥ २ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

किञ्च, त्रिभुवनेति । त्रिभुवनविभवाय किमुत तद्धेतवे इत्यर्थः "सर्वोऽपि द्वन्द्वो विभाषयैकवद्भवति" इति न्यायादेकवचनं कथं विचारात न किन्त्वावेशादित्याह—अकुण्ठा सङ्कोचमात्ररहिता स्मृतिर्यस्य सः तत्र तस्य शुक्रमेवत्याह, अजित इत्येव आत्मा येषां तैर्ब्रह्मप्रभृतिभिः सुरादिभिरपि विमृग्यात् दुर्लभादित्यर्थः ॥ ५३ ॥

तदेव दृष्टान्तमुपपादयति—भगवत इति । चन्द्रिका आतापहारिणी दीप्तिः ॥ ५४ ॥

अत्र हरिः स्वयं न विसृजति तत्र धृताङ्घ्रिपद्मश्चेति परस्परमासक्तिर्दर्शिता सर्वत्र तत्प्रेमस्फूर्तिपक्षे तु तादृशगुणे तत्र भगवति को न रज्येदिति तदभिप्राय इति भावः । अत्र विशेषजिज्ञासायां भक्तिसन्दर्भोऽन्वेषणीयः ॥ ५५ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
द्वितीयोऽध्यायः ॥ २ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

त्रिभुवनविभवहेतवेऽपि त्रिलोकीराज्यप्रयोजनायापि न कुण्ठा प्रलोभयितुमशक्या स्मृतिर्यस्य सः "न पारमेष्ठ्यं न महेन्द्रधिष्ण्यम्" इत्यादौ "वाञ्छन्ति यत्पादरजः प्रपन्नाः" इत्यादिवचनात् अत एव लवार्धमपि निमिषार्धमपि भगवच्चरणारविन्दादन्यत्र न चलति कीदृशात् अजिते हरावेवात्मा येषां तथाभूतैरपि सुरादिभिर्दुर्लभात् किन्तु केवलं विमृग्यात् । यद्वा, अजितात्मानोऽजितेन्द्रिया ये सुरादयस्तैस्तु त्रिभुवनराज्यार्थं विमृग्यात् ॥ ५३ ॥

अपि च विषयाभिसन्धिना चलनं कामसन्तापे सति भवेत् स च कामसन्तापो महाभागवतानां न सम्भवेदित्याह—भगवत इति । उरुविक्रमौ च तौ अङ्घ्री च तयोः शाखा अङ्गुलयस्तासु नखान्येव मणयस्तेषां चन्द्रिकाशीतला दीप्तिस्तया निरस्तः कामादितापो यस्मिन् तस्मिन्नुपसीदतां जनानां हृदि कथं पुनः स तापः प्रभवति चन्द्रे उदिते अर्कस्य ताप इव ॥ ५४ ॥

उक्तसमस्तलक्षणसारमाह—विसृजतीति । हरिरेव स्वयं साक्षात् यस्य हृदयकमलं न विसृजति न मुञ्चति तत्र कल्मषकुञ्जराणां कुतो वार्त्तेत्याह यः स्खलनेनापि कदाचिदभिहितमात्रोऽपि अघौघं नाशयति किं पुनः सरसास्वादं येन प्रतिक्षणमभिभाषित इति भावः । एतेन यदुक्तं इत्यस्योत्तरमभिव्यञ्जितम् ननु, कथं तदीयहृदयमन्दिरान्न निर्गच्छति ? तत्राह—प्रणयरशनया धृतं हृदये बद्धम् अङ्घ्रिपद्मं यस्य सः यथा प्रेम वशीकृत्य यशोदया उदूखले बद्धस्तथा सर्वजीवान्मायाशृङ्खलया निबध्नन् स्वभक्तजीवैः प्रेमशृङ्खलया निबध्यते इति भावः ॥ ५५ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
एकादशे द्वितीयोऽयं सङ्गतः सङ्गतः सताम् ॥ २ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यः त्रिभुवनविभवहेतवे लोकत्रयैश्वर्यप्रयोजनायापि आजितात्मसुरादिभिः अजितः कामादिभिरनभिभूतः आत्मा मनो येषाम् अजिते अच्युते वा आत्मा येषां तैः सुरासुरैः विमृग्यादन्वेषणीयात् भगवत्पदारविन्दात् भजनीयात् लवार्धमपि निमिषार्धमपि न चलति स वैष्णवाग्र्यः तत्र हेतुं दर्शयति, अकुण्ठस्मृतिः लोकत्रयसुखमनित्यं भगवत्प्राप्तिसुखं नित्यमित्येवंरूपा अकुण्ठा अनपगता स्मृतिर्यस्य सः तथोक्तं भगवता—

"आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन ।
मामुपेत्य तु कौन्तेय ! पुनर्जन्म न विद्यते" ॥

इति ॥ ५३ ॥

न च कामादिसन्तप्तान्तःकरणतया भजनीयपदारविन्दात् चलनं शक्यमित्याह—भगवतः उरुः विस्तृतः विक्रमः विन्यासः ययोस्तौ उरुविक्रमौ तौ च अङ्घ्री च उरुविक्रमाङ्घ्री तयोः शाखा अङ्गुलयः तासु नखान्येव मणयः तच्चन्द्रिका शीतला दीप्तिः तया निरस्तः कामादितापो यस्मिन् तस्मिन् उपसीदताम् उपसन्नानां भागवतोत्तमानां हृदि सः कामादितापः कथं सम्भवति न कथमपीत्यर्थः । तत्र दृष्टान्तमाह—चन्द्र इवोदितेऽर्कताप इति ॥ ५४ ॥

यदुक्तं च इत्यस्योत्तरं दर्शयन् उक्तसमस्तलक्षणानुपसंहरन्नाह, विसृजतीति । प्रणयरशनया स्नेहपाशेन धृताङ्घ्रिपद्मः दीनानां शरणागतानाम् अघौघं पापसमूहं नाशयतीति स तथा स्खलनजृम्भणादौ अवशेन "कमलनयन वासुदेव विष्णो मम शरणम्" इत्येवमभिहितः कथितः हरिः यस्य हृदयं साक्षात्स्वयमेव न विसृजति न मुञ्चति स भागवतप्रधान उक्तो भवति ॥ ५५ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
द्वितीयाध्यायार्थप्रकाशः ॥ २ ॥

---

भाषा टीका ।

भगवान् के विषय में चित्त लगाकर देवादिक जिनको ढूंढते हैं ऐसे भगवत् चरणारविन्द का अखंडित स्मरण करने वाला जो भागवत त्रिलोकी के राज्य के लिये भी अर्द्ध लव और अर्द्ध निमिष भी चलायमान नहीं होता है यह वैष्णवों में अग्रगण्य है ॥ ५३ ॥

श्रीत्रिविक्रम भगवान् के चरण की शाखा रूप जो अंगुली हैं तिनके नख रूप मणियों की चांदिनी से कामादि ताप दूर भया है जिसका, ऐसे भजन करने वालों के हृदय में संताप कैसे होसक्ता है ? जैसे, कि—रात्रि में चन्द्र के उदय होने पर सूर्य के संताप का संभव ही नहीं ॥ ५४ ॥

जिसके हृदय को साक्षात् श्रीहरि नहीं छोडते हैं, किन्तु अवश होकर नामोच्चारण करने मात्र से भी संपूर्ण पापों के पुंज को नाश कर देते हैं और जिसके प्रेम रूपी रस्सी से आपका श्रीचरण कमल बांधा गया है, ऐसा जो अधिकारी है वह भागवतों में प्रधान कहा गया है ॥ ५५ ॥

इति श्रीमद्भागवत एकादशस्कन्ध में द्वितीय अध्याय की,
श्रीवृन्दावनस्थ पं० भागवताचार्यकृत
भाषा टीका समाप्ता ॥ २ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे द्वितीयोऽध्यायः ॥ २ ॥

## तृतीयोऽध्यायः ।

——:o:——

### राजोवाच ।

परस्य विष्णोरीशस्य मायिनामपि मोहिनीम् ।
मायां वेदितुमिच्छामो भगवन्तो ब्रुवन्तु नः ॥ १ ॥
नानुतृप्ये जुषन् युष्मद्वचो हरिकथामृतम् ।
संसारतापनिस्तप्तो मर्त्यस्तत्तापभेषजम् ॥ २ ॥

### अन्तरिक्ष उवाच ।

शुकपक्षीय वीरराघवीययोः पाठः ( निर्गुणो केवले साक्षादात्मनो यद्विपर्ययः ।
सैषा भगवतो माया ययेदं निर्ममे विभुः ॥ क ॥
इन्द्रियार्थभ्रमो जाग्रत्स्वप्नोऽन्तःकरणभ्रमः ।
सुप्तं तद्वासनाबीजं तुर्याऽमूर्त्तिस्तदन्वयः ॥ ख ॥
विशुद्धं ज्ञानमेवैकं मायया भासते त्रिधा ।
ग्राहकाद्यैर्यथा स्वप्ने यत्तत्संविक्रियाफलम् ॥ ग ॥
वैतथ्याद्व्यभिचाराच्च मायात्रैविध्यमात्मनि ।
यथा मनोरथः स्वप्न इत्यामृश्योपशाम्यति ॥ घ ॥ )
एभिर्भूतानि भूतात्मा महाभूतैर्महाभुजः ।
ससर्जोच्चावचान्याद्यः[१] स्वमात्रात्मप्रसिद्धये ॥ ३ ॥
एवं सृष्टानि भूतानि प्रविष्टः पञ्चधातुभिः ।
एकधा दशधाऽऽत्मानं विभजन् जुषते गुणान् ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

मायातत्तरणब्रह्मकर्मप्रश्नचतुष्टये ।
तृतीये नृपसं दत्तमार्षभैर्मुनिभिः पृथक् ॥

विष्णोर्मायामिदं पश्यन्निर्युक्तमतो मायां पृच्छति—परस्येति । हे भगवन्तः ! ॥ १ ॥

ननूक्तलक्षणो भागवतो भूत्वा कृतार्थः स्यात् किं बहुप्रश्नैरत आह-नानुतृप्य इति । संसारतापैर्नितरां तप्तोऽहं तस्य तापस्य भेषजं हरिकथामृतरूपं युष्मद्वचो जुषमाणो नानुतृप्यामि ॥२॥

मायायाः स्वरूपतो निरूपणासम्भवात्सृष्ट्यादिकार्यद्वारेण निरूपयितुमाह—एभिरिति । आद्यः पुरुषो यया शक्त्या भूतानामात्मा कारणभूतः एभिः स्वसृष्टैर्महाभूतैरुच्चावचानि भूतानि ससर्ज "एषा माया भगवतः" इति चरमश्लोकपादस्य प्रतिश्लोकमनुषङ्गः, किमर्थं ससर्ज ? स्वमात्रात्मप्रसिद्धये स्वं मिमीते प्रमिमीते उपास्ते यः स स्वमाता तस्याऽऽत्मनो जीवस्य प्रकर्षार्थं सिद्धये । यद्वा, स्वांशभूतानां जीवानां मात्राप्रसिद्धये विषयभोगाय आत्मप्रसिद्धये मोक्षाय चेत्यर्थः । तदुक्तं वेदस्तुतौ—

"बुद्धीन्द्रियमनःप्राणान् जनानामसृजत्प्रभुः ।
मात्रार्थं च भवार्थं च आत्मने कल्पनाय च" ॥

इति ॥ ३ ॥

एवं जीवोपकरणार्थं पञ्चधातुभिर्महाभूतैः सृष्टानि भूतानि

---

(१) स्वयमात्मप्रसिद्धये इति विज० पाठः ।

श्रीधरस्वामिकृतभावार्थदीपिका ।

अन्तर्यामिरूपेण प्रविष्टः एकधा मनसा दशधा बाह्येन्द्रियरूपेण आत्मानं विभजन् गुणांस्तत्तद्विषयान् जुषते, जोषयतीत्यर्थः । यद्वा, तमात्मानं प्रति गुणान्विभजन् जुषते प्रीयत इत्यर्थः ॥ ४ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

माया च तस्या मायायास्तरणञ्च ब्रह्म च कर्म च तेषां के प्रश्नास्तेषां पञ्चतुष्टयं तस्मिन् ईशस्य मायानियन्तुरत एव मायातः परस्य मायिनो मायया स्वशक्त्यान्यजीवमोहकानां ब्रह्मादीनामपि मोहिनीं मायां वयं वेदितुमिच्छामः ॥ १ ॥

हरिकथामृतरूपमिति तत्स्वभावत्वान्मायावर्णनेऽपि तत्प्रधानमेव तव वचो भवेदिति भावः ॥ २ ॥

अन्तरीक्ष इति अन्तरीक्षशब्दस्योर्ध्वाधोलोकमध्यवर्तिस्थानवाचित्वात् तथा मायान्तःपतितस्य तदभिमानित्वेन तद्गुणानाऽऽस्कन्दनात् सिद्धस्यापि ब्रह्ममात्रानुभवित्वेन तदस्कन्दनात् मध्यस्थस्यैव तन्निरूपणकर्तृत्वमित्यन्तरीक्ष एवोपाधिरयुक्तं स्वरूपत इति मायाया निरूपत्वेन स्वरूपतो निरूपणं न सम्भवतीति सृष्ट्यादिलक्षणं यन्मायाकार्यं तद्द्वारेण मायां निरूपयितुं सृष्ट्यादिकार्यमाहेत्यर्थः । पूर्वार्थे स्वमात्रशब्दस्य जीवमात्रपरत्वमप्रसिद्धं सृष्टेः पुरुषार्थचतुष्टयार्थत्वाभावश्चातो यद्वेति, स्वशब्देन जीवपरामर्शः तस्य स्वीयत्वेन स्वांशत्वात्, आत्मप्रसिद्धिः आत्मसाक्षात्कारः “द्वन्द्वान्ते श्रूयमाणस्य प्रत्येकमभिसम्बन्धः” इति प्रतिपत्तिगौरवादित्यर्थं इत्युक्तम् ॥ ३ ॥

जीवोपकरणार्थं जीवभोगसाधनार्थं भूतानि शरीराणि आत्मानं जीवं मन आदितादात्म्याध्यासेन तत्तद्रूपत्वेन विभजन् भेदविशिष्टं कुर्वन् तत्तद्विषयान् सुखदुःखशब्दस्पर्शादीन् जोषयति भोजयति तदुक्तं प्रथमे “असौ गुणमयैर्भावैर्भूतसूक्ष्मेन्द्रियात्मभिः” इत्यादि, पूर्वार्धे अन्तर्भूतार्थजल्पकल्पनागौरवमतो यद्वेति, तं मनोबाह्येन्द्रियरूपेणैकधा दशधा सन्तम् आत्मानं जीवं प्रति गुणान् सुखादिशब्दादिविषयान् विभजद्दत्त प्रीयते प्रसन्नो भवतीत्यर्थः ॥ ४ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ॥

परस्य चिदचिद्विलक्षणस्य मायां विचित्रामचेतनशक्तिम् ॥ १ ॥
संसारतापैः आध्यात्मिकादिभिः मर्त्योऽहमपीति शेषः ॥ २ ॥

उत्तरयति—निर्गुणो स्वरूपतः त्रिगुणास्वरूपविधाने कथलदेवादिनामरूपरहिते साक्षात् विपर्ययः धर्मभूतज्ञाने यः देहोऽहमस्मीति भावः । सा मायेति यया जीवस्य समष्टिरूपेण शरीरभूतया इदं व्यष्टिभूतजातं निर्ममे विभुरित्यत्र विभोः प्रवेशकथनं स्वसङ्कल्पेनैवेति ध्येयम् ॥ क ॥

कथं जीवस्वरूपत्वं निर्विकारत्वम् ? तदाह—विषयेषु भ्रमणं जाग्रत् अन्तःकरणभ्रमः मनोभ्रमणं स्वप्नः वासनाबीजम् वासना एव बीजं यस्यां सा गुणासंसर्गरूपा सुषुप्तिः तुर्यो मूलः जीवशरीरिपरस्वरूपं तास्ववस्थास्वन्वेति ॥ ख ॥

ननु, तस्य सुषुप्तौ कथमन्वयोऽत आह—विशुद्धमिति । ज्ञानैकाकारत्वेन विशुद्धं ज्ञानमेव परमात्मवस्तु भगवज्जीवस्वरूपं समष्टिव्यष्टिभूतं मायया समष्टिव्यष्टिरूपया ग्राहकाद्यैः बहिरन्तःकरणधर्मभूतज्ञानरूपैः त्रिधा भासते यथा स्वप्ने यस्तः इन्द्रियेषु सत्स्वपि अन्तरिन्द्रिये बुद्ध्यादिविशिष्टधर्मज्ञाने क्रियाफलं तत्रैव ॥ ग ॥

अतः आत्मनि जीवे त्रैविध्यं मायात्रिगुणकार्यं मायेति कुतः वैलक्षण्यात् वृथात्वात् अव्यभिचाराद्यनैकान्तिकत्वात् यो गः स्वस्वरूपानुभवे त्रैविध्यास्फूर्तेः “या निशा सर्वभूतानाम्” इत्यादि प्रामाण्यात् अत्र दृष्टान्तौ उभयत्र मनोरथे यथा वृथात्वात् मायात्वं स्वप्ने च यथा व्यभिचारान्मायात्वम् ईश्वरसङ्कल्पप्राप्तत्वं इति विचार्य उपशाम्यति स्वस्वरूपानुभवन्कृत्नः देहस्वतन्त्रात्मभवभ्रमान्निवृत्तो भवतीति ॥ घ ॥

त्रैविध्यमेव प्रपञ्चयति—ईश्वरसृष्टत्वेन एभिरिति । प्रत्यग्भिः त्रिवृत् कृतैः पञ्चीकृतैः वा महाभूतैः त्रिगुणं तत्त्रयगुणैरित्युक्तकार्यैः समजीवब्रह्मशरीरकं भावः भूतानि तानि देवतिर्यङ्मनुष्यस्थावरशरीराणि विशिष्टव्यष्टिजीवान् ससर्ज एतेषां जीवभोगापवर्गार्थत्वञ्चाह, स्वमात्रात्मप्रसिद्धये मोक्षार्थं च ॥ ३ ॥

प्रविष्ट इति स्वसङ्कल्पेन एवेति पञ्चधातुभिः सृष्टानि भूतानि सजीवशरीराणि प्रविष्टः सन्नेकधा दशधा एकादशेन्द्रियरूपेण आत्मानं जीवं स्वधर्मभूतज्ञानं विभजन् विभक्तं देवादिरूपं कर्मभिः कुर्वन् विषयान् जुषते जीवं जोषयतीति ॥ ४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ॥

“तन्मायया तो बुधः” इति “विष्णोर्मायामिदं पश्यन्” इति श्लोकम् असौ मायां तत्कार्यं च पृच्छति निमिः—परस्येति द्वाभ्याम् । मायाशब्दस्तत्कार्यपरश्च मायां तत्कार्यञ्च वेदितुमिच्छाम इत्यर्थः । भगवन्तो भवन्तः नोऽस्मभ्यं ब्रुवन्तु ॥ १ ॥

यद्यपि “भयं द्वितीयाभिनिवेशतः” इत्यादिना देहात्मभ्रमस्वतन्त्रात्मभ्रमादिकं मायाकार्यमुक्तमेव तथापि तद्विस्तरबुभुत्सया अत्र पृच्छामीत्यभिप्रेत्याह—नानुतृप्य इति । हरिकथामृतरूपं युष्मद्वचः जुषन् सेवमानोऽहं नानुतृप्ये न तृप्तोऽस्मि अतृप्तौ हेतुत्वेन आत्मानं पचव विशिनष्टि—संसारे ये तापा आध्यात्मिकादयस्तैर्नितरां तप्तः मर्त्यो मरणधर्मकश्च तत्तापानां संसारतापानां भेषजमौषधम् अतोऽस्मत्संसारनिवृत्तये केवलं कृपयैव कथयिष्यतीति भावः ॥ २ ॥

तत्रान्तरिक्षो योगीश्वर उत्तरमाह—निर्गुण इत्यादिना । यद्यपि निर्गुण इत्यादिश्लोकचतुष्टयं परैः परित्यक्तं तथाप्याचार्यैः परिगृहीतत्वात् सम्प्रदायेन व्याख्यातत्वात्तद्व्याख्यायते परपरित्यागः क्वचित् पाठाभावात्प्रातिकूल्याद्वेति विशेषत न विघ्नः ॥ विभुर्जगद्रूपेण विविधं भवितुम् इच्छुः परमपुरुषः यया प्रकृत्या इदं जगत्सर्ज सा भगवतो माया आत्मनो जीवस्य

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

निर्गुणे सत्त्वादिगुणत्रयरहिते केवले विशुद्धे शरीरसम्बन्धरहिते साक्षात्स्वयप्रकाशस्वरूपे विपर्ययः शरीरसम्बन्धगुणावद्यत्वदेहात्मभ्रमादिरूपो यो विपर्ययस्तन्माया मायाकार्यमिति योजना कार्यकारणभावादौपचारिकं सामानाधिकरण्यं निर्गुण इत्यनेन मायायास्त्रिगुणात्मकत्वं सूचितम् । केवल इत्यनेन देहेन्द्रियादिरूपेण परिणतत्वं मायात्वादित्यनेन जडत्वम् अनेन मायास्वरूपमुक्तं विपर्यय इत्यनेन च मायाकार्यम् उक्तम् इदं निर्मम इत्यनेन महदादिपृथिव्यन्तस्य जगतस्तत्कार्यत्वसूचनात् आत्मनो विकल्पयेयः "सा वै भगवतो माया,, इत्यनेन देहात्माभिमानादिरूपस्य जीवभ्रमस्य तत्कार्यत्वसूचनात् (क)

तत्र भ्रमरूपकार्यं प्रपञ्चयितुं प्रकृतिकार्यदेहेन्द्रियादिसम्बन्धाभिनिर्मुक्ते जीवस्वरूपे भ्रमासम्भवात्तत्सम्बन्धं तत्प्रयुक्तजाग्रत्स्वप्नसुषुप्तिरूपावस्थात्रयसम्बन्धं च वदन् भ्रमं प्रपञ्चयति, इन्द्रियार्थेति । जाग्रत्स्वप्नशब्दाभ्यां तदवस्थाभाज लक्ष्यते तद्वायमर्थः जाग्रज्जाग्रदवस्थायाम् इन्द्रियार्थभ्रमः इन्द्रियैर्मनःसंयुक्तैरर्थस्यनाशकास्थिररूपेषु देहादिष्वात्मत्वस्थिरत्वोपादेयत्वादिभ्रमः स्यात् स्वप्नोऽन्तःकरणभ्रमः स्वप्नेऽन्तःकरणेन बाह्येन्द्रियासंयुक्तेन भ्रमः सोऽप्यस्थिरस्वाप्नशरीरादिषु स्थिरत्वादिबुद्धिरूपः इन्द्रियान्तःकरणपदाभ्याम् तत्सम्बन्धस्तयोर्निराश्रययोरसम्भवात्तदाश्रयभूतदेहसम्बन्धस्तत्प्रयुक्तजाग्रदाद्यवस्थान्वयश्च फलितः सुप्तिस्तद्वासनावासितं वासनारूपबीजमात्रावशेषितं विलुप्तबाह्याभ्यन्तरग्राहणत्वादिसुखदुःखादिज्ञानं सुप्तं सुषुप्तिरित्युच्यते तत्तदपि प्रकृतिसम्बन्धप्रयुक्तं तत्कार्यमेवेत्यर्थः तदन्वयः इत्थं तेनावस्थात्रयेणान्वयो यस्य तथाभूतः प्रत्यगात्मा तर्हि कदाऽवस्थात्रयान्वयविनिर्मुक्तिरित्यत्राह, तुर्योऽमूर्त्तिरिति । यदाऽमूर्त्तिः प्रकृतिपरिणामात्मकशरीराभावः मुक्त्यवस्था इति यावत् सा तुरीया देहसम्बन्धप्रयोज्यावस्थात्रयविनिर्मुक्त्यवस्थेत्यर्थः । अनेनावस्थात्रयान्वयस्य प्राकृतशरीरसम्बन्धप्रयुक्तत्वेनौपाधिकत्वादस्थिरत्वं सूचितं तस्मिन् स्थिरत्वप्रतीतिभ्रान्तिरूपेति (ख)

एतदेव स्वप्नदृष्टान्तेनोपपादयन् प्राकृतशरीरसम्बन्धेऽपि कारणमाह—विशुद्धस्य इति । यद्यपि जीवस्य स्वरूपं विशुद्धं रागादिकलुषितम् एकं जाग्रदाद्यवस्थामेदरहितं ज्ञानं ज्ञानैकरसं तथापि तन्मायया प्रकृतिपरिणामरूपदेहसम्बन्धेन निमित्तभूतेन प्राह्काणां जाग्रत्स्वप्नसुषुप्तिरूपावस्थात्रययुक्तमवभासते यथा स्वप्ने गजतुरगादिरस्थिरोऽपि स्थिरत्ववदवभासते तद्वत् ग्राहकाधिरित्यत्र ग्राहकमिन्द्रियम् आविश्वत्वेनान्तःकरणवासनाबीजरूपबीःसत्कृपाह पवेतात्रयावयासतन्मूलदेहेन्द्रियान्तःकरणान्वयादिकं सर्वं मत्स्वरूपविक्रियाफलं संविज्ञानस्वरूपे प्रत्यगात्मनि क्रियायाः अनादिपुण्यपापा (त्म) त्मिकायाः फलमित्यर्थः (ग)

एतदेवोपपादयति वैलक्ष्यादिति । वैलक्ष्यादनित्यत्वात् सुखावस्थायामनुभूयमानामुख्याभिचारादिदानीमपि कस्याञ्चिदवस्थायामवस्थान्तरस्यानन्वयव्यभिचाराच्चात्मनि मायात्रैविध्यं मायाकार्यमवस्थात्रैविध्यं क्रियाफलमित्युपपद्यते न तु स्वाभाविकमित्यर्थः । कर्मफलत्वे दृष्टान्तमाह, यथा मनोरथः स्वप्ने इति । मनोरथत्वेन मनोरथविषयीभूतं सुखं लक्ष्यते यथा स्वाप्नं सुखम् अनित्यं क्रियाफलं तद्वदित्यर्थः । इत्यामृश्य एवं विमर्शे कृते सति उपशाम्यति बहिः क्षुद्रसुखार्थव्यापाराद्विनिवृत्तो भवतीति (घ)

एवं प्रकृतिकार्यभ्रमं विस्तरेण उक्त्वाऽथ जगत्कर्तृकार्यत्वं प्रपञ्चयति—एभिरिति । आद्यः सर्वकारणतया स्वयमादावेव वर्त्तमानः महाभुजः परमपुरुषः भूतात्मा व्यष्टिसमष्ट्युभयविधभूतान्तरात्मा सर्वेभिः प्रत्यक्षादिप्रमाणसिद्धैर्महाभूतैः पृथिव्यादिभिर्मायाकार्यभूतैः समष्टिभिर्भूतानि उच्चावचानि उत्कृष्टान्यपकृष्टानि च ससर्ज सृष्टेः प्रयोजनमाह, स्वमात्रात्मप्रसिद्धय इति । स्वस्य मात्राभूतानां शरीरभूतानाम् ( आत्मनां ) जीवानां प्रसिद्धये पुरुषार्थसिद्धये भगवदाराधनोपयुक्तकरणकलेवराणीति लब्ध्वा भगवन्तमाराध्य निःश्रेयसं प्राप्तुमित्यर्थः ॥ ३ ॥

एवं तर्हि लब्धकरणकलेवराः सर्वेऽपि तमाराध्य निःश्रेयसं कुतो न प्रापुरित्यत आह—एवमिति । यद्यप्येवं स्वमात्रात्मप्रसिद्धये पञ्चभिर्धातुभिर्महाभूतैः सृष्टान्यपि भूतानि शरीराणि प्रविष्टः प्रत्यगात्मा एकधा दशधा आत्मानं विभजन् ज्ञानकर्मेन्द्रियान्तःकरणैरात्मानं ज्ञानं विभजन् गुणान् शब्दादिविषयानेव भुङ्क्ते न तु परमपुरुषमाराधयतीति भावः ॥ ४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

परस्य पुंस ईश्वरस्य मायिनां ज्ञानिनां मोहिनीं मायां सृष्ट्यादिषु प्रवर्तमानाम् इच्छाशक्तिं जडप्रकृतिविभवञ्च ॥ १ ॥

तत्रतत्र भागवते मायाविषयप्रश्नपरिहारावनेकशः कृतावित्यत्राश्चर्यमिदं नेति भावेनाह—नानुतृप्ये इति । हरेः कथामृतं यस्मिंस्तत्तथा तज्जं संसारतापशान्तिकरम् औषधम् ॥ २ ॥

परिहारमवेक्ष्य प्रश्नः सङ्गच्छत इत्यतः परिहारोऽपि मायाद्वैविध्यविषय एवेति भावेनोपोद्घातं रचयति—एभिरित्यादिना । अत्रायं भावः आदौ स्वयं परमात्मा स्वेच्छाक्षोभितया प्रकृत्या महदहङ्कारादिक्रमेण चतुर्विंशतितत्त्वानि सृष्ट्वा पुनस्तैरसमेतैः स्तुतः तान्यनुप्रविश्य संयोज्य तदुपादानत्वेन ब्रह्माण्डमुत्पाद्यान्तस्तैः सह प्रविश्य ब्रह्मादिपृथिव्यन्तानां तत्त्वानां रूपान्तराणि सृष्टैर्महाभूतैः पञ्चभिरुच्चावचानि शरीराणि ससर्ज त्रिविधान् जीवांस्त्रिविधैः शरीरैः संयोजयामास किं प्रयोजनमुद्दिश्येत्यत उक्तम् आत्मप्रसिद्धय इति आत्मनो हरेः प्रसिद्धिः ख्यातिः प्रतीतिः ज्ञानमिति यावत्तदर्थं परमात्मतत्त्वज्ञानायेत्यर्थः ॥ ३ ॥

जीवकलया ब्रह्मैव भोगायतने शरीरे स्थित्वा कर्मफलं भुङ्क्त इत्यद्वैतमतं प्रत्याह—एवं सृष्टेति । स परमात्मोक्तविधया सृष्टैः पुनः सृष्ट्या स्थूलभावं प्राप्तैः पञ्चधातुभिर्महाभूतैः भूतानि शरीराणि सृष्ट्वा तत्तदहष्टानुसारेण जीवेन सह तान्यनुप्रविश्यात्मानं स्वम् एकधा मनोनियन्तृरूपेण दशधा दशेन्द्रियनियामकरूपेण विभजन् विभक्तं कुर्वन् गुणान् विषयसारानानन्दानेव भुङ्क्त इत्यन्वयः । विभजन्नित्यनेन जीवात्मनामरूपत्वाकित्वेन स्वात्मनो भिन्नत्वमवगमयेत् कर्मफलभोक्तृत्वं स्वस्य पूर्णत्वाकित्वेन स्वातन्त्र्यं च व्यनक्ति ॥ ४ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

अलौकिकमन्त्रद्रष्टारो देवर्षयः ततोऽपि पुष्टिमार्गमन्त्रद्रष्टृत्वाद्वि-भूतित्वं चत्वर्थे प्रकृते त्वस्योपयोगः गृहागतमिति स्वाधीनता पूजितत्वमुत्तमप्रश्नोपयोगः भगवत्प्रेरणया समागतस्योपा-सनार्थमपि वैयग्र्यं नास्तीति सुखमासीनमित्युक्तं पुनरभिवादनं गुरुत्वबोधकं बहुकालमारभ्य प्रष्टव्यमिति हृदि स्थितमिदमा निर्दिश्यते ॥ ३ ॥

प्रश्नमाह-षड्भिः—

॥ वसुदेव उवाच ॥

भगवच्छब्दवाच्या षडर्था इति षट् श्लोकाः तत्र प्रोत्साहनं त्रिभिः प्रश्नश्च त्रिभिः तत्र प्रथमं नारदस्यैवासाधारणगुणैस्तं प्रोत्साहयति—

मू० भगवन् ! भवतो यात्रा स्वस्तये सर्वदेहिनाम् ।
कृपणानां यथा पित्रोरुत्तमश्लोकवर्त्मनाम् ॥ ४ ॥

"ब्रह्म वेद ब्रह्मैव भवति यो यच्छ्रद्धः स एव सः" गुरुत्वाच्च भगवन्निति सम्बोधनं "जगन्मित्रं हि नारदः" यात्रा आगमनं राजादि-सर्वैर्लक्षणयाच सर्वदेहिनामित्युक्तं स्वतोऽपि निरपेक्षत्वात् अहिंसाप्रचुरधर्मबोधनात्संसारोद्धारकत्वाच्च देहाभिमानिना-मिति मुक्तैर्लक्षणार्थं स्वत एव विचार्य तेषां स्वतो हित-करणे दृष्टान्तः अकृपणानां सर्वतः सम्पन्नानामपि पित्रोराग-मनम् स्वस्तये किं पुनः कृपणानाम् उभयोर्वियोगे ह्यतिकृपणाः स्वतेः परमोत्कर्षार्थं विशेषणम् उत्तमश्लोकस्य मार्गभूतानां तत्र प्रविष्टानां भगवत्प्राप्तेर्निश्चितत्वात् तथा च नारदस्य त्रयो गुणाः सर्वमैत्री सर्वहितपरता गोविन्दप्रापणं चेति एकैकेनैव वयं कृतार्थाः किंपुनस्त्रिभिः उपसंहारे बहुवचनं पूज्यार्थं व्यवहारे वा कृतदोषपरिहाराय च आगमनं तु भगवदिच्छयेति न कोऽपि विरोधः ॥ ४ ॥

कथं नारदागमनेनैवमित्याशङ्क्य देवर्षिविभूतित्वं प्रकट-यति—

मू० भूतानां देवचरितं दुःखाय च सुखाय च ।
सुखायैव हि साधूनां त्वादृशामच्युतात्मनाम् ॥ ५ ॥

देवापेक्षया उत्तमत्वं सर्वेषां सुखैककारित्वेन विभूतित्वमग्रिम-श्लोके देवा हि द्विविधाः प्रवाहमर्यादाभेदेन तत्र प्रवाहदेवा वृष्ट्यादिकर्तारो भवन्ति वृष्ट्यादिकं तु दुःखकरमपि प्रवाह-देवा अपि द्विविधाः बाह्याभ्यन्तरभेदेन सुखदुःखे च लौकिका-लौकिके चकाराभ्यामलौकिके परिगृहीते वेदितव्ये भूतानि भूलोकस्थितजीवाः प्रकरणात् विशेषः चरितं तु स्वरूपतो महत् परं तु सुखदुःखजनकं च ऋषित्वं हि मन्त्र द्रष्टृत्वं मन्त्रास्तु सहजमपि धर्ममपेक्षितमात्रमंशतः प्रतिबध्नन्ति तदत्र सहजमाधिदुःखं प्रतिबध्नन्तीति नात्र तिरोहितमिव सर्वजनीन-मित्याह-हीति । साधवः सदाचाराः मर्यादारक्षकाः लोकापेक्षार्थं भगवता अधिकृता नारदतुल्याः पुष्टिमार्गस्था गोपिकातुल्या अच्युतात्मानः भक्ता अपि त्रिविधाः मर्यादास्थाः देवतुल्याः भगवद्वशीकरणरूपाः अतो भवन्तो भगवद्विचारितं देवकृतं मर्यादया प्राप्तं च दुःखं मन्त्रप्रयोगेण दूरीकृत्य सुखमेव साधयन्तीत्यर्थः ॥ ५ ॥

विभूतित्वं वक्तुं ततोऽपि विशेषमाह—

मू० भजन्ति ये यथा देवान् देवा अपि तथैव तान् ।
छायेव कर्मसचिवाः साधवो दीनवत्सलाः ॥ ६ ॥

ननु, सर्वे भगवदवयवभूता देवा "यन्न दुःखेन सम्भिन्न"मिति वाक्यानुसारेण सुखमेव प्रयच्छन्तीति चेत् न नहि एकेन यागे कृते तत्सम्बन्धिनां स्वर्गो भवति नवा अग्निष्टोमे कृते द्वादशा-हस्वर्गो भवति । ननु तेषां भगवदवयवभूतानां कथमेवमतआह, कर्मसचिवाः राजाधीना हि मन्त्रिणो भवन्तीति वेदमार्गस्त-थैव नात्र किमपि विचारणीयं वैलक्षण्यमाह-साधवो दीनव-त्सला इति । चतुर्थपादः सिद्धान्त इति सन्त आत्मा ब्रह्मैव चेति चतुर्थः पादः नहि अंशैस्तथा कर्तुं शक्यं यथा अंशिना दैन्यमेव करणे हेतुः वत्सं वान्ति जिह्वया आददते इति कार्या-कार्यविचाराभावेन सहजस्नेहवन्तो वत्सलाः सामान्यवाक्यं विशेषपरमिति प्रकरणादवगन्तव्यं तस्माद्भवत्समागममात्रेणैव भगवदवतार इति सर्वेषां सर्वं सिद्धं भवतीति तद्गुणवर्ण-नेन प्रोत्साहनमुक्तम् ॥ ६ ॥

प्रश्नमाह—

मू० ब्रह्मंस्तथापि पृच्छामो धर्मान् भागवतांस्तव ।
यान् श्रुत्वा श्रद्धया मर्त्यो मुच्यते सर्वतो भयात् ॥ ७ ॥

ब्रह्मभावाभिलाषी विदितसर्ववृत्तान्तो विदितसाध्यसाधन-भावो धर्मान् पृच्छति, "कथमाचार्यवान् पुरुषो वेदे"ति शास्त्रार्थ-त्वाय भगवतो ब्रह्मत्वभावनायामपि गुरुत्वस्य भगवतानङ्गी-करणाच्च शास्त्रार्थसिद्धिः किन्तु ब्रह्मपडज्ञानमुपदिष्टं तेन जीव-न्मुक्तिन्यायेन ब्रह्मभावे जातेऽपि ब्रह्मभूतः प्रसन्नात्मेत्यादिनि-रूपितार्थस्यासिद्धेः भगवद्धर्माचरणेन तत्सिद्धिरिति प्रश्नः नारदस्य ब्रह्मभावो जात इति तथा सम्बोधनं स्तुतिमात्रत्वा-भावाय स्वस्यानुष्ठेयः स्वविचारितो भविष्यतीति तथापीति भवदागमनेनैव सिद्धोऽस्माकमर्थस्तथापि शास्त्रार्थपरिपालनाय पृच्छामः देवकीप्रभृतीनामप्ययमर्थोऽभिलषित इति बहुवचनं भाग-वतानिति प्रमाणतः स्वरूपतः फलतश्चेति त्रेधा नियतभगव-त्सम्बन्धान् तवेति तवाप्यनुष्ठेयान् दुःखनिवर्तकत्वं तु तेषामि-दानीमेवाह-यान् श्रुत्वेति । उपायपरिज्ञाने हि निश्चिन्तता भवति श्रद्धया तदात्मत्वेन करणं सम्भवति मर्त्य इति स्वभावतः सभयत्वं सर्वत इत्याध्यात्मिकादिभिः ॥ ७ ॥

ननु, दिव्यद्वादशसहस्रवर्षानन्तरं प्रसन्नो भगवान् कथं कर्दमस्य शुक्ल इव न गुरुर्जात इतिचेत्तत्राह—

मू० अहङ्किल पुराऽनन्तं प्रजार्थं भुवि मुक्तिदम् ।
अपूजयन्न मोक्षाय मोहितो देवमायया ॥ ८ ॥

अलौकिकाज्ञातज्ञापकस्य देवकीजठरादुद्गतस्य कुतो न गुरुत्वमित्यत आह-किलेति । प्रसिद्धार्थज्ञापकत्वेन न गुरुत्वं प्रसि-द्धिस्तु जन्मद्वयी सत्यसङ्कल्पत्वात्तथापि पुत्रत्वमेव न गुरुत्वम् अस्मिन् जन्मनि प्रसिद्ध्यभावात् अत आह, पुरेति । ईश्वरपरि-चयाभावादुपदेशोऽनुचित इति आशङ्क्य सेवितत्वान्तराभावान्-त्ययेन परिचयः प्रकारे परं विशेषः प्रजार्थं इति भुवि मुक्तिद-मिति न क्रममुक्तिः न वा उभयार्थेन मोक्षायेति तपसा शुद्धचि-त्तस्य कथमेवमत आह—मोहित इति । प्रजासर्गे ब्रह्मणा आदिष्टो नचान्यैः प्रथमं सङ्कल्पश्च तथेति भगवतापि तथैव विचा-रितं ततो भगवत्सायुज्यस्याविद्यमानस्य प्रार्थ्यमानस्याविद्यमानस्य अर्थ्यमानत्वाद्विलम्बः

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तत्त्वादग्निविप्रयोः सहभावेनान्ये अनेन तेषां सहजोत्कर्षः प्रतिपादितः ॥ २५ ॥

पूजनमाह—

मू० विदेहस्तानभिप्रेत्य नारायणपरायणः ।
प्रीतःसम्पूजयाञ्चक्रे ह्यासनस्थान् यथार्हतः ॥ २६ ॥

तेषां ब्रह्मत्वेन भगवत्त्वेन च ज्ञानम् अतो राजनि विशेषणद्वयं विदेह इति नारायणपर इति च अग्रिमविशेषणस्य पूजाया-मप्युपयोग इति पश्चान्निरूपणं दृष्ट्वैव प्रीतः तेनास्य तद्गतं सर्वं ज्ञानमिति सम्पर्क सम्यक् पूजा यथा भगवतः बहुकाल-स्थित्यै आसनस्थानिति ज्येष्ठानुक्रमेण यथारुचि पदार्थदानं च ज्ञात्वा पूजनं तेषामित्युत्कर्षः ॥ २६ ॥

प्रश्नमाह—

मू० तान् रोचमानान् स्वरुचा ब्रह्मपुत्रोपमान्नव ।
पप्रच्छ परमप्रीतः प्रश्रयावनतो नृपः ॥ २७ ॥

प्रष्टव्यः पदार्थस्तेषु वर्तत इति बोधहेतुः स्वरुचा रोचमाना-निति रुच्युत्पादककान्तिस्तु ब्रह्मविदो भगवद्धर्मवत्त्वेन पितुः स्वस्य च मनसा वृता गुरवः सनकादय इति कथं तत्तुल्यत्वे-नेन प्रश्न इत्याशङ्क्य तत्तुल्या एवेत्याह—ब्रह्मपुत्रोपमानिति । तथा-प्यनुचितेनाब्रुवन्नित्यनेन समाधास्यते नवेति च वैकुण्ठस्थिता एवैते चत्वारोऽपि दुर्लभा लोके कुतो नवेति बहुकालमनो-रथसिद्धिर्भविष्यतीति परमप्रीतः आसक्त इत्युक्तं विनयेन नम्रता प्रश्ने फलहेतुः नृप इति देशकालादिसर्वज्ञातुर्यम् एवं तस्य प्रश्नपर्यन्तं नारदोक्तिरुक्ता राज्ञः प्रश्नमाह, चतुर्भिः । अभिनन्दनं द्वयेन द्वयेन च प्रश्नः भगवत्सेवकत्वेन भगव-द्धर्मवत्त्वेन च ज्ञानं तु ब्राह्मणानां सहजत्वान्न स्तूयते तथैव प्रश्नोऽपि द्वयेन लब्धपरिपालनालब्धलाभाभ्याम् ॥ २७ ॥

तत्र प्रथमं भगवत्सेवकत्वेन तान् स्तौति—

जनक उवाच ॥

मू० मन्ये भगवतः साक्षात्पार्षदान्वो मधुद्विषः ।
विष्णोर्भूतानि लोकानां पावनाय चरन्ति हि ॥ २८ ॥

दर्शनादेव परमहंसा वैष्णवा इति ज्ञातं गोत्रादिप्रश्ने न कोऽपि पुरुषार्थः आगमनप्रयोजने सन्देहः स्वार्थमागमनं परार्थं वेति प्रथमो दर्शनादेव निवृत्तः परार्थं च प्राणिनो न स्वतः प्रवृत्तिः प्रेक्षापूर्वप्रवृत्तिश्चेयम् अतो भगवत्प्रेरणया ऽस्मदुद्धारार्थं समा-गतं तत्र बहिः सेवका राजसवेशधारिणो भवन्ति । तैश्चास्व-तन्त्रैर्न सर्वं कार्यं सिद्ध्यति अतः कृत्रिमवैकुण्ठादौ सनका-दय इवास्येऽपि तत्सदृशा भगवत्सभायां तिष्ठन्ति पार्षदसङ्घेऽपि कंचन गच्छन्ति तन्निवृत्त्यर्थं साक्षादिति मुख्यानित्यर्थः । कस्मिन्न-वसरे पार्षदत्वं तत्राह—मधुद्विष इति । मधुकैटभौ हत्वा ब्रह्मणो वेदान् दत्तवान् हयग्रीवरूपेण ततश्च वेदरक्षावसरे सर्वेषां महतामवसरः अनेन तेषां वचनं न केनाऽपि शास्त्रेण विरुद्ध-मिति ज्ञापितं कार्यार्थं भगवदाज्ञयाऽऽगमनसम्भावनायामपि परिभ्रमणमयुक्तमित्याशङ्क्याह—विष्णोर्भूतानीति । पालकस्य सेवकाः यं गृह्णन्ति तं स्वसमानं कुर्वन्तीति भूतानि अथवा भगवदुत्पन्नानि गङ्गावत्सर्वपवित्रकरणार्थं परिभ्रमन्तीत्यर्थः नात्र सन्देहः गङ्गैव दृष्टान्तः इति हीत्युक्तं भगवतैवोत्पाद्य प्रेषिता इत्युक्तं भवति ॥ २८ ॥

भगवद्धर्मवत्त्वेन तेषां प्रशंसा गङ्गातोऽप्याधिक्यार्थमाह—

मू० दुर्लभो मानुषो देहो देहिनां क्षणभङ्गुरः ।
तत्रापि दुर्लभं मन्ये वैकुण्ठप्रियदर्शनम् ॥ २९ ॥

लब्ध्वा सुदुर्लभमिदमिति न्यायेन स्वर्गापवर्गयोर्द्वारमिति च अत्रैव मृग्य इत्यादिवचनैश्च मानुषदेहो नौकावत्साधनं परं सन्तो नाविका इव यदि भवन्ति तदा फलं सिध्यति नवात्र प्रत्यक्षबाधः शङ्कनीयः हेतुस्वरूपफलैः प्रत्यक्षैर्हि स भवति तत्र हेतुरप्रत्यक्ष एव फलं साधनाभावात् स्वरूपेऽपि महतः पारिका इत्यादये विषमनद्यां प्राप्तनौका न नौका सुलभा मन्यन्ते बहुभ्रमणेन प्राप्तत्वात् चतुरशीति लक्षयोनिष्वेका मनुष्ययोनि-रिति युक्त्या बाधो निराकार्यः देहाभिमानस्य तामसत्वाद्राज-समानुषदेहो दुर्लभ इत्यर्थः । क्षणेन भङ्गुरम् आरब्धनाशे न तिष्ठतीति मानुषदेहप्राप्तिःस्वस्य दुर्लभा दुर्लभेऽपि दुर्लभा भगवत्प्रियप्राप्तिः तदभावे प्राप्तापि व्यर्था अनर्थहेतुश्चेति लोकप्रसिद्ध्यभावेऽपि स्वानुभवः प्रमाणमित्याह—मन्य इति । वैकुण्ठ स्थित्वा सर्वस्वरूपस्वधर्मान् दत्त्वा सेवकबाहुल्याय प्रेषयित्वा तत्प्रतीक्षया तिष्ठतीति वैकुण्ठस्य प्रियाः ॥ २९ ॥

नह्येवं समागमः पुनः सम्भविष्यति येन विलम्बः कर्तव्यः किन्तु शरीरस्योपयोगः कर्तव्य एवेत्याशयेनाह—

मू० अत आत्यन्तिकं क्षेमं पृच्छामो भवतोऽनघाः ।
संसारेऽस्मिन् क्षणार्धोऽपि सत्सङ्गः शेवधिर्नृणाम् ॥ ३० ॥

विरोधिसहभावाभावे सति अनन्तत्वमात्यन्तिकत्वं क्षेमो लब्धस्य परिपालनं लब्धो हि दुर्लभो देहः स च स येनो-पायेन नित्यो भवेत्स वक्तव्य इत्यर्थः । भवत इति द्वितीयं कर्म पदार्थद्वयस्य दुर्लभत्वेऽपि प्रारम्भकपापसम्भवान्नाशमच्छरीरेण कार्यसिद्धिः अत अनघा ! इति सम्बोधनं प्रतिबन्धकाभावाय विष्णोर्भूतानीति हेतुः आत्यन्तिकक्षेमस्योत्कर्षं वक्तुं कैमुतिक-न्यायेनाह । संसारे ऽस्मिन्निति । स्वव्यतिरिक्तानि क्षुद्राणि फलानि दातुं न बहुकालस्थितिरपेक्ष्यते निधिप्राप्तौ दारिद्र्यमिव ज्ञान-दानेन संसारदुःखनिवृत्तिरित्यर्थः । अतः सदिति सामान्यपदं नरत्वमेवाधिकारिविशेषणम् ॥ ३० ॥

अलब्धलाभं पृच्छति ॥

मू० धर्मान् भागवतान् ब्रूत यदि नः श्रुतये क्षमम् ।
यैः प्रसन्नः प्रपन्नाय दास्यत्यात्मानमप्यजः ॥ ३१ ॥

भागवतधर्माः कदापि न प्राप्ताः योगस्य क्षेमाभावे ह्यप्रयोज-कत्वम् अत आह—यदि नः श्रुतये क्षममिति । स्वरूपयोग्यतायां अप्र-च्छन्नतुल्यत्वेऽपि धर्माणां सार्थकता भवति । धर्माणां योग-त्वाय पूर्वापेक्षया अधिकफलत्वमाह । यैः प्रसन्न इति । अनुष्ठित-धर्मैर्भगवत्प्रसादो नियतः प्रपत्तिरधिकारिविशेषणमधिकं पूर्वश्लोके नरत्वमेवोक्तं ततोऽधिकमित्यर्थः । अन्यस्यानात्मनिवेदिनो भगवा-नात्मानं न समर्पयति, प्रसादे कीर्त्यादिदानपुरःसरमात्म-दानं च धर्माणां हेतुत्वं वरं दुर्णामहेऽथापीति प्रसादेऽपि प्राप-णायाः क्रियमाणत्वात् अपेक्षत्वेन भक्तसङ्ग धर्माणामनन्य-हेतुत्वाय न सम्बन्धेन प्रयुक्तमित्याह—अज इति ॥ ३१ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

स्वाभिप्रायेऽ्पीति निराकरणाय पदार्विन्दादिति क्षणनिमिषार्द्धमपीति प्रधानयागकालाभिप्रायं निद्रादौ तु सहजविस्मरणं न बुद्धिपूर्वकं परित्यागः स्मृतिविरोधिनां कार्याणां परित्याग एवाचरणं मार्गान्तरगमनं वा ॥ ५३ ॥

ननु, "तृष्णया भववाहिन्या" इति न्यायेन गुणानां क्षोभकाणां च विद्यमानत्वात् रजः सत्त्वं तमश्चेति वचनाच्च कदाचित्कामसम्भवस्य सर्वजनीनत्वाच्चासम्भावितः पक्षोऽयमिति चेत्तत्राह—

मू० भगवत उरुविक्रमाङ्घ्रिशाखानखमणिचन्द्रिकया निरस्ततापे।
हृदि कथमुपसीदतां पुनः स प्रभवति चन्द्र इवोदितेऽर्कतापः॥५४॥

पुनः कामादयो हृदये नोत्पद्यन्ते अवाङ्मनोगोचरकर्मकर्तृत्वेन निरस्तत्वात् नहि गुणादयोऽन्यत्रावस्थानरसाः येन तस्मिन्नेव हृदये पुनः प्ररोहेयुः चरणस्यैव माहात्म्यं वक्तुं भगवत इत्युक्तम् अतः सत्प्रतिपन्नता नान्यस्य शाखावचनादङ्गुः कल्पवृक्षत्वम् मणिस्त्वो हि मणिप्रभाव इति चन्द्रिकापदेन प्रभावाधिक्यम् अनेन प्रभावद्वैकल्येन गङ्गाप्रवाहवन्निरन्तरमानन्दप्रवाहप्रवर्त्तने तापशङ्कापीति भावः । स तापः भक्तेनापो हि दिवसे न रात्रौ तथा भगवद्विमुखे तापः तत्रापि चन्द्रे उदिते उष्मापि निवर्त्तते क्व ताप इत्यर्थः ॥ ५४ ॥

फलमुखं चन्द्रमाह—

मू० विसृजति हृदयं न यस्य साक्षाद्धरिरवशाभिहितोऽप्यघौघनाशः।
प्रणयरशनया धृताङ्घ्रिपद्मः स भवति भागवतप्रधान उक्तः॥५५॥

"माहूत इव मे शीघ्रम्" इति हि फले वक्तव्यम् अन्यथा शुनुकल्पस्य प्रकृत्यापरिहार एव स्यात् साधुदिव्यन्तर्यामित्वयुक्तत्वाय हरिरसुद्धारकः भक्तिरिव भक्तना न क्षणः पापसमूहस्य पूर्वमेव नष्टत्वात् पुष्टिस्थो भगवान् भक्तिमार्गविरोधात्कथं तिष्ठतीत्याह—प्रणयेति । रसनासाधनभक्त्या संचलिता तथा स्थिरीभूतश्चरणः मस्तके रज्जुनिर्मिताधारवत् कमलं तूर्ध्वमुखं तथैव तिष्ठति तदा स सर्वजनीनो नारदवदुक्तो भक्तेरित्यर्थः । एवं धर्मोपयोगेनानुकल्पोपयोगेन च सफला भक्ता निरूपिता इति ॥ ५५ ॥

इतिश्रीभागवतसुबोधिन्यां श्रीमद्वल्लभदीक्षितविरचितायाम्

एकादशस्कन्धविवरणे

द्वितीयाध्यायविवरणम् ॥ २ ॥

मायाधिकारहीनानां तृतीयाध्याय ईर्यते ।
अनुकल्पोऽधिकारो वा चतुर्भिः सम्भविष्यति ॥ १ ॥
दुष्प्रवाह विज्ञानं सत्यं हेतुभिः क्रमात् ।
ज्ञानकर्मपरिज्ञाने तृतीयेऽर्थचतुष्टयम् ॥ २ ॥
द्विपदाम्भोगसंसिद्धौ चतुःपाद्यो निरूपिताः ।
ते स्थिताः षडुच्चस्थाः साङ्घ्रिपाद्भिः स्थिरीकृताः ॥३॥

एवं सनकाद्यनुकल्पनवयोगेश्वराणां चतूरूपत्वं तत्र प्रथमं चतुर्णां मध्ये मायास्वरूपं पूर्वमेव जिज्ञासितं पृच्छति, मायामोहरहितत्वेन पूर्वोक्ताधिकारात् पृष्ट्वा स्तुतिमध्ये अतः प्रथमं पृच्छति ।

राजोवाच ।

मू० परस्य विष्णोरीशस्य मायिनामपि मोहिनीम् ।
मायां वेदितुमिच्छामो भगवन्तो ब्रुवन्तु नः ॥ १ ॥

प्रकृतेः परस्य जगत्कर्तुः विष्णोर्मोक्षदातुः बन्धमोक्षौ निरूप्य मध्ये नियन्तुरीशस्य अतो माया त्रिविधा सर्वभवनसामर्थ्यं माया विद्याजनिका माया लोके व्यामोहिका विषयाणां सर्वव्यामोहकत्वात् इदमस्माकमुत्तमं जिज्ञासितमित्याह नः इति ॥ १ ॥

तान् स्तौति कथनार्थम्—

मू० नानुतृप्ये जुषन् युष्मद्वचो हरिकथामृतम् ।
संसारतापनिस्तप्तो मर्त्यस्तत्तापभेषजम् ॥ २ ॥

अनुतृप्तिरलम्भावः महतां वचनमेव सर्वदा श्राव्यं तत्रापि हरिकथा तत्रापि मरणनिवर्तकं भयं च संसारतापमरणाश्रमे दुःखान्तः अन्ये तापा अन्यैरपि गच्छन्ति तेषां पूर्वोक्तानां तु तापानामिदमेव भेषजं मायाकथने स्वयमसंसक्तः—

अन्तरिक्ष उवाच ।

मायाशब्दः शास्त्रेषु लोकेषु च बहुधा प्रयुक्तः सर्वभवनसामर्थ्यं व्यामोहिका च शक्तिः । ऐन्द्रजालिकविद्या च कापट्यादि च तत्तद्रूपनिरूपणार्थं तथा तथा प्रयुक्तः शब्दः समाधावपि एकैव शक्तिरुभयकार्यरूपा उक्ता प्रवाहस्तत्र मायाशब्देनोच्यते स च भगवत्कृतो भगवद्रूपश्च विषयैश्च व्यामुग्धा सर्वे भवन्ति अतोऽत्र किं युक्तमिति चेत् उच्यते—

मायाशक्तिर्भगवतो नात्र कार्या विचारणा ।
समाधौ तु तथा भानात् प्रयोगस्तु विचार्यते ॥
विचारे भगवद्वाक्यं वक्तृणां कार्यगोचरम् ।
प्रतीतिश्चाप्रतीतिश्च साधिष्ठानस्य तद्विद् ॥
सुवर्णजलवत्कार्ये प्रक्रियेयं पुराणगा ।
तथा सह कृतिः कापि कादनं शांसतोऽपि वा ।
निःस्वरूपस्य कार्यस्य तन्मीमांसा सहैव वा ।
स्वविव स्फुरणं यस्मात् अयं मायेति शब्द्यते ॥
मार्गत्रये हरेः स्फूर्तिस्ततोऽन्यन्मायया कृतम् ।
प्रतीतिरपि मिथ्येति केचिद्धर्मविचारकाः ॥
ज्ञानतो निर्णयकस्य वस्तुनो मायिकस्य च ।
ज्ञानेऽपि स्फुरणं यस्य तद्रूपं सत्यमुच्यते ॥
केवलाऽलौकिकाऽस्फूर्तिकतावन्मात्रधारिणी ।
काश्चिरा मूलराहित्यान्मायेति निगद्यते ॥
मात्रप्रयोगो यत्रास्ति तत्रैकस्यैव रूपणम् ।
उभयं तु हरेः कार्यं द्वितीये करणं तु सा ॥
द्वितीयमात्रकरणे कालकृत्स्नमतं स्थितम् ।

तदत्राह, सार्द्धचतुर्दशभिः ॥ २ ॥

तत्रैकेन सृष्टिमाह—

मू० एभिर्भूतानि भूतात्मा महाभूतैर्महाभुज ।
ससर्जोच्चावचान्याद्यः स्वमात्रात्मप्रसिद्धये ॥ ३ ॥

एभिरिति जनत्वापेक्षया प्रतीतिरित्यर्थः । सृष्टस्य इव महाभुजः अत्युत्साहेन कार्यकर्ता अत एवोच्चावचानि नैकरूपाणि आद्यः प्रथमत एव जलमिव प्रविष्टः स्वस्यावस्थासहितस्य मायायां भगवतश्चेति त्रयाणां प्रसिद्धये अथवा स्वमात्र एव योऽयमात्मा स्वप्रवत् तस्य प्रसिद्धये प्रकर्षेण सिद्धिः सृष्ट्यन्तरापेक्षया ॥ ३ ॥

भोगमाह—

मू० एवं सृष्टानि भूतानि प्रविष्टः पञ्चधातुभिः ।
एकधा दशधात्मानं विभजन् जुषते गुणान् ॥ ४ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

कृतम् अलौकिकनापहारी हि महर्षिः प्रतिपुरुषं ज्ञपाश्रपरिक्षाना- देक एव निस्तारकमेकमुपायं वक्ति । एकवचनं स्थूलधियो बहिर्मुख ज्ञानभक्तिरहिता इत्यर्थः । तत्र स्थूलधियां तरणोपायो वक्तव्यः "मामेव ये प्रपद्यन्ते" इति एवकारेण सर्वेषामनुपायत्वं प्रतीयते स्थूलबुद्धि रूपायस्यैवोपायो वक्तव्य इति नाग्रहः किन्तु स्थूलबुद्धीनामपि यथा तरणं सिद्ध्यति तथोपायो वक्तव्यः तत्रोपायो नारायणपरत्वमेव तद्भक्तया सा भगवद्धर्मैर्भगवच्छास्त्रे साधनत्वेन प्रतिपादितैः तेन गुरुसेवया सा च गुरुशरणं गतस्य- मुच्छरणागमनमैहिकामुष्मिकफलभोगविरागाभावे न भवति. "न तस्य तत्त्वग्रहणाय" इति वचनात् । तत्रैहिकवैराग्यं साधनभेदेन तत्र लौकिकानि कर्माणि स्त्रियं च परित्यजेत्युक्ते न परित्यजति ॥ १७ ॥

अनुभवस्य बलिष्ठत्वादनुभवमेवाह-

प्रबुद्ध उवाच ।

मू० कर्माण्यारभमाणानां दुःखहत्यै सुखाय च ।
पश्येत्पाकविपर्यासं मिथुनीचारिणां नृणाम् ॥ १८ ॥

नृणामिति लौकिकानां मिथुनीचारिणामित्याग्रहः प्रथमतः "सुख- मस्यात्मनो रूपम्" इति न्यायेन कर्म आरम्भ एव विपरीतं भवति कर्माणीति बहुवचनात्पुनः पुनरारम्भः कर्मणा दुःखमित्यनुभवः सुतरां फलाभावे अपेक्षितसुखकालेऽपि पुनःपुनरारम्भे गच्छति कश्चिद्विपर्यासेऽपि विपर्यासमेव पश्येत्—

"उपक्रमानुरोधेन स्वयं चापि तथा विधिः ।
स्वस्याबाधकता वाच्या परत्वश्रुव एव हि ।
प्रवाहात्तु पृथक् ज्ञानं मतिकाण्डव्यवस्थितिः ।
शास्त्रतः सर्वनिर्द्धारो यस्य तस्यैवमुच्यते ॥
प्रवाहपतिता नात्र विचार्या इति मे मतिः ।

एवं स्त्री तत्साङ्गपरित्याग उक्तः ॥ १८ ॥

धनपरित्यागमाह—

मू० नित्यार्त्तिदेन वित्तेन दुर्लभेनात्ममृत्युना ।
गृहापत्याप्तपशुभिः का प्रीतिः साधितैश्चलैः ॥ १९ ॥

"तांश्चिन्तनमारभ्य विनाशावधिदुःखदम् ।
मृत्युस्तु सुलभो लोके दुर्लभं धनमेव हि" ॥

एवमपि मृत्युरूपम् एतादृशेन का प्रीतिः तेन साधितैर्वा ममतापदाश्रयैः अन्येषामेवैषामन्तभावात् —

"भूम्यादिरूपयः सिद्धाः साध्यानां गृहशेषता ।
देहे तु यस्य वैराग्यं स पूर्वत्र निरूपितः ॥ १९ ॥

पारलौकिकवैराग्यमाह—

मू० एवं लोकं परं विद्यान्नश्वरं कर्मनिर्मितम् ।
सतुल्यातिशयध्वंसं यथा मण्डलवर्तिनाम् ॥ २० ॥

"अयथाख्यानतो जातं वैदिकं कर्मास्तमेव च ॥
पौराणं च ततो जातं फलं गृहबद्धेव हि ॥
अक्षय्यतृतीयाश्राद्धादि तथानन्तव्रतादि च ॥
समर्पितं प्रियं विष्णौ ततोऽपि फलितं तथा ॥
अतो नश्वरमित्युक्तं पृथक् भक्तिफलात् क्रमात् ॥
सतुल्यातिशयध्वंसमन्तःकरणदोषतः ॥
ज्ञानभक्तिफलं मोक्षं नाप दोषस्ततो भवेत् ॥
ऐश्वर्यमहितेष्वेष्वपि स्पर्द्धासङ्ग्रहः ॥
स्पर्द्धासूयायुतो लोको मण्डलाधिपवाचकः ॥
लोकद्वयफलं यस्य क्षयमेवेति निश्चयः ॥ २० ॥

अतो मोक्षफले हेतुमूलश्रुतमाह हि—

मू० तस्माद्गुरुं प्रपद्येत जिज्ञासुः श्रेय उत्तमम् ।
शाब्दे परे च निष्णातं ब्रह्मण्युपशमाश्रयम् ॥ २१ ॥

"निराश्रयं यथा लोके स्थानभ्रष्टा निगद्यते ॥
हरेः कृपाविशिष्टोऽपि गुरुहीनस्तथैव हि ॥
यथा भक्तिः स्वतन्त्रोक्ता गुरुसेवापि तादृशी ॥
जिज्ञासादोषभावत्वं तथापि विनिगद्यते" ॥

यदेव पृच्छति तदेव वदिष्यतीति उत्तम श्रेय इत्युक्तं च गुरुमुखः लोके ज्ञापकं रूपमुपरमाश्रयमिति सर्वसन्देहवारणार्थं वैधरीत्यानद्भुतप्रवेशाय लोकयानित्याशयम्—

भागवतरहितो ह्यत्र बोधको न क्षमार्गतः ॥
अपाश्रितं तत्प्रथमे शुको वक्ता न नारदः ॥
सत्तमेव च कृष्णस्य दर्शनार्थी तथापि तु ॥ २१ ॥

सर्वशास्त्रसर्वं यदित्यर्थात्याशयेनाह—

मू० तत्र भागवतान् धर्मान् शिक्षेद्गुर्वात्मदैवतः ।
अमाययानुवृत्त्या यैस्तुष्येदात्माऽऽत्मदो हरिः ॥ २२ ॥

गुरोरात्मत्वे स्नेहः श्रद्धा आराध्यत्वेन ज्ञानं च देवतात्वे मन्त्र- शास्त्रेऽप्युक्ता मन्त्रा गुरुमुखव्यतिरेकेण न फलन्तीति तत्र शिक्षा- गुरुरन्तोपायमाह, निष्कपटानुवृत्तिभिः भागवतधर्माणामेव शिक्षणं हेतुमाह, तुष्येदिति । स्वसन्तोषाभावे हेतुरेव न सिद्ध्येत् फलदातुस्सन्तोषे फलम् अतः स्वपरनिर्वाहका धर्मा इति किञ्च- दुःखाभावोऽप्यनुषङ्गिकः ॥ २२ ॥

तत्र प्रथमं श्लोकत्रयेण प्रवाहान्निवृत्तिः कर्ममार्गप्रवेशः ज्ञान- मार्गप्रवेशश्चोच्यते तदभावे भागवतधर्मानधिकारात् तत्र प्रथमं प्रवाहान्निवृत्तिमाह—

मू० सर्वतो मनसोऽसङ्गमादौ सङ्गं च साधुषु ।
दयां मैत्रीं प्रश्रयं च भूतेष्वद्धा यथोचितम् ॥ २३ ॥

संसक्तेभ्यो मनस आकर्षणं मनसा हि सर्वं भवतीति स्वाभिरुचिः साधनेषु प्रथमसत्सङ्गः लोकानां परित्यागः एवं च न सम्भवति, अविशेषभाव, दीनेषु दया समेषु मैत्री उत्तमेषु प्रश्रयः यथोचितमिति देशकालानुरोधः ॥ २३ ॥

कर्ममार्गप्रवेशमाह—

मू० शौचं तपस्तितिक्षां च मौनं स्वाध्यायमार्जवम् ।
ब्रह्मचर्यमहिंसां च समत्वं द्वन्द्वसंज्ञयोः ॥ २४ ॥

कर्म त्रिविधं कायिकादिभेदेन तत्र वयं वयमेकैकस्य । शौचं मृदादिभिः तपः कृच्छ्रादि शीतादिसहनं तितिक्षा इति कायिकम् । वृथालापपरित्यजनं वेदाभ्यासः सत्यं प्रियभाषणं वाचनिकम् । मानसे हि कामजयः क्रोधजयः वैषम्याभावश्चेति निर्दिष्टे हि द्वन्द्वेनैव तयोः संज्ञा निर्दिष्टा यथा सुखदुःखे प्रियाप्रिये इति ॥ २४ ॥

ज्ञानमार्गप्रवेशमाह—

मू० सर्वत्रात्मेश्वरान्वीक्षां कैवल्यमनिकेतताम् ।
विविक्तचीरवसनं सन्तोषो येन केनचित् ॥ २५ ॥

आत्मेश्वरयोरैक्ये त्रिषु तस्य सर्वत्र निरीक्षणं ज्ञानम्—

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

"सङ्गाभावो गृहाभावो वस्त्रभोजनसंयमः ।
चतुष्टयं ज्ञानमार्गे साधनं सर्वदा मतम्" ॥

वीराणामपि विवेको न चातुर्थं "सत्यमिमं किमार्गो हि स यत-स्तादृशो मतः" तत्र ज्ञानाभावफलयोराद्यन्तं निरूपणं मध्ये अपरिच्छिन्नधर्माः परिचयश्च सेवकानुभवेषु सेवकतुल्यता तत उत्तमं साधनम् एवं पञ्चार्थाः ॥ २५ ॥

तत्र प्रथमं भक्तिमार्गप्रवेशाय साधनान्याह—

मू० श्रद्धां भागवते शास्त्रेऽनिन्दामन्यत्र चापि हि ।
मनोवाक्कर्मदण्डं च सत्यं शमदमावपि ॥ २६ ॥

प्रथमतः प्रमाणे महती श्रद्धा ततो विरुद्धानामन्यमार्गाणामपि स्मरणां निन्दाऽकार्या हि तत्कर्तारः सापि न कर्तव्या—न युक्तोऽनुसन्धेयाः किन्तु अद्वैव पूर्वं मार्गान्तरे साधनत्वेनोक्ता अपि मौनादयः पूर्वत्र नियतत्वाभावात्वायोज्यन्ते प्रमाणासिद्ध्यनन्तरं व्यभिचार-परिज्ञानात्कायवाङ्मनसां दण्डः कर्तव्यः अनीहादयः अन्ये वा येनैव दण्डिता इति बुद्धिर्भवति सत्यं भगवन्मार्गे परमं साधनं भगवन्निष्ठा बुद्धिः शमः इन्द्रियनिग्रहो दमः वाङ्मनः-कायानां वा गुणा उत्पन्नः ॥ २६ ॥

प्रथमं साधनान्याह—

मू० श्रवणं कीर्तनं ध्यानं हरेरद्भुतकर्मणः ।
जन्मकर्मगुणानां च तदर्थेऽखिलचेष्टितम् ॥ २७ ॥

प्रेमसाधनं श्रवणादित्रयमिति पूर्वमुक्तम् अद्भुतकर्मण इति विशेषः गुरुलीलामहिमः न दशविधलीलासहितः त्रिजातीयानां बहूनां साधनानामनुष्ठानत्वात् अत एव जन्मकर्मगुणानां चेत्युक्तं चकारात्सोऽप्यद्भुतकर्मणः सर्वमोचकाः शिष्टेन्द्रियकार्यो-णामप्यनुप्रवेशः सर्वेषामेकमुख्याय पूर्वोक्तचतुर्णामर्थे सर्वेन्द्रि-याणां विनियोगं शिक्षेत् ॥ २७ ॥

ततः कियत्कालसेवया परिचिते जातेऽनात्मसमर्पणं कर्त-व्यमित्याह—

मू० इष्टं दत्तं तपो जप्तं वृत्तं यच्चात्मनः प्रियम् ।
दारान् सुतान् गृहान् प्राणान् यत्परस्मै निवेदयेत् ॥ २८ ॥

कुलस्याप्रयत्नानपत्ये स्वास्थ्यातिरिक्तत्रयाणां वा धर्माः वृत्तं सदाचारः आत्मनः प्रियं यत्तत् दारादीनां स्वतुल्यत्वाभि-प्रायेणाह, दारानिति । स्वभोगो वा अन्येषामेवेवात्मभावः देहस्य पूर्वमेव विनियुक्तत्वात्प्राणा उक्ताः ॥ २८ ॥

एवं विधानपूर्वकमात्मनिवेदनं कृत्वा तादृशैः सह भगवत्परि-चर्या कर्तव्येत्याह—

मू० एवं कृष्णात्मनाथेषु मनुष्येषु च सौहृदम् ।
परिचर्यां चोभयत्र महत्सु नृषु साधुषु ॥ २९ ॥

येषां कृष्णो मनाधारणः स्वामित्वाभिमानत्वे कृष्णात्मनाथाः मानुषभावः साधारणो भावः तेषु च सौहार्दं चकारात्पश्वा-दिषु च भगवदीयेषु सर्वत्र परिचर्यां च उभयत्र भगवति भगवदीयेषु च तदीयेषु विशेषमाह, महत्सु नृषु स्त्रीपशु-कनिष्ठा निवारिताः सम्पत्त्यावस्थार्थं तत्रापि सदाचारेषु सानु-भावपुरुषत्वे सति सदाचारित्वस्यार्थः । चकारात्स्वस्यापि दासत्वम् ॥ २९ ॥

फलरूपं साधनमाह—

मू० परस्परानुकथनं पावनं भगवद्यशः ।
मिथो रतिर्मिथस्तुष्टिर्निवृत्तिर्मिथ आत्मनः ॥ ३० ॥

भक्तानां परस्परं सम्वादो यत्र भगवदुक्तमर्थं परस्परमनुक-थन्ति यस्मिन् यशसि तच्छिन्नेदिति सम्बन्धः । श्रमाभावसाक्षि-निवारणाय पावनमित्युक्तं भगवद्यश इति भगवतोऽपि प्रीति-जनकं चरित्रं श्रवणकीर्तने एव, परस्परं क्रियमाणे मिथः प्रीतिः तथैव तुष्टिः आद्यन्तधर्मावेतौ पूर्वोक्तानुसन्धानेनैव परमा निर्वृतिः अन्तःकरणस्य फलरूपा अपि भक्ता भाग्याः तान् शिक्षेत् ॥ ३० ॥

सफलत्वाय सिद्धिरिति तेषामवान्तरफलमाह—

मू० स्मरन्तः स्मारयन्तश्च मिथोऽघौघहरं हरिम् ।
भक्त्या सञ्जातया भक्त्या बिभ्रत्युत्पुलकां तनुम् ॥ ३१ ॥

स्वयादिमतामपि अन्यचित्तगमनत्वात्स्मरणं न सम्भवति तत आह—स्मरन्त इति । अन्योऽन्यं दृष्ट्वा स्वत एव स्मरणं वचनेन स्मारणम् एकदेशबोधात् श्रवणं विस्मरणे निषेधानां किङ्करत्वात् पाप-सम्पत्तौ प्रायश्चित्तं कृत्वा स्मर्तव्यमित्यत आह, अघौघहरमिति । पापं दूरीकृत्य दुःखं दूरीकरोति विशेषत्वेन समागत एव स्मर-णात्पूर्वमेव पापसमूहान् दूरीकरोति अन्यथा स्मरणस्य तत्फलत्वं स्यात् । एवमाविर्भूतया श्रवणकीर्तना-दिसम्पत्तौ सर्वतः स्वरूपज्ञानमिव प्रेमभक्तिरुत्पद्यते तया व्यापिका भक्तिरुद्गच्छति यथा शरीरं पूर्यते ततः शरीरस्य गाढत्वा-दुत्पुलकत्वम् ॥ ३१ ॥

एवं शरीरे पूर्णस्य भक्तिरसस्य भगवत्प्राप्तिपर्यन्तं कृत्यमाह—

मू० क्वचिद्रुदन्त्यच्युतचिन्तया क्वचि—
द्धसन्ति नन्दन्ति वदन्त्यलौकिकाः ॥
नृत्यन्ति गायन्त्यनुशीलयन्त्यजम् ।
भवन्ति तूष्णीं परमेत्य निर्वृताः ॥ ३२ ॥

पूर्णे रसे मत्तावस्थायामिव भेदे विगलिते भगवदन्वेषणेन तमप्राप्यैव क्वचिद्रुदन्ति पुनरन्तर्निकटे स्फुरन्तमुपलभ्य तथैव रुदितमिति हसन्ति स्वाधीनतया स्फुरन्तं मत्वा नन्दन्ति ततः सांनिध्यमलौकिकं भक्तिभिरुद्रवन्ति एतावता प्रत्याहारात् पृथक् भवन्ति ततः कायवाङ्मनःस्वाभ्यासस्य फल-माह, नृत्यगीतानुशीलनानि दोषाभावात्रजामिति एवमभ्यासस्य सार्थकत्वमुक्त्वा निर्वृतिमाह—भवन्ति तूष्णीमिति । ततः परमरसं प्राप्य शान्तत्वात्परमसुखिन एव भवन्तीत्यर्थः ॥ ३२ ॥

एवं फलपर्यन्तं भगवद्धर्मानुक्त्वा तच्छिक्षया भगवत्परश्चेद् धर्मश्रमपरश्चेत् तदा सैव माया भर्तृत्वाते तं नयतीत्याह—

मू० इति भागवतान् धर्मान् शिक्षन् भक्त्या तदुत्थया ।
नारायणपरो मायामञ्जस्तरति दुस्तराम् ॥ ३३ ॥

शिक्षयैव भक्तिर्भवतीति तया नारायणपरत्वम्—

नारायणः परो यस्य परत्वं कीदृशं मतम् ।
आकाङ्क्षितास्तु चत्वारो विषयो शोक एव हि ।
प्रकारश्चैकमेपरो विषयः कीदृशः परः ॥
तत्कस्तुष्टिः सिद्धैव ततो निष्ठाभिधास्यते ॥ ३३ ॥
तद्धर्माणां च निष्ठात्मनः पृच्छति संशयात् ।

जनक उवाच

नारायणाभिधानस्य ब्रह्मणः परमात्मनः ।

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

मू० वेदोक्तमेव कुर्वाणो निःसङ्गोऽर्पितमीश्वरे ।
नैष्कर्म्यां लभते सिद्धिं रोचनार्था फलश्रुतिः ॥ ४६ ॥

वैदिको भूत्वा कर्मकरणे वैदिकमेव कुर्यात् यजनयाजनादिभिः संकर्षणकालेषु निस्सङ्गः उपक्रमविरोधाय मानसः अर्पितमेव करोतीति न साधनवैगुण्यं वेदाभिप्रेतार्थकरणात्सिद्धिं प्राप्नोति तथाप्यभिप्रेतानां कथमभावस्तत्राह—रोचनार्थं रुच्युत्पादनार्थं बहूनि फलानि वेदे बोधितानि नतु तत्र तात्पर्यं कर्तुः फलाभिसन्धानाभावेन भविष्यतीति भावः ॥ ४६ ॥

एवं वैदिककर्मयोगनिस्तारमुक्त्वा सुगमसर्वजनीमतां मिश्रकर्मनिस्तारमाह—

मू० य आशु हृदयग्रन्थिं निर्जिहीर्षुः परात्मनः ।
विधिनोपचरेद्देवं तन्त्रोक्तेन च केशवम् ॥ ४७ ॥

लौकिकत्वानर्थस्य लौकिकैरेव निवृत्तिर्युक्तेति साङ्ख्यादयः सिद्धान्ताः प्रवृत्ताः तत्रापि श्रीमद्हृदयग्रन्थिविभेदकः प्रकारो वैष्णवः परात्मनो विधिना न विभूत्यादिभजनप्रकारेण केवलपुष्टिमार्गीयोऽयमर्थः । तत्राशक्तौ तन्त्रोक्तप्रकारेणापि कृष्णमेव भजेत् अथवा समुच्चयो मर्यादया उभयथापि पुष्टिमार्गस्थितत्वात्केशवमेव भजेत् ॥ ४७ ॥

मार्गान्तरविरोधाभावं वदन् भजनप्रकारमाह—

मू० लब्धानुग्रह आचार्यात्तेन सन्दर्शितागमः ।
महापुरुषमभ्यर्चेन्मूर्त्याभिमतयात्मनः ॥ ४८ ॥

दीक्षायामन्याधिकारो निवर्तते अनुग्रहस्य प्राप्तत्वाच्च देवताविरोधः उपनयनादिकर्ता आचार्यः तदनुग्रहाच्च वेदविरोधः अन्येनाविरुद्धेनान्यस्य विकर्मत्वं स्वयं करणे हि सर्वत्र दोषः आचार्यभगवन्मार्गैक्या वा उद्देश्ये फले न कर्मणामुपयोगः कर्तृसंस्कारकत्वमन्यथापि भविष्यति आश्विलिवचनाच्च परलोकबाधकत्वम् अहङ्कारग्रन्थिनिवृत्तौ मुक्तिरिति सर्वमतसाधारणं फलम् आचार्येणागम एवं पञ्चरात्रादिः प्रदर्श्यते महापुरुषः श्रीकृष्णः अभिमतया मूर्त्या प्रकारसहस्रमध्ये नवनीतचौर्यादिरूपेषु स्वभावो नियामकः ॥ ४८ ॥

पूर्वोक्तदोषाभावाय कर्तृशुद्धिमाह—

मू० शुचिः सम्मुख आसीनः प्राणसंयमनादिभिः ।
पिण्डं विशोध्य सन्न्यासः कृतरक्षोऽर्चयेद्धरिम् ॥ ४९ ॥

शौचं स्मार्तं सम्मुखं आसीनः प्रतिमायाः आदिशब्देन भूतशुद्धिप्रकारा उक्ताः । न्यासेन देवतावाहनं रक्षायां बाधकनिवृत्तिः हरिं न प्रतिमाम् ॥ ४९ ॥

अत एवाधिकरणस्याऽव्यवस्थां वदन्मध्ये व्युत्थानाभावमाह—

मू० अर्चादौ हृदये चापि यथालब्धोपचारकैः ।
द्रव्यक्षित्यात्मलिङ्गानि निष्पाद्य प्रोक्ष्य चासनम् ॥ ५० ॥

स्पष्टम् ॥ ५० ॥

अन्तरङ्गप्रकारमाह—

मू० पाद्यादीन्युपकल्प्याथ सन्निधाप्य समाहितः ।
हृदयादिकृतन्यासो मूलमन्त्रेण चार्चयेत् ॥ ५१ ॥
पाद्यार्घ्याचमनीयाद्यैः स्नानवासोविभूषणैः ।
साङ्गोपाङ्गां सपार्षदां तां तां मूर्तिं स्वमन्त्रतः ॥ ५२ ॥

आदिशब्देनाचमनीयादि अथ भिन्नक्रमेण विधानेन प्रवृत्तः सन्निधापनादिमुद्रया देवतासन्निधानं कृत्वा ततः सावधानः ततो हृदयादिकृतन्यासः स्वस्मिन् ध्यातेन मूलमन्त्रेण चार्चयेत् अङ्गानि चरणादीनि उपाङ्गानि चक्रादीनि पार्षदाः सुनन्दादयः एवं साङ्गोपाङ्गां सपार्षदां हृदये पूजयेदिति पूर्वेण सम्बन्धः तामित्यनुवाद्य पूर्वोत्तरयोरैक्यमर्थमाह, साङ्गोपाङ्गां सपार्षदां तां मूर्तिं स्वमन्त्रतः तां पूर्वोक्तप्रकारेण हृदयपूजितां मूर्तिरूपां बाह्यां कृत्वा । नमेदिति सम्बन्धः कथमेवमत आह—स्वमन्त्रतः आन्तरस्य बाह्यत्वं मन्त्रवशाद्भवति मन्त्रतस्तां मूर्तिमित्युद्देश्यविधेयभावः ॥ ५१ ॥ ५२ ॥

पूजाक्रममाह—सार्धेन—

मू० गन्धमाल्याक्षतस्रग्भिर्धूपदीपोपहारकैः ।
साङ्गं सम्पूज्य विधिवत्स्तवैः स्तुत्वा नमेद्धरिम् ॥ ५३ ॥

आदिशब्देन मधुपर्काङ्गवस्त्राद्यैः अक्षताः माला: कुङ्कुमाक्षता वा नमनं क्रियासमाप्तिसूचकं स्तोत्रनमनेन पूजायां प्रविशत इति कथाप्रयोगः अयं भिन्नामिति वा अनेनाभिप्रायेण तस्य पूजा न कर्तव्येति ॥ ५३ ॥

कर्तृनियममाह—

मू० आत्मानं तन्मयं ध्यायन् मूर्तिं सम्पूजयेद्धरेः ।
शेषमाधाय शिरसि स्वधाम्न्युद्वास्य सत्कृतम् ॥ ५४ ॥

स्वस्वरूपं भगवद्रूपं भावयन् भगवता व्याप्तं वा मूर्ती भगवदुपगमोऽस्ति नतु स्वस्मिन्निति ज्ञापयितुं निर्माल्यं शिरस्याधाय हृदये उद्वास्य तत्र पुनः सत्कृतमात्मानं तन्मयं ध्यायेदिति सम्बन्धः । आत्मनि सर्वदा भगवत्सम्बन्धा- निमतत्वम् ॥ ५४ ॥

एवं स्थलान्तरेऽपि पूजां वदन् फलमाह—

मू० एवमग्न्यर्कतोयादावतिथौ हृदये च यः ।
यजतीश्वरमात्मानमचिरान्मुच्यते हि सः ॥ ५५ ॥

आदिशब्देन ब्राह्मणादिः हृदये चेति त्रिरूपता भगवतो त्रिरूपत्वं प्रतिपादयति सामर्थ्यमावश्यकत्वं च । यजतिरत्यन्तपर्वतं सन्ततिरूपा हीति प्रमाणानुसन्धानं सर्वत्रविष्णवाद्यादि । अन्ते स्वरूपस्थित्यर्थं स इति ॥ ५५ ॥

इति श्रीभागवतसुबोधिन्यां श्रीमद्वल्लभदीक्षितविरचितायाम्
एकादशस्कन्धविवरणे तृतीयाध्यायविवरणम् ॥ ३ ॥

## चतुर्थोऽध्यायः ।

॥ राजोवाच ॥

यानि यानीह कर्माणि यैर्यैः स्वच्छन्दजन्मभिः ।
चक्रे करोति कर्ता वा हरिस्तानि ब्रुवन्तु नः ॥ १ ॥

॥ द्रुमिल उवाच ॥

यो वा अनन्तस्य गुणाननन्ताननुक्रमिष्यन् स तु बालबुद्धिः ।
रजांसि भूमेर्गणयेत्कथञ्चित्कालेन नैवाखिलशक्तिधाम्नः ॥ २ ॥

भूतैर्यदा पञ्चभिरात्मसृष्टैः पुरं विराजं विरचय्य तस्मिन् ।
स्वांशेन विष्टः पुरुषाभिधानमवाप नारायण आदिदेवः ॥ ३ ॥

यत्काय एष भुवनत्रयसन्निवेशो यस्येन्द्रियैस्तनुभृतामुभयेन्द्रियाणि ।
ज्ञानं स्वतः श्वसनतो बलमोज ईहा सत्त्वादिभिः स्थितिलयोद्भव आदिकर्ता ॥ ४ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

चतुर्थे त्ववतारेहाप्रश्नस्योत्तरमुक्तवान् ।
अयन्तीनन्दनो नाम्ना द्रुमिलो नवसत्तमः ।

मूर्त्याभिमतयाऽऽत्मन इत्यनेनाऽऽत्मनः प्रियमवतारं पूजयेदित्युक्तेऽवतारज्ञानमपेक्षितं तथा स्तवैः स्तुत्वा नमेद्धरिमित्युक्ते गुणकर्मज्ञानं चापेक्षितमतः पृच्छति—यानि यानीति । कर्ता करिष्यति ॥ १ ॥

त्वया पृष्टानि कालत्रयसम्बन्धिसकलावतारगुणकर्माणि कथयितुमशक्यानि संक्षेपतस्तु कानिचित्कथयिष्यामीत्याह-यो वा इत्यादिना । अनुक्रमिष्यन् गणयितुमिच्छति यः स तु बालानामिव बुद्धिर्यस्य स मन्दमतिः बालेन बाला वा अदीर्घदर्शिनी बुद्धिर्यस्य क्षुद्रबुद्धिः कालेन महता कोऽपि महामतिः रजांसि गणयेदप्यखिलशक्तिधाम्नः सर्वशक्त्याश्रयस्य भगवतो गुणांस्तु नैव गणयेत् तथा च श्रुतिः "विष्णोर्नुकं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजांसि" इत्यादि ॥ २ ॥

तत्राऽऽद्यं पुरुषावतारमाह-भूतैरिति । यदा स्वसृष्टैर्भूतैर्विराजं ब्रह्माण्डं पुरं निर्माय तस्मिन् लीलया प्रविष्टो न तु भोक्तृत्वेन प्रभूतपुण्यस्य जीवस्य तत्र भोक्तृत्वात् ॥ ३ ॥

अस्य गुणकर्माण्याह द्वयेन—यत्काय इति । यस्याधिष्ठेयः काय एषः काये इति सप्तमी वा तनुभृतां समष्टिव्यष्टिजीवानां ज्ञानकर्मेन्द्रियाणि यस्य स्वतः स्वरूपभूतात्सत्त्वात्तनुभृतां ज्ञानम् यस्य स्वतः सिद्धं ज्ञानमिति वा यस्य श्वसनतः प्राणाद्बलं देहशक्तिः ओज इन्द्रियशक्तिः ईहा क्रिया यस्य सत्त्वादिभि-र्विश्वस्य स्थितिलयोद्भवे आदिकर्ता ॥ ४ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

अवतारेहाप्रश्नस्य । अवतारलीलाप्रश्नस्य नवसु मध्ये सप्तमः अतः अवतारगुणकर्मज्ञानानां पूजनेऽपेक्षितत्वात् तानि त्रिकाल-सम्बन्धीनि जन्मकर्माणीति ॥ १ ॥

द्रुमिल इति द्रुद्रुतमवतारैः स्फूर्तिः यस्य सह मिलतीति निरुक्तपुरस्कारेण तस्यैव सर्वावतारगुणकर्मादियाथार्थ्यविज्ञानात् स एवोवाचेति । कोऽपि महामतिरिति कतुरात्वे-पाल्लाभः गणयेदपीति तद्गणनं सम्भवतीत्यर्थः तथाच विष्णो-र्गुणानामगण्यत्वे प्रमाणं श्रुतिः यः कविः पार्थिवान्यपि रजांसि विममे गणितवान् सोऽपि विष्णोर्वीर्याणि कं कः प्रावोचं प्रावोचदित्यर्थः ॥ २ ॥

तत्र तेष्ववतारेषु मध्ये तस्मिन् ब्रह्माण्डे स्वांशेन अन्तर्यामि-रूपेण लीलया नियमनरूपया प्रविष्टः न तु भोक्तृत्वेन अनश्नन्नन्योऽभिचाकशीति इति श्रुतिविरोधात् "स्वधर्मनिष्ठः शतजन्मभिः पुमान् विरिञ्चतामेति" इत्युक्तेः प्रभूतं प्रचुरं पुण्यं यस्य तस्य हिरण्यगर्भाख्यसमष्ट्यभिमानिनो जीवस्य तत्र ब्रह्माण्डे भोक्तृत्वात् भोक्तृत्वाधिकारात् यदा स्वांशेन विष्टस्तदा पुरुषाभिधानं पुरुषसञ्ज्ञामवापेति यत्तदोः सम्बन्धः ॥ ३ ॥

अस्य पुरुषावतारस्य गर्भोदशायिनः यस्य ब्रह्माण्डमाविष्टस्य "द्वितीयं त्वण्डसंस्थितम्" मित्युक्तेः अधिष्ठेयो नियम्यः सप्तमीपक्षे तु नवीनोपासकानां चित्तस्थैर्यार्थं यस्य काये एव भुवन-

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

भुवनसन्निवेशः "पातालमेतस्य हि पादमूल"मित्यादिशास्त्रेण कल्पितः यद्वा काय इति सप्तमी तृतीयार्थे यस्य कायेनैव भुवनत्रयसन्निवेशो भवति "भूर्लोकः कल्पितः पद्भ्यां भुवर्लोकोऽस्य नाभितः" इत्यादेः ज्ञानकर्मेन्द्रियाणि यस्येन्द्रियैर्बभूवुः "वाचां वह्निर्मुखं क्षेत्र"मित्यादेः स्वत इत्यस्य व्याख्या स्वरूपभूतसत्त्वादिति । यस्य स्वरूपभूतविशुद्धसत्त्वादेव तनुभृतां ज्ञानं भवति, पूर्वार्धे विशेषस्य सत्त्वस्य व्याहार उत्तरार्धे तु यस्य स्वतः सिद्धं ज्ञानमिति सर्वेशत्वमुक्तम् ॥ ४ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

॥ १—३ ॥

उभयेन्द्रियाणि यस्येन्द्रियैः इन्द्रियशब्दो गौणः इन्द्रियवत्परिकरभूतं शेषभूतमित्यर्थः । बलं धारणसामर्थ्यम् ओजः प्रवृत्तिसामर्थ्यम् ईहा चेष्टा ॥ ४—६ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

मूर्त्याभिमतयात्मन इत्यनेनात्मनः प्रियतमावतारं सम्पूजयेदिति सूक्तेऽवतारज्ञानमपेक्षितं तथा स्तवैः स्तुत्वा नमेद्धरिम् इत्युक्ते गुणकर्मज्ञानं चापेक्षितं तत्र पृच्छति "यानि यानीति" यैर्यैः स्वच्छन्दजन्मभिः स्वेच्छावतारैरिह लोके कर्माणि करिष्यति स्वच्छन्देत्यनेनावताराणामकर्ममूलत्वमुक्तं तानि कालत्रयगोचरावतारसम्बन्धीनि चेष्टितानि नोऽस्मभ्यं भवन्तो ब्रुवन्तु विस्तराद्वर्णयन्तु ॥ १ ॥

यानि यानि ब्रवाणीति प्रश्नस्य साकल्यविषयतामालक्ष्यानन्त्यात्ताानि साकल्येन कथयितुं शक्यानि संक्षेपतः कानिचित्कथयिष्यामीत्याह-द्रुमिल । य इति । अनन्तस्यापरिच्छिन्नस्वरूपस्वभावस्य भगवतो गुणान्योऽनुक्रमिष्यन् गणयितुमिच्छति स तु बालानामिव बुद्धिर्यस्य सः मन्दमतिरित्यर्थः तत्र हेतुत्वेन गणयितुमशक्यत्वं विशिनष्टि—अनन्तानीति । एतदेवोपपादयति । रजांसीति । कालेन महता कथञ्चित्केन चित्पुंसा भूमेः रजांसि रेणून् गण्येरन् संभावनायां लिङ् अखिलशक्तिधाम्नः विविधविचित्रशक्त्याश्रयस्य भगवतो गुणांस्तु नैव गणयेत्सामर्थ्याभाव इति भावः अत्र "विष्णोर्नु कं वीर्याणि प्रावोचं यः पार्थिवानि विममे रजांसि" इति श्रुत्यर्थोऽभिसंहितः ॥ २ ॥

तावद्ब्रह्माण्डशरीरकवैराजपुरुषावतारमाह-भूतैरिति । आत्मना स्वेन सृष्टैर्भूतैः पृथिव्यादिभिः भूतपञ्चकं चतुर्विंशतितत्त्वानामुपलक्षणं यदा विराजं ब्रह्माण्डरूपं पुरं विरचय्य तस्मिन्पुरे स्वांशेन विष्टः धारकतयानुप्रविष्टः तदा आदिदेवो नारायणः पुरुषाभिधानं पुरुषाख्यामवाप अयं वैराजः पुरुषः स्वावताराणामाद्योऽवतार इत्यर्थः ॥ ३ ॥

अस्य गुणकर्माण्याह द्वाभ्याम् । यदिति । यस्य वैराजपुरुषस्य कायः ब्रह्माण्डात्मको देहः भुवनत्रयस्य सन्निवेशो यस्मिंस्तथाभूतः यस्येन्द्रियैः कारणभूतैस्तनुभृतां व्यष्टिसमष्टिजीवानामुभयेन्द्रियाणि ज्ञानकर्मोभयेन्द्रियाणि बभूवुः इन्द्रियसम्बन्धोक्त्या तत्ज्ञानस्येन्द्रियसापेक्षत्वशङ्कां निरस्यति । ज्ञानं स्वत इति । अत्र यस्येत्यनुषज्यते श्वसनतः श्वासात् श्वासस्थानीयाद्वायोस्तनुभृतां बलं धारणसामर्थ्यमोजः प्रवृत्तिसामर्थ्यम् । ईहा चेष्टा च भवति स एव सत्त्वादिभिः सत्त्वरजस्तमोभिः प्राकृतगुणैः स्वपर्यैः स्थितिलयोद्भवे समाहारद्वन्द्वात्सप्तमी विश्वस्थित्यादिनिमित्त इत्यर्थः । आदिकर्त्ता आदिश्चासौ कर्त्ता च उपादानं निमित्तकारणं चेत्यर्थः ॥ ४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

स्वच्छन्दजन्मभिः स्वेच्छावतारैः कर्माणि करिष्यति ॥ १ ॥

द्रुमिलः भगवद्गुणकर्मणामनन्तत्वात्प्रश्नो दुष्परिहर इति भावेनाह—यो वा इति ॥ २ ॥

तत्रैवमेकोक्ते प्रश्नप्रतिवचने गुरुशिष्यभावो च न स्त इति दोषपरिहाराय यथाशक्ति प्रवक्ष्यामीत्यभिसन्धायाह-भूतैरिति । भूतैरित्युपलक्षणं महदहङ्कारौ पञ्च भूतानि च यदा ससर्ज तदा पुरुषाभिधानमवाप यदा च महदादिचतुर्विंशतितत्त्वैः विराजं ब्रह्माण्डाख्यं पुरं विरचय्य स्वांशेन तस्मिन् प्रविष्टः तदा पुरुषाभिधानमवाप यद्वा, आत्मसृष्टैः पृथिव्यादिपञ्चभूतैः ब्रह्माण्डान्तःपुरं जातावेकवचनं पुराणि शरीराणि विरचय्य स्वांशेन पुरुषरूपेण तस्मिन् विष्टः तदा पुरुषाभिधानमवाप—

> "विष्णोस्तु पुरुषाख्यानि त्रीणि रूपाण्यथो विदुः—
>
> प्रथमं महतः स्रष्टृ द्वितीयं त्वण्डसंस्थितम् ।
>
> तृतीयं देहिनां देहे तानि ज्ञात्वा विमुच्यते" ॥

इति पुरुषरूपविष्णुज्ञानस्य मुक्तिहेतुत्वोक्तेः साक्षात्साक्षिदानन्दानि पुरुषरूपाणि विष्णोरभिधानीति ज्ञातव्यं नरः पुरुषः तेन सृष्टं नारं तस्याश्रयो नारायणः नरसृष्टत्वान्नारं ब्रह्माण्डं तदाश्रयोऽपि नरस्य विद्यमानं नारं शरीरं तदाश्रयोऽपि संसरिष्णुरित्यर्थम् आदिदेव इति ॥ ३ ॥

एतदेव विशिनष्टि—यत्काय इति । भुवनत्रयसन्निवेशो यस्य काये शरीरे भगवच्छरीराधारत्वेन सतत इत्यर्थः । तनुभृतामुभयेन्द्रियाणि ज्ञानकर्मोत्पादकानीन्द्रियाणि यस्य इन्द्रियैः प्रेरितानि प्रवर्तन्ते अनेन शरीरान्तस्थत्वमुक्तं कथं प्रेरकत्वमित्यत उक्तं ज्ञानांशकेनेति ज्ञानस्वरूपेणान्तःशरीरं विशतः न केवलं श्रवणादीनि शब्दादिन्द्रियप्रेरितानि अपि तु बलादीन्यपीत्याह-बलमिति । सत्त्वादिभिर्गुणैः स्थितिश्च लयश्च उद्भवश्च यस्मात्स तथा मत आदिकर्तेत्युच्यते ॥ ४ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

पूर्वं श्रृण्वन् सुभद्राणि रथाङ्गपाणेरित्युक्तं तदनुसारेण मूर्त्याभिमतयात्मन इति स्तवैः स्तुत्वेति च ज्ञातुं शक्यते तदेतदर्थमाह—यानि यानीति ॥ १—२ ॥

तत्र सामान्यतः पुरुषावतारमाह—भूतैरिति । आदिदेवो नारायणः श्रीभगवान् "नारायणो दुरीयाख्ये भगवच्छब्दशब्दित" इत्यादेः

आदावभूच्छतधृती रजसाऽस्य सर्गे विष्णुः स्थितौ क्रतुपतिर्द्विजधर्मसेतुः।
रुद्रोऽप्ययाय तमसा पुरुषः स आद्य इत्युद्भवस्थितिलयाः सततं प्रजासु ॥ ५ ॥
धर्मस्य दक्षदुहितर्यजनिष्ट मूर्त्यां नारायणो नरऋषिप्रवरः प्रशान्तः।
नैष्कर्म्यलक्षणमुवाच चचार कर्म योऽद्यापि चास्त ऋषिवर्यनिषेविताङ्घ्रिः ॥ ६ ॥
*इन्द्रो विशङ्क्य मम धाम जिघृक्षतीति कामं न्ययुङ्क्त सगणं स बदर्युपाख्यम्।
गत्वाऽप्सरोगणवसन्तसुमन्दवातैः स्त्रीप्रेक्षणेषुभिरविध्यदतन्महिज्ञः ॥ ७ ॥
विज्ञाय शक्रकृतमक्रममादिदेवः प्राह प्रहस्य गतविस्मय एजमानान्।
मा भैर्विभो ! मदनमारुतदेववध्वो ! गृह्णीत नो बलिमशून्यमिमं कुरुध्वम् ॥ ८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

कथान्यतः संक्षेपतः कानिचित्कथयिष्यामीत्याह—य इति। अनन्तस्य गुणानामनवच्छिन्नस्य अनन्तानसङ्ख्येयान् योऽनुक्रमिष्यन् गणयितुमिच्छति स वै निश्चयेन बालबुद्धिः बाला परतत्त्वविचारहीना बुद्धिर्यस्य स तथा कालेन भूमिरजोगणयितुं पर्याप्तेन कश्चित्कथञ्चिद्भूमेः रजांसि गणयेदपि अखिलशक्तिधाम्नः सर्वचेतनाचेतनशक्त्याश्रयस्य गुणांस्तु नैव गणयेत् तथा च श्रुतिः "विष्णोर्नुकं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजांसि" इत्यादिः ॥ २ ॥

तत्र पुरुषावतारं तद्गुणकर्माणि चाह—भूतैरिति त्रिभिः। स्वांशेन कालाख्येन आत्मसृष्टैः भूतैः तदुपलक्षितैर्महदादिभिः विराजं पुरं सावरणं भुवनत्रयात्मकं शरीरं विरच्य निर्माय तस्मिन् यदा आदिदेवः विष्टः प्रविष्टस्तदा नारायणः स्वसृष्टजलायनः सन् पुरुषाभिधानमवापेत्यन्वयः ॥ ३ ॥

यस्य पुरुषस्य काये विराजि एष भुवनत्रयस्य सन्निवेशः यस्येन्द्रियैः तनुभृतां व्यष्टिसमष्टिजीवानां ज्ञानकर्मेन्द्रियाणि यस्य ज्ञानं तदुपलक्षितं कर्म स्वतः इन्द्रियनिरपेक्षम् "अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः" इति श्रुतेः यस्य श्वसनतः प्राणात् बलं देहशक्तिः ओजः इन्द्रियशक्तिरीहान्तःकरणशक्तिः सत्त्वादिभिः स्वशक्तिगुणैः तदुपलक्षितैर्नियोज्यकर्तृभिः स्थितिश्च लयश्च उद्भवश्च यस्मात्स तथा अत एव आदिकर्त्ता नियोजककर्त्तेत्युच्यते ॥ ४ ॥

भाषा टीका।

राजोवाच।

श्रीभगवान् अपने स्वतंत्र जिन जिन जन्मों से जिन जिन चरित्रों को किये अथवा करते हैं अथवा करेंगे तिन चरित्रों को हम लोगों के आगे कहिये ॥ १ ॥

द्रुमिल उवाच।

जो पुरुष अनन्तभगवान् के अनन्त गुणों को कहने को या गिनने को विचारै सो बालक बुद्धिवाला है क्योंकि कोई चतुर होवे तो पृथिवी के रेणुको भलेही किसी प्रकार से गिनलेवे परंतु सोइ चतुर पुरुष बड़े कालतक भी सर्वशक्ति वाले बड़े तेज वाले भगवान् के गुणों को नहीं गिन सकैगा ॥ २ ॥

जिससमय में भगवान् ने अपने बनाये हुये पञ्चभूतों से पुर देह को बनाया तबही अपने अंशके सहित उसमे प्रवेशकिया तब आदिदेव नारायण की पुरुष संज्ञा भई ॥ ३ ॥

जिन के शरीर में यह तीनों भुवन की रचना है जिन के इंद्रियो से सब देह धारिओ के दोनो प्रकार के इंद्रिय भये हैं जिनके स्वरूप से सब का ज्ञान भया और बल से बल चेष्टासे चेष्टा भई उन के सत्त्वादि गुणों से जगत् की उत्पत्ति पालन नाश होता है वेही आदिकर्ता हैं ॥ ४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

आदिकर्त्तेत्यनेन तत्पूर्वकं कर्मान्तरमपि सूचितं तद्वर्णयितुं गुणावतारद्वारा चराचरसृष्ट्यादिकर्तृत्वमाह—आदाविति। यद्येवमनुपन्नः यस्य रजसाऽस्य जगतः सर्गे कार्ये शतधृतिः ब्रह्मा भूत्स्थितौ च विष्णुर्यस्य सत्त्वेनेति शेषः। क्रतुपतिस्तत्फलदाता द्विजातीनां तद्धर्माणां च सेतुः पालक इत्यर्थः। यस्य तमसा ऽप्ययायाप्ययाय रुद्रोऽभूत् इत्येतैर्ब्रह्मादिभिर्निमित्तभूतैः प्रजासूद्भवादयो यतो भवन्ति स आद्यः पुरुष इत्यन्वयः ॥ ५ ॥

नरनारायणावतारमाह—धर्मस्येति। धर्मस्य भार्यायां दक्षदुहितरि मूर्तिसंज्ञायां नारायणो नर इति मूर्तिद्वयेनाजनिष्ट जातः तच्चरितमाह, नैष्कर्म्यमात्मस्वरूपं लक्ष्यते येन तत्कर्म कर्मनिर्हाररूपं वा उवाच। नारदादिभ्यः स्वयं चचार च योऽद्यापि कर्माचरन्नास्ते ऋषिवर्यनिषेविताङ्घ्री यस्य सः ॥ ६ ॥

भगवदवतारत्वद्योतकं परमोपशमं वर्णयितुमितिहासमाह—इन्द्र इति द्वाभ्याम्। धाम स्थानं तपसा ग्रहीतुमिच्छतीति विशङ्क्य तपोनाशाय कामं सपरिवारं प्रेषयामास स कामो बदरीमिरुपाख्यायते यत्र तत्र गत्वा अप्सरोगणादिभिः सह गत्वा स्त्रीणां प्रेक्षणान्येव इषवो बाणास्तैः न तस्य महि महिमानं जानातीत्यतन्महिज्ञः ॥ ७ ॥

अक्रममपराधमम् अहो अहं धीर इतिविस्मयो गर्वस्तद्रहितः

---

* इन्द्रोऽपि नाकमहत्तमेकय इति भिज०।

श्रीधरस्वामिकृतभावार्थदीपिका ।

यजमानान् शापभिया कम्पमानान् भो विभो ! समर्थ हे देवदेव ! मा भैष्ट बलिमादत्थेत्थं तान्प्रार्थयते आतिथ्याभावे शून्यप्रायः स्यादित्यर्थः ॥ ८ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

तत्पूर्वकं स पुरुष एव पूर्वं यस्य कर्त्रन्तरस्य तत्तया तद्दर्शयितुं ब्रह्मादिरूपकर्तृत्वं ज्ञापयितुं यत्पत्यनुषङ्गः । यद्येन्द्रियैरिन्द्रियान्वितस्य बद्धस्य पुनः प्रबन्धः इति एवम् ॥ ५ ॥

नैष्कर्म्यं निर्गतं कर्मकर्तृ आत्मस्वरूपं निष्कर्मैव नैष्कर्म्यं स्वार्थे ष्यञ् तल्लक्ष्यते ज्ञायतेऽनेन तत्कर्म भगवदाराधनलक्षणमुवाच नारदादिभ्य इति शेषः । "तन्त्रं सात्वतमाचष्ट नैष्कर्म्यं कर्मणां यतः" इति प्रथमोक्तेः कर्म भगवद्ध्यानलक्षणं तपः ॥ ६ ॥

परमोपशमं सर्वोत्कृष्टान्तरिन्द्रियनिग्रहं किं वा "शमो मन्निष्ठता बुद्धे"रिति भगवदुक्तः लोकसंग्रहार्थं बुद्धेर्भगवन्निष्ठाम् ॥ ७ ॥

प्रहस्येति । अहो अस्माकमामाहात्म्यं यदमी मामपि मोहयितुं प्रवृत्ता इत्युपहस्य भयाति प्रभवतीति भुक्त्वस्तत्संबोधनं हे भो विभो ! समर्थ इति यावत् तान्मदनादीन् पूर्वमेव नारदादिभिर्विदितस्य स्वस्य तत्र सत्त्वात् स आश्रमः अशून्य एव अशून्यकर्माशून्यकरणं न सङ्गच्छत इति आतिथ्याभावेनैव तत्र शून्यत्वमुत्प्रेक्षणीयमिति शून्यप्रायः स्यादिति व्याख्यातमत इत्यर्थ इत्युक्तम् ॥ ८ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

स कामः अतन्माहिम्नः तन्महिमानभिज्ञः ॥ ७—८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

आदिकर्तृत्वमेव प्रपञ्चयति—आद्याविति । अस्य जगतः सर्गनिमित्ते आदौ व्यष्टिसृष्टेः पूर्वं रजसा उपलक्षितः शतधृतिरभूत् रजोगुणप्रचुरब्रह्माख्यजीवानुप्रवेशेन तच्छरीरकतया तद्रूपः प्रसूत इत्यर्थः । "सृष्टिं ततः करिष्यामि त्वामाविश्य प्रजापते" इति वचनं रुद्रोऽप्ययाय तमसेत्यत्राप्ययमेवार्थः अप्ययः संहारः स्थितौ निमित्तभूतायां विष्णुरित्यत्र सत्त्वेनेत्यादिः विष्णुः स्थित्यर्थं शुद्धसत्त्वोपलक्षितस्वावतारात्मकविष्णुरूपोऽभूदित्यर्थः । ब्रह्मरुद्रयोरिव विष्णोरप्यावेशावतारत्वशङ्काव्युदासाय देवतान्तराणां तच्छरीरत्वज्ञापनाय च विशिनष्टि—क्रतुपतिरिति । यज्ञनिर्वाहक इत्यर्थः । अत्र "इदं पूर्वं बहुधा जातं जायमानं विश्वं बिभर्ति भुवनस्य नाभिः तदेवाग्निस्तद्वायुस्तत्सूर्यस्तदु चन्द्रमाः स आत्मा अङ्गान्यन्या देवता" इत्यादिश्रुत्यर्थोऽभिप्रेतः स्थितिस्वरूपं वर्णयन्विशिनष्टि—द्विजधर्मसेतुरिति । द्विजास्त्रैवर्णिकास्तेषां धर्माणां च सेतुरिव सेतुर्हि तीरान्तरप्रापकस्तद्वद्धर्मानुगुणधर्मफलप्रापक इत्यर्थः । अनिष्टपरिहारेष्टप्रापणरूपेण स्थिताविति भावः

इतीत्थं यथा ब्रह्मादिरूपेण विश्वसृष्ट्यादिकर्ता तथेत्यर्थः । स आद्यः पुरुषः उपादानकारणभूतपुरुष इत्यर्थः । तदेवोपपादयति—उद्भवेति । अस्य तत इत्यादिः प्रजास्तुद्भवादयस्तत उपादानकारणभूताद्भवन्ति ॥ ५ ॥

अथ नरनारायणावतारं तद्गुणकर्माणि चाह—धर्मस्य दक्षदुहितरीति । धर्मस्य भार्यायां दक्षदुहितरि मूर्तिसंज्ञायां नारायणो नर इति मूर्तिद्वयेनाजनिष्टावतीर्णः नैष्कर्म्यलक्षणं बन्धकसकलकर्मनिवृत्तिहेतुभूतात्मकं योगं ज्ञानयोगमुवाच नारदादिभ्य उपदिदेशेत्यर्थः । स च क वर्तत इत्यत्राह, योऽद्यापीति । यो नरनारायणरूपो भगवानद्यापि ऋषिवर्यैर्नारदादिभिः निषेवितावङ्घ्री यस्य स आस्ते बदर्याश्रम इति शेषः ॥ ६ ॥

नैष्कर्म्ययोगनिष्ठैरेव वर्णितव्यम् इति प्रदर्शयितुं परमोपशमार्थं तच्चेष्टितात्मकमितिहासमाह—इन्द्र इति । मम धाम स्थानं तपसा ग्रहीतुमिच्छतीति विशङ्क्य तपोनाशाय सगणं सपरिवारं कामं मन्मथं च प्रेषयामास । स कामः बदर्युपाख्यं बदरीति यः प्रसिद्धः तं तदाश्रमे अप्सरोगणादिभिः सह गत्वाऽतन्महिम्नः तन्महिमानभिज्ञः स्त्रीणां प्रेक्षणान्येवेषवो बाणास्तैरविध्यत ॥ ७ ॥

आदिदेवो नारायणः शक्रकृतमक्रमपराधं विज्ञाय गतविस्मयः अहं धीर इति विस्मयो गर्वस्तद्रहितः प्रहस्य एजमानान्कम्पायमानान् शापभियेति भावः । प्राह तदेवाह, मा भैष्टेति । हे मदन ! हे मारुत ! हे देववध्वः ! यूयं मा भैष्ट बलिमातिथ्यं गृह्णीतेति प्रार्थयते इममस्माकमाश्रममशून्यं कुरुध्वमातिथ्याभावे शून्यप्रायः स्यादिति भावः ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

एतदेव विवृणोति—आद्याविति अस्य जगतः सर्गे तादर्थ्ये सप्तमी सृष्ट्यर्थं रजसा गुणेन तं ब्रह्माणं सृष्ट्वा तदन्तर्यामित्वेन नाम्ना शतधृतिः शतानन्दो ब्रह्माऽभूत् अस्य स्थितौ नाम्ना विष्णुरभूत् स्थित्यै हेतुत्वं वक्ति, क्रतुपतिरिति । क्रतवो द्विजधर्माश्च निमित्तान्येतैर्जगत्स्थापयतीत्यर्थः सत्त्वेनेति ग्राह्यं तमसा गुणेनाप्ययाय तं रुद्रं सृष्ट्वा तदन्तर्यामित्वेन नाम्ना रुद्रोऽभूदतः स आद्यः पुरुषाकारेण एतत्साधननाम्ना पुरुषोऽभूदिति भावः । उपसंहरति—इतीति । सततमिति वीप्सोपलक्षणं कालं कालं प्रजासु उद्भवस्थितिलया इति एवं प्रकारेण हरेर्भवन्ते नान्यस्मादिति निश्चितं तदुक्तं "ब्रह्मणा रूपोऽसृजद्विष्णुः स्थित्वा रुद्रे त्वसंहरत् । पृथक् स्थित्वा जगत्पाता तद्ब्रह्माद्याह्वयो हरिः" इति अत एव कल्पना क्लिष्टेति मन्तव्यम् ॥ ५ ॥

हरी रूपान्तरैरपि त्रिजगत्स्थितिं करोतीत्याशयेन माहात्म्यप्रकटनपूर्वकं तान्याह—धर्मस्येत्यादिना । धर्मस्य सकाशात् "तप आलोचने" इति धातोः आलोचनं निश्चयज्ञानं स्वमात्मानं तपति जानातीति स्वतपाः स्वरूपभूतः प्रभावो यस्य सः स्वप्रभावः स्वविषयज्ञानरूपप्रभावो स्वरूपभूतप्रभावरूपश्चेत्यर्थः स्वशब्दः पदद्वयेन सम्बध्यते अवतारप्रयोजनमाह—नैष्कर्म्येति । नैष्कर्म्यलक्षणं योगं मुक्तिसाधनं ज्ञानमवदत्स्वयं च अनतिसाधं योग-

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

भयेदित्यर्थः । तथा च क्रोधवन्महत्त्वज्ञानमपि भवेत् नारायणाश्रक-वयडभयात्कम्पः उभयनिवृत्त्यर्थमेजमानान् प्रत्याह भये हि स्वामि-स्वभावोऽपगतः ततस्तुल्यतया भोमदनमारुतदेववध्व ! इति सम्बोधनं माभैष्टेति इन्द्रादपि भयाभावः सूचितः स्वामिदण्ड-भयश्च कार्यार्थमागता अतिथयो भवन्ति चोरा घातुकाश्च निवृत्ति-मार्गे ह्यतिथयो भवन्तीति पूर्वेणान्वयः 'एतावज्जन्मसाफल्य' मित्यत्र निर्णीतं प्रमाणं न मनोरथः सिद्ध्यति तथाप्याश्रमस्यैरातिथ्यं कर्तव्यमित्याह। गृह्णीत नो बलिमस्मत्सम्बन्धिनीं पूजां ततः किमत आह । कुरुध्वमिति । मनोरथसिद्ध्यभावेऽपि परोपकारः सेवत्स्यती-त्यर्थः । जिवृक्षतां महती रीतिरेषा "गृहेषु येऽप्यतिथय" इति न्या-यात् ॥ ८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

गुणावतारानाह—आदाविति । रजसा रजोगुणेन सर्गे सृष्टौ कर्मणि शतधृतिर्ब्रह्मा अभूत् स्थितौ पालने कर्मणि विष्णुः द्विजानां तद्धर्माणां च सेतुः पालक इत्यर्थः । अप्ययाय संहारार्थम् ॥ ५ ॥

इत्येवं प्रकारेण नारायणो नर इति ऋषिप्रवरः समजानिष्ट नैष्कर्म्यलक्षणं कर्म उवाच चचार च ॥ ६ ॥

वद्ध्युपाख्यम् अप्सरोगणादिभिः सह बदरिकाश्रमं गत्वा स्त्रीप्रेक्षणान्येव इषवो बाणास्तैरविध्यत् न तस्य महिमानं जानातीत्यतन्महिज्ञः ॥ ७ ॥

अक्रममपराधं गतविस्मयः अहो अहं धीर इति विशिष्ट-स्मयो गर्वस्तद्रहित इत्यर्थः । एजमानान् शापभिया कम्पमानान् भो विभो ! समर्थ ! हे देववध्वश्च मा भैष्ट बलिं पूजोपहारं शाकपत्रादिकमस्मदातिथ्यं गृह्णीत वयं सम्पन्ना एव भवेमेति चेत् इमम् आश्रमम् अशून्यं कुरुध्वम् आतिथ्याभावे आश्रमः शून्यतुल्यः स्यादिति भावः ॥ ८ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एतदेव विवृणोति—आद्याविति । आद्यौ व्यष्टिसृष्टेः पूर्वम् अस्य व्यष्ट्यात्मकस्य जगतः सर्गे तादर्थ्ये सप्तमी सर्गार्थं यस्य पुरुषस्य नियोजककर्तुः सम्बन्धी अंशभूतः रजसोपलक्षितः शतधृतिः नियोज्यकर्ता अभूत् तच्छब्दसम्बन्धाच्छब्दलाभः यश्च क्रतुपतिर्यज्ञफलदः द्विजधर्मसेतुः त्रैवर्णिकधर्मविधारण-हेतुर्विष्णुः स्वावतारभूतः स्थितौ स्थित्यर्थमभूत् । शुद्धसत्वेनो-पलक्षित इति शेषः । यदंशभूतः तमसोपलक्षितः रुद्रः अप्य-याय प्रलयाय अभूत् "सृजामि तन्नियुक्तोऽहं हरो हरति तद्वशः" इति ब्रह्मवचनात् । इति एतैर्ब्रह्मादिभिः नियोज्यकर्तृभिः सततं पुनःपुनः प्रजासु उद्भवादयो यतो नियोजकात्कर्तुर्भवन्ति स आद्यः पुरुष इत्यन्वयः ॥ ५ ॥

श्रीनरनारायणावतारं सचेष्टितं चाह—धर्मस्येत्येकादशभिः । धर्मस्य धर्मात् दक्षस्य दुहितरि कन्यायां मूर्त्याम् ऋषिषु प्रवरः श्रेष्ठः प्रवरत्वे हेतुः प्रशान्त इति । नारायणः नर इति द्विरूपः अजनिष्ट जातः नैष्कर्म्यं भगवत्स्वरूपं लक्ष्यते साक्षात्क्रियते येन तत्कर्म भगवद्ध्यानार्चनादिकं श्रीमन्नारदादिभ्यः उवाच स्वयं चचार योऽद्यापि ऋषिवर्यैः श्रीमन्नारदादिभिः निषेवि-ताङ्घ्रिः सन् तेभ्यः नैष्कर्म्यलक्षणं कर्म वदन् स्वयमाचरन् आस्ते ॥ ६ ॥

धाम स्थानं नैष्कर्म्यलक्षणकर्मानुष्ठानेन जिघृक्षतीति विशङ्क्य अतन्महिज्ञः अतत्प्रभाववित् इन्द्रः सगणं कामं तत्कर्मानुष्ठा-नविघ्नार्थं न्ययुङ्क्त नियोजितवान् तदनन्तरं स कामः बदरीभिरु-पाख्यायते यः आश्रमम् अप्सरआदिभिः सह गतः स्त्रीणां प्रेक्षणान्येवेषवो बाणास्तैरविध्यत् ॥ ७ ॥

गतविस्मयोऽपास्तगर्वः अक्रममपराधं बलिमातिथ्यम् इममा-श्रमम् अशून्यम् आतिथ्यप्रदानयुक्तं कुरुध्वम् ॥ ८ ॥

---

### भाषा टीका ।

पहिले इस संसार की सृष्टि के समय में भगवान् ने रजोगुण से ब्रह्मा का रूप धारण किया, फिर यज्ञपति होकर ब्राह्मणादिकों के धर्म के रक्षाकर्ता होकर सत्व गुण परिपूर्ण विष्णुरूप से इसका पालन किया फिर उनहीं आदि पुरुष ने इस संसार के नाश करने के लिये तमोगुण से रुद्रावतार धारण किया इस प्रकार से निरन्तर प्रजाओं में उत्पत्ति स्थिति प्रलय करते हैं ॥ ५ ॥

फिर दक्षकी पुत्री मूर्ती देवी के गर्भ में धर्म देवके सकाश से ऋषियों में श्रेष्ठ शांत मूर्ति नरनारायण रूप धारण करके प्रगट भये फिर मोक्ष के हेतु ज्ञान को नारदादिकों को उपदेश किया और आपने अनुष्ठान किया जो कि अभी पर्यन्त भी बदरीकाश्रम में ऋषि श्रेष्ठों से चरण सेवा को प्राप्त होकर विराज मान हैं ॥ ६ ॥

बदरीनारायण भगवान् की योग तपस्या देखकर इन्द्र को शंका भई की यह कोई महात्मा है मेरे इन्द्रपद को लेलेवैगा ऐसे डरकर काम देव को उसके देव गणों के सहित बदरिकाश्रम को भेजा, वह काम देव भी भगवान् की महिमा को नहीं जानता था सो उसने अप्सराओं को तथा वसन्त ऋतुको सुंदर पवन को वहां लेजाकर स्त्रियों के कटाक्ष रूप बाणों से बदरीनारायण को वेधन किया ॥७॥

जब उन सबों से भगवान् का कुछ भी विकार न भया तब वे सब शाप के भय से कापने लगे तब भगवान् अभि-मान रहित होकर और यह इंद्र का व्यतिक्रम है ऐसा जान कर उन सबों से बोले कि हे कामदेव ! हे पवन ! हे देव स्त्रियो ! तुम लोग कुछ मत डरो यह भोजनादिक पदार्थ ग्रहण करो और इसी ठिकाने रहो यहां से मत जाओ ॥ ८ ॥

---

इत्थं ब्रुवत्यभयदे नरदेव ! देवाः सव्रीडनम्रशिरसः सघृणं तमूचुः ।
(१)नैतद्विभो ! त्वयि परेऽविकृते विचित्रं स्वारामधीरनिकरानतपादपद्मे ॥ ९ ॥
त्वां सेवतां सुरकृता बहवोऽन्तरायाः(२) स्वौको विलङ्घ्य परमं व्रजतां पदं ते ।
नान्यस्य बर्हिषि बलीन् ददतः स्वभागान् धत्ते पदं त्वमविता यदि विघ्नमूर्ध्नि ॥ १० ॥
क्षुत्तृट्त्रिकालगुणमारुतजैह्व्यशैश्न्यानस्मानपारजलधीनतितीर्य केचित् ।
क्रोधस्य यान्ति विफलस्य वशं पदे गोर्मज्जन्ति दुश्चरतपश्च वृथोत्सृजन्ति ॥ ११ ॥
इति प्रगृणतां तेषां स्त्रियोऽत्यद्भुतदर्शनाः ।
दर्शयामास शुश्रूषां स्वर्चिताः कुर्वतीर्विभुः ॥ १२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

हे नरदेव ! अभयदे श्रीनारायणे इत्थं ब्रुवति सति देवाः कामादयः सव्रीडानि नम्राणि शिरांसि येषां ते लज्जाभरेणावनतशिरस्का इत्यर्थः । सघृणं यथा भवति तथा कृपां जनयन्त इत्यर्थः । कृपायुक्तं तमिति वा मायातः परे अतोऽविकृते स्वारामाश्च ते धीराश्च तेषां निकरैरानतम्पादपद्मं यस्य तस्मिन् त्वय्येतदक्षोभानुकम्पादि न विचित्रम् ॥ ९ ॥

अस्माकं चापराधाचरणं क्षमाविषयत्वात् चित्रमित्याहुः—त्वामिति । त्वां सेवमानानां सुरैरिन्द्रादिभिः कृता अन्तराया विघ्ना भवन्ति कस्मादित्यत आहुः—स्वौक इति । स्वस्थानं स्वर्गमतिक्रम्य परमं तव स्थानं व्रजतां नान्यस्य त्वामसेवमानस्य कुतः ? बर्हिषि यज्ञे स्वभागान्पुरोडाशादीन्बलीन्करान्कृषिक इव राज्ञे इन्द्रादिभ्यो ददतः यजतः तर्हि किं मद्भक्तो विघ्नैर्भ्रश्यति ? नेत्याहुः, धत्ते इति । यदीति निश्चये यतस्त्वं सर्वसुराधीश्वरोऽविता रक्षकोऽतोऽसौ विघ्नानां मूर्ध्नि पदमङ्घ्रिं धत्ते कुतः ? पुनस्त्वयि विघ्नशङ्केति भावः ॥ १० ॥

त्वद्भक्तानां तु केवलं तपश्चरतां द्वयी गतिः अस्माकं वा वशं यान्ति क्रोधस्य वा । तत्रास्मद्वशाः कामोपभोगमपि तावदनुभवन्ति क्रोधस्य वशाः पुनरतिमन्दा इत्याहुः—क्षुत्तृडिति । क्षुच्च तृट् च त्रिकालगुणाश्च शीतोष्णवर्षाणि च मारुतश्च प्राणो बाह्यो वा जैह्व्यं जिह्वाभोगाश्च शैश्न्यं गुह्योपभोगाश्च एतानस्मानपारजलधिरूपानतितीर्य विलङ्घ्य गोष्पदे मज्जन्ति कुतः ? यतः क्रोधस्य विफलस्य वशं यान्ति गच्छन्ति । किञ्च, जले मज्जन्तो यथा विवशाः सन्तो मस्तकारोपितं भारमुत्सृजन्ति तथा वृथैव न मोक्षाय न च भोगाय शापादिना दुश्चरं तप उत्सृजन्ति ॥ ११ ॥

स्त्रियो योगनिर्मिताः स्त्रीः शुश्रूषां कुर्वतीः स्वर्चिताः सुष्ठ्वलङ्कृतास्तेषां सलावण्यादिदर्पोपशमाय दर्शयामास ॥ १२ ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

लज्जाया मनोधर्मत्वेन शिरःसु तदसम्भवात् साहित्यस्य च लज्जानुभावत्वेनैवाविवक्षितत्वाल्लज्जाभरेणेत्यादि आर्थिकार्थत्वेन व्याख्यातं क्रियाविशेषणं घृणाया विषयो न व्यक्तोऽत इत्यर्थ इत्युक्तम् एतच्छ्लोकस्य व्यवहितपूर्वपरामर्शकत्वादक्षोभानुकम्पादीति व्याख्यातं तत्र प्रहस्येत्यनेन क्रोधाभावरूपोऽक्षोभ उक्तः मा भैष्टेत्यनेन भयातङ्कदुःखप्रहाणेच्छारूपाऽनुकम्पोक्ता आदिनातिथ्यं तच्च बलिं गृह्णीतेत्यनेनोक्तम् ॥ ९ ॥

यदीति । यदि वेदाः प्रमाणं स्युरितिवन्निश्चये अस्मत्स्वभक्तानां निश्चयेन रक्षकोऽतोऽसौ भक्तो विघ्नान् जयतीत्यर्थः ॥ १० ॥

तत्र क्रोधास्मद्वशगयोर्मध्ये कामोपभोगमपीति यद्यपि कामोपभोगस्तपःफलं न भवति तथापि अस्मद्वशगास्तु तुच्छमपि तम् अनुभवन्तीत्यपेरर्थः । क्रोधस्य गोष्पदत्वं स्वविषयघातमात्रेण नष्टत्वात् जिह्वादिजयापेक्षया तुच्छत्वात्तुच्छफलत्वाच्च न तु विषयक्षोभवदनश्वरत्वम् । तदुक्तं सप्तमे "कामस्यान्तं हि क्षुत्तृड्भ्यां क्रोधस्यैतत्फलोदयात् । जनो याति न लोभस्य जित्वा भुक्त्वा दिशो भुवः" इति क्रोधस्य गोष्पदत्वारोपेण तत्रतास्त्र मज्जनकर्तृत्वारोपेण तपसि मस्तकभारत्वमारोपितम् । वृथैवेत्यस्य व्याख्यानं न मोक्षायेत्यादि ॥ ११ ॥

योगबलेन दर्शयामास ॥ १२ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अविकृते विकाररहिते स्वारामधीराः आत्मारामा विद्वांसः ॥ ९ ॥

स्वौकः स्वशब्दो देववाची स्वर्गं विलङ्घ्येत्यर्थः ॥ १० ॥

अस्मानपारजलधीन् अस्मानेव जलधीन् इति पदे गोः गोष्पदे ॥ ११ ॥ १२ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

हे नरदेव ! अभयदे श्रीनारायणे इत्थं ब्रुवति सति देवाः कामादयः सव्रीडानि नम्राणि च शिरांसि येषां ते लज्जाभरेणावनतशिरस्का इत्यर्थः । सघृणं कृपायुक्तं यथा भवति तथा कृतापराधेष्वप्यस्मासु कृपा यथास्यात्तथेत्यर्थः । तं श्रीनारा-

(१) नैव विभो ! त्वयि परे विकृतिर्विचित्रा इति विज० पाठः (२) त्वां स्तुन्वतां बहवोऽन्तरायास्ताम्को विलङ्घ्य इति विज० पाठः ।

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

बहुप्रकारा विघ्नास्तत्तत्कार्यं ततश्च किमपि कार्यं न सिद्ध्यतीत्यर्थः प्रवाहे बलिं ददतः ततः स्वभागान् मर्यादायां नच ते सर्वत्र विघ्नकर्त्तारो दुर्जना इव तदाह—नान्यस्येति । अनन्यत्वेनैकत्वात् यद्यपि "यदनु चरित" इति न्यायेन भगवतोऽपीदमभिमतं तथापि लोकापवादात् दयया वा यद्यविता विघ्नस्थानां तदास्थानं प्राप्नोति कश्चिदित्यर्थः । विघ्नानां प्राचुर्ये किं वक्तव्यमत आह— यदि विघ्नमूर्ध्नीति विघ्नास्तत्कार्याणि नेतुं मस्तके स्थापितवन्तः यदि तत्रैव तत्स्थापनं तदा तत्रैव पदं च धत्त इत्यर्थः । उत्तरवाक्यगतो यच्छब्दः तच्छब्दं नापेक्षते "तथा न ते माधव" इत्यत्र भगवदीया यादवा इव उदासीनाः सेवमानास्त्वत्रेति विशेषः ॥ १० ॥

एतद्दृढीकरणाय विघ्नानां माहात्म्यमाह परः सहस्रेष्वपि विघ्नेषु षडिमे प्रधानभूताः तत्राप्युत्तरोत्तराधिक्यं तदाह—क्षुदित्यादिना "समुद्र इव हि कामः" इति श्रुतेः । अष्टपक्षातिकस्य कामस्य उत्तरणं कठिनम् अष्टधा यावज्जीवमनन्तजन्मसु बाधते तत्र सहनं तरणं प्रतीकारो मज्जनम् अतः प्रतीकारसाधनानि कर्तॄणि वशीकरणं चापरो धर्मः सर्वेषा भवशीकृतानामेव तरणादिशङ्का अतितीर्येति बहुकालसहने तथा न बाधन्त इति ते दुर्भराः कामे तु भग्नस्यैन्द्रियं सुखमस्ति क्रोधे तदपि न शत्रुमरणस्य दुःखाभावहेतुत्वेऽपि न स्वकृते विशेषः क्रोधश्च दुःखात्मकः तदपि विवेकाभिमानवत एव क्रोधे सहनशङ्कैव नास्ति वशीकृत एव भवतीत्याह—वशं यान्तीति । कामविचारे क्रोधस्त्वतितुच्छः प्रवाहमर्यादायां स्थित्यभावात् विवेकविधुतित्वाच्च हेतोरप्यभावात् तदाह—गोः पदे मज्जन्तीति—विरुद्धवाक्यस्य पदैकदेशे मज्जन्तीत्यर्थः । कामः कायिकः क्रोधो वाचनिक इति सिद्धम् उभयोस्तारतम्यार्थं श्लिष्टवचनं कामे मग्नानां मर्यादाफलानुभावोऽस्ति क्रोधे तदपि नेत्याह—दुश्चरतपश्च वृथोत्सृजन्तीति । भग्नः शिरोभारमिव स्वपरार्थोपयोगाभावात् वृथेति त्रिकालगुणाः शीतोष्णवर्षाः अतिशयेन तीर्त्वा गोष्पदे ईश्वरानिर्मिते एवं कामक्रोधाभावं भगवति दृष्ट्वा भक्तेष्टमार्थनस्वपौरुषवर्णनमिषेण स्तुतिरुक्ता ॥ ११ ॥

एवं ज्ञानमचिन्त्यैश्वर्याज्ञानादीति तन्निराकरणाय स्त्रियो दर्शितवानित्याह—स्त्रीभिः कामजयो यस्य क्रोधस्याप्यत्वेनेन हि उत्कर्षाधायकत्वेन ह्युभयोरित्यचिन्त्यता तेषां सतां तेभ्य इति वा तेषामेव सम्बन्धिन्य इति वा अण्डान्तरस्थाः अन्यथा उर्वशीदानमनुचितं स्यात् कामादीनामपि विवेकविस्मारकत्वेनाद्भुततरं दर्शनं यासां ताः स्त्रीः अर्चने कामादीनां पूजायां स्थापनादौ ननु तूष्णीं भावेनापि सर्वसिद्धौ किमर्थमेवं कृतवानित्यत आह—विभुरिति । समर्थस्य हि बहुभिः क्रीडनं भवेदित्यर्थः ॥ १२ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

हे नरदेव ! भगवति श्रीनारायणे इत्थं ब्रुवति सति देवाः कामादयः सघृणं कृपायुक्तं तं परे परमे निर्विकारे स्वारामाः आत्मारामाः ॥ ९ ॥

त्वद्भक्ता अपि त्वत्प्रसादादस्मान् गणयन्ति, कुतः ? पुनस्त्वं गणयिष्यसीत्याहुः—त्वां सेवमानानां जनानां सुरैरिन्द्रादिभिः कृता अन्तराया अस्मदादयो विघ्ना बहवो भवन्ति इन्द्राद्यैर्विघ्नाः कथं क्रियन्ते अत्राहुः—स्वौक इति । स्वस्थानं स्वर्गं मतिक्रम्य परमं तव स्थानं व्रजतां विघ्नकरणं खलु मात्सर्यहेतुकमेवेति भावः । नान्यस्य कर्मिप्रभृतेः कुतः बर्हिषि यज्ञे बलीन् पुरोडाशादीन् तत्तद्भागान् इन्द्रादिभ्यः करान् राज्ञे कर्षकस्येव ददतः तर्हि मद्भक्तो विघ्नैर्भ्रंश्यति नेत्याहुः । धत्त इति । यदीति निश्चये यतस्त्वं सर्वसुराधीश्वरोऽविता रक्षकः अतोऽसौ विघ्नानां मूर्ध्नि पदमङ्घ्रिं धत्ते कुतः । पुनस्त्वयि विघ्नशङ्केति भावः ॥ १० ॥

त्वद्भक्तिविमुखानां तपश्चरतां तु दुर्गतिः अस्माकं वा वशा भवन्ति क्रोधस्य वा तत्रास्मद्वशाः कामोपभोगमपि तावदनुभवन्ति, क्रोधस्य वशाः पुनरतिमन्दा इत्याहुः । क्षुत्तृडिति । क्षुच्च तृट् च त्रिकालगुणाः शीतोष्णवर्षाणि च मारुतस्त्वगिन्द्रियभोग्यो मलयानिलश्च जैह्व्यो जिह्वाभोग्यश्च शैश्न्यः शिश्नभोग्यश्च एतान् अस्मान् अपारजलधिरूपान् अतितीर्य विलङ्घ्य गोष्पदे मज्जन्ति किञ्च, जले मज्जन्तो यथा विवशीभूय मस्तकारोपितं धनभारमुत्सृजन्ति तथा वृथा न मोक्षाय न भोगाय शापादिना दुश्चरं तपश्च विसृजन्ति ॥ ११ ॥

प्रगृणतां स्तुवतस्तानन्याश्च श्रियः योगनिर्मिताः स्त्रीः शुश्रूषां स्वसेवां कुर्वतीरिव प्राकृतीरित्यर्थः । तेषां स्वलावण्यादिदर्पोपशमाय दर्शयामास ॥ १२ ॥ १३ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

हे नरदेव ! येषां कामादयः सव्रीडानि नम्राणि शिरांसि येषां ते सघृणं कृपायुक्तं तं भगवन्तमूचुः । परे पूर्णे अविकृते क्रोधादिरहिते स्वारामे भगवति ये धीराः आत्मनिष्ठाः तेषां निकरैः समूहैः आनतं पादपद्मं यस्य तस्मिन् एतत्कामक्रोधादिसंस्पृष्टत्वं न ॥ ९ ॥

भगवतः कामाद्यस्पृष्टत्वं कैमुतिकन्यायेनाहुः—त्वामिति । अन्यस्य भगवत्सेवकस्य राज्ञे बलीनि च स्वभागान् सुरेभ्यो ददतोऽपि सुरकृताः बहवः अन्तरायाः भवन्ति स्वौकः स्वस्थानं सुरलोकं विलङ्घ्यापि ते परमं पदं स्थानं व्रजतां त्वां सेवमानानां तु सुरकृताः अन्तरायाः नेत्युच्यते । न तवेति किं वक्तव्यं यदि तु विघ्नमूर्ध्नि पदं धत्ते प्रवृत्तिं कुर्यात्त्वत्सेवक इति शेषः तदा त्वमविता रक्षकोऽस्त्येव ॥ १० ॥

भगवतस्तद्भक्तानां च कामक्रोधादिविजितत्वं निरूप्य भगवदभक्तानां कामादिवश्यत्वेनाकृतार्थत्वमाहुः—क्षुदिति । बहवस्तावत् क्षुत्तृडादिकामाभिभूताः प्रसिद्धा अकृतार्था एव म्रियन्ते केचित्तु क्षुच्च तृट् च त्रिकालगुणाः त्रिचातुर्मास्यगुणाः शीतोष्णवर्षाणि च मारुतश्च नानाविधजैह्व्याः जिह्वाभोगाश्च शैश्न्याः गुह्योपभोगाश्च तानस्मान् अपारजलधीन् जलधिवद्दुस्तरान् सुखलुब्ध्या तत्र तत्रायकैर्जनैः सुकुमशक्यान् अतितीर्य विलङ्घ्य तत्र तत्रासक्तिं कृत्वापि गोष्पदे मज्जन्ति अल्पदे क्रोधनाम्नि गर्ते पतन्ति तदेव स्पष्टयाहुः—क्रोधस्य वशं यान्तीति । पुत्रशिष्यादिशिक्षार्थविषयकक्रोधव्यावृत्त्यर्थमाहुः—विफलस्येति ।

(१)ते देवानुचरा दृष्ट्वा स्त्रियः श्रीरिव रूपिणीः ।
गन्धेन मुमुहुस्तासां रूपौदार्यहतश्रियः ॥ १३ ॥
तानाह देवदेवेशः प्रणतान् प्रहसन्निव ।
आसामेकतमां वृङ्ध्वं सवर्णां स्वर्गभूषणाम् ॥ १४ ॥
ओमित्यादेशमादाय नत्वा तं सुरवन्दिनः ।
उर्वशीमप्सरःश्रेष्ठां पुरस्कृत्य दिवं ययुः ॥ १५ ॥
इन्द्रायाऽऽनम्य सदसि शृण्वतां त्रिदिवौकसाम् ।
ऊचुर्नारायणबलं शक्रस्तत्रास विस्मितः ॥ १६ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अत एव तपः क्षुधोत्सृजन्ति चकारात् क्रोधविषयस्य अतस्य पापं मुञ्चन्ति ॥ ११ ॥

तेषां कामादीनाम् इति स्तुवतां शृण्वतां विभुः नारायणः स्त्रियः दृष्टवाऽऽविःकृत्य स्त्रीः भगवतां आज्ञापयस्येव शुश्रूषां कुर्वतीः भगवताऽपि साधुसाध्विति स्वार्चिताः सुष्ठु भर्त्सिताः अद्भुतदर्शनाः अलङ्कारयंत्रैना: कामाहितविषोजकेन्द्राद्यिश्चाल्पान्तमुत्कप्रदर्शना-त्वात्सौम्यरूपाविर्दर्पहरः दर्शयामास ॥ १२ ॥

### भाषा-टीका ।

हे नरदेव ! परीक्षित जी ! इस प्रकार से अभय देनेवाले भगवान् के कथन को सुनकर कामादिक देवता लज्जित होकर मस्तकों को नीचा करके बड़ी अधीनता से भगवान् से बोले, कि—हे प्रभो ! यह ऐसी बात आप के विषय में कुछ आश्चर्य नहीं है, क्योंकि ! आप माया से परे हैं और विकार रहित हैं केवल अपने आत्मस्वरूपही मे रमण करने वाले और मुनिजन आप के चरण कमलों की सेवा करते हैं ॥ ९ ॥

जो पुरुष आप की सेवा करते हैं उनके ऊपर देवता लोग बहुत विघ्न करते हैं क्योंकि वे उपासक लोग देवताओं के स्थानों को भी लांघकर आप के परमपद को जाने वाले हैं, तिस से और जो लोग कर्मकाण्ड से देवताओं को बली देते हैं तिनका विघ्न देवता नहीं करते हैं परन्तु तौ भी यदि आप भक्तों की रक्षा करने वाले हो तो वे उपासक लोग विघ्न करने वालों के मस्तकपर पैर रखकर आप के स्थान को चले जाते हैं ॥ १० ॥

संसार में कोई तपस्या वाले ऐसे हैं कि जो क्षुधा तृषा और तीनों कालों के दुःख और ग्रीष्म कृत दुःख पवन के जिह्वा रस के लिंग इन्द्रिय के दुःख इस काम आदि अपार समुद्रों के पार उतर कर निष्फल केवल क्रोध के वश होजाते हैं सो गौ खुर के बराबर जल में डूब जाते हैं बड़ी दुष्कर तपस्या को व्यर्थ ही छोड़ देते हैं ॥ ११ ॥

इस प्रकार से उन के स्तुती करतेही में भगवान् ने बड़ी अद्भुत रूप वाली स्त्रियों को दिखा दिया जोकि सुन्दर प्रशंसनीय थीं और शुश्रूषा कर ने में हाजिर होरहीं थीं ॥ १२ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

रूपिणीर्मूर्त्तिमतीः श्रीरिव ताः स्त्रियः स्त्रीर्दृष्ट्वा तासां तु रूपस्यौदार्येण महत्त्वेन हृता श्रीः कान्तिर्येषां ते ॥ १३ ॥

वृङ्ध्वं वृणीध्वं क वयं वराकाः क चेमा इति चेत्तत्राऽऽह सवर्णां समानरूपाम् नैकाऽप्यस्मदनुरूपेति चेन्मा भवतु तथाऽपि स्वर्गस्य भूषणरूपाम् ॥ १४ ॥

सुरवन्दिनो देवभृत्याः ॥ १५ ॥

इन्द्राय इन्द्रं प्रति नारायणबलमूचुः शक्रस्त्रास त्रासं प्राप्तो विस्मितश्च तत्र विस्मित आसीति वा ॥ १६ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

स्त्रियः स्त्रीः तासामुर्वश्यादीनाम् ॥ १३ ॥

तान् कामादीन् तेषां तिरस्कारे शमिनां दासानां [illegible] नेन सुखप्रसादियोत्यते । यद्वा, भगवदाराधनतपोनिष्ठानां न विघ्नाः प्रभवन्तीति प्रहसन् तथाच इवेत्यनभिकार्थे स्वर्गभूषणरूपामिति व्याख्यानाद्भूषणामित्येव पाठः ॥ १४ ॥

तुओमित्यङ्गीकारे आदेशमाज्ञाम् ॥ १५ ॥

तत्र नारायणबले विस्मितो बभूव ॥ १६ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

वृङ्ध्वं वृणीध्वम् ॥ १४—१६ ॥

(१) ता इति वीर० पाठः ।

### श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

ता इति देवानुचराः कामादयः श्रीरिव रूपिणीः सुन्दरमूर्त्तिमतीः ता नारीर्दृष्ट्वा तासां रूपौदार्येण रूपसौन्दर्येण हृता श्रीः कान्तिर्येषां ते तासां गन्धेन शरीरसौरभ्येन मुमुहुः पारवश्यं प्रापुः ॥१३॥

किञ्च, देवदेवो ब्रह्मा तस्यापीशः श्रीनारायणः तान् कामादीनाह-तदेवाह, आसां स्त्रीणां मध्ये एकतमां वृङ्ध्वं वृणीध्वं क वयं वराकाः क चेमा इति चेत्तत्राह सवर्णां समानरूपाम् इति न कापत्सदनुरूपा इति चेत्तत्राह, स्वर्गभूषणामिति । स्वर्गस्य भूषणरूपाम् इति ॥ १४ ॥

ओमित्यादि द्वामिलवाक्यम् ते सुरवन्दिनो देवभृत्याः कामादयः आदेशं भगवदाज्ञाम् ओमित्यङ्गीकृत्य तं प्रणम्य च उर्वशीनामाप्सरःश्रेष्ठामादाय तां च पुरस्कृत्याग्रतो निधाय दिवं स्वर्गं ययुः ॥ १५ ॥

गत्वा च किं चक्रुरिन्द्रश्च किं कृतवांस्तदाह-इन्द्रायेति । सदसि त्रिदिवौकसां देवानां शृण्वतां सताम् इन्द्राय नमस्कृत्य श्रीनारायणस्य बलम् ऊचुः शक्र इन्द्रस्तत्र तावद्विस्मितः सन् तत्रास अभैषीत् ॥ १६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

रूपिणीः प्रशस्तरूपाः ॥ १३ ॥

वृङ्ध्वं स्वीकुरुत ॥ १४ ॥

सुराणां बन्दिनः बन्दिग्रहणपटवः ॥ १५—१६ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

अदेयदानं वक्तुं तदपेक्षमाह—देवानुचरा अपि इन्द्राद्यन्तःपुरस्त्रीदर्शनेऽपि मोहाभावाय तादृशोऽपि सर्वजगत् श्रियो मूर्त्तिमत्य इव ता जाता इति तासां पद्मकिञ्जल्कगन्धानां गन्धेनैव मोहं प्राप्ताः कुतः पुनः ज्ञानमित्यर्थः । श्रीरिति द्वितीया बहुवचनं गन्धेनैव यत्र मोहः किं पुनः स्पर्शनादिभिरिति भावः । लोलुपतां वक्तुं विशेषणान्तरमाह—तासां रूपौदार्याभ्यां हृता श्रीर्येषामिति उत्तरखण्डे षष्ठ्या अलुक् श्रीर्द्विविधाः कान्तिश्रेत्र चेति रूपेण कान्त्याधारेण कान्तिनाशः औदार्येण च धनस्य च औदार्याभावे धनं शिलावत् अथवा रूपस्य मदौदार्ये तासां रूपसन्निधानमात्रेण सर्वे रूपवन्तो भवन्तीति पूर्वकान्तेर्नाशः ॥ १३ ॥

तेषामभिप्रायं ज्ञात्वा अदेयमपि दत्तवानित्याह—अधिकाराभिनिवेशं दृढं मत्वा सन्तुष्ट इव ददातीति देवानां देवा इन्द्रादयस्तेषामीश इति तत्कृपयापीन्द्रस्य भोगः अतः अपकारिभोगपर्यवसानाश्च दद्यात् तेषां दोषाभावमाह—प्रणतानिति । मोक्षमपि प्राप्य ते न पश्यन्तीत्यर्थः । अत एव द्रष्टुमपि भीतान् दृष्ट्वा जालमपि हास्यं दोषाभावायोपसंहृतमित्याह—प्रहसन्निवेति । भवतामिन्द्रस्य चोपकाराय सवर्णां स्वर्गभूषणामिति समानो वर्णो यस्या इति पञ्चमी ॥ १४ ॥

अननुभावप्रवृत्तिं वक्तुं हेतुमाह—ओमित्यङ्गीकारे आज्ञामादाय नमनेन सेवकत्वस्थापनं दत्तग्रहणे कीर्त्तिस्थापने च हेतुः वन्दिन इति अप्सरस्त्वमेतेषां सुखाय ॥ १५ ॥

अनुभावमाह—कामादिजयो वशीकरणम् इन्द्रादिमानभङ्गश्चेति बलं तत्रासेति भयम् यथासुखं करिष्यतीति चरित्रेण विस्मयः । एवं देवविस्मापनं नारायणचरित्रमुक्त्वा क्रमेणोपकारानुसारेण सर्वावतारान् सङ्क्षेपत आह—यावदध्यायसमाप्ति तत्र क्रियापेक्षया ज्ञानस्य प्राधान्यं तत्रापि प्राधान्यं सनकादीनां तेन प्रथमं हंसचरित्रं त्रयोदशाध्याये स्पष्टम् ॥ १६ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तेषां पराभवदर्शनेन प्रहसन् इवेत्यतिगाम्भीर्येण प्रहासरोधो व्यञ्जितः वृङ्ध्वं वृणीध्वं क वयं वराकाः क चेमा इति चेत्तत्राह—सवर्णां समानवर्णां अतुल्यमेतासां विभूतिरूपां प्राकृतीमपि काञ्चिदित्यर्थः । तथापि स्वर्गस्य भूषणं भविष्यतीत्यत स्वर्गेति ॥ १४ ॥

आदेशमादाय आज्ञां गृहीत्वा सुरवन्दिनो देवभृत्याः ॥ १५ ॥

तत्रास अहो मया अपराद्धमिति त्रासं प्राप्तः ॥ १६ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

देवस्येन्द्रस्यानुचराः ते कामादयः रूपिणीः प्रशस्तरूपाः किं बहुना ? श्रीरिव श्रीसादृश्ययुक्ताः स्त्रियस्ताः स्त्रीर्दृष्ट्वा तासां रूपस्यौदार्येणोज्जृम्भितत्वेन हृता श्रीः कान्तिर्येषां ते तथाभूताः सन्तः तासां गन्धेन मुमुहुः ॥ १३ ॥

देवाः इन्द्रादयः तेषां देवाः ब्रह्मादिनामकाः तेषामीशः इव-शब्दः स्वभावादेव प्रहसितमुखत्वं भगवतो द्योतयति-वृङ्ध्वं वृणीध्वम् । ननु, सत्कुलेन गरुडस्येव मादृशैः एतासां स्वीकरणं न युक्तमित्यत्राह-सवर्णामिति । स्वसमानरूपाम् । ननु, सवर्णा अासु नास्तीत्यत्राह—स्वर्गभूषणामिति । एकस्य प्राणिनस्तु का कथा सर्वोऽपि स्वर्गः आसां मध्ये एकतमाया अपि तुल्यो यद्यपि नास्ति तथापि स्वर्गालङ्कारतयैकां स्वीकुरुतेति फलितोऽर्थः ॥ १४ ॥

सुरस्येन्द्रस्य वन्दिनो भृत्याः ॥ १५ ॥

इन्द्राय इन्द्रं प्रति आनम्य प्रणम्य नारायणस्य बलमैश्वर्यमूचुः तदा शक्रः विस्मितः तत्रास भीतश्च ॥ १६ ॥

---

### भाषा टीका ।

इन्द्र के सेवक उन काम देवादिकों ने जब रूपवती लक्ष्मी सरीकी उन स्त्रियों को देखा तब उनके रूपकी सुन्दरता से इनकी श्रीहत होगई और उनके गन्ध से मोहित होगये ॥ १३ ॥

जब वे देवता नमस्कार करते थे तब भगवान् हँसते सरीके उन से बोले कि इन अप्सराओं के मध्य में से एक किसी को अपनी स्त्री देख कर तुम लेजाओ जो कि तुमारे स्वर्ग की भूषण रूप हो जावेगी ॥ १४ ॥

हंसस्वरूप्यवददच्युत आत्मयोगं दत्तः कुमार ऋषभो भगवान् पिता नः ।
विष्णुः शिवाय जगतां कलयाऽवतीर्णस्तेनाऽऽहृता मधुभिदा श्रुतयो हयास्ये ॥ १७ ॥
गुप्तोऽप्यये मनुरिलौषधयश्च मात्स्ये क्रौडे हतो दितिज उद्धरताऽम्भसः क्ष्माम् ।
कौर्मे धृतोऽद्रिरमृतोन्मथने स्वपृष्ठे ग्राहात्प्रपन्नमिभराजममुञ्चदार्तम् ॥ १८ ॥
संस्तुन्वतोऽब्धिपतितान् श्रमणानृषींश्च शक्रं च वृत्रवधतस्तमसि प्रविष्टम् ।
देवस्त्रियोऽसुरगृहे पिहिता अनाथा जघ्नेऽसुरेन्द्रमभयाय सतां नृसिंहे ॥ १९ ॥
देवासुरे युधि च दैत्यपतीन् सुरार्थे हत्वाऽन्तरेषु भुवनान्यदधात्कलाभिः ।
भूत्वाऽथ वामन इमामहरद्बलेः क्ष्मां याच्ञाच्छलेन समदाददितेः सुतेभ्यः ॥ २० ॥

### भाषा टीका ।

तब वे देव के दूत गए भगवान् की आज्ञा का अङ्गीकार करके नमस्कार करके सब अप्सरों में श्रेष्ठ उर्वशी को ले आगे करके स्वर्ग को चले गए ॥ १५ ॥

इन्द्र की सभा में जाकर नमस्कार करके सब देवतों के सुनतेही श्रीनारायण के प्रभाव का उनने वर्णन किया तिसको सुनकर इन्द्र भी विस्मय को प्राप्त होकर बहुत डरमये ॥ १६ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

अन्यानप्यवतारांस्तच्चरितानि चाऽऽह—हंसस्वरूपीति । दत्तो दत्तात्रेयः कुमारः सनकादिः नः पिता ऋषभश्च विष्णुरेव कलयाऽवतीर्णः सन्नात्मयोगमवदत्, तेन विष्णुना हयास्ये हयग्रीवावतारे मधुभिदा सता तत्र पातालतः सनातन्यः श्रुतय आहृताः ॥ १७ ॥

इला पृथ्वी ओषधयश्च गुप्ताः क्रौडे च वाराहावतारे ग्राहाद्गजेन्द्रममुञ्चन्मोचयामास एवमादौ यत्रावतारे नाम नास्ति तत्र विष्णुः शिवाय जगतां कलयाऽवतीर्ण इत्यनुवर्तनीयम् ॥ १८ ॥

संस्तुन्वतः स्तुतिं कुर्वाणान् ऋषीन्वालखिल्यान्कश्यपार्थं समिदाहरणे गोष्पदे निमग्नानिन्द्रेणोपहसितानुद्धृत्याऽऽपदोऽमोचयत् तमसि ब्रह्महत्यायां प्रविष्टं मोचयामास असुरगृहे पिहिता निरुद्धा या देवस्त्रियस्ताश्चामुञ्चदनेकावतारैः ॥ १९ ॥

अन्तरेषु सर्वमन्वन्तरेषु कलाभिर्मूर्तिभिर्भुवनान्यदधादपालयत् इमां क्ष्मां समदाद्ददौ ॥ २० ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

आत्मयोगं ज्ञानयोगं तत्र हंसः सनकादिभ्यः दत्तो यदुप्रह्लादादिभ्यः कुमारो नारदाय ऋषभश्चात्मजेभ्यः ज्ञानयोगमवददिति ज्ञेयं ततः मधुदैत्यात् ॥ १७ ॥

गुप्त इति युग्मकं हरिसञ्ज्ञकेऽवतारे ग्राहाद्गजेन्द्रं मोचयामास कुतो मोचयदित्यपेक्षायां कश्यपार्थमित्याद्यध्याहृतम् ॥ १८—१९ ॥

दधातेरप्यनेकार्थत्वेन अपालयदिति व्याख्यातम् प्रयेत्यर्थान्तरे ॥ २० ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

दत्तः कुमारो दत्तात्रेयः अत्रापि भगवान् कलयावतीर्णः इत्यनुषङ्गः ॥ १७ ॥

मात्स्ये अप्यये प्रलये इलां भूमितत्त्वम् अमुञ्चत् अमोचयत् ॥ १८ ॥

पिहिता येनेत्यध्याहारः ॥ १९ ॥ २० ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका

अन्यानप्यवतारांस्तच्चरित्राणि चाह—हंसस्वरूपीति । अच्युतो विष्णुर्हंसादिरूपेण जगतां शिवाय मङ्गलाय कलयाऽवतीर्णः सन्नात्मयोगं जीवात्मपरमात्मयाथात्म्यज्ञानयोगमवददुपदिष्टवान् इति सम्बन्धः । तत्र दत्तो दत्तात्रेयः कुमारः सनकादिः नोऽस्माकं कव्यादीनां पिता भगवानृषभश्च तेन विष्णुनैव हयास्ये हयग्रीवावतारे मधुभिदा मधुनामासुरमभिनदिति तथाभूतेन श्रुतयो वेदा अपहृता आनीताः ॥ १७ ॥

तथा मात्स्येऽवतारे मनुः सत्यव्रतः गुप्तो रक्षित इला पृथ्वी ओषधयश्चकाराहवश्च गुप्ता इत्यर्थः । क्रौडे वराहावतारे ऽम्भसः प्रलयजलात् क्ष्मां भूमिम् उद्धरता विष्णुना दितिजो हिरण्याक्षो हतः कौर्मे कूर्मावतारेऽमृतोन्मथननिमित्ते स्वपृष्ठेऽद्रिर्मन्दरो धृतः तथा ग्राहाद्गजेन्द्रं शरणागतममुञ्चदमोचयत् यत्रावतारनाम न दृश्यते तत्र विष्णुः शिवाय जगतां कलयावतीर्ण इत्यनुसन्धेयम् ॥ १८ ॥

संस्तुन्वतः स्तुतिं कुर्वाणानृषीन् वालखिल्यान्कश्यपार्थं समिदाहरणे गोष्पदे मग्नानिन्द्रेण उपहसितान् उद्धृत्यापदोऽमोचयत् तमसि ब्रह्महत्यायां प्रविष्टं मोचयामास असुरगृहे हिरण्यकशिपुगृहे

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

पिहिता निरुद्धा या अनाथा देवस्त्रियस्ताश्चामोचयत् नृसिंहः सन् सतां साधूनामभयायासुरेन्द्रं हिरण्यकशिपुं जघ्ने हतवान् ॥ १९ ॥

दैवासुरे युधि युद्धे सुरार्थे इन्द्राद्यर्थं दैत्यपतीन् हत्वाऽन्तरेषु सर्वमन्वन्तरेषु कलाभिर्मूर्तिभिरवतारैरिति यावत् भुवनान्यदधादपालयत् वामनो भूत्वा याञ्चाव्याजेन बलेः सकाशादिमां क्ष्मामहरत्तां चादितेः सुतेभ्यः इन्द्रादिभ्यः समदाप्रायच्छत् ॥ २० ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ये ये हरेरवतारास्ते ते सर्वेऽप्येवंविधमाहात्म्यास्त्वित्यर्थ इति ज्ञाप्यते—हंसस्वरूपीति । विष्णुः कलया हंसरूप्यवतीर्णो जगतां शिवायात्मयोगं परमात्मज्ञानमवदत् एवं दत्तादावप्येतत्व्यं कुमारो नाम हरेरूपान्तरं सनत्कुमारादियोगीश्वरज्ञानोपदेष्टा—

> "कुमारनामा तु हरिर्ब्रह्मचर्यवपुः स्वयम् ।
> सनत्कुमाराय परं प्रोवाच जगदीश्वरः" ॥

इत्यनया स्मृत्या—

> "विष्णोः सनत्कुमाराख्याच्छुश्रुवुर्ज्ञानमुत्तमम् ।
> सनत्कुमारप्रमुखा योगेशाः परमेश्वरात्" ॥

इत्यनया चोक्तार्थः सिद्ध इति हयास्ये हयग्रीवावतारे तेन मधुभिदा श्रुतय आहृताः ॥ १७ ॥

मात्स्येऽवतारे इला भूमिर्गुप्ता अप्यये प्रलये सत्यव्रतो नाम मनुः सप्तऋषयश्च गुप्ताः अम्भसः क्ष्मामुद्धरतो हरेः क्रोडे वराहावतारे दितिजो हिरण्याक्षो हतः अमृतोत्पत्तये क्षीरसमुद्रोन्मथने मन्दराद्रिः तापसो नाम हरिरिभराजं ग्राहाद्मुञ्चत् ॥ १८ ॥

व्यासावतारे संस्तुन्वतः श्रमणानिःसङ्गानृषींश्च संसाराब्धिपतितान् संसाराब्धेरमुमुचत्—

> "सुपर्णा ऋषयो व्यासं नाथमाना ययुः सदा ।
> ध्वान्तं निवर्तयास्माकं मुमुग्धीति च वादिनः" ॥

इति वचनात् । व्यासावतारे इयं कथेति ज्ञायते नृसिंहे नरसिंहावतारे तमसि प्रविष्टं कर्तव्यमूढमिन्द्रं वृत्रवधतो दोषादमुमुचत् सतामभयायासुरेन्द्रं जघ्ने असुरगृहे पिहिताः अनाथाः देवस्त्रियः अप्सरसश्च व्यमोचयदिति—

> "स्मरणात्तु नृसिंहस्य शक्रो मुक्तो वृत्रवधात् ।
> हिरण्यकहृताश्चापि तथैवाप्सरसां गणाः" ॥

इति वचनसिद्धेयं कथा ॥ १९ ॥

उपेन्द्ररूपो हरिः दैवासुरयुद्धे सुरार्थं दैत्यपतीन् हत्वा अन्तरेषु मन्वन्तरेषु भुवनान्यदधात् वामनो भूत्वा याञ्चाच्छलेन बलेरिमां क्ष्मामहरत् हृत्वा च तामदितेः सुतेभ्यः समदादित्यन्वयः तदुक्तं—

> "उपेन्द्ररूपी भगवान्प्रतिमन्वन्तरं विभुः ।
> असुरान्हन्ति नियतं आश्रदेवे च वामनः" ॥

इति ॥ २० ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तथाऽन्यान् प्रमाणपर्यन्तानाह—अच्युत इति । सर्वरूपेष्वपि स्वरूपाप्रच्युतः आनन्दरूप एव तत्तदाकारं प्रदर्शयतीत्यर्थः अवदरच्युत आत्मतत्त्वमिति पूर्वोक्तं सर्वत्रानुषङ्गः हंसदत्तात्रेयसनत्कुमारऋषभा ज्ञानकलावतीर्णाः तृतीयपादस्य सर्वत्रावतारेष्वनुषङ्गः कलवाक्यस्य कलयेति ज्ञानशक्त्या क्रियाशक्त्या वा जगतामिति त्रिलोकस्थानां तत्तदुपकारसिद्ध्यर्थं बहुवचनम् । अवतारास्त्रिविधाः सहजरूपाः समागताः शुद्धसत्त्वस्वरूपे आविर्भूताः स्वत एवेति च तत्र पुरुषः शरीरे नारायणः स्वतः शरीरे च तदन्ये शरीरे कृष्णः स्वत एकत्वमाभिमाने आधाराधेयभावो निरभिमाने हंसस्तु आनन्दमयः प्रियशिरस्त्वादिरूपः हंसस्यैव स्वरूपमस्यास्तीति हंसस्वरूपी अतोऽस्य भिन्नतया निर्देशः तत्रश्चत्वारः कुमारस्याविष्टोऽवतारतुल्यत्वम् ऋषभे विशेषमाह—भगवान् पिता न इति । षड्गुणैश्वर्याविर्भावो भगवन्मार्गप्रवर्तकश्च अजनाभनामाप्यवर्षादैश्वर्यं परिपालनं वीर्यं शतक्रत्व इति धर्मो वा अनपद इति यशः जयन्त्यामिति श्रीः नाथं देह इति ज्ञाने प्रहगृहीत इवेति वैराग्यम् अस्मज्जनकं भगवन्मार्गः तेनेति सहितस्तृतीयपादोऽग्रिमचतुर्षु ज्ञानप्राधान्येन वेदोद्धरणं हयग्रीवे मधुकैटभवधो वेदोद्धरणं च चरित्रं कर्णाभ्यामुत्पद्यमानौ शब्दमिन्द्रियमन्तर्भिरवोत्पन्नौ तद्वधेन तदुदरात् शङ्खे निवेश्याहृताः श्रुतय इत्यर्थः । मध्योरेव ग्रहणं प्रकृते ज्ञानोपयोगाय प्रपञ्चरूप मधुत्वं कीटानामपीन्द्रगोपादीनां माययेति तामसी माया तस्यामुत्पन्नः कैटभः प्रवाहपोषक इति तद्वधे मर्यादासिद्धिः ॥ १७ ॥

प्रतिपाद्यमवतारानाह—द्वाभ्याम् । वेदोद्धरणसाम्यात् मत्स्यमाह अप्यये ऐच्छिकप्रलये मनुः इला औषधयश्च चकाराद्वेदाः हयग्रीवासुरवधं कृत्वा आहृता बहुकालप्लवनेच्छायामयमवतारः इच्छयैव प्रलयः षष्ठिमन्वन्तरानन्तरं पुष्टित्वाददोषः पृथिव्यामिमाधिकारिबीजानि च सम्पादनीयानि च पतन्तीति तथा कृताः अस्मिन्मन्वन्तरे कृष्णावतारादिलौकिकाधिकाराय बहुकालं तथा ज्ञानोपदेशः भूमिसाम्यात्तदनन्तरं वराहः दितिजो हिरण्याक्षः तृतीयस्कन्धषड्ध्यायकथात्र अत एव भूम्युद्धारो गौणः अम्भस इति न कृष्णावतारस्वप्नमभोद्धरणसाम्यात्तदनु कूर्मः अमृतोन्मथनार्थं स्वपृष्ठ इति कालकूटवञ्चनादिदोषसम्भवात् पुष्ट्या त्वदोषः एवं देहाभिमानरहितान् चतुर अवतारान्निरूप्य चतुर्थपञ्चमषष्ठमन्वन्तरावतारान् कार्यसमाप्तौ वैकुण्ठगताभिराभिमानत्वेन वैकुण्ठावासतान् चरित्रेणाह हरिर्गजेन्द्रः मोचितवान् प्रपन्नार्तिमोचनमिति आर्तप्रपञ्चस्तु चतुर्थमन्वन्तरावतारस्य चरित्रत्वेन गजेन्द्रस्य रूपत्वात् पञ्चमषष्ठयोरग्रिमचरित्रमिति ज्ञायते ग्राहस्य वैराग्यहेतुत्वादप्यादौ निर्देशः प्रपन्नमिति सङ्ग्रामे च प्रपन्नानामितिवत् पुष्टित्वाददोषः अमोचयदिति वक्तव्ये स्वयंकर्तृत्वादमुञ्चदिति आह प्रपन्नमोचने यस्य ब्रह्मचरनं चेति विरुध्येतेत्यत आह आर्तामिति नहि ते मोक्षभूता आर्ताः पञ्चमन्वन्तरावतारस्त्वीन् मोचितवान् उत्तरपूर्वकाण्डस्थान् इन्द्रं च मध्विपतितानिति कश्यपान्तरत्वाभिरोहितं कश्यपेनाहरणसमये गोमूत्रपतितानिति केचित् गजेन्द्र इव तेषामवस्था गरुडेन नीयमानानां वा समुद्रे पातः

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

चकारेण भेदः स्तोत्रकरणे च भिन्नतया समागत्य ऋषीनुद्दधृतवानिति इन्द्रस्य तेनैवोद्धृत इति पुनश्चकारः वृत्रवधे प्रतीकाराभावाद्दुर्गतिं प्राप्तः सोऽप्यागत्योद्धृत इति ज्ञातव्यं षष्ठे मन्वन्तरावतारे अमृतं पाययित्वा बलिना इन्द्रासने गृहीते देवेषु लीनेषु देवस्त्रियः असुरैः स्वस्वगृहे गुप्ताः ह्यपि तास्ताश्च तत उद्धृताः निरभिमानिनं नृसिंहमाह पूर्वेण तथात्वाय हिरण्यकशिपुपीडासम्बन्धोक्ता अनुसन्धेया सतामभयाय न केवलं प्रह्लादस्य मर्यादास्थत्वात् मन्वन्तरावतारानाह अर्द्धेन सामान्यतः सर्वान् विशेषतः ॥ १८ ॥ १९ ॥

पुनरर्द्धेन वामनं सर्वेषु मन्वन्तरावतारेषु युद्धे दैत्यान् हत्वा पुष्टिस्थत्वाद्धार्थं त्रिभुवनरक्षणं चरित्रं चकाराद्न्येष्वपि संग्रामेषु रजितनैवरिव देवावध्यत्वज्ञापनाय पतीनिति मन्वन्तरेषु भिन्नता चतुर्दशत्वं च ज्ञापितं कलाभिः षड्भिः मन्वन्तरावतारेभ्यो विलक्षणं वामनचरित्रमिति भिन्नप्रक्रमाथशब्दः क्ष्मामिति सप्तममन्वन्तरे वस्तु मत्स्यकृतः प्रलयः स कल्पान्तरे बलिना स्वर्गे हृते वा सर्वेषां बीजरूपेण स्थितिः पश्चादुद्गम इति मन्वन्तरारम्भोऽपि तदैव बीजरूपधर्मोपचारपूर्ववत्कथा हरणांशः स्वतः याच्ञायां क्वापि पुष्टित्वाद्दोषः मातृनाम्ना अवतारस्य स्वतः वामनत्वैव बुद्ध्या त्रिविक्रमत्वात् वामन इत्युक्तं अवतारेनाम वामनस्वरूपेण हृता, किन्तु बलिसम्बन्धेन स्वत्वभाजने याच्ञात्र हेतुः याच्ञामूलकत्वाद्दानस्य स्वार्थत्वाभावाच्छलं त्रिभिः क्रमैरवन्तुष्ट इत्यत्र अध्यायं तदाचरणानीत्युक्तम् अदितेस्तपसा सन्तुष्टः अस्मिन् मन्वन्तरे केवलं पुरन्दरस्यैव न प्राधान्यं पदत्रयस्य दानाभावादिमामित्युक्तम् ॥ २० ॥

---

### श्रीश्रीकृष्णनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

हंसस्वरूपी हंसाकारः दत्तो दत्तात्रेयः कुमारः नः पिता ऋषभश्च विष्णुरेव कलयाऽवतीर्य आत्मयोगमवदत् तेन हयास्ये हयग्रीवावतारे मधुभिदा सता ततः श्रुतय आहृताः ॥ १७ ॥

अत्यये प्रलये मनुः सत्यव्रतः इला पृथ्वी ओषधयश्च गुप्ताः क्रोडे वराहावतारे इभराजं गजेन्द्रम् अमुञ्चत् मोचयामास ॥ १८ ॥

संस्तुवतः ऋषीन् वालखिल्यान् कश्यपार्थं समिदाहरणे गोष्पदे निमग्नान् इन्द्रेणोपहसितानुद्धृत्य मोचयत् शक्रञ्च तमसि ब्रह्महत्यायां प्रविष्टममोचयत् पिहिता निरुद्धा देवस्त्रियश्चामोचयत् अनेकावतारैरिति शेषः ॥ १९ ॥

अन्तरेषु सर्वमन्वन्तरेषु अवधीत् अपालयत् कलाभिर्मन्वन्तरावतारैः ॥ २० ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

श्रीहंसादीनवतारान् सचरित्रानाह हंसस्वरूपीति विष्णुरेव कलया हंसस्वरूपी दत्तादिनामकश्च अवतीर्य सन् आत्मनः "यद्विज्ञानेन सर्वं विज्ञातं भवति" तस्य तत्त्वस्य स्वस्थितियोगं ज्ञानयोगं भक्तियोगं च अवदत् तेन विष्णुना हयास्ये अवतारे मधुभिदा सता ततः श्रुतयः आहृताः आनीताः ॥ १७ ॥

मात्स्ये मत्स्यावतारे अत्यये प्रलये मनुर्गुप्तः रक्षितः इला भूमिः ओषधयः चकारात्सप्तर्षयः गुप्ताः अम्भसः क्ष्मामुद्धरता विष्णुना क्रोडे वराहावतारे दितिजो हिरण्याक्षो हतः अमृतोन्मथने कौर्मे कूर्मावतारे अद्रिः मन्दराद्रिः स्वपृष्ठे धृतः ग्राहात् गजेन्द्रममुञ्चत् मोचयामास विष्णुरवतीर्य इत्यनुवर्त्तते एवं यत्रावतारनाम नोक्तं तत्रानुवर्त्तनीयम् ॥ १८ ॥

गरुडोपाख्यानप्रसिद्धान् श्रमणान् तपसातिक्षीणान् कश्यपार्थं समिदाहरणे पलाशपत्रमूलमात्रिकामेकैकां गृहीत्वा सूक्ष्मशरीरत्वेन गोष्पदे पतितान् महद्भारवता इन्द्रेणोपहासितान् संस्तुन्वतः स्तुतिं कुर्वाणान् वालखिल्यान् उद्धृत्यामुञ्चत । वृत्रवधतो हेतोः चकारात् विश्वरूपवधतो हेतोस्तमसि ब्रह्महत्यायां प्रविष्टममुञ्चत् असुरगृहे पिहिताः निरुद्धाः या देवस्त्रियस्ताश्चामुञ्चत् बहुभिरवतारैः सतां प्रह्लादादीनाम् ॥ १९ ॥

अन्तरेषु भुवनानि अवधीत् अपालयत् ॥ २० ॥

---

### भाषा टीका ।

अच्युत भगवान् ने हंस स्वरूपी होकर ब्रह्मा को आत्म योग का उपदेश किया दत्तात्रेय होकर यदु आदिकों को ज्ञान दिया फिर हमारे पिता ऋषभ देव का रूप लिया जोकि साक्षात् कला से सब के हित के वास्ते अवतीर्ण भये उन्हीं ने हयग्रीव अवतार में मधुकैटभ को मार कर वेद लाकर ब्रह्माजी को दिये ॥ १७ ॥

उन्होंने मत्स्य अवतार से सब औषधि और पृथिवी तथा चाक्षुष मनु इनकी रक्षा करी वराहावतार से जल से पृथिवी को उद्धार करते समय में हिरण्याक्ष को मारा कूर्मावतार में समुद्र मंथन के समय अपने पीठ पर मंदर पर्वत को धारण किया श्रीहरि अवतार में शरणागत गजराज को ग्राह से छुड़ाया ॥ १८ ॥

किसी अवतार में स्तुति करते हुए समुद्र में पड़े विरक्त ऋषियों की विपत्ति छुड़ाई और वृत्रासुर के वध करने से पाप में प्रविष्ट इन्द्र का पाप दूर किया । नृसिंह अवतार में देवताओं की स्त्री जो असुर के घर में घिरी थीं उनको छुटा कर सत्पुरुषों को निर्भय करने के लिये हिरण्यकशिपु को मारा ॥ १९ ॥

देवता असुरों के युद्ध में देवतों के वास्ते असुरोंको मारकर फिर मन्वंतरों में कला अवतारों से संसार की रक्षा करी तदनंतर वामन अवतार लेकर देवतों के वास्ते बलिसे पृथिवी को भीखमांगने के छलसे इस भूमीको लेकर अदिती के पुत्रों को दिया ॥ २० ॥

निःक्षत्रियामकृत गां च त्रिःसप्तकृत्वो रामस्तु हैहयकुलाप्ययभार्गवाग्निः।
सोऽब्धिं बबन्ध दशवक्त्रमहन् सलङ्कं सीतापतिर्जयति लोकमलघ्नकीर्तिः॥ २१॥
भूमेर्भरावतरणाय यदुष्वजन्मा जातः करिष्यति सुरैरपि दुष्कराणि।
वादैर्विमोहयति यज्ञकृतोऽतदर्हान् शूद्रान् कलौ क्षितिभुजो न्यहनिष्यदन्ते॥ २२॥
एवं विधानि कर्माणि जन्मानि च जगत्पतेः।
भूरीणि भूरियशसो वर्णितानि महाभुज !॥ २३॥
इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
वैयासिक्याम् एकादशस्कन्धे
चतुर्थोऽध्यायः॥ ४॥

श्रीधरस्वामिकृतभावार्थदीपिका।

हैहयानां कुलस्याप्ययाय भार्गवरूपोऽग्निः स रामो दाशरथिः सन् सलङ्कं लङ्कायां स्थितं सच जयति वर्त्तमानकालीनोऽवतार इत्यर्थः॥ २१॥

भाविनं रामकृष्णावतारमाह—भूमेरिति। बुद्धावतारमाह—वादैरिति। अतदर्हान् यज्ञानर्हान्दैत्यान्विमोहयिष्यति कल्क्यवतारमाह—शूद्रानिति। न्यहनिष्यन्निहनिष्यति॥ २२॥ २३॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
चतुर्थोऽध्यायः॥ ४॥

———

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी।

त्रिःसप्तकृत्वः एकविंशतिवारान् स रामो दाशरथिः सन्नित्यं शांशिनोरभेदाभिप्रायेण सलङ्कमिति सहार्थस्य द्वैविध्येऽपि विद्यमानमात्रत्वमभिप्रेत्य लङ्कायां स्थितमिति व्याख्यातम्। यद्वा, लङ्काशब्देन तत्स्थस्तद्गणो लक्ष्यते तथाच सपरिवारदशग्रीवमहन्॥ २१॥

शूद्रान्। म्लेच्छान् कलेरन्ते॥ २२॥

जगत्पतेरिति। तज्जन्मादीनामपि जगत्पालकत्वं व्यञ्जितं भूरियशस इति तेषां यशोमयत्वञ्च॥ २३॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीराधारमणदासगोस्वामिविरचितायां दीपिकादीपिनी
टिप्पण्याम् चतुर्थोऽध्यायः॥ ४॥

———

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

हैहयेति। हैहयकुलाप्ययहेतुभूतो भार्गव इत्यर्थः॥ २१ २३॥

इति श्रीमद्भागवतव्याख्याने एकादशस्कन्धीये
श्रीसुदर्शनसूरिकृतशुकपक्षीये
चतुर्थोऽध्यायः॥ ४॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

हैहयानां कुलस्याप्ययाय नाशाय भार्गवरूपोऽग्निः रामः परशुरामः त्रिःसप्तकृत्वः एकविंशतिवारान् गां भूमिं निःक्षत्रियां क्षत्रियरहितां चकार स विष्णुः सीतापतिर्भूत्वा लोकानां मलं पापं हन्तीति तथा सा कीर्त्तिर्यस्य सः दाशरथिः जयतीति वर्त्तमाननिर्देशस्य वर्त्तमानकालीनोऽयमवतार इत्यभिप्रायः॥ २१॥

अथ भाविनोऽवतारानाह—भूमेरिति। अजन्मा कर्मायत्तोत्पत्तिरहितः भूमेर्भारावताराय यदुषु जातोऽवतीर्णः सन् सुरैरपि कर्तुमशक्यानि कर्माणि चेष्टितानि करिष्यति। बुद्धावतारं तत्कर्म चाह—वादैरिति। अतदर्हानयज्ञाऽनर्हानपि यज्ञकृतः यज्ञान् कुर्वाणान् दैत्यान् वादैर्वेदविरुद्धैर्मोहयिष्यति कल्क्यवतारं तत्कर्म चाह शूद्रानिति। कलौ कलियुगान्ते क्षितिभुजः शूद्रान्न्यहनिष्यत् निहनिष्यति॥ २२॥

उपसंहरति। एवमिति॥ २३॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
चतुर्थोऽध्यायः॥ ४॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

निःक्षत्रिया क्षत्रियरहिता हैहयकुलाप्ययार्थं उज्ज्वलितभार्गवाग्निः भृगुकुलोत्थवह्निः लङ्कामहन्हतवान् दशवक्त्रं चाहन् हतवान् लोकं जयति॥ २१॥

बुद्धो यज्ञकृतो वादैर्विमोहयति कल्की कलेरन्ते शूद्रान् क्षितिभुजोऽन्यहनिष्यत्॥ २२॥

निगमयति। एवं विधानीति॥ २३॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
चतुर्थोऽध्यायः॥ ४॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

सलङ्कमिति । लङ्कास्थिततद्गणसहितमित्यर्थः । जयतीति "जयति जननिवासः" इतिवत् ॥ २१ ॥

शूद्रानित्युभयत्रान्वयः पूर्वत्र उपाख्यान् परत्र म्लेच्छानित्यर्थः ॥ २२ ॥ २३ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
चतुर्थोऽध्यायः ॥ ४ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

रामावतारमाह द्विरूपेण तु शब्दात्प्रमावेश इति केचित् क्षत्रक्षयार्थमत्रावतारप्रयोजनं स्पष्टं भीतनिर्वीनपलायितादिपरित्यागादेकविंशतिवारमुद्यमः तत्रापि पृथ्वीनिष्कण्टका कर्त्तव्येत्युद्यमः पुष्टिमार्गस्थिता न मर्यादापालका इति मारणं दत्तात्रेयोऽपि पुष्टिस्थः रामौ तु मर्यादापालकौ ब्रह्मतेजसा क्षत्रिया उपसंहर्त्तुं शक्याः भगवत्तेजसा वा तत्र स्वयं भगवान् पालकत्वात् क्षत्रियान्न हन्ति अत आह—भार्गवाग्निरिति । इध्मस्थानीयदाहकाधिकारत्वं देवलोकानां वा तावत्पर्यन्तं धर्मवतीर्णस्तावद्वारं ततः परं भगवान् अवतरिष्यतीति भावः । गुणत्रयकार्यत्वात्त्रिधा विभागे अन्यथा भवति यदोः सहस्रजिद्धैहय इति यादवानामपि मध्ये हैहयोऽत्यमर्यादः तस्य कुलनाशार्थमिति अग्निप्राकट्यार्थं वेणुस्थानीयता उक्ता मूलभूततेजो भगवद्रूपं भृगौ स्थापितमिति तदवतीर्णं भगवदवतारत्वेनोच्यते परशुरामः "वैष्णवं तेज आसाद्य समशामयत्" इति सिद्धान्तः एवं वैलक्षण्यात् तुशब्दः येतु रूपकमाहुः लौकिकास्ते स इति रामशब्दतो गृहीतः रामो वैश्वानरावतार इत्यन्ये तस्य चरित्रं पञ्चविधम् अन्या लीला समुद्रबन्धनं रावणवधः सीतापतित्वं सर्वोत्कर्षेण सदा स्थितिः । चरित्रमात्रस्य पावनत्वमिति तत्र समुद्रबन्धनमलौकिकं पुरदाहरावणवधसहितरावणवधः अजेयत्वान्मर्यादा मुख्यपुष्टिः सीतापतित्वं "स वै पतिः स्यात्" इति न्यायेन च जयतीति अस्य विकाराद्यभावेन सर्वदोषविवर्जितत्वम् अन्यस्यापि दोषदूरीकरणं चरित्रेण ॥ २१ ॥

शिष्टान् त्रीनवतारानाह कृष्णो सर्वावतारापेक्षया विशेषमाह, अजन्म जात इति गुणातीतोऽप्याविर्भूत इत्यर्थः । गुणवान् कदाचिज्जायेतापि ननु बीजप्रयोजनाभावात् न कस्यचिदुत्पत्तिरित्यत आह, वधुषु महावतरणमिति वधुषु नवमस्कन्धे भक्तिरुक्ता तद्बीजं भवनक्लेशमारहारणायेति निमित्तं दशमस्कन्धे प्रपञ्चितमेतत् गुणातीतत्वे हेतुः सुरैरपि दुष्कराणीति अपिशब्दात् तिर्यग्भिः गुणिनामकार्यं करोतीति अनेन चरित्राण्यनन्तानीति सूचितं बुद्धावतारमाह, वादैर्विमोहयतीति । वादैरिति बहवो वादाः सांप्रत लुब्धाः मनईहा यत्रो मा गच्छन्त्विति मतिव्यामोहव्यतिरेकेण न दृढप्रतीतिर्भवतीति वादाः विशेषेण मोहो विपरीते धर्मबुद्धिः यज्ञकृत यज्ञार्थं स्वयमन्तर्हितो भगवान् यज्ञानन्तभावत्वात्मस्थः । कोऽयं पुरुषार्थ इत्याशङ्क्याह, अतदर्हान् यज्ञानर्हान् कलौ क्षितिभुजमावे कुपवगोलकवाक्छलये वादैरेव तानिश्चयः

आत्मज्ञानकस्यैव वेदवेदार्थयोरन्यथा बुद्धिरित्यर्थः । त्रैगुण्यविषया इति योगशास्त्रं योगिनस्तु मर्यादां प्रवाहनिवृत्तये आहुः गुणमयान् पुरस्कृत्य निर्गुणान् करोतीत्यर्थः । अत एवायमेवार्थो यावानित्यत्र निवृत्तः अतः परीक्षार्थं वेदनिन्देति सर्वं सुस्थं कल्किचरित्रमाह, शूद्रानिति । क्षितिभोक्तृत्वमधर्माणां माऽभूदिति वर्णाः कालव्यूहस्वरवादिकृताः ते क्रमशः क्रियमाणाः शुक्लतमसा शूद्रपर्यवसायिनो भवन्ति प्रान्तभागे कलौ हननम् ॥ २२ ॥

उपसंहरति । एवं विधानि धर्मसंस्थापनप्रकाराणि अनादिसिद्धो धर्मो जन्मना स्थिरो भवति कर्मणा चोपघातनिवृत्तिः धर्मो हि जगत उपष्टम्भकः धर्मे रक्षिते रक्षितं जगत् स वै पतिः स्यादिति न्यायाज्जगत्पतिः प्रकारेऽपि बाहुल्यार्थमाह, भूरीणीति । तत्र हेतुः भूरियशस इति धर्मार्थकाममोक्षभक्तिप्रपत्त्यादिपुरुषार्थेषु स्थापकत्वेन भूरीणि यशांसि यस्य तानि न केवलं गुणानि कविभिरित्यर्थात् महाभुजेति क्रियाशक्तिप्राधान्यात् उक्तविश्वासः ॥ २३ ॥

इति श्रीभागवतसुबोधिन्यां श्रीमद्वल्लभदीक्षितविरचितायाम्
एकादशस्कन्धविवरणे चतुर्थाध्यायविवरणम् ॥ ४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

सलङ्कं लङ्कास्थसर्ववीरसहितमित्यर्थः । जयतीति । कथाया अस्यास्तत्कालभवत्वात्तस्मिन्नादरविशेषो वक्तुः ॥ २१ ॥

विमोहयति विमोहयिष्यति बुद्धः न्यहनिष्यत् निहनिष्यति कल्किः ॥ २२ ॥ २३ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
एकादशे चतुर्थोऽध्यायः सङ्गतः सङ्गतः सताम् ॥ ४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

हैहयकुलात्ययार्थं भार्गवाग्निः जमदग्न्याख्याद्भार्गवाज्जातोऽग्निः रामः गां पृथिवीं निःक्षत्रियामकृत स विष्णुः दासरथिः रामस्तु भूत्वा अब्धिं बबन्ध । सलङ्कं लङ्काशब्दस्तत्रत्यासुरसमूहपरः लङ्कागतासुरसमूहसहितं दशवक्त्रं रावणमहन् सच सीतापतिर्लोके जयति ॥ २१ ॥

अजन्मा स्वयमवतारी बुद्धावतारे अतदर्हान् यज्ञानर्हान् असुरान् विमोहयति कल्क्यवतारे शूद्रान् क्षितिभुजो नृपान् कलौ अन्ते न्यहनिष्यत् निहनिष्यति ॥ २२ ॥

वर्णितानि ऋषिभिस्तत्र तत्रेति शेषः ॥ २३ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
चतुर्थोऽध्यायार्थप्रकाशः ॥ ४ ॥

भाषा टीका ।

परशुराम अवतार में भगवान् ने हैहय राजा के कुल के नाश करने को भृगुवंश में जन्म लेकर अग्निवत् प्रकाशमान् होकर इस पृथिवी को एक बीसवार क्षत्रियों से रहित कर दिया उन्हीं भगवान् ने समुद्र को बांधकर लंका के राक्षसों के सहित रावण को मारा जिनके चरित्र के कथन से सब लोगों के पाप नष्ट होते हैं वे श्रीसीतापति रामचन्द्र जी इस समय अयोध्या में विराजमान हैं ॥ २१ ॥

फिर अजन्मा भी भगवान् पृथिवी के भार उतारने के लिये यदुवंश में अवतार लेकर देवताओं से भी नहीं होने वाले कार्यों को श्रीकृष्णावतार में करेंगे फिर बुद्ध अवतार में जो यज्ञ करने लायक नहीं हैं उन लोगों को वेद का निन्दा वाद करके मोहित करेंगे फिर कलि के अन्त में कल्की अवतार लेकर शूद्र जाति के राजाओं को मारेंगे ॥२२॥

हे महाबाहु जनक जी ! बड़े भारी यशोंवाले जगत् पति भगवान् के इस प्रकार के बहुत से जन्म तथा कर्म शास्त्रकारों ने वर्णन किये हैं ॥ २३ ॥

इति श्रीमद्भागवत एकादश स्कन्ध चतुर्थऽध्याय
श्रीवृन्दावनस्थ पं० भागवताचार्यकृत
भाषा टीका समाप्ता ॥ ४ ॥

---

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे चतुर्थोऽध्यायः ॥ ४ ॥

—:*:—

## अथ पञ्चमोऽध्यायः ।

———:*:———

राजोवाच ।

भगवन्तं हरिं प्रायो न भजन्त्यात्मवित्तमाः ! ।
तेषामशान्तकामानां का निष्ठाऽविजितात्मनाम् ॥ १ ॥

चमस उवाच ॥

मुखबाहूरुपादेभ्यः पुरुषस्याश्रमैः सह ।
चत्वारो जज्ञिरे वर्णा गुणैर्विप्रादयः पृथक् ॥ २ ॥
य एषां पुरुषं साक्षादात्मप्रभवमीश्वरम् ।
न भजन्त्यवजानन्ति स्थानाद्भ्रष्टाः पतन्त्यधः ॥ ३ ॥
दूरे हरिकथाः केचिद्दूरे चाच्युतकीर्तनाः ।
स्त्रियः शूद्रादयश्चैव तेऽनुकम्प्या भवादृशाम् ॥ ४ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

पञ्चमे भक्तिहीनानां का निष्ठा को युगे युगे ॥
पूजाविधिरिति प्रश्नद्वयस्योत्तरमुच्यते ॥ १ ॥

त्वां सेवतां सुरकृता बहवोऽन्तराया इत्यनेन श्रीहरिभक्ता विघ्नमूर्ध्नि पदं दत्त्वा परां गतिं यान्ति अभक्तानां तु विघ्ना भवन्तीत्युक्ते तर्हि तेषां का गतिर्भवतीति पृच्छति—भगवन्तमिति । हे आत्मवित्तमाः ! अविजितात्मनाम् एवाशान्तकामानां का निष्ठा किं प्राप्यमित्यर्थः ॥ १ ॥

स्वजनकस्य गुरोर्भगवतोऽभजनाद् गुरुद्रोहेण दुर्गतिं यान्तीति वक्तुं भगवतः सकाशाद्वर्णाश्रमाणामुत्पत्तिमाह—मुखात । गुणैः सत्त्वेन विप्रः सत्त्वरजोभ्यां क्षत्रियः रजस्तमोभ्यां वैश्यः तमसा शूद्र इति ॥ २ ॥

एषां मध्ये येऽज्ञात्वा न भजन्ति ये च ज्ञात्वाऽप्यवजानन्ति आत्मनः प्रभवो जन्म यस्मात्तम् तदभजने कृतघ्नतामप्याह—ईश्वरमिति । स्थानाद्वर्णाश्रमाद्भ्रष्टाः ॥ ३ ॥

तत्र येऽज्ञास्ते भवादृशानामनुग्राह्या इत्याह—दूर इति । दूरे हरिकथाश्रवणं येषां ते अत एव दूरे चाच्युतकीर्तनं येषां ते दूरेऽच्युतकीर्तना इति वा ॥ ४ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

का निष्ठा किं प्राप्यं पूजाविधिः पूजाप्रकारः पूर्वाध्याये-नान्तरसङ्गतिमाह—त्वां सेवतामित्यादिना । तेषामभक्तानां का गतिः किं प्राप्यम् अत एव अजितात्मत्वादेव ॥ १ ॥

चमसशब्दस्य पात्रवाचकत्वात् कृपापात्राणां गतिवर्णनं सत्पात्रेणैव कर्तुं शक्यमिति चमस एवोवाचेति ज्ञेयम् ॥

मुखबाहूरुपादेभ्यः विप्रादयो यथासङ्ख्यं जज्ञिरे आश्रमेषु तु तदुपलक्षणमेव यथोक्तं "गृहाश्रमो जघनतो ब्रह्मचर्यं हृदो मम । वक्षःस्थलाद्वने वासो न्यासः शीर्षणि च स्थितः" इति ॥ २ ॥

आत्मप्रभवमिति गुरुद्रोह उक्तः । तदभजने भगवदभजने कृतघ्नतामपीत्यपिरत्र गुरुद्रोहं समुच्चिनोति ॥ ३ ॥
तत्र अज्ञाऽवज्ञात्रोर्मध्ये अत एव हरिकथाश्रवणाऽभावादेव द्वितीयेऽर्थे अच्युतं कीर्तयन्तीति भक्ता एवोक्ताः ॥ ४ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

आत्मवित्तमा इति सम्बोधनम् न भजन्ति इति द्वेषपर्यन्तमभजतामिति विवक्षितं प्रतिवचनानुगुण्यात् ॥ १—४ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तान्यस्य बर्हिषि बलीन्बलतः स्वभागानित्यनेन भगवन्तमसेवमानानां सुरकृता विघ्ना न सन्तीत्युक्ते तत्र सर्वेषां भगवत्सृष्टत्वाविशेषेऽपि कुतः केषांचिदेव भगवत्सेवारुचिः केषांचित्तदभाव इत्यभजन्तश्च कीदृशाः कां वा गतिं यास्यन्तीति

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

पृच्छति—भगवन्तमिति । यद्यपि मुमुक्षूणां शिश्नोदरपरायणानां वार्त्तानुपयुक्तत्वान्न प्रष्टव्या तथापि यत्नेन तत्सङ्गपरिहाराय तत्प्रश्न इत्यवधेयम् आत्मवित्तमा ! इति सम्बोधनं तेषामविजितात्मनामजितेन्द्रियाणामत एवाशान्तकामानां का निष्ठा आसक्तिः कुत्रासक्तिः किं प्राप्यं कस्तत्र हेतुः कीदृशाश्चेति प्रश्नाशयः प्रतिवचनानुगुण्यात् ॥ १ ॥

तत्र तावद्भगवत्सेवारुचितदभावयोर्हेतुमसेवतां गतिं चमस आह द्वाभ्याम् । मुखेति । पुरुषस्य चतुर्मुखशरीरकस्य भगवतः मुखबाहूरुपादेभ्यः गुणैः सत्त्वरजस्तमोभिरुपलक्षिताः पृथगाश्रमैः कर्मणा विप्रादयः चत्वारो वर्णाश्चतुर्भिराश्रमैः सह जज्ञिरे गुणैरित्यनेन सात्त्विकानां भगवत्सेवारुचिर्नान्येषामिति सूचितम् ॥ २ ॥

एषां चातुर्वर्ण्यचातुराश्रम्य व्यवस्थया व्यवस्थितानां मध्ये ये जनाः साक्षादात्मनां प्रभवं कारणभूतमीश्वरं सर्वनियन्तारं पुरुषं परमपुरुषं न भजन्ति अवजानन्ति देवतान्तरसमत्वेन मन्यन्ते तदेव ह्यवज्ञानं तथा चोक्तं भागवते तन्त्रे—

"यस्तु नारायणं देवं समत्वेनावमन्यते ।
स तु तेनावमानेन नरकान्नातिवर्तते" ॥

इति ते स्थानाद्वर्णाश्रमाद्भ्रष्टा अधः पतन्ति नरके पतन्ति आत्मप्रभवं न भजन्तीत्यनेन तेषां कृतघ्नता सूचिता ॥ ३ ॥

ननु, सत्यमात्मप्रभवत्वेश्वरत्वसर्वोत्कृष्टत्वादिज्ञाने सत्यपि तमभजतां कृतघ्नत्वादिदोषान्नरकपात इति ये तु तादृशज्ञानरहिताः केवलमज्ञास्तेषां का गतिरित्यत्राह—दूर इत्यादिना । दूरे हरिकथा तच्छ्रवणं येषां ते दूरेऽच्युतकीर्तनं येषां ते शास्त्रानधिकारादिति भावः । के त इत्यत्राह—स्त्रियः शूद्रादयश्च जनास्ते भवादृशां भागवतानामनुकम्प्याः दयनीयाः भागवतकृपाविषयाश्चेत्तेऽपि मुच्यन्ते एवेति भावः ॥ ४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अत्र भगवद्भक्तलोकविशेषो राजा भगवद्विमुखानां कर्दिमस्थाने स्थितिरिति पृच्छति—भगवन्तमिति । हे आत्मवित्तमाः ! ॥ १ ॥

हरेः पितृत्वेनात्मनोपकर्तृत्वात्तद्भजनाद्विद्वेषोऽधःपातहेतुरिति तद्भक्तानां तमस्येव निष्ठेति वक्तुं भगवदवयवेभ्यो वर्णाश्रमाणामुत्पत्तिप्रकारमाह—मुखेति । शमादिगुणैः ॥ २ ॥

एषामुत्पन्नानां मध्ये आत्मप्रभवं स्वोत्पादकं पितरमित्यर्थः पितुर्हरेः स्थानाद्वैकुण्ठादिलक्षणाद्भ्रष्टाः ॥ ३ ॥

अस्याद्यर्थविचारानधिकृतत्वेन हरिकथाश्रवणकीर्तनादिसाधनानां स्त्रीशूद्रादीनां श्रेयःसाधनमाह—दूरे हरिकथा इति । भवादृशानामनुकम्पाविषयत्वे हरिकथाश्रवणादधिकारिणः स्युरिति भावः । अच्युतस्य कीर्तनं येषामस्ति ते अच्युतकीर्तनाः ते च दूरे ॥ ४ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

॥ १ ॥

मुखबाह्विति विराट् तदन्तर्यामिणोरभेदोक्तिः मुखबाहूरुपादेभ्य इत्युपलक्षणमेवाश्रमेषु यथोक्तम्—

"गृहाश्रमो जघनतो ब्रह्मचर्यं हृदो मम ।
वक्षःस्थलाद्वने वासो न्यासः शीर्षणि संस्थितः" ॥

इति ॥ २ ॥

न भजन्त्यत एवावजानन्तीत्यर्थः । यद्वा, केचिदश्रुत्वा न भजन्ति केचिच्छ्रुत्वापि न भजन्ति चेदवजानन्त्येवेत्यर्थः । स्थानाद्वर्णाश्रमरूपात्स्वाश्रमाद्भ्रष्टाः सन्तः क्रमादधोऽधो गच्छन्तीत्यर्थः ॥ ३ ॥

तत्र पूर्वाननुग्राहयति—दूर इति ॥ ४ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

वक्ता श्रोता तथा वाक्यं त्रिभिरुक्तं विशेषतः ।
लोके सर्वत्रप्रवृत्तौ प्रामाण्यं कुण्ठितं भवेत् ॥
अतस्तत्साधकाध्यायश्चतुर्थोऽयमुदाहृतः ।
देशकालस्वभावानां निर्द्धारक उदाहृतः ॥
अस्यार्थो भगवद्देशे स्थित्वाऽलौकिकगीतितः ।
निराकृत्यान्यथा वादान् शुद्धः कृष्णं भजेदिति ॥

स्वभावविजयाय भ्रमवादान् निराकर्तुं पृच्छति—भगवन्तमिति । सर्वेष्टसिद्धिः हरिमिति सर्वानिष्टनिवृत्तिः एतादृशमपि बाहुल्येन न भजन्ति आत्मविदः सर्वज्ञाः तत्रापि भगवन्मार्गविदः श्रेष्ठा इति सम्बोधनं ज्ञानयोगाभावाय विशेषणत्रयम् इह लोके परलोके वा किं फलमित्यर्थः । यद्यपि प्रवाहफलमेव फलमभजनमात्रे अपदोषतैव विगुणस्य गुणा इति परं प्रवाहस्थः किञ्चिज्ज्ञो न तिष्ठति निन्दामकुर्वाण इति प्रश्नः । नन्वत्रापि निन्दाया निषिद्धत्वान्नरकपात इति कः सन्देह इति चेत् सत्यम् । भगवद्भक्तान् विकर्मस्थान् मत्वा धर्मस्थापनार्थं तान्निन्दतीति प्रवाहफलमेव सेत्स्यतीति सन्देहः अभजनयोग्यता हि निन्दका भवति अशान्तकामत्वात् प्रवाह एव स्थितिः अविजितेन्द्रियत्वान्निषिद्धकरणमपि वैदिकत्वाच्च सन्देहवृत्तिः अविजितेन्द्रियान् सकामानपि वेदस्तारयतीति मार्गान्तरस्थास्तु स्वभावत एव पतिता इति वैदिकस्यैव प्रश्नाभिप्रायः उत्तरमाह—सप्तदशभिः । तेषां योगस्य तथात्वात् चमस उवाच सिद्धान्ता हि पञ्च तत्र वैष्णवा भक्तास्तेषु शैवा निन्दकाश्चेत्पाषण्डनः, साङ्ख्ययोगयोर्निषेधः प्रश्न एव कृतः अतो वैदिका अज्ञाश्चावशिष्यन्ते प्रवाहपतिता लोकचतुराश्च ॥ १ ॥

तत्र प्रवाहपतितलोकचतुराणां गतिमाह—द्वाभ्याम् । संन्यासवानप्रस्थब्रह्मचारिगृहस्थाः वर्णा इव तथा सत्याश्रमस्थानां त्रैगुण्यं सत्त्वाद्ब्राह्मणाः रजसा क्षत्रियाः रजस्तमोभ्यां वैश्याः ॥ २—३ ॥

इति श्रीवल्लभाचार्यविरचितैकादशस्कन्धस्यैतावती विवृतिः ॥

---

विप्रो राजन्यवैश्यौ च हरेः प्राप्ताः पदान्तिकम् ।
श्रौतेन जन्मनाऽथापि मुह्यन्त्याम्नायवादिनः ॥ ५ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

पञ्चमे चमसो विष्णुविमुखानां सुदुर्गतिम् ।
युगधर्मोर्चनारीस्तु प्रोवाच करभाजनः ।

एवं कृपयावतारैः स्थापितयशस्यापि भगवति विमुखीभूय किं लिप्सन्ते इत्युद्भूतविस्मयः पृच्छति–भगवन्तमिति । इ आत्मविदमाः का निष्ठा किं प्राप्यामित्यर्थः ॥ १ ॥

भजनीयस्य भगवतोऽभजनाद्दुर्गतिरेवेति वक्तुं प्रथमं भजनीयत्वे युक्तिमाह—मुखेति । गुणैः सत्त्वेन विप्राः सत्त्वरजोभ्यां क्षत्रियाः रजस्तमोभ्यां वैश्याः तमसा शूद्राः । अत्र मुखादिभ्य आश्रमैः सह चत्वारो वर्णा जज्ञिरे इत्यन्वये आश्रमाणामपि मुखादिभ्य एवोत्पत्तिः प्रसज्जते साच न तथा यद्दृश्यते—

"गृहाश्रमो जघनतो ब्रह्मचर्यं हृदो मम ।
वक्षःस्थलाद्वने वासो न्यासः शीर्षणि संस्थितः" ॥

इति तस्मात्मुखबाहूरुपादेभ्य इत्यतः प्राग्जघनहृद्वक्षःमस्तकादिभ्यश्चाहृतस्तत्र जघनादिभ्यो मुखादिभ्यश्च आश्रमैः सह क्रमेण वर्णा जज्ञिरे इति सङ्गतम् ॥ २ ॥

एषां मध्ये ये न भजन्ति आत्मनः प्रभवो यस्मात्तम् आदिपितरमित्यर्थः ।[अत्र अज्ञात्वा च न भजन्तीत्यसन्तो द्विविधाः "अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम्" इति भगवदुक्तेर्मानुष्यतनोर्मायामयत्वमानमेवावज्ञा तद्वन्तो भजन्तश्च इहा इत्यवजानन्तश्च द्विविधाः] न भजन्त्यत एवावजानन्ति अवश्यभजनीयस्य गुरोरभजनमेवावज्ञेति भावः । स्थानाद्वर्णाश्रमलक्षणात् ॥ ३ ॥

तत्र येऽज्ञास्ते भवद्विधानामनुग्राह्या एवेत्याह–दूरे इति । दूरे हरिकथा येषां ते ये साधुसङ्गभाग्यहीना इत्यर्थः । दूरे अच्युतस्य कीर्त्तनं येषां ते इति येच साधुसङ्गेऽपि वञ्चिता इत्यर्थः । ते अनुकम्प्या इति तत्राद्या भक्त्युपदेशेन द्वितीया मूर्द्धि चरणधूलिदानेन च कृतार्थी कार्या इत्यर्थः ॥ ४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

"श्रीको विलङ्घ्य भजतां परमं पदं ते" इति भगवद्भक्तप्राप्य वाक्यं श्रुत्वा तदभक्तानां का गतिरिति पृच्छति—भगवन्तमिति । हे आत्मवित्तमाः ! यद्वा, ये प्रायः आत्मवित्तमाः प्रायग्रहणेन ये नात्मविदश्च हरिं न भजन्ति तेषाम् अविजितात्मनामज्ञाधीनम् नरकानामत एवाशान्तकामानामसमाप्तभोगानाम् का निष्ठा किं प्राप्यमित्यर्थः । आत्मज्ञानं लब्ध्वापि हरिविमुखो भोगासक्तश्च निन्द्य एव —

"येऽन्येऽरविन्दाक्ष विमुक्तमानिनस्त्वय्यस्तभावादविशुद्धबुद्धयः ।
आरुह्य कृच्छ्रेण परं पदं ततः पतन्त्यधोऽनादृतयुष्मदङ्घ्रयः" ॥

इति वचनात् —

"आत्मानं चेद्विजानीयादयमस्मीति पूरुषः ।
किमिच्छन्कस्य कामाय शरीरमनुसंज्वरेत्" ॥

इति वचनाच्च ॥ १ ॥

स्वजनकद्रुहः कृतघ्नत्वेन दुर्गतिं यान्तीति वक्तुं भगवतः सर्वजनकत्वमाह–मुखेति । गुणैः सत्त्वादिभिर्हेतुभूतैः यद्वा शमादिभिः स्वासाधारणधर्मैः पृथग्भूता वर्णा आश्रमैः सह जज्ञिरे ॥ २ ॥

एषां पुरुषमुखादिभ्यः जातानां मध्ये ये आत्मप्रभवं स्वजनकं न भजन्ति प्रत्युत तत्र केचिदात्मविस्तमत्वाभिमानेन अवजानन्ति तत्र केचित् परमेश्वरं जीवमात्रं गतं प्रतिपादयन्ति केचिद्देवतान्तरसमत्वेन प्रतिपादयन्ति ते स्थानात् वर्णाश्रमात् भ्रष्टाः अधः पतन्ति एवं भूतानां भगवत्पराङ्मुखानां आत्मानमात्मविस्तमं मन्यमानानामधोगतित्वम्—

"योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते ।
किं तेन न कृतं पापं चौरेणात्मापहारिणा ।
यस्तु नारायणं देवं समत्वेनाभिमन्यते ।
स तु तेनापमानेन नरकान्तर्निपात्यते" ॥

इत्यादिश्रुतिस्मृतय आहुः ॥ ३ ॥

एवमात्मविदां हृष्यवज्ञाकर्तृणामधोगतिमुक्त्वा येतु प्रायग्रहणेन अनात्मविदः प्रागुक्तास्ते द्विविधाः । केचित्स्त्रीशूद्रादयः केचिदाम्नायवादिनस्तत्र पूर्वे सुसाध्यत्वादनुग्राह्या इत्याह—दूरे इति । दूरे हरिकथाः येषां ते अत एव दूरे अच्युतकीर्त्तनं येषां ते स्त्रियः शूद्राश्च आदिना तेभ्योऽपि निकृष्टाः अनुलोमजाः प्रतिलोमजाश्च ॥ ४ ॥

---

भाषा टीका ।

राजोवाच ।

आत्मज्ञानी मुनि जनो । प्रायः करके कितनेक पुरुष भगवान् हरि को नहीं भजते हैं उनकी कामना भी शांत नहीं होती है वे अजितेन्द्रिय हैं उनकी क्या गती होती है ॥ १ ॥

चमस उवाच महा पुरुष नारायण के मुखबाहु उरु पादों से चारों वर्ण तथा चार आश्रम भये हैं जो कि भिन्न भिन्न ब्राह्मण ब्रह्मचारी आदिक हैं सो सत्वादिगुणों से हैं ॥ २ ॥

इन सबों के मध्य में से जो अपनी उत्पत्ती करने वाले ईश्वर को नहीं भजते हैं और अवज्ञा करते हैं वे अपने स्थानों से भ्रष्ट होकर नरकों में पडते हैं ॥ ३ ॥

कोइतो श्रीहरि के कथा से दूर रहते हैं कोइ भगवत् नाम संकीर्तन से दूर रहते हैं वे स्त्री होवें अथवा शूद्र होवें पर तुम सरी के पुरुषों को उनपर कृपा करनी चाहिये ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

ज्ञानलवदुर्विदग्धास्त्वचिकित्स्यत्वादुपेक्ष्या इत्याशयेनाऽऽह-विप्र इति । श्रौतेनोपनयनाख्येन उपलक्षणमेतत् अध्ययनादिनापि हरेः पदान्तिकं तद्भजनोत्तमाधिकारं प्राप्ता अपि मुह्यन्ति

कर्मण्यकोविदाः स्तब्धा मूर्खाः पण्डितमानिनः ।
वदन्ति चाटुकान्मूढा यया माध्व्या गिरोत्सुकाः ॥ ६ ॥
रजसा घोरसङ्कल्पाः कामुका अहिमन्यवः ।
दाम्भिका मानिनः पापा विहसन्त्यच्युतप्रियान् ॥ ७ ॥
वदन्ति तेऽन्योऽन्यमुपासितस्त्रियो गृहेषु मैथुन्यपरेषु चाशिषः ।
यजन्त्यसृष्टान्नविधानदक्षिणं वृत्त्यै परं घ्नन्ति पशूनतद्विदः ॥ ८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

कर्मफलेषु सज्जन्ते कुतः? आम्नायेषु ये वादा अर्थवादास्ते मोहकतया विद्यन्ते येषां ते तदुक्तं गीतासु—

"यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः ।
वेदवादरताः पार्थ ! नान्यदस्तीति वादिनः" ॥

इत्यादिना ॥ ५ ॥

भक्तिमार्गदार्ढ्याय तेषां मोहं प्रपञ्चयिष्यति, कर्मणीत्यादिना । अकोविदा यथा बन्धकं न भवति तथा कर्म कर्तुमज्ञाः न चाभिज्ञान्पृच्छन्ति यतः स्तब्धा अनम्राः स्तब्धत्वे हेतुः यतो मूर्खा अपि पण्डिता वयमिति मानवन्तः । अतः "अपाम सोममममृता अभूम अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति यत्र नोष्णं न शीतं स्यान्न ग्लानिर्नाप्यरातयः" इत्यादिकया यया माध्व्या गिरोत्सुकाः सन्तो मूढास्तया चाटुकानप्सरोभिः सह विहरिष्याम इत्यादिप्रियान् वाक्यान्वदन्ति ॥ ६ ॥

किञ्च, तेषां कर्माभिनिवेशात्कामक्रोधदम्भादयो वर्धन्त इत्याह त्रयेण, रजसेति । घोरोऽभिचारादिः सङ्कल्पो येषां ते अहिवन्मन्युर्येषां ते ॥ ७ ॥

कामुकत्वं प्रपञ्चयति—वदन्तीति । उपासिताः स्त्रियो यैस्ते तु मैथुन्यं मिथुनसुखमेव परं नत्वात्मसुखादि येषु गृहेषु तेष्वाशिषो वदन्ति—

"इदमद्य मया लब्धमिमं प्राप्स्ये मनोरथम् ।
इदमस्तीदमपि मे भविष्यति पुनर्धनम्" ॥

इत्याकाराः दाम्भिकतां प्रपञ्चयति, यजन्तीति । असृष्टान्नविधानदक्षिणं न सृष्टं न सम्पादितमन्नविधानं दक्षिणा यथा तथा यजन्ति तदा च वृत्त्यै जीविकार्थं परं केवलं पशून् घ्नन्ति अतद्विदो हिंसादोषानभिज्ञाः ॥ ८ ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

ज्ञानस्य लवेन लेशेन दुर्विदग्धाः नैपुण्याभावाज्ज्ञातुमशक्याः । अचिकित्स्यत्वाच्चिकित्सारहितत्वादनियन्त्र्याऽहङ्कारव्याधित्वात् उपेक्ष्या एवाः । अर्थवादाः "अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवतीत्यादिलक्षणाः तत् अर्थवादमुख्यत्वं पुष्पितां पुष्पवदापातरमणीयां प्रवदन्ति प्रकृष्टफलां वदन्ति वेदवादरताः वेदेषु येऽर्थवादास्तेष्वेव रताः अभिनिविष्टाः स्वर्गादन्यत् फलं नास्तीति वादिनः ॥ ५ ॥

अनिन्द्ये निन्दा निन्दयितुं न प्रवर्तते किन्तु विधेयं स्तोतुमिति न्यायेन विधेयस्य भक्तिमार्गस्य दृढीकरणाय तेषां काम्यकर्मिणां मीमांसकानाम् अतः पण्डितमानित्वात् सोमममृतमपाम पास्यामः अमृताः मरणशून्या भविष्यामः चातुर्मास्यसंज्ञकेन यागेन यष्टुं शीलं यस्य तस्य सुकृतमपूर्वम् अक्षय्यमविनश्वरम् । यत्र स्वर्गे ग्लानिर्बलक्षयः माध्व्या मादकया ॥ ६ ॥

अभिनिवेशः स्वीकृतस्य पुनस्त्यागासहिष्णुत्वम् अभिचार्यते मार्यतेऽनेनेत्यभिचारो मारणप्रयोगः आदिना परस्त्रीवशीकरणादिः ॥ ७ ॥

उपासिताः पादपतनादिभिः सेविताः आतिथ्यादि आतिथ्यमतिथियोग्यसत्कारः आदिनार्चनपुराणश्रवणादिपरिग्रहः । मूर्खोऽनध्याह्यो आशिष एव ननु ज्ञानवैराग्यादिवार्ताः । अन्नविधानदक्षिणा अन्नविधानमन्नप्रदानं तत्सहिता दक्षिणा तदा च अन्नविधानाद्यभावे ॥ ८ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

श्रौतेन वेदसंयोगत्वेन ॥ ५ ॥ ६ ॥
अभिमन्यवः अभिमानपराः ॥ ७ ॥
उपासितस्त्रियः परतन्त्राः आशिषो वदन्ति तत्कारणं प्रलोभनं जनयन्तीत्यभिप्रायः असृष्टान्नविधानदक्षिणाः सोमादयज्ञीयमात्राच्छादनदक्षिणाः वृत्त्यै जीवनार्थम् ॥ ८ ॥ ९ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ये तु सत्यपि शास्त्राधिकारे तज्जन्यज्ञाने च मौर्ख्यान्न भजन्ति तेऽधः पतन्त्येवेत्यभिप्रेत्याह—विप्र इति । विप्रादयस्त्रयः श्रौतेन वेदसंयोगाख्यया तज्जन्यज्ञानेन च हरेः पदान्तिकं हरिचरणाम्बुजप्राप्तिसाधनानुष्ठानयोग्यमधिकारं प्राप्ताः अप्येवं यथापि मुह्यन्ति मोहं प्राप्नुवन्ति न हरिपादाब्जं भजन्ति, किन्तु स्वर्गाद्यर्थकर्मसु सज्जन्त इत्यर्थः । तत्र हेतुत्वेन विशिनष्टि—आम्नायवादिन इति । आम्नायेषु वेदेषु वादा अर्थवादास्ते मोहकतया विद्यन्ते येषां ते तथा तदुक्तं भगवता—

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

"यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः।
वेदवादरताः पार्थ! नान्यदस्तीति वादिनः" ॥

इत्यादिना ॥ ५ ॥

तेषां मोहमेव प्रपञ्चयति—कर्मण्यकोविदा इत्यादिना। यथा बन्धाय न भवति तथा कर्मकर्तुमज्ञाः नष्टाभिज्ञान्पृच्छन्ति, यतः स्तब्धा अनम्राः तत्र हेतुः मूर्खा अपि पण्डितानात्मनो मन्यन्ते इति तथा "अपाम सोमम् अमृता अभूम अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति यत्र नोष्णं न शीतं न ग्लानिर्न व्याधय" इत्यादिकया माध्व्या श्रोत्रप्रियमात्रकारिण्या गीरा उत्सुकाः सन्तो मूढाः तथा चाटुकानप्सरोभिः सह चरिष्याम इत्येवं विधानि प्रियवाक्यानि वदन्ति ॥ ६ ॥

किञ्च तेषां कर्माभिनिवेशात्कामक्रोधदम्भादयो वर्द्धन्त इत्याह रजसेति त्रिभिः। घोरोऽभिचारादिसङ्कल्पो येषां ते अहेः सर्पस्येव मन्युर्येषां ते मानिनः दुरहङ्कारिणः अच्युतप्रियान् विहसन्ति ॥ ७ ॥

कामुकत्वं प्रपञ्चयति। वदन्तीति। उपासिताः स्त्रियो यैस्ते न तु वृद्धोपसेविनः मैथुनं मिथुनसुखमेव परमुत्कृष्टं येषु तेषु गृहेषु अन्योऽन्यमाशिषो वदन्ति—

"इदमद्य मया लब्धमिदं प्राप्स्ये मनोरथम् ॥
इदमस्तीदमपि मे भविष्यति पुनर्धनम्" ॥

इत्यादिकान् प्रवदन्ति तदुद्भावेन परोचनां जनयन्ति इत्यभिप्रायः दाम्भिकतां प्रपञ्चयति यजन्तीति असृष्टान्नविधानदक्षिणं लोभाद्रव्यीयमानान्नाच्छादनदक्षिणं यथा तथा यजन्ति वृत्त्यै जीवनार्थं परं केवलं पशून् घ्नन्ति अतद्विदः हिंसादोषानभिज्ञाः ॥ ८ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

विप्रादीनां हरिभक्त्यभावे श्रुतिविचारो न मोक्षहेतुरित्याह—विप्र इति। विप्रादयः श्रौतेन श्रुतिविचारयोग्येन जन्मना हेतुना हरेः पदान्तिकं प्राप्ताः हरिपदसमीपप्राप्तियोग्याः यद्यप्यथापि आम्नायेन सह वादः विवादो येषामस्तीति आम्नायवादिनः हरिभक्तिलक्षणमुख्यार्थापरिज्ञानात् मुह्यन्ति तत्त्वं न जानन्तीत्यर्थः अतः मान्त्रिकम् अप्रयोजकं किन्तु हरिभक्तिरेवेत्यर्थः ॥ ५ ॥

ननु, वेदोक्तकर्मणां तत्त्वज्ञानोत्पत्तेः कथं तेषां मोहः "कर्मणा ज्ञानमातनोति" इति श्रुतेरित्याशङ्क्य आम्नायविवादित्वेन सम्यक् समुचितकर्मतत्त्वापरिज्ञानाद्विशेषग्रहप्रस्तावादित्याह—कर्मणीति। अकोविदत्वे हेतुः स्तब्धा इति, तत्र मूर्खा इति मूढत्वेन अन्वयः मा तु यावत्यत्यतः पण्डितमानिन इति यतो मूढाः यथा माध्व्या स्वर्गादिमधुवादिन्या गिरा यथा मधूनि गिरतीव प्रियतया वाचा उत्सुकाः जिह्वारसं लभन्तः तथा चाटुकान् स्वर्गादिविषयवचनविशेषान्वदन्ति ॥ ६ ॥

किञ्चात इति अत आह—रजसेति। तत्र जनितेन रजसा रागेण घोरो निष्ठुरः पश्वालम्भनादिलक्षणः येषां ते तथा कामुकाः विषयलोलुपाः तद्विघ्नकर्तॄन् अभिमन्यवः अभितः मन्युरेव प्रधानो येषां ते तथा एवंविधाः पापाः अच्युतप्रियान् विहसन्ति पृथक् पृथक् दोषानुक्त्वा विहसन्तीत्यन्वयः ॥ ७ ॥

एतदेव विवृणोति—वदन्तीति। गृहेषु स्थित्वान्योऽन्यमाशिषो वाक्यप्रबन्धान् निजगुणोत्कर्षलक्षणान् वदन्ति तत्र हेतुरुपासितस्त्रिय इति किञ्चासृष्टान्नविधानदक्षिणाः अदत्तान्नविच्युतगुरुदक्षिणाः परं केवलं वृत्त्यै जीवनोपायार्थं पशूनजादीन् घ्नन्ति नरकाद्भयं तेषां कुतोऽतद्विदस्तत्त्वाज्ञाः ॥ ८ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

उत्तरानुपेक्ष्यति। विप्र इति। आम्नायवादिनो जैमिनीयाः आम्नायः कर्मकाण्डं ते हि तन्मात्रवदनशीलास्तत्त्व सुतरां तु ब्रह्मकाण्डस्य याथार्थ्यावेदिनोऽनीश्वरवादिनः ॥ ५ ॥

तेषां मोहमेवाह—कर्मण्यकोविदा इति ॥ ६ ॥

अधःपातौ च क्रमेण दर्शयति—रजसेति त्रिभिः। तत्र प्रथमेन सर्वेषामेव तेषां निन्दा द्वितीयेन विप्राणां तृतीयेन राजन्यवैश्यानामिति ज्ञेयम् ॥ ७ ॥ — ॥ ९ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

ज्ञानवद्वहिर्मुखानामसाध्यत्वाचिकित्स्यत्वादुपेक्ष्य पवेत्याशयेनाह—विप्र इति। श्रौतेन उपनयनाख्येन उपलक्षणमेतत् अध्ययनादिनापि हरेः पदान्तिकं तद्भजनोत्तमाधिकारं प्राप्ता अपि मुह्यन्ति कर्मफलेषु सज्जन्ति। कुतः? आम्नायेषु ये वादा अर्थवादास्ते मोहकतया विद्यन्ते येषां ते तदुक्तं गीतासु—

"यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः।
वेदवादरताः पार्थ! नान्यदस्तीति वादिनः" ॥

इति ॥ ५ ॥

अकोविदाः कर्म यथा बन्धकं न भवति तथा कर्मण्यज्ञाः नष्टाभिज्ञान् पृच्छन्ति यतः स्तब्धा अनम्राः यतो मूर्खा अपि पण्डिता वयमिति मन्यमानाः "अपाम सोमममृता अभूम अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति यत्र नोष्णं न च शीतं न च ग्लानिर्नाप्यरातयः" इत्यादिकया यया माध्व्या गिरा उत्सुकाः सन्तो मूढा मुह्यन्ति वयं तथैव चाटुकान् इन्द्रो अप्सरोभिः सह विहरिष्याम इत्यादिप्रियान् शब्दान् मिथो वदन्ति ॥ ६ ॥

रजसा प्रवर्द्धमानेन रजोगुणेन मच्छत्रुरयं म्रियतामिति घोरः सङ्कल्पो येषां ते प्रतिक्षणं वर्द्धमानेन क्रोधेन अहिवन्मन्युर्येषां ते एते काषायवासभृतो भिक्षुका उदरम्भरा विष्णुमाराध्य दुःखमेव प्राप्स्यन्तीति अच्युतप्रियान् विहसन्ति ॥ ७ ॥

उपासिताः स्त्रियो युवतय एव न तु महान्तो यैस्ते स्रक्चन्दनवनितादिस्वरूपादिकाः सम्पत्तयो भवन्ति अन्योऽन्यमाशिषो वदन्ति मैथुन्यसुखमेव परं येषु तेषु गृहेषु न सृष्टा न सम्पादिता अन्नादिदानविधानदक्षिणा यत्र तद् यथा स्यात्तथा यजन्ति वृत्त्यै जीविकार्थं केवलं पशून् छागादीन् घ्नन्ति अतद्विदः हिंसादोषानभिज्ञाः ॥ ८ ॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

नियमो देशादाविव तेन सः । प्रधानेन प्रयुक्तः स्यात् सम्बन्धः प्रक्रियोक्तिभिः" इति अतः नित्यप्राप्तत्वेनाप्राप्तांशपूरणलक्षणनियमविधेरसम्भवात् परिसङ्ख्यैवेति उभयस्य युगपत् प्राप्तौ इतरव्यावृत्तिपरो विधिः परिसङ्ख्याविधिः सैवेष्टेति उच्यते उभय विधिसाङ्कर्यनियमविधिद्वारैवैवं परिसङ्ख्येति समाधीयते तत्प्रकारमाह—न तावदिति । परिसङ्ख्याविधिना कर्तृभूतेन श्रुत्या वाच्यार्थेन करणेन तथा सति वाच्यार्थोऽसम्भवेन न विरोधिप्रत्यनीकलक्षणया निवृत्तिपरिभाषया सति स्वार्थस्य श्रुतस्य वाच्यार्थस्य ऋतुगमनस्य त्यागः तथा परार्थस्य अश्रुतस्यानृतवगमनस्यानृतौ भार्यां नोपेयादित्येवं कल्पनेति दोषद्वयं शब्दव्यवहारेण प्रतीयत इति शब्दनिष्ठं तथा रागतः प्राप्तस्याऽनृतुगमनस्य बाध इत्येको दोषोऽर्थविचारात् फलित इत्यर्थनिष्ठ इत्येवं दोषत्रयं स्यात् यतो वाच्यार्थासम्भवात्लक्षणातो निवृत्तिपरिभाषयो दोषत्रयम् अतस्तन्निवृत्त्याय क्वचिदपूर्वविधिद्वारा तात्पर्यतः परिसंख्या क्वचित्तु नियमविधिद्वारा तत्र पूर्वामाह—क्वचिदिति क्वचिदश्वाभिधानीमादत्त इत्यादौ प्राप्यतः मन्त्रे ऋतस्येति सामान्योक्त्या पक्षे प्राप्यतोऽश्वाभिधानीरसनाग्रहणलक्षणार्थस्याश्वाभिधानीमादत्त इति श्रवणवाक्येन पुनः प्रापणमनर्थकं व्यर्थम् अप्राप्ते शास्त्रमर्थवदिति न्यायात् इति हेतोः अपूर्वविधिद्वारा अपूर्वविधिस्तस्तथा सर्वांशेनाश्वाभिधानीग्रहणं मानान्तरेणाप्राप्तमित्यपूर्वविधित्वं पाक्षिकतया स्वांशेन प्राप्तमिति नापूर्वविधिः सङ्गच्छते इति तद्द्वारान्यस्य गर्दभरसनाग्रहणस्य निवृत्तिः फलतस्तात्पर्यतो भवति गर्दभाभिधानीं न गृह्णीयादिति . तथा तदेव दर्शयति ऋतस्य यज्ञियपशोरिमां रसनामगृभ्णन् गृह्णीयात् इति इति सामान्यतो रसनाविधायकमन्त्रं पठित्वा अश्वाभिधानीमश्वोऽभिधीयतेऽवरुध्यते यया तां रसनामादत्ते गृह्णीयादित्यत्र रसनालिङ्गतः रसनाशब्दसामर्थ्यात् रसनाद्वये गर्दभाश्वरसनयोर्विषये प्रयोगकाले प्राप्यतो मन्त्रस्य सम्बन्धी अयमश्वाभिधानीमेवाददीतेति मन्त्रार्थनिश्चायक इत्यर्थः । अयमश्वाभिधानीग्रहणविधिः परिसङ्ख्यात्वेनोच्यते पूर्वोक्तदोषत्रयनिवारणार्थं तत्र द्वारमाहापूर्वविधिद्वारेति तत्र युक्तसंगतिमाह । यथोक्तमिति । अयमश्वाभिधानीविधिर्नैकारव्यत्ययेनाऽप्राप्तविधिरपूर्वविधिरेव मन्त्रस्य पाक्षिकविधायकत्वेऽपि सर्वांशेनाप्राप्तत्वात् तस्मात् अनन्ततात्पर्यविधेर्हेतोर्मन्त्रार्थोऽपि अश्वाभिधानीमेवाददीतेति निश्चितः स्यात् अतोऽपूर्वविधिद्वारा फलेन तात्पर्येण गर्दभाभिधानीं न गृह्णीयादिति परिसङ्ख्योक्ता विशेषो नियमविधिनोक्त कुतः पुनः श्रुतेः अंशेन प्राप्तस्यैवाश्वाभिधानीग्रहणस्य पुनः श्रुतत्वात् अप्राप्तांशपूरणाभावादित्यर्थः । नियमविधिद्वारा परिसङ्ख्यां दर्शयति । क्वचिदिति । क्वचित् पञ्चभक्ष्यलक्षणवाक्ये रागतः स्वाभाविकेच्छातो नित्यप्राप्तस्य पञ्चनखभक्षणादेः व्यवायादेः सम्बन्धे अप्राप्तांशस्य पूरणमेव लक्षणं स्वरूपं यस्य तस्य नियमफलस्याभावात् परिस्त्रापूर्वविध्यभावं समुन्निनोति नियमविधिद्वारा नियमविधिसत्त्वतया फलतस्तात्पर्यतः परिसङ्ख्या भवति पञ्चनखेतरा अभक्ष्या इति दार्ष्टान्तिकमाह । तथात्रेति । अत्र ऋतौ भार्यामुपेयादित्यादौ अभ्यनुज्ञाद्वारा प्रमाणान्तरप्रतिपन्नानित्यत्वनत्वेऽपि तदभावमात्रबोधको विधिरभ्यनुज्ञा तद्द्वारा परिसङ्ख्यैव नापूर्वविधिः नापि नियमविधिरित्यर्थः । अनृतौ भार्यां नोपेयात् अहुतशेषं न भक्षयेत् सौत्रामण्यतिरिक्ते सुरां न गृह्णीयात् इत्येवं सर्वत्र परिसङ्ख्यैव नत्वपूर्वनियमयोरिव शास्त्रप्राप्तत्वेनावश्यकर्त्तव्यमिति निवृत्तावेव तात्पर्यमित्यर्थः । तत्त्रयलक्षणमभियुक्तैरुक्तं "विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति । तत्र चान्यत्र सम्प्राप्तौ परिसङ्ख्येति गीयते" इति अन्यदनिरोहितार्थम् ॥ ११ ॥

तदेवं पूर्वोक्तप्रकारेण धर्मद्वारा भगवत्परितोषकत्वार्पितकर्मद्वारा ज्ञानभक्तिलक्षणपरमार्थापकस्य तुच्छोपभोगार्थम् ऐहिकपुत्रकलत्राद्युपभोगार्थं विनियोगात् व्ययकरणात् आत्मज्ञानगन्धोऽपि न कुतः पुनः श्रवणमित्यपरेरर्थः अपरोक्षज्ञानमनुभवः परोक्षज्ञानं शास्त्रीयं कलेवरस्यैति सम्बन्धसामान्यविवक्षया चतुर्थ्यर्थे षष्ठी तथा चाजहल्लक्षणया देहाद्यर्थमिति व्याख्यातम् ॥ १२ ॥

---

## श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

निर्दोषत्वे दृष्टान्तः व्यवस्थितिः तेष्विति शास्त्रस्य अप्राप्तार्थगोचरत्वात् रागप्राप्ता व्यवायाद्यो न विधेयाः । किन्तु व्यवस्थामात्रं शास्त्रकृत्यमित्यर्थः । तदेव विवृणोति, विवाहेति निवृत्तिः परदारादिभ्यो निवृत्तिः ॥ ११ ॥

यतः धर्मात् सविज्ञानं प्रकारवैविध्यज्ञानसहितं प्रजया प्रयोजनतया हेतुत्वं विवक्षितं प्रजार्थः ॥ १२—१४ ॥

---

## श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

मानितां प्रपञ्चयति । श्रियेति । श्रीर्धनादिसम्पत्तिभूतिरैश्वर्यं ग्रामाधिपत्यादिः अभिजनः सत्कुलप्रसूतत्वं त्यागो दानं रूपं देहसौष्ठवं बलं देहबलं कर्म श्रौतं स्मार्त्तं च एभिर्जातो यः स्मयो गर्वस्तेनान्धाऽविविक्ता धीर्येषां ते सहेश्वरानीश्वरसाहितान् हरेः प्रियान् भक्तानवमन्यन्ति यतः खलाः भूतहिंसापराः इत्यर्थः ॥ ९ ॥

अभीष्टं निरतिशयपुरुषार्थरूपं वेदोपगीतं वेदान्तवेद्यस्वरूपस्वभावम् ईश्वरं न च शृण्वते तद्वार्त्तां न शृण्वन्तीत्यर्थः । किन्तु मनोरथानां वार्त्तया प्रवदन्ति प्रवदन्तः कालं नयन्तीत्यर्थः । कुतः यतस्तेऽबुधा अज्ञाः वेदोपगीतं न शृण्वत इत्यनेन वेदार्थतत्त्वावगमोऽपि न तेषां विद्यते इति सूचितम् ॥ १० ॥

उपासितास्त्रियो गृहेषु मैथुन्यपरेष्वपि व्यवायो नित्यितः पूर्वे परं घ्नन्ति पशूनतद्विद इति यागविमांसभक्षणं तथा सुरान्यायाद्यागीयसुरापानानन्दाभिप्रेता । श्रिया विभूत्येति विशनिन्दा च कृता । ननु, धर्मप्रजासम्पत्त्यर्थी "ऋतुमुखेत् ऋतावुपेयात् पशुमालभेत यजमानपञ्चमा इडां भक्षयन्ति हुतशेषमश्नीयात् सौत्रामण्यां सुराग्रहान् गृह्णाति प्रतिग्रहादिना धनमार्जयेत्" इत्यादिभिः शास्त्रैर्व्यवायादीनां नियमितत्वात्कीमितनिन्दा क्रियते इत्याशङ्क्याह—लोक इति । व्यवायः स्त्रीसङ्गः व्यवायादयो नित्यरागतो नित्यप्राप्ताः जन्तोः प्राणिमात्रस्यावश्य तासु चोदना

यद्घ्राणभक्षो विहितः सुरायास्तथा पशोरालभनं न हिंसा ।
एवं व्यवायः प्रजया न रत्या इमं विशुद्धं न विदुः स्वधर्मम् ॥ १३ ॥
ये त्वनेवंविदोऽसन्तः स्तब्धाः सदभिमानिनः ।
पशून् द्रुह्यन्ति विस्रब्धाः प्रेत्य खादन्ति ते च तान् ॥ १४ ॥
द्विषन्तः परकायेषु स्वात्मानं हरिमीश्वरम् ।
मृतके सानुबन्धेऽस्मिन् बद्धस्नेहाः पतन्त्यधः ॥ १५ ॥
ये कैवल्यमसम्प्राप्ता ये चातीताश्च मूढताम् ।
त्रैवर्गिका ह्यक्षणिका आत्मानं घातयन्ति ते ॥ १६ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

"ऋतुस्नातां तु यो भार्यां सन्निधौ नोपगच्छति ।
घोरायां भ्रूणहत्यायां पच्यते नात्र संशयः" ॥

इत्यादिदोषश्रवणं न स्यादिति चेन्न रागी यदि द्वेषादिना तां नोपेयात् तदा दोषश्रवणोपपत्तेः अत एव "यदहरेव विरजेत्तदहरेव परिव्रजेत् एतद्ध स्म वै तद्विद्वांस आहुः ऋषयः कावषेयाः किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे एतद्ध स्म वै तत्पूर्वे विद्वांसोऽग्निहोत्रं न जुहुवाञ्चक्रिरे एवं वै तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति किं कर्मणा किं प्रजया किं धनेन" इत्यादिश्रुतयः सर्वतो वैराग्यमुपदिशन्तीत्यलं विस्तरेण ॥ ११ ॥

एवं भगवद्बहिर्मुखानां नानाविधं मोहमुक्त्वेदानीं धर्मद्वारा भगवत्प्रापकस्य धनस्यान्यथा व्ययं ये कुर्वन्ति तेषां मोहमाह—धनञ्चेति । यतो धर्मात् तीर्थवासमहत्सेवाहरिकथाश्रवणादिलक्षणात्सविज्ञानं विविधसाधनज्ञानसहितं साध्यभूतभगवद्गुणगणादिस्वरूपादिविषयं ज्ञानमुत्पद्यते अनु ज्ञानलाभानन्तरं प्रशान्तिर्मोक्षलक्षणा भवति "ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति" इति श्रीमुखोक्तेश्च तीर्थवासमहत्सेवाहरिकथाश्रवणादिरूपः धर्म एवैकं फलं यस्य एवम्भूतं धनं च गृहेषु देहाद्यर्थं युञ्जन्ति प्रयुञ्जते । कलेवरस्य दुरन्तवीर्यमनिवार्यप्रभावं मृत्युं न पश्यन्ति अनुप्रशान्तीति पाठे ज्ञानविशेषणम् अनु अनन्तरं प्रशान्तिः प्रकृष्टा शान्तिः मोक्षलक्षणा यस्मात्तत् अत्र ज्ञानस्यैव ध्रुवा स्मृतिरूपत्वं परा भक्तिरूपत्वं यतः इति पदं धनवाचकं वा यतः धनात् धर्मद्वारा ज्ञानं तस्य चेति योजना ॥ १२ ॥

---

### भाषा टीका ।

धनादि सम्पत्ति से ऐश्वर्य से कुटुम्बी मनुष्यों से विद्या से दान देने से स्वरूप से बल से कामों से बड़े अभिमानी होकर बुद्धि से अन्धे होजाते हैं तब भगवान् नारायण को तथा उनके भक्त सत्पुरुष वैष्णवों को देखकर हँसते हैं क्योंकि वे खल दुर्जन हैं ॥ ९ ॥

जैसे आकाश सर्वत्र व्याप्त है तैसे सब देहधारियों में निरन्तर विराजमान अपने अत्यन्त प्रिय ईश्वर जिनको सब वेद गान करते हैं ऐसे ईश्वर विष्णु को जान सुनकर भी स्वर्गादि सुखों की बातों में रहते हैं ॥ १० ॥

इस संसार में मैथुन करना मांस खाना मद्य पीना यह तीन बात नित्य हैं अर्थात् सब को स्वभाव ही से प्यारे हैं इसके लिये किसी शास्त्र के आज्ञा करने की अपेक्षा नहीं है फिर जो शास्त्र विधान करता है तो यह जानना चाहिये कि "सिद्धौ सत्यामारभ्यमाणो विधिर्नियमाय कल्प्यते" इस न्याय से इन तीनों विषयों के प्रचार का निवारण करने के लिये व्यवस्था से विवाह यज्ञादिकों में मात्र इनका सेवन करके कम प्रवृत्ति होनेसे फिर सर्वथा त्याग करने के लिये वेदादिकों में इनका कथन है ॥ ११ ॥

धन तो केवल धर्म के वास्ते है जिस धर्म के करने से शास्त्र ज्ञान अनुभव ज्ञान और शान्ति होती है, तिस धन को घर में लगाते हैं अपने शरीर का जो दुस्तर पराक्रमवाला मृत्यु है तिसका कोई भय नहीं करते हैं ॥ १२ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

किञ्च, व्यवस्थयाऽपि व्यवायाद्यनुज्ञानं न यथेष्टमपि त्वन्यथैवेत्याह—यदिति । यद्यस्मात्सुराया आघ्राणभक्षोऽवघ्राणं स एव विहितो न पानं तथा पशोरालम्भनमेव विहितं नतु हिंसा अयमर्थः देवतोद्देशेन यत्पशुहननं तदालम्भनं "वायव्यम् श्वेतमालभेत" इत्यादिश्रुतेर्न तु हिंसा "या वेदविहिता हिंसा न सा हिंसेति कीर्त्यते" इति वचनात् । भक्षणोद्देशेन तु क्रियमाणं हननं लौकिकहननं हिंसैव अतः आलम्भनमेव विहितं न तु हिंसा अतो न यथेष्टभक्षणाभ्यनुज्ञेत्यर्थः । व्यवायोऽपि प्रजया निमित्तभूतया नतु रत्यै अतो मनोरथवादिन इमं विशुद्धं स्वधर्मं न विदुरिति ॥ १३ ॥

एवं भगवत्पराङ्मुखानां बहुदोषतां प्रपञ्च्य तन्निष्ठां प्रपञ्चयति—ये त्विति । पञ्चभिः अनेवंविदः न एवं धर्मं विदन्ति ये ते विस्रब्धा निःशङ्काः अनेन मनोरथो भविष्यतीति विश्वस्ता वा

श्रीधरस्वामिकृतभावार्थदीपिका ।

तद्दानीन्तनपोषणेन वा तैः पशुभिर्विश्वस्तास्ते च पशवः प्रेत्य अमुत्र तान् खादन्ति—

> "मांसभक्षयिताऽमुत्र यस्य मांसमिहाद्म्यहम् ।
> एतन्मांसस्य मांसत्वं प्रवदन्ति मनीषिणः" ॥

इति वचनात् ॥ १४ ॥

अभिचारादिना द्विषन्तः मृतके देहे सानुबन्धे पुत्रादिसहिते ॥ १५ ॥

अज्ञास्तरवश्यैरनुकल्पिताद्दतरन्ति तत्त्वज्ञास्तु स्वतः ये तु नात्यन्तमज्ञा नच तत्त्वज्ञास्तेऽन्तरालवर्तिनः पतन्तीत्याह—य इति । कैवल्यं तत्त्वज्ञानमसम्प्राप्ताः मूढतामत्यन्तजडताम् अत्र हेतुः त्रिवर्गप्रधानाः अक्षयिका उपशान्तिक्षणरहिता देहादिस्थैर्यबुद्धयो वा स्वयमेवात्मानं घातयन्ति ॥ १६ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

व्यवस्थयापि नियमविधिसद्भावतथाऽपि अन्यथैव भक्ष्यमाणप्रकारेणैव अन्यालम्भनहिंसयोः को भेद इत्यापेक्षायामयमर्थः तथा च वेदाज्ञापालनार्थं शास्त्रीयहननमालम्भनं तदनादरेण भक्षणार्थमेव हननं हिंसेति तयोर्भेदः अत्र तु वेदे तु अतः सुरापानादेः अवघ्राणाद्यर्थत्वात् अतो व्यवायादेः प्रजाद्यर्थत्वात् इमं चित्तशुद्धयर्थं वेदाज्ञापालनरूपम् ॥ १३ ॥

तन्निष्ठां तेषां बहिर्मुखानां प्राप्यम् अनेन पशुयागेन मांसेति अस्मिंल्लोके यस्य पशोर्मांसमहमद्मि स पशुरमुत्र यमालये मां भक्षयिता भक्षयिष्यति एतन्मांसस्य मांसशब्दस्य मांसत्वं निरुक्तिं मनीषिणः प्रवदन्तीति स्मृतिवाक्यार्थः ॥ १४ ॥

स्वात्मानमेव परकायेष्वपि वसन्तमीश्वरं द्विषन्तः केनाऽभिचारादिना अभिचारः श्येनादिना हिंसा आदिना लौकिकी हिंसा गृह्यते ॥ १५ ॥

अन्तरालवर्तिनः ज्ञानचक्षुर्विदग्धाः उपशान्तिक्षणरहिताः क्षणमात्रमपि शान्तिशून्याः रजोविक्षिप्तमतय इत्यर्थः । द्वितीयपक्षे सर्वं हि पदार्थजातं देहादि क्षणिकमेव नित्यप्रलये तथाऽभ्युपगमात् तथापि अस्ति तत्र चार्वाकं क्षणिकत्वज्ञानं येषामिति देहादिस्थैर्यबुद्धय इति व्याख्यातम् ॥ १६ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

मृतके शरीरे ॥ १५—२२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथ सुराभिषसेवाव्यवायानामुपयोगविशेषमवदन् केषाञ्चिदन्तर्भावमाह—स्वप्राणभक्ष इति । सुरायाः यत्र इत्यादिः पद्योरिन्द्रिमाह—स्वप्राणभक्ष इति । सुरायाः यत्र इत्यादिः पशोरिति यस्य भक्ष इत्यन्तः यज्ञे सुरायाः तथा पशोश्च भक्षः यज्ञीयसुराभिषसेवेत्यर्थः । स्वप्राणभक्षो विहितः प्राणः परमात्मा प्राणनहेतुत्वात् तथा च "श्रुतिः को ह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दो न स्यात्" इति प्राणशरीरकत्वाद्वा तथा च श्रुतिः "मनोमयः प्राणशरीरनेता" इति स्वप्राणशरीरकस्य परमात्मनो भक्ष्यतया विहितः स्वस्य प्रसादगुणयार्थं स्वप्राणशरीरकपरमात्मनो भक्षणतया यज्ञीयसुराभिषसेवा विहितेत्यर्थः । यत्तु घ्राणभक्ष इति पाठेऽऽवघ्राणात्मको भक्षः न तु पानादनात्मक इत्यर्थः । एवं चेन्न दुष्यति प्रत्युत विशुद्धो भवति अन्यथा तु दुष्यत्येवेति भावः । तथा च गीतं भगवता—

> "यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः ।
> भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात्" ॥

इति च एवं चेदालम्भनं न हिंसात्मकं किन्तु पश्वात्मोज्जीवनात्मकं भवतीत्याह—आलम्भनं न हिंसेति । तथा च श्रुतिः "न वा उ एतन्म्रियसे न रिष्यसि देवान् इदेषि पथिभिः सुगेभिः यत्र यान्ति सुकृतो न दुष्कृतस्तत्र त्वा देवः सविता दधातु" इति प्रजयेत्यध्ययनेन वसतीति यद्वत्वर्थं तृतीया न रत्यै न रतिसुखार्थम् एवं चेत्पितृऋणाद्विमुक्तो भवति । तथा च श्रुतिः "त्रिभिरृणवान् जायते" इत्युपक्रम्य प्रजया पितृभ्य इति इमं विशुद्धं स्वधर्मं न विदुः न स्यै इति यदिमामिति सम्बन्धः ॥ १३ ॥

इत्थमजानतां निष्ठां प्रपञ्चयन् गतिमाह—ये त्विति पञ्चभिः । एवंविधं धर्मं न विदन्त्यनेवंविदः अत एवासन्तः स्तब्धा अविनीताः सदभिमानिनः सन्तो वयं इत्यभिमानवन्तः विस्रब्धा निःशङ्काः पशून् द्रुह्यन्ति द्रोहविषयाणां पशूनां कर्मत्वविवक्षायामुपपदविभक्तेः कारकविभक्तिर्बलीयसि" इति न्यायात्क्रुधद्रुहेति चतुर्थी बाधित्वा कर्मणि द्वितीया ते च पशवः प्रेत्यामुत्र तान् द्रोग्धॄन् प्रेतान् खादन्ति ॥ १४ ॥

किञ्च, अभिचारादिना द्विषन्तः परकायेषु कृतो द्वेषस्तदन्तरात्मनि स्वस्यात्मनि भगवत्येव पर्यवस्यतीत्यभिप्रायेण स्वात्मानम् हरिमीश्वरम् इत्युक्तं सानुबन्धे पुत्रकलत्रादिसहिते मृतके शवतुल्ये स्वदेहे बद्धः निरूढः स्नेहो येषां तेऽधः नरके पतन्ति ॥ १५ ॥

किञ्च, एषां सद्गतिः सर्वथा दुर्लभेत्यभिप्रेत्याह—य इति । कैवल्यं ज्ञाननिष्ठामसम्प्राप्ताः मूढतां वा अनीता अप्रापिताः ते त्रैवर्गिकास्त्रिवर्गप्रधाना अक्षणिका उपशान्तिक्षणरहिताः देहादिस्थैर्यबुद्धयो वा स्वात्मानं घातयन्ति कैवल्यमप्राप्तस्तत्त्वविदुपदेशात्तरन्ति ज्ञाननिष्ठास्तु स्वत एव अन्तारिता मूढास्तु नोभयथैवाभिप्रायेण कैवल्यमसम्प्राप्ता येऽनीताश्च मूढताम् इत्युक्तम् आत्मानं घातयन्तीत्यस्यात्मनो सत्यप्राणरूपामन्ततः स्थावरतां प्राप्नुवन्तीत्यर्थः ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

व्यवायादीनां यज्ञेषु विहितत्वमयोक्तं तद्विधानप्रकारमाह—यद्घ्राणेति । अयमर्थः सुराया घ्राणभक्ष इति यत् स विप्रादीनां देवयज्ञविशेषे विवक्षितः । तथा यत्पशोरालम्भनं तत् देवयज्ञे विहितं पशुमालम्भेतेति हिंसा न विहिता "न हिंस्यात्सर्वभूतानि" इति च यथा घ्राणभक्षादिकं विहितमेवं व्यवायः

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

पितृयज्ञे प्रजया सन्तत्यर्थं विहितो रत्यै इन्द्रियभोगार्थं न अत्रापि व्यवायाख्यपितृयज्ञे क्षत्रियस्य आघ्राणभक्षणमन्तरेण सुरा विहिता —

"व्यवाययज्ञे मद्यन्तु सोमात्मकतयेष्यते ।
क्षत्रियादेर्न विप्राणां विप्रो दोषेण लिप्यते ॥
अतो गतः प्रवृत्तिः स्याद्रागो दोषस्य कारणम् ।
आघ्राणमथोऽथवा यज्ञे दैवे सर्वस्य चेष्यते ॥

इति चोक्तं किमत्र भवितमथाह—इममिति । धर्मस्वरूपाज्ञानमेव भ्रान्तिकारणमित्यर्थः—

"यज्ञेष्वालम्भनं प्रोक्तं देवतोद्देशतः पशोः ।
हिंसानाम तदन्यत्र तस्मात्तां नाचरेद्बुधः ॥
यतो यज्ञे मृता ऊर्ध्वं यान्ति देवे च पैतृके ।
अतो लाभादालभनं स्वर्गस्य तु न मारणम्" ॥

इति वचनाद्यज्ञे पशोरालम्भनं न मारणमित्युक्तम् ॥ १३ ॥

तत्र के मारका मारकाणां पशूनां किं तत्फलमित्यत आह—ये त्विति । असन्तोऽप्रशस्तकर्माणः त्रैवर्गिकाणां स्वहतपशुभिः खादनमेव प्रेत्य भजनफलम् ॥ १४ ॥

किञ्चात्मज्ञानाभावतोऽप्यधिकदुःखकरो लोकः स्यादित्याह—द्विषन्त इत्यादिना । आत्मानं आधारं अभिमानं च "स्वे महिम्नि" इति श्रुतेः । परकायेषु स्वकायेषु च सन्तं आधिनो जीवादन्यं द्विषन्तोऽसहमानाः आत्मतयाज्ञात्मयद्वोक्तं स्वस्मिन्नपि परेषु च—

"जीवादन्यं न पश्यन्ति अस्त्येवं विद्विषन्ति च ।
एतांस्तमासुरान्विद्धि सर्वेषां पुरुषाधमान्" ।

इति स्मृतिः । प्रतीतार्थबोधिका ॥ १५ ॥

एतदेव विवृणोति—ये कैवल्यमिति । ये कैवल्यं यथार्थज्ञानम् असम्प्राप्ताः ये च मूढताञ्चातीताः पाण्डित्यं मन्यास्ते त्रिवर्गसाधनयोग्यमभिजन्म यस्य स तथा तादृशमात्मानं घातयन्ति लभन्तीति शेषः । यद्वा, अभेदज्ञानिनां गतिमुक्त्वाऽभिन्नज्ञानिनां स्थितिमाह—य इति । केवलो हरिरिति ज्ञानरहिताः अस्मात्परो न भवति भगवान् किन्तु प्रामाणिकत्वप्रयोजक इति ज्ञानवन्तो ये ते भुक्तपुण्यफलाः आत्मानं स्वर्गान्मनुष्यलोकं प्रति पातयन्ति "ते तं भुक्त्वा स्वर्गलोकं विशालम्" इति च ॥ १६ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

किञ्च, व्यवस्थयापि व्यवायाद्यनुष्ठानं न यथेष्टम् अपितु नियम्यैवेत्याह-यत् यस्मात् सुरायाः घ्राणभक्षः अवघ्राणमेव भक्षो विहितः नतु यथेष्टं पानं तथा पशोरालम्भनं वैधहिंसा किञ्चिदङ्गच्छेदनमेव नतु हिंसा वधः । व्यवायोऽपि प्रजया हेतुना नतु रमणार्थम् ॥ १३ ॥

एवमुक्तलक्षणं धर्मं न विदन्तीति ते "या शास्त्रविहिता हिंसा न सा हिंसेति कथ्यते" इत्यादिवाक्यार्थतात्पर्यमबुद्ध्वा ये पशून् घ्रायत एव हिंसतीत्यर्थः । विश्रब्धाः वधकाले एवैतेऽस्मत्पालका अस्मान्न हनिष्यन्ति किन्तु शस्त्रदर्शनेन उपहसितुमस्माभिः सह खेलन्त्येवेति पालितैः पशुभिः कृतविश्वासाः तान् द्रुह्यन्ति छलेनैव ततस्ते च पशवः प्रेत्य अमुत्र तान् स्वघातकान् खादन्ति "मांसभक्षयितामुत्र यस्य मांसमिहाद्म्यहम् एतन्मांसस्य मांसत्वं प्रवदन्ति मनीषिणः" इति वचनात् । यथा च योगबलेन यज्ञपशून् प्रत्यक्षं प्रदर्श्य प्राचीनबर्हिषं प्रत्युक्तं श्रीनारदेन—

"भो भो प्रजापते ! राजन् ! पशून् पश्य त्वयाऽध्वरे ।
संज्ञपितान् जीवसङ्घान् निर्घृणेन सहस्रशः ॥
एते त्वां सम्प्रतीक्षन्ते स्मरन्तो वैशसं तव ।
सम्परेतमयः कूटैश्छिन्दन्त्युत्थितमन्यवः" ॥

इति ॥ १४ ॥

द्विषन्त इति । मांसार्थं पशून् हिंसन्ति लोकान् वा यद्द्विषन्ति तत् आत्मानं हरिमेव द्विषन्तीत्यर्थः । मृतके स्वदेहे ॥ १५ ॥

अथ एतत्पक्षैरनुकम्पिताः तरन्ति तरणात्तु स्वतः ये तु नात्यन्तमज्ञा नच तत्त्वज्ञास्तेऽन्तरालवर्तिनः पतन्तीत्याह । ये इति । कैवल्यमसम्प्राप्ताः कैवल्यप्रापकज्ञानशून्या इत्यर्थः । नापि पश्वादिवन्मूढाः तर्हि किं ज्ञानार्थिनो वा न त्रैवर्गिकाः धर्मार्थकामपराः भवन्तु तदपि कदाप्यवसरं प्राप्य हरिकथां शृण्वन्ति न अत्याणिकामत्र क्षणमात्रमप्यवकाशं न लभन्ते तर्हि ते आत्मानमेव घातयन्ति ॥ १६ ॥ १७ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अभ्यनुज्ञाविषयेऽपि व्यवायादेर्यथा श्रद्धया तद्यथावत् यथेष्टाचरणपराणां मोहमाह—यद्घ्राण इति । यस्मात्सुरायाः घ्राणभक्षो विहितः श्रवणायां प्रतिपादितं नतु पानं तथा पशोरालम्भनं वेदाश्रयाऽधिकारिविशेषविषयको यज्ञे देवतोद्देशेन पशुहननं न हिंसा एवं व्यवायः प्रजया हेतुभूतया नतु रत्यै इन्द्रियप्रीतये इमं विशुद्धं यथेष्टव्यवायामिषमद्यसेवाविपरीतं स्वधर्मं घोरस्वरूपाः कामुकाः न विदुरतोऽधः पतन्तीत्यग्रिमेण मुह्यन्तीति पूर्वेण वा सम्बन्धः ॥ १३ ॥

ये तु अनेवंविदः उक्तरहस्यानभिज्ञाः असन्तः अशिष्टाः स्तब्धाः सदभिमुखाः अतः सदभिमानिनः विस्रब्धाः वधदण्डो नास्तीति विश्वस्ताः पश्चादालम्भनस्येदमेव फलमिति विश्वासवन्तो वा यज्ञमिषेण मांसभक्षणार्थं पशून् द्रुह्यन्ति, प्राणहरणपर्यन्तां पीडां जनयन्ति तान् ते पशवः प्रेत्य मरणं प्राप्य यमलोकादौ खादन्ति ॥ १४ ॥

तान्द्विषन्तीति अनुद्रोहफलमुक्त्वा एवं पशून् द्रुह्यन्ति तद्द्वारा पशुद्रोहस्य फलान्तरमाह—मांसभक्षे मृतके मरणधर्मिणि सानुबन्धे कलत्रापत्यादिसहिते बद्धस्नेहाः देहार्थं पशुप्राणहरा इत्यर्थः । आत्मानं स्वस्वरूपमधःपातकतया परकायेषु परात्मानमिति शेषः । ईश्वरं नियन्तृतया वर्तमानं हरिं द्विषन्तोऽसौ नरकादौ त्रिविधेन द्रोहेण पतन्तीत्यर्थः ॥ १५ ॥

मरणानन्तरं अधःपातस्तेषां भविष्यतीत्येतन्मात्रं न किन्तु जीवमाना अपि पतिष्यन्त्येवेत्याह—ये इति । केवलस्य अनुपमस्य भावः कैवल्यमनुपमं पाण्डित्यमसम्प्राप्ताः मूढतां चात्यन्तमतीताश्च

एत आत्महनोऽशान्ता अज्ञाने ज्ञानमानिनः ।
सीदन्त्यकृतकृत्या वै कालध्वस्तमनोरथाः ॥ १७ ॥
हित्वात्यायासरचिता गृहापत्यसुहृच्छ्रियः ।
तमो विशन्त्यनिच्छन्तो वासुदेवपराङ्मुखाः ॥ १८ ॥

राजोवाच ।

कस्मिन् काले स भगवान् किं वर्णः कीदृशो नृभिः ।
नाम्ना वा केन विधिना पूज्यते तदिहोच्यताम् ॥ १९ ॥

करभाजन उवाच ।

कृतं त्रेता द्वापरं च कलिरित्येषु केशवः ।
नानावर्णाभिधाकारो नानैव विधिनेज्यते ॥ २० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

त्रैवर्गिका धर्मार्थकामप्रधानाः अन्वयिकाः देहाद्यनित्यत्ववादिनः सुयिकास्तद्विपरीताः देहादिष्वेवंबुद्धयः आत्मानं नानाफलदाः घातयन्ति जीवन्मृता भवन्तीत्यर्थः—

"यश्च मूढतमो लोके यश्च बुद्धेः परं गतः ।
तावुभौ सुखमेधेते क्लिश्यत्यन्तरितो जनः" ॥

इति तृतीयस्कन्धस्थविदुरवचनात् ॥ १६ ॥

भाषा टीका ।

जाकि मदिरा का सूंघना मात्र भक्षण विहित है तैसे हि पशु का मंत्र से यज्ञ में वध ही विहित है न कि केवल हिंसा करना इसी प्रकार से मैथुन भी सन्तानों के वास्ते है न कि केवल मैथुन के वास्ते इस निर्मल धर्म को वे कर्म कायडी मीमांसक नहीं जानते हैं ॥ १३ ॥

जो कि इस प्रकार को नहीं जानने वाले असाधु हैं अनम्र हैं सत्पुरुषों का अभिमान करते हैं और लोभ के विश्वास से पशुओं को मारते हैं उन को वे ही पशु दूसरे जन्म में मार कर खाते हैं ॥ १४ ॥

पराये शरीर में वर्तमान अपने आत्मा ईश्वर हरि का द्वेष करने वाले पुरुष मारनेवाले कुटुम्ब सहित इस देह में स्नेह करने से नरकों में गिरते हैं ॥ १५ ॥

जो पुरुष मोक्ष के ज्ञान को नहीं प्राप्त भये हैं और आ मूर्ख भी नहीं हैं किन्तु धर्म अर्थ कामों में लग हैं वे पुरुष अपने आत्मा का घात करते हैं ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

तदाह—एत इति । आत्महनः आत्मापह्नवकर्तारः अज्ञाने कर्मणि तथा च श्रुतिः—

"असुर्या नाम ते लोका अन्धेन तमसाऽऽवृताः ।
तांस्ते प्रेत्याभिगच्छन्ति ये के चाऽऽत्महनो जनाः" ॥

इति ॥ १७ ॥

या गृहापत्यसुहृच्छ्रियस्ता हित्वा ॥ १८ ॥

तदेवं भगवद्भक्तिरेव कर्तव्येति स्थिते तत्र विशेषं पृच्छति, कस्मिन्काल इति । किंवर्णः कीदृग्वर्णवान् कीदृशः कीदृगाकारः केन वा नाम्ना केन वा विधिना ॥ १९ ॥

एषु कृतादिकालेषु नाना प्रकारा वर्णाभिधाकारा यस्य सः नानैव विधिना विविधेनैव मार्गेण ॥ २० ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

तदाह आत्मघातित्वमाह—तथा च श्रुतिः । काम्यकर्मिणामात्मघ्नत्वे प्रमाणं श्रुतिः । ईशावास्योपनिषदि अविद्वन्निन्दार्थोऽयं मन्त्रः ते लोका इति तच्छब्दो यच्छब्दार्थे परमात्मभावमपेक्ष्य देवादयोऽप्यसुरास्तेषां स्वभूता असुर्या नाम शब्दोऽनर्थको निपातः लोकाः लोक्यन्ते दृश्यन्ते भुज्यन्ते इति स्वन्यानि कर्मफलानि अन्धेनादर्शनात्मकेनाज्ञानेन तमसा आवृता आच्छादिताः तान् स्थावरान्तान् लोकान् ते जनाः प्रेत्य इमं देहं त्यक्त्वा यथाकर्म यथाश्रुतं गच्छन्ति, ते के ? ये केचिदात्मघ्नः आत्मानं घ्नन्तीति आत्महनोऽविद्वांसः ते हि आत्मानं नित्यं हिंसन्ति अविद्यादोषेण विद्यमानस्यात्मनस्तिरस्करणात् ॥ १७ ॥

अत्यायासेन अतिश्रमेण रचिताः सम्पादिता या गृहापत्यसुहृच्छ्रियस्ता हित्वेति अस्य दोषस्यस्वमेवान्यथा श्रिय इति प्रथमान्तमनन्वितं स्यात् ॥ १८ ॥

तदेवमभक्तनिन्दया भक्तिमार्गदार्ढ्यप्रकारेण तत्र भक्तौ यस्य भक्तिः कर्तव्या स भगवान् इह जगति पूज्यते तत्कालवर्णाकारादि भवद्भिरुच्यताम् ॥ १९ ॥

तत्तत्कालीनयुगावतारवर्णपूजाविधानं सङ्क्षेपेणैव स्यात् करभाजनस्तु करावेव भाजनं यस्येति तथा "पाणिपात्रोदरा-

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

मत्तो माप्सिषेव न सङ्क्रमहो" इत्युक्तेस्तु करभाजनो न सङ्क्रमह्वा त तथा भूतत्वात् स एवोवाचेति ज्ञेयम् इति चत्वारि युगानि सन्ति एषु कृतादिषु ॥ २० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

किञ्च, एत आत्महनः अशान्ताः अशनापिपासाविपीडिताः अज्ञाने सत्यपि ज्ञानमानिनः ज्ञानसद्भावाभिमानवन्तः कालेन ध्वस्ता मनोरथा येषां ते अत एवाकृतकृत्याः सीदन्ति जीवद्दशायां क्लिश्यन्ति इत्यर्थः ॥ १७ ॥

अत्यायासेन रचिताः सम्पादिताः गृहापत्यसुहृत्स्त्रीः हित्वा अनिच्छन्तोऽपि तमो नरकं विशन्ति वासुदेवपराङ्मुखास्तमो विशन्तीत्यनेन वासुदेवभक्तास्तु तत्पदं विशन्तीति सूचितम् ॥ १८ ॥

तत्र विशेषं पृच्छति, कस्मिन्निति । किं वर्णः कीदृग्विधवर्णवान् कीदृशः कीदृगाकारः केन वा नाम्ना केन वा विधिना पूज्यते तदेतत्सर्वं मिहाधुनोच्यताम् ॥ १९ ॥

कृतमिति एषु कृतादिकालेषु नानाप्रकारा वर्णाभिधाकारा यस्य सः नानैव विधिना विविधेनैव मार्गेण पूज्यते ॥ २० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

उभयेऽपि त्रैवर्गिकाः अधः पतन्तीत्युक्तं तत्र केषां कुत्र निपात इत्यतो अधोनिपातं विविनक्ति । ये तत्रेति । तत्रोभयेषु त्रैवर्गिकेषु ये आत्महनः परमात्मानं द्विषन्तः ते तमो विशन्तीत्यन्वयः । सीदन्त्यवसीदन्ति दुःखैकभाजो भवन्ति अशान्ता इत्यस्य विवरणं वासुदेवपराङ्मुखा इति अत्यायासरचितगृहादीन् हित्वा कालात्मना भगवता ध्वस्तः अक्षयं गमिष्याम इत्यादिमनोरथो येषां ते तथा अनुच्छाद्यं श्वासमोक्षणसुखासुखरहितं तमः विशन्ति ॥ १७ ॥ १८ ॥

मुमुक्षुभिः अधोक्षज इज्यताय इति निरणायि तत्र राजा पृच्छति, कस्मिन्निति । तत्सर्वम् ॥ १९ ॥ २० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

कस्मिन्निति । नृभिः साधारणैरित्यर्थः । असाधारणानामन्यावताराणां ह्युपासनायाः सर्वदा श्रुतत्वात् ॥ १९ ॥—२१ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

"असुर्या नाम ते लोका अन्धेन तमसाऽऽवृताः ।
तांस्ते प्रेत्याभिगच्छन्ति ये केचात्महनो जनाः" ॥

इति श्रुतेस्तेषामधोगतिरेवेत्याह—हित्वेति । या गृहापत्यसुहृत्स्त्रियः अहन्ता हित्वा त्यक्त्वा ॥ १८ ॥

एतादृशानामुद्धारो भगवदवतारं विना न सम्भवेदिति मनसि कृत्वा पृच्छति, । कस्मिन्निति । कीदृगाकारः ॥ १९—२० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

जीवतामेव सकारणं क्लेशं प्रपञ्चयति, । एत इति । आत्महनः अज्ञातात्मतत्त्वा आत्माज्ञानमेवात्महननं तज्जातिगर्हितदेहपातकृतयोक्तमीशावास्योपनिषदि—

"असुर्या नाम ते लोकाः अन्धेन तमसाऽऽवृताः ।
तांस्ते प्रेत्याभिगच्छन्ति ये केचात्महनो जनाः" ॥

इति अज्ञाने परमवेद्यपरमात्मज्ञानाभिज्ञे कर्मज्ञानमेव परमं ज्ञानमित्यभिमानवन्तः कालेन ध्वस्ता मनोरथाः येषां ते अकृतकृत्याः असम्पादितमुक्त्युपायाः अतः कारणात् सीदन्त्यवसीदन्ति ॥१७॥

मृतानां तु संसारप्रवेशमाह—हित्वेति । अत्यायासेनातिश्रमेण रचिताः सुसम्पादिताः या गृहादिरूपाः श्रियः सम्पदस्ताः अनिच्छन्तोऽपि हित्वा वासुदेवपराङ्मुखास्तमो विशन्ति, जन्ममरणलक्षणं संसारं प्राप्नुवन्ति वासुदेवभक्तास्तु संसाराद्विमुच्यन्ते इति फलितोऽर्थः ॥ १८ ॥

वासुदेवभजने विशेषं पृच्छति । कस्मिन् काले इति । इह लोके कस्मिन् काले कस्मिन् युगे किं वर्णः कीदृग्वर्णः कीदृशः किमाकारः केन नाम्ना वा केन विधिना वा स वासुदेवः भगवान् नृभिः पूज्यते तत्सर्वमुच्यताम् ॥ १९ ॥

प्रत्युत्तरमाह—कृतमिति । एषु कृतादिषु नाना अनेकप्रकाराः वर्णाभिधाकारा यस्य सः श्रीवासुदेवः नानैव विधिना अनेकप्रकारेण विधिना इज्यते ॥ २० ॥

---

भाषा टीका ।

वह लोक सब आत्मघाती हैं और अशान्त हैं अज्ञान में ज्ञानमानने वाले हैं तब उनके सब मनोरथ काल के वश से नष्ट हो जाते हैं तब वे कृत कृत्य न होनेसे दुखी होते हैं ॥ १७ ॥

अति परिश्रम से अर्जन किये जो घर स्त्री पुत्र धन इन सबों को छोड कर नहीं भी छोडना चाहते हैं तौभी वासुदेव से विमुख होनेसे नरकों को चले ही जाते हैं ॥ १८ ॥

राजोवाच ।

वे श्रीनारायण भगवान् किस युग मे किसवर्ण को धारण करते हैं और कैसे स्वरूप के होते हैं किसनामको पाते हैं और किस विधिसे मनुष्यों से पूजित होते हैं सो आप मेरे से कहिये ॥ १९ ॥

करभाजन उवाच ।

सत्ययुग त्रेता द्वापर कलियुग इनचारों युगों में केशव भगवान् नाना प्रकार के वर्णोंको तथा आकारोंको धारण करते हैं और नाना प्रकार की विधि से पूजित होते हैं ॥ २० ॥

---

कृते शुक्लश्चतुर्बाहुर्जटिलो वल्कलाम्बरः ।
कृष्णाजिनोपवीताक्षान् बिभ्रद्दण्डकमण्डलू ॥ २१ ॥
मनुष्यास्तु तदा शान्ता निर्वैराः सुहृदः समाः ।
यजन्ति तपसा देवं शमेन च दमेन च ॥ २२ ॥
हंसः सुपर्णो वैकुण्ठो धर्मो योगेश्वरोऽमलः ।
ईश्वरः पुरुषोऽव्यक्तः परमात्मेति गीयते ॥ २३ ॥
त्रेतायां रक्तवर्णोऽसौ चतुर्बाहुस्त्रिमेखलः ।
हिरण्यकेशस्त्रय्यात्मा स्रुक्स्रुवाद्युपलक्षणः ॥ २४ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

तदेव वर्णादिचतुष्टयमाह । कृत इत्यादिना । कृष्णाजिनादीन्बिभ्रदिति ब्रह्मचारिवेषो दर्शितः ॥ २१ ॥

तपसा ध्यानेन ॥ २२-२३ ॥

त्रिगुणा दीक्षाङ्गभूता मेखला यस्य स यज्ञमूर्तिः हिरण्यकेशः पिङ्गकेशः ॥ २४ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

तदेव पूर्वमेव वर्णादिचतुष्टयं वर्णो नानाकारोऽधिकारीति चतुष्टयं कृष्णाजिनं कृष्णमृगचर्म अक्षं कमलाक्षं दण्डश्च कमण्डलुश्च तं सर्वोऽपि द्वन्द्वो विभाषयैकवद्भवतीति न्यायादेकवद्भावः अकारो ह्रस्वदीर्घप्लुत इतिवत् दण्डेन सहितं कमण्डलुमिति वा दण्डकमण्डलु इति पाठः सुगमः ॥ २१ ॥

तदा कृतयुगे शान्ता निरुद्धान्तःकरणाः तपआदिना ब्रह्मचारिधर्मेण ॥ २२ ॥

नामान्याह । हंस इति ॥ २३ ॥

त्रयी तत्प्रतिपाद्यो यज्ञ आत्मा मूर्तिर्यस्य स तथा च यज्ञमूर्तिरिति व्याख्यातं होमसाधनस्रुक्स्रुवादि उपलक्षणं ज्ञापकं यस्येति याज्ञिकवेषो दर्शितः ॥ २४ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

हंसः शुद्धः सुपर्णः शोभनावयवः ॥ २३ ॥ — ॥ ३३ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तमेव प्रपञ्चयति । कृत इत्यादिना । कृष्णाजिनादीन् बिभ्रदिति ब्रह्मचारिवेषो दर्शितः ॥ २१ ॥

मनुष्यास्त्विति तदा कृतयुगे मनुष्याः भगवदाराधकाः शान्ताः तदेव दर्शयति निर्वैराः सुहृदः सर्वभूतसुहृदः समाः समदर्शिनः शमेन दमेन च सहितेन तपसा ध्यानयोगेन यजन्त्याराधयन्ति ॥ २२ ॥

हंसो विशुद्धः सुपर्णः शोभनावयवः धर्मो धर्मनिर्वाहकः योगेश्वरो योगनिर्वाहकः अमलः हेयप्रतिभटः अव्यक्तः प्रत्यक्षादिभिर्न व्यज्यत इति तथा परमात्मा लोकत्रयान्तःप्रवेशनियमनाभ्यां धारक इत्येवंविधैर्गुणैर्नामभिर्गीयते ॥ २३ ॥

त्रेतायामिति असौ भगवान् त्रिगुणा दीक्षाङ्गभूता मेखला यस्य सः हिरण्यकेशः पिङ्गलकेशः त्रय्यात्मा त्रयीप्रतिपाद्ययज्ञनिर्वाहकः यज्ञमूर्तिर्वा वेदशरीरको वा स्रुक्स्रुवादीन्युपलक्षणानि चिह्नानि यस्य सः ॥ २४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सामान्यत उक्तं विशिनष्टि । कृत इति । कस्मिन्काले इत्यस्योत्तरं कृत इति किं वर्ण इत्यस्योत्तरं शुक्ल इति कीदृश इत्यस्योत्तरं चतुर्बाहुरित्यादि नामेत्यस्योत्तरं हंस इत्यादि केन विधिनेत्यस्योत्तरं तपसेत्यादि शान्त इत्याद्यधिकारिलक्षणम् एवमुत्तरत्रापि ॥ २१ ॥ २२ ॥ २३ ॥

त्रिमेखलः त्रिगुणितमेखलः ॥ २४ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

शुक्ल इति शुक्लवर्णः शुक्लनामा कृष्णाजिनं कृष्णसारचर्म उपवीतं यज्ञसूत्रं अक्षोऽकारादिक्षकारान्तवर्णमयीमाला तां दण्डं कमण्डलुं च बिभ्रदिति ब्रह्मचारिवेषो वर्णितः ॥ २१ ॥

तपसा ध्यानेनेति तदा तेन ध्यानमेव विधीयते ॥ २२ ॥

गीयते इति एतानि नामानि तदा गेयानि ॥ २३ ॥

रक्तवर्णो रक्तनामा च त्रिगुणा दीक्षाङ्गभूता मेखला यस्य सः त्रय्यात्मा यज्ञस्वरूपः त्रय्या विद्ययेति यज्ञस्तदा विधीयते ॥ २४—२६ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तानेव नानाप्रकारान् वर्णादीन् दर्शयति । कृते इत्यादिना ।

तं तदा मनुजा देवं सर्वं देवमयं हरिम् ।
यजन्ति विद्यया त्रय्या धर्मिष्ठा ब्रह्मवादिनः ॥ २५ ॥
विष्णुर्यज्ञः पृश्निगर्भः सर्वदेव उरुक्रमः ।
वृषाकपिर्जयन्तश्च उरुगाय इतीर्यते ॥ २६ ॥
द्वापरे भगवान् श्यामः पीतवासा निजायुधः ।
श्रीवत्सादिभिरङ्कैश्च लक्षणैरुपलक्षितः ॥ २७ ॥
तं तदा पुरुषं मर्त्या महाराजोपलक्षणम् ।
यजन्ति वेदतन्त्राभ्यां परं जिज्ञासवो नृप ! ॥ २८ ॥
नमस्ते वासुदेवाय नमः सङ्कर्षणाय च ।
प्रद्युम्नायानिरुद्धाय तुभ्यं भगवते नमः ॥ २९ ॥
नारायणाय ऋषये पुरुषाय महात्मने ।
विश्वेश्वराय विश्वाय सर्वभूतात्मने नमः ॥ ३० ॥
इति द्वापर उर्वीश ! स्तुवन्ति जगदीश्वरम् ।
नानातन्त्रविधानेन कलावपि यथा शृणु ॥ ३१ ॥
कृष्णवर्णं त्विषाऽकृष्णं साङ्गोपाङ्गास्त्रपार्षदम् ।
यज्ञैः सङ्कीर्तनप्रायैर्यजन्ति हि सुमेधसः ॥ ३२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

कस्मिन्काले इति प्रश्नस्योत्तरं कृते इति किं वर्णः इत्यस्य शुक्ल इति कीदृश इत्यस्य चतुर्बाहुरित्यादिना ॥ २१ ॥

केन विधिनेत्यस्य तपसेत्याद्युत्तरम् तपसा आलोचनात्मकेन ध्यानेन ॥ २२ ॥

केन नाम्नेत्यस्योत्तरं हंस इत्यादि एवमुत्तरत्रापि ॥ २३ ॥

त्रिगुणा त्रिगुणिता दीक्षाङ्गभूता मेखला यस्य सत्रिगुणमेखलः यज्ञमूर्तिः हिरण्यकेशः "हिरण्यश्मश्रुः हिरण्यकेश" इति श्रुतिप्रोक्तः प्रकाशकेशः ॥ २४ ॥

भाषा टीका ।

सत्ययुग मे शुक्लवर्ण चारभुजा जटा वल्कल वस्त्र कृष्ण मृगचर्म यज्ञोपवीत तुलसी पद्माक्षादि माला दण्ड कमण्डलु धारण किये रूप से रहते हैं ॥ २१ ॥

उसकाल मे मनुष्य लोभ बडे शान्त होते हैं और वैर रहित सब के सुहृद सम दृष्टि वाले होकर तपस्या से शम दमादि से उन परमेश्वर का पूजन करते हैं ॥ २२ ॥

हंस सुपर्ण वैकुण्ठ धर्म योगेश्वर मनु ईश्वर पुरुष अव्यक्त परमात्मा इन नामों से गाये जाते हैं ॥ २३ ॥

वेही भगवान् त्रेता मे लाल वर्ण वाले होकर चार भुजा तीन कटिमेखला सुवर्ण के रङ्गके सुवर्ण केश तीनों वेद स्वरूपको धारण करते हैं होम के लिये स्रुक् स्रुवाओं को हस्त मे ग्रहण करते हैं ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

त्रय्या विद्यया वेदत्रयोक्तकर्मभिः ॥ २५ ॥

पृश्निगर्भः पृश्निः सुतपसः प्रजापतेः पत्नी तस्याः पुत्रः वृषाकपिः स्मृतः सन् वर्षति कामान् आकम्पयति क्लेशानिति तथा जयत्येव सर्वथा जयन्तः ॥ २६

श्यामोऽतसीपुष्पसङ्काशः लिङ्गानि चक्रादीन्यायुधानि च यस्य सः श्रीवत्सो नाम वक्षसो दक्षिणभागे रोम्णां प्रदक्षिणावर्तः स आदिर्येषां करचरणगतपद्मादीनां तैरङ्गैश्चिन्हैर्लक्षणैर्बाह्यैः कौस्तुभादिभिः ॥ २७ ॥

महाराजोपलक्षणं छत्रचामरादियुक्तम् वेदतन्त्राभ्यां वैदिकेनागमिकेन च मार्गेण यजन्ति पूजयन्ति परमेश्वरं ज्ञातुमिच्छवः ॥ २८ ॥

नामान्याह । नमस्त इति ॥ २९—३० ॥

नानातन्त्रविधानेनेति कलौ तन्त्रमार्गस्य प्राधान्यं दर्शयति ॥ ३१ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

द्वापरे कृष्णतां गत इत्युक्तेः शुक्लरक्तयोः सत्यत्रेतागतत्वेन दर्शितत्वाच्च पीतस्यातीतत्वं प्राचीनावतारापेक्षया अत्र श्रीकृष्णस्य परिपूर्णरूपत्वेन यच्चमायोऽस्मात्युगावतारत्वं तस्मिन् सर्वेऽप्यवतारा अन्तर्भूता इति तत्तत्प्रयोजनं तस्मिन्नेकस्मिन्नेव सिध्यतीत्यपेक्षया तदेवं यदा द्वापरे श्रीकृष्णोऽवतरति तदैव कलौ श्रीगौरोऽप्यवतरतीति स्वारस्यलब्धः श्रीकृष्णाविर्भावविशेष एवायं गौर इत्यायाति तदव्यभिचारात् तदेतदाविर्भावत्वं तस्य स्वयमेव विशेषणद्वारा व्यनक्ति कृष्णवर्णं कृष्णेत्येतौ वर्णौ च यत्र यस्मिन् श्रीकृष्णचैतन्यदेवनाम्नि कृष्णत्वाभिव्यञ्जकं कृष्णेति वर्णयुगलं प्रयुक्तमस्तीत्यर्थः । तृतीये श्रीमदुद्धववाक्ये समाहुता इत्यादिपद्ये श्रियः सवर्णेनेत्यत्र टीकायां श्रियो रुक्मिण्याः समानवर्णद्वयं वाचकं यस्य स श्रियः सवर्णो रुक्मीत्यपि दृश्यते यद्वा कृष्णं वर्णयति तादृशस्वपरमानन्दविलासस्मरणोल्लासवशतया स्वयं गायति परमकारुणिकतया च सर्वेभ्योऽपि लोकेभ्यस्तमेवोपदिशति यस्तम् अथवा स्वयमकृष्णं गौरं त्विषा स्वशोभाया विशेषेणैव कृष्णोपदेष्टारं च यद्दर्शनेनैव सर्वेषां कृष्णः स्फुरतीत्यर्थः । किंवा सर्वलोकदृष्टौ कृष्णं गौरमपि भक्तविशेषदृष्टौ त्विषा प्रकाशविशेषेण कृष्णवर्णं तादृशश्यामसुन्दरमेव सन्तमित्यर्थः । तस्मात्तस्मिन् श्रीकृष्णरूपस्यैव प्रकाशात् तस्यैवाविर्भावविशेषः स इति भावः । तस्य भगवत्त्वमेव स्पष्टयति साङ्गोपाङ्गास्त्रपार्षदम् अङ्गान्येव परममनोहरत्वादुपाङ्गानि भूषणादीनि महाप्रभावत्वात्तान्येवास्त्राणि सर्वदैवैकान्तवासित्वात्तान्येव पार्षदाः बहुभिर्महानुभावैरसकृदेव तथा दृष्टोऽसाविति गौडवरेन्द्रवङ्गोत्कलादिदेशीयानां महाप्रसिद्धेः यद्वा अत्यन्तप्रेमास्पदत्वात्तत्तुल्या एव पार्षदाः श्रीमदद्वैताचार्यमहानुभावचरणप्रभृतयस्तैः सह वर्तमानमिति व्याख्यान्तरेण व्यक्तं तदेवं भूतं यजन्ति यज्ञैः पूजासम्भारैः "न यत्र यज्ञेशमखा महोत्सवा" इत्युक्तेः तत्र च विशेषेण तमेवाभिधेयं व्यनक्ति सङ्कीर्तनं बहुभिर्मिलित्वा तद्गानसुखं श्रीकृष्णगानं तत्प्रधानैः तथा सङ्कीर्तनप्राधान्यस्य तदाश्रितेष्वेव दर्शनात् स एवात्राभिधेय इति स्पष्टम् अत एव सहस्रनाम्नि तदवतारसूचकानि नामानि कथितानि "सुवर्णवर्णो हेमाङ्गो वराङ्गश्चन्दनाङ्गदी । सन्न्यासकृच्छमः शान्त" इत्यादीनि दर्शितं चैतत्परमविद्वच्छिरोमणिना श्रीसार्वभौमभट्टाचार्येण "कालान्नष्टं भक्तियोगं निजं यः प्रादुष्कर्तुं कृष्णचैतन्यनामा आविर्भूतस्तस्य पादारविन्दे गाढं गाढं लीयतां चित्तभृङ्ग" इति ॥ ३२ ॥ ३३ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

श्याम इति श्यामवर्णः श्यामनामा च ॥ २७ ॥

महाराजोपलक्षणं छत्रचामरादियुक्तं वेदतन्त्राभ्यां वैदिकेनागमिकेन च मार्गेण पूजयन्ति ॥ २८ ॥

नामन्याह । नमस्त इति ॥ २९ ॥ ३० ॥

इत्थं नृतिर्यगृषिदेवझषावतारै-
र्लोकान् विभावयसि हंसि जगत्प्रतीपान् ॥

धर्मं महापुरुष पासि युगानुवृत्तं
छन्नः कलौ यदभवस्त्रियुगोऽथ स त्वम् ॥

इति प्रह्लादवचनात् कलियुगीयावतारस्य छन्नत्वेन सर्वलोकदुर्ज्ञेयोऽप्यगस्त्यस्ते अतस्तत्प्रसापकवचनमपि लोपकसमयोन्तरेण छन्नतयैवाह । नानेति । कलौ तन्त्रमार्गस्य प्राधान्यं दर्शितमित्याच्छादकोऽर्थः तेनाच्छन्नोऽर्थो यथा नाना कलौ अपि काले दासन् यज्ञांशयो हस्य गृह्णतोऽनुयुगं तनूरिति गर्गोक्तिप्रामाण्येनवस्तावतारविशेषचतुर्युगीयद्वापरोत्तरकलावपि तन्त्रविधानेन तन्त्रास्यन्यासविधिनाश्रिता आवर्तितविशेषकस्यमोक्षाद्यर्थे एकदेवार्थद्वयबोधकेन श्लोकेनार्थः । अत एव स्पष्टयति स्पष्यन्तमपि राजानं प्रति पुनः प्रेरणा हृद्यत्वेन सम्प्रत्युच्यमानमर्थं विशिष्याचष्टापयितुम् ॥ ३१ ॥

कृष्णेति । नानाकलियुगपक्षे कृष्णवर्णमेव कृष्णत्वं व्याख्येयमिति त्विषाकान्त्या अकृष्णमिन्द्रनीलमणिवदुज्ज्वलमित्यर्थः । एतत्कलियुगपक्षे कृष्णवर्णं किन्तु त्विषा बहिःस्फुरन्त्या कान्त्या अकृष्णम् शुक्लरक्तश्यामानामुक्तत्वात् पारिशेष्येण पीतमन्तःकृष्णं बहिर्गौरमित्यर्थः । यद्वा कृष्णावतारलीलादिवर्णनात् कृष्णवर्णं साङ्गोपाङ्गेत्यादिकमुभयपक्षेऽपि स्पष्टप्रकटत्वात्स्फुटं तुल्यः एवार्थः यज्ञैः परिचर्यामार्गैः सङ्कीर्तनप्रधानैर्यैः सुमेधसः शुक्लो रक्तस्तथापीत इदानीं कृष्णतां गत इति कृष्णः कलाविति कलावपि तथा श्रुतिवाक्यादीनां तात्पर्यार्थावधारणवती येषां बुद्धिः शोभना मेधैव एव नान्ये इत्यर्थः ॥ ३२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सर्वदेवमयं सर्वदेवप्रधानं सर्वैर्ब्याद्धिकारिभिः । श्रद्धया विविधाः वेदतन्त्रोक्तकर्मभिः ॥ २५—२६ ॥

श्यामः घनश्यामः निजानि स्वाधारभूतानि सुदर्शनादीन्यायुधानि यस्य सः श्रीवत्सः वक्षसि रोम्णां प्रदक्षिणावर्तस्तदादिभिः करचरणादिस्थपद्मादिभिरङ्कैः वक्षोधार्यैः कौस्तुभादिभिरुपलक्षितः पुरुषोत्तमत्वेन निश्चितः ॥ २७ ॥

परं पुरुषं महाराजोपलक्षणं छत्रचामरादियुक्तं परं पुरुषं जिज्ञासवो ज्ञातुमिच्छवः तमेव यजन्ति ॥ २८—२९—३० ॥

अथातिदीनेषु कलियुगगतेषु हरिभक्तेषु परमानुग्रहकरं विशेषतः कलौ उपास्यतया स्वयं भगवन्तं वक्तुं प्रतिजानीते नानेति । नानातन्त्रविधानेनेति । कलौ, तन्त्रोक्तपूजनप्रकारस्य प्राधान्यं दर्शयति । नानातन्त्रविधानेन पञ्चरात्रसनत्कुमारीयगौतमीयादितन्त्रोक्तप्रकारेण यथा कलौ यजन्ति तथा शृणु ॥ ३१ ॥

त्विषा महत्या कान्त्योपलक्षितं कृष्णेन स्वाभाविकेन वर्णेन युक्तमिन्द्रनीलमणिवदुज्ज्वलम् । अङ्गानि हृदयादीनि उपाङ्गानि कौस्तुभादीनि अस्त्राणि सुदर्शनादीनि पार्षदा गरुडादयस्तैः सहितं कृष्णम् "एते चांशकलाः पुंसः कृष्णस्तु भगवान् स्वयम्" इत्यादिषु पूर्वत्र प्रतिपादितम् "अतः परतरं नान्य"दिति समनुगीतं समानातिशयशून्यं परमं पुरुषं वासुदेवम्—

कलेर्दोषनिधे राजन्नस्ति ह्येको महान् गुणः ।
कीर्तनादेव कृष्णस्य मुक्तबन्धः परं व्रजेत् ॥

ध्येयं सदा परिभवघ्नमभीष्टदोहं तीर्थास्पदं शिवविरिञ्चिनुतं शरण्यम् ।
भृत्यार्तिहं प्रणतपाल ! भवाब्धिपोतं वन्दे महापुरुष ! ते चरणारविन्दम् ॥ ३३ ॥
त्यक्त्वा सुदुस्त्यजसुरेप्सितराज्यलक्ष्मीं धर्मिष्ठ ! आर्यवचसा यदगादरण्यम् ।
मायामृगं दयितयेप्सितमन्वधावद्वन्दे महापुरुष ! ते चरणारविन्दम् ॥ ३४ ॥
एवं युगानुरूपाभ्यां भगवान् युगवर्त्तिभिः ।
मनुजैरिज्यते राजन् ! श्रेयसामीश्वरो हरिः ॥ ३५ ॥
कलिं सभाजयन्त्यार्या गुणज्ञाः सारभागिनः ।
यत्र सङ्कीर्त्तनेनैव सर्वः स्वार्थोऽभिलभ्यते ॥ ३६ ॥
न ह्यतः परमो लाभो देहिनां भ्राम्यतामिह ।
यतो विन्देत परमां शान्तिं नश्यति संसृतिः ॥ ३७ ॥
कृतादिषु प्रजा राजन् ! कलाविच्छन्ति सम्भवम् ।
कलौ खलु भविष्यन्ति नारायणपरायणाः ॥ ३८ ॥
क्वचित्क्वचिन् महाराज ! द्रविडेषु च भूरिशः ।
ताम्रपर्णी नदी यत्र कृतमाला पयस्विनी ॥ ३९ ॥
कावेरी च महापुण्या प्रतीची च महानदी ।
ये पिबन्ति जलं तासां मनुजा मनुजेश्वर ! ॥
प्रायो भक्ता भगवति वासुदेवेऽमलाशयाः ॥ ४० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

इति यज्ञमायाग्परमपदप्रापकैः सङ्कीर्तनप्रायैर्यज्ञैः सुमेधसः सुबुद्धयो यजन्ति ॥ ३२ ॥

---

भाषा टीका ।

उस काल में धर्मात्मा ब्रह्मज्ञानी सब मनुष्य सर्व देव स्वरूप देव हरि भगवान् का वेदत्रयी विद्या के मंत्रों से पूजन करते हैं ॥ २५ ॥

उस समय में विष्णु यज्ञ पृश्निगर्भ सर्वदेव उरुक्रम वृषाकपि जयन्त उरुगाय इन नामों से गाये जाते हैं ॥ २६ ॥

द्वापर में भगवान् श्यामल मूर्ति होते हैं पीतवस्त्र धारण करते हैं शङ्खचक्रादि आयुध वक्षस्थल में श्रीवत्स का चिन्ह और भी निज चिन्हों से सहित रहते हैं ॥ २७ ॥

उस समय में परमात्मा कि जिज्ञासा करने वाले पुरुष मनुष्य वेदों से तथा तंत्रों से भगवान् को महाराजाभिषेकादिक से पूजन करते हैं ॥ २८ ॥

और वासुदेव सङ्कर्षण प्रद्युम्न अनिरुद्ध रूप वाले भगवन् आप के अर्थ नमस्कार है ॥ २९ ॥

नारायण ऋषि आदिपुरुष महात्मा विश्वेश्वर विश्व सर्व भूतात्मा आपके अर्थ नमस्कार है ॥ ३० ॥

हे राजन् ! इस प्रकार से द्वापर में जगदीश परमात्मा की स्तुती करते हैं अब नाना तंत्रों के विधान से जैसे कलियुग में पूजन करते हैं सो भी तुम सुनो ॥ ३१ ॥

कान्ति से नील वर्ण वाले अङ्ग उपाङ्ग अस्त्र पार्षदों सहित श्रीकृष्ण मूर्ति का नाम सङ्कीर्तनादि यज्ञों से सुन्दर बुद्धिमान् पुरुष यजन करते है ॥ ३२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

स्तुतिमाह । ध्येयमिति । हे प्रणतपाल ! हे महापुरुष ! ते चरणारविन्दं वन्दे कथम्भूतम् ध्येयं ध्यातुं योग्यं सदेति सर्वत्र सम्बध्यते ध्येयत्वे हेतवः इन्द्रियकुटुम्बादिभिर्यः परिभवस्तिरस्कारस्तं हन्तीति तथा तत् किञ्च अभीष्टदोहं मनोरथपूरकम् किञ्च तीर्थास्पदं गङ्गाद्याश्रयत्वेन परमपावनम् शिवविरिञ्चिभ्यां नुतं स्तुतं महत्तमम् । ननु तौ कृतार्थावेव किमर्थं ताभ्यां नुतं तत्राऽऽह । शरण्यमाश्रययोग्यं सुखात्मकमित्यर्थः । तर्हि ब्रह्मादिस्तुत्यं प्राकृतस्य कथं गोचरः स्यात् न भृत्यार्तिहं यस्य कस्यापि भृत्यमात्रस्यार्तिहन्तृ न केवलमागन्तुकार्तिमात्रं हन्ति किन्तु भवाब्धिपोतं संसारार्णवतारकं च ॥ ३३ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

विद्यते लाभ इत्याह । नहीति । अतः सङ्कीर्तनात् परमो लाभः पुरुषार्थसाधनं न विद्यते यस्यतोऽनेनेति लाभः साक्षात्कारणो यस्य तत्र इतरवत् विशिनष्टि । यतः सङ्कीर्तनादयथार्थानुवृत्तात् परमां शान्तिमसनाथविपाशादिरहितां मुक्तिमिति यावत् विन्देत् संसृतिर्नश्यति च ॥ ३७ ॥

यतश्च कलौ मुक्त्युपायः सुकरः ततः कृतादियुगवर्तिनः प्रजाः कलावुत्पत्तिमिच्छन्तीत्याह । कृतादिष्विति । न केवलमिच्छन्त्यपि तु यथा सम्भवमुद्भविष्यन्ति चेत्याह । कलाविति । श्रीनारायण एव परमयनं प्राप्यं प्रापकमाधारश्च येषां ते महाशयार्थाच्युतपरा इति भावः ॥ ३८ ॥

क भविष्यन्तीत्यत आह । क्वचिदिति । तत्र तत्र द्राविडेषु देशेषु बहुशः भक्ताः सन्तीत्यर्थः । तत्रापि कुत्र आह । ताम्रपर्णीति ॥ ३९ ॥

कुतस्तत्रस्थानां नारायणपरायणतेत्यत आह । ये पिबन्तीति । मार्गेण हे मनुजेश्वर । तासां नदीनां जलपानप्रभावाद्विमलान्तःकरणा भगवति वासुदेवे भक्ता भविष्यन्तीत्यर्थः । पिबन्तीति पानोक्तिः स्नानादीनामप्युपलक्षणार्थो भावो भक्ता इत्यनेन तथापि तत्र प्रपन्नप्रतिबन्धकाभावोऽस्मिन् साक्षादिति सूचितम् ॥ ४० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

यच्चरणारविन्दमर्यादाभ्रष्टो पितृवचनेन अरण्यमगात् यच्च दयितेप्सितं मायामृगमन्वधावत्तच्चरणारविन्दं वन्दामहे इत्यन्वयः ॥ ३४ ॥

उपसंहरति । एवमिति । सामान्यविधानमिदं विशेषविधिस्तु स्वगुरूपदेशगम्य इति शास्त्रहृदयं रहस्यत्वान्नोक्ते शास्त्रान्तरसिद्धत्वाच्चेत्यदोषः तदुक्तम्—

> एवं तथैव मुच्येत यां मूर्तिं प्रविशेद्गुरुः ।
> शिष्याणां योग्यताभिज्ञो विप्रादानिस्तु तद्युगे ॥

इति यस्मिन् युगे यदुत्पन्नः तत्पूर्वयुगावतारहरिणा गुरूपदिष्टेन अभीष्टसिद्धिर्भवति,—

> अवतीर्णहरेर्मूर्त्या तत्पूर्वयुगजेन च ।
> नृसिंहमूर्त्या च तथा यां चान्यां प्रविशेद्गुरुः ॥

इति ॥ ३५ ॥

कृतादेः कलेः पुण्यहेतुत्वं स्तौति । कलिमित्यादिना ॥ सारभागिनः सारग्राहिणः ॥ ३६ ॥ ३७ ॥

तथा कलौ भविष्यन्ति जायन्ते क्वचिद्देशे तथा सम्भूताः नारायणपरायणाः स्युः ॥ ३८ ॥

यत्र द्रविडेषु ताम्रपर्ण्यादिनद्यः सन्ति प्रतीची महानदी नाम्ना वेत्रवती याराद्यसह्यगिरिं भित्त्वा पश्चिमसमुद्रं गच्छमाना ॥ ३९ ॥ ४० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तत्र सदाचारपालकत्वं कारुण्यं च तत्र नाधुनिकमेवेत्याह । त्यक्त्वेति ॥ ३४ ॥ ३५ ॥

गुणज्ञाः कीर्तननामोच्चारणरूपं तद्गुणं जानन्तः अत एव नहीत्याग्रहेण सारभागिनः सारमात्रग्राहिकाः कलिं सभाजयन्ति गुणमेव दर्शयन्ति यत्र प्रचरितेन सङ्कीर्तनेनैव साधनान्तरनिरपेक्षेण तेनेत्यर्थः । सर्वैः ध्यानादिभिः कृतादिषु साधनसाध्यैः साध्यः ॥ ३६ ॥

कीर्तनस्यैव महिमानमाह । न हीति । अतः कीर्तनात् यतो यस्मात्कीर्तनात् परमां शान्तिं कामो मन्निष्ठतावुद्धारित्यनुसारेण ध्यानादिभिरत्यसाध्यां सर्वोत्कृष्टां भगवन्निष्ठां प्राप्नोति अनुषङ्गेण संसारश्च नश्यति ॥ ३७ ॥

अत एव ध्यानादिनिष्ठा अपि कृतादिप्रजा एतादृशीं भगवन्निष्ठां न प्राप्तवत्यः "महाभागवता नित्यं कलौ कुर्वन्ति कीर्तन"मिति स्कान्दाद्यनुसारेण तादृशनिष्ठाकारणं कीर्तनमाहात्म्यं च दीनैककृपालिश्चक्रायुधा भगवता तदानीं तत्सामर्थ्यावसरे यस्मात्प्रकाशितं तस्माज्ज्ञानादिना समर्थास्ता जिह्वाछेदपर्यन्तमात्रस्य नातिसाधनत्वं सर्वेष्विति मत्वा तत्र आदृतवत्यः ततः कलिप्रजानां परमभगवन्निष्ठतां श्रुत्वा तदर्थं कलावेव केवलं निजजन्मप्रार्थयन्त इत्याह । कृतादिष्विति सार्द्धकेन तत्र हेतुः कलाविति तद्भक्तीच्छायामपि तद्भक्तसङ्गं विना सा न सम्पद्यतेति विभाव्येति भावः । तत्परायणत्वमत्र तदीयप्रेमातिशयवत्त्वम् एतदेव परमां शान्तिमित्यनेन कार्यद्वारा व्यञ्जितं "मुक्तानामपि सिद्धाना"मित्यादेः क्वचित्क्वचिद्गौडादौ श्रीकृष्णचैतन्यदेवावतारेण द्रविडेषु च भूरिश इति श्रीवैष्णवापेक्षया अत्र कलिसङ्गेन कीर्तनस्य गुणोत्कर्ष इति न वाच्यं भक्तिमात्रे कालदेशादिनियमस्य निषिद्धत्वात् विशेषतो नामोपलक्ष्य च विष्णुधर्मे क्षत्रबन्धूपाख्याने—

> "न देशनियमस्तत्र न कालनियमस्तथा ।
> नोच्छिष्टादौ निषेधश्च श्रीहरेर्नाम्नि लुब्धक" ॥

इति स्कान्दे पाद्मे वैशाखमाहात्म्ये विष्णुधर्मे च—

> चक्रायुधस्य नामानि सदा सर्वत्र कीर्तयेत् ।

इति स्कान्द एव च—

> न देशकालावस्थात्मशुद्ध्यादिकमपेक्षते ।
> किन्तु स्वतन्त्रमेवैतन्नामकामितकामदम् ॥

इति नच कलावन्यसाधनासमर्थत्वादेव तेनाल्पेनापि महत्फलं भवति नतु तस्य गरीयस्त्वेनेति मन्तव्यम्—

> यस्मिन्न्यस्तमतिर्न याति नरकं स्वर्गोऽपि यच्चिन्तने ।
> विघ्नो यत्र निवेशितात्ममनसां ब्राह्मोऽपि लोकोऽल्पकः ॥
> मुक्तिं चेतसि यः स्थितोऽमलधियां पुंसां ददात्यव्ययः ।
> किं चित्रं यदघं प्रयाति विलयं तत्राच्युते कीर्तिते ॥

इति समाधिपर्यन्तादपि तत्स्मरणात्कैमुत्येन कीर्तनस्यैव गरीयस्त्वं श्रीविष्णुपुराणे दर्शितम् अत एवोक्तम् एतन्निर्विद्यमानानामित्यादि तथा च "अघच्छित्स्मरणं विष्णोर्बह्वायासेन साध्यते ओष्ठस्पन्दनमात्रेण कीर्तनं तु ततो वर"मिति वैष्णवचिन्तामणौ—

### श्रीधरस्वामिकृतभावार्थदीपिका।

कथम्भूतः यः क्षेमाय मोक्षाय मुनिभिर्मुमुक्षुभिः प्रेमार्द्र-हृदा ऊह्यमानश्चिन्त्यमानः यश्च सात्वतैर्भक्तैः समविभूतये समानै-श्वर्याय वासुदेवादिव्यूहैरर्चितः तेषु च कैश्चिदात्मवद्भिर्धीरैः स्वर-तिक्रमाय स्वर्गमतिक्रम्य वैकुण्ठप्राप्तये सवनशस्त्रिकालमर्चितः॥१०॥

किं च प्रयतपाणिभिः संयतहस्तैर्हविर्गृहीत्वाध्वराग्नौ आहवनीयादौ याज्ञिकैर्यश्चिन्त्यते ननु "यस्यै देवतायै हवि-र्गृहीतं स्यात्तां ध्यायेद्वषट्करिष्य"न्निति वचनात्तत्तद्देवताश्चि-न्त्यन्ते अत आहुः। अथवा निरुक्तेन विधिनेन्द्रादिरूपेणैव यज्ञपुरुषः चिन्त्यत इत्यर्थः। उत किञ्च अध्यात्मयोगे आत्माधिकारे योगे योगि-भिरध्यात्मनस्तव माया अणिमादिरूपा जिज्ञासुभिस्तत्कामै-र्यश्चिन्त्यते परमभागवतैस्तु मुक्तैर्यः परीष्टः सर्वतः पूजितः स तवाङ्घ्रिर्नोऽशुभाशयधूमकेतुः स्यादिति पूर्वेणान्वयः॥ ११ ॥

एतेषां च मुनिसात्वतादीनां षण्णां सेवकानां मध्ये परम-भागवतेषु त्वस्या अपि तव प्रीतिरधिकेति संस्तुवन्ति। पर्यु-ष्टेति। इडभावश्छान्दसः अहं अत्र वसामि तत्रैव वससि पर्युषि-तापीयं वसतीति प्रति परीयच्छ्रीः संस्पर्धमानां श्रियमना-दृत्य यो भवान्पर्युषितयाऽपि अमुया वनमालया भक्तैरर्पितयामिति प्रीत्या सुप्रणीतं सुष्ठु सम्पादितम् यथा भवति तथाऽर्हणां पूजामाददत स्वीकृतवान् सुप्रणीतमित्यर्हणाविशेषणं वा तस्य तवाङ्घ्रिर्नोऽशुभाशयधूमकेतुर्भूयात् यद्वाऽयोऽङ्घ्रिरमुया सुप्रणीतमर्हणामाददत्स नोऽशुभाशयधूमकेतुर्भूयादित्यन्वयः। अथ वैवं सम्बन्धः। एतेभ्यो ध्यानार्चनादिनिष्ठेभ्योऽपि त्वद्यशसि प्रवृद्धसच्छ्रद्धाश्चन्त एव कृतार्था भगवतो यशः प्रियत्वादित्याहुः पर्युष्टया वनकान्तामित्यस्मात्परितः सर्वाङ्गे उष्टया कान्तया शोभितया वनमालया वक्षस्येकदेशे वर्तमाना श्रीः संस्पर्धमाना भवति तथाप्यनादरमनुमतैर्बहुधा वर्णितया कीर्तिमत्या वैज-यन्त्या वनमालयैव यो भवान् सुप्रणीतमर्हणामाददादित्यादि पूर्ववत्॥ १२ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी।

अनवद्यः शुभः एवाश प्रकृत्यर्थमात्रमर्थशृङ्खलाबन्धः। शुद्धि-रिति। उपासना च ब्रह्मोपासीतेत्यादि प्रतीकोपासना ननु भक्ति-रूपताद्दृष्टत्वादुत्कर्षविषयमाणत्वात् सती चासौ श्रद्धा-चेति तया निर्गुणया आभासोक्तशङ्कासमाधानाय भावार्थमाह। परमपावनायेति तथा च भक्तसुखार्थमेव तव लीलेति फलितं "मद्भक्तानां विनोदाय करोमि विविधाः क्रियाः" इति भगवदुक्तेरे-वेति॥ ९ ॥

पूर्वपद्येन सङ्गतिमाह। तदेवमिति। तेषु च भक्तेष्वेव मध्ये आत्मवद्भिः आत्मा स्वमेव नाथो येषां तथा च चिन्ताशून्यत्वा-द्धीरैरिति व्याख्यातं वैकुण्ठप्राप्तये इति एवं चैश्वर्यतुल्या-भावाद्वृत्त्यैव वैकुण्ठप्राप्तिरभिप्रेतेति पूर्वतो वैशिष्ट्यम्॥ १० ॥

याज्ञिकैः श्रीमतावेतीति सिद्धपदप्रत्याख्येयत्वाद्दृतं यस्यै देवतायै वां देवतामुद्दिश्य वषट् करिष्यन् तथाऽहृति तन्त्रमुच्चार-

यत् इन्द्रादिरूपेणेति वह्न्यादिरूपतया ध्यानेन एवं च तेषां त्रयी-तात्पर्यवेत्तृत्वं सिद्धम् एतदज्ञातृत्वं प्रत्येव पृथक् तत्तद्देवता विधीयन्त इति भावः। आत्माधिकार इति। आत्मनः परमात्मनोऽधिकारः फलत्वेन स्फूर्तिर्यस्मिंस्तस्मिन् योगे चित्तस्यैकाग्र्यावस्थायां बहि-र्वृत्तिनिरासात् कारणे लयो योगस्तस्मिन् योगिभिरपि चिन्त्यते परमभागवतैर्नित्यमुक्तैः॥ ११ ॥

मुनिसात्वतादीनां षण्णामिति तत्र मुनयो मुमुक्षवः १ सात्वताः साधकभक्ताः २ धीरास्तत्राप्येकान्तिनः ७ याज्ञिकाः ४ योगिनः ५ परमभागवताश्चेति ६ ये षट् सेवकास्तेषां मध्ये वस निवास इति धातुः लिट् अत इडभावश्छान्दसः पर्युषितयेति तु साधुः यद्यपि स्पर्धते तथापि पूर्वार्धे अङ्घ्रिवर्णनस्य क्रमभङ्गो जातः पर्युष्टये-त्यार्षत्वकल्पनञ्चातो यद्धेति। द्वितीयेऽप्यर्थे आर्षत्वकल्पनं तद-वस्थमेवेति यशसि श्रद्धावतां सप्तमाधिकारिणां मुन्यादिषड्-भ्योऽपि श्रैष्ठ्यं वदन्तस्तद्यश एव मालारूपकत्वेन वर्णयन्ति। अथ वेति॥ १२ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

यथा स्याच्छुद्धिरित्यन्वयः। कस्य चित् कचिदित्यर्थः॥ ९ ॥

स्वर्गाधिगमतुल्याय तपः आर्द्रहृदा भक्तिमता मनसा समविभूतये साम्यापत्तये सवनशः त्रिसन्ध्यं स्वरति-क्रमाय स्वर्गातिक्रमाय॥ १० ॥

परीष्टः प्राप्तुमभिलषितः॥ ११ ॥

पर्युष्टया यस्मिन्नङ्घ्रौ पर्युषितया वनमालया श्रीः संस्पर्धिनी मालायाः श्रियश्च त्वदङ्घ्रि सम्बन्धस्तुल्य इत्यर्थः यः अङ्घ्रिः॥१२॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

आहतां त्वदुपासकानामनवद्यत्वावह इति यत्त्वत्कथा-श्रवणमात्रमेवानितरसाध्यां निरतिशयां शुद्धिमावहतीत्याहुः। शुद्धि-रिति। हे ईड्य! सत्त्वात्मनां सत्त्वप्रचुरमानसानाम् अथ भवायक-दुराशयानां दुष्टः दुष्टशब्दादिविषयप्रवण आशयोऽन्तःकरणं येषां तेषामत्यन्ताशुद्धियुक्तानामित्यर्थः तेषां नृणां विद्यादिभिर्न तथा शुद्धिर्भवेत् कथं यथा श्रवणेन सम्भृतया परिपुष्टया प्रवृद्धया तव यशसि विषये सच्छ्रद्धया स्यात् अध्ययनं पूर्वोत्तरभाग-द्वयात्मकवेदाध्ययनं श्रुतं तदर्थश्रवणं विद्या तज्जन्यज्ञानं तपोऽन-शनादिरूपं कृच्छ्रचान्द्रायणादिरूपं वा क्रिया वर्णाश्रमानुगुणक-र्मयोगः॥ ९ ॥

यत्त्वत्कथाश्रवणमेव निरतिशयशुद्ध्यावहं किमुत ध्याना-र्चनादिविषयत्वदङ्घ्रिरित्यभिप्रायेण मुन्यादिभिर्ध्यातोऽर्चितस्त्वद-ङ्घ्रिरस्मत्प्रणतिविषयोऽस्माकमशुभनिस्ताराय भवत्विति प्रार्थयन्ते स्यादिति। तवाङ्घ्रिर्नोऽस्माकम् अशुभाशयधूमकेतुः स्यात् अशुभाः-शयाः पापवासनाः तेषां धूमकेतुरिव धूमकेतुर्हि प्राणिनामशुभा-वहस्तेषां निरासकः स्यादिति यावत् तं विशिनष्टि योऽङ्घ्रिः मुनिभिः क्षेमाय संसृतिनिस्ताररूपाय आर्द्रहृदा भक्तिमता मनसा ऊह्यमानः आध्यायमानः चिन्त्यमान इति यावत् यश्चात्मवद्भिः स्वात्मपरमात्मया-

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

थात्मयाथिद्भिः सात्वतैः पाञ्चरात्रैः समविभूतये समानैश्वर्याय स्वरतिक्रमाय स्वर्गलोकमतिक्रम्य नित्यविभूतिं गन्तुमित्यर्थः। व्यूहे वासुदेवादिव्यूहोपासने सवनशस्त्रसन्ध्यं यश्चिन्त्यते इति अर्चितः ॥ १० ॥

किं च हे ईश! प्रयता नियताः पाणयो येषां तैः केवलवैदिककर्मैकप्रवणपाणिभिरित्यर्थः। तैस्त्रय्या वेदविद्यया निरुक्तो यो विधिर्विधानं तेन हविश्चरुपुरोडाशादिकं गृहीत्वाऽध्वराग्नौ आहवनीयादौ यश्चिन्त्यते इत्यनु षज्यते यश्च अध्यात्मयोगिभिरध्यात्मयोगे आत्मयाथात्म्यज्ञानयोगे चिन्त्यते इत्यनुषज्यते यश्चात्ममायां जिज्ञासुभिः सांख्यैरित्यर्थः तथा परमभागवतैः परमैकान्तिभिः प्रपत्तिनिष्ठैः परीष्टः इषुगतौ परितो व्याप्तः परिभूतः सेवित इति यावत् परीष्टः पर्याप्तः प्राप्तुमभिलाषित इति वा वरिष्ठ इति पाठे वरिष्ठः श्रेष्ठोऽङ्घ्रियः परमभागवतैश्चिन्त्यते इति सम्बन्धः यद्यपि निरीश्वरसांख्यानां न पुरुषातिरिक्तः परमात्मा विद्यते तथापि तेषां चिन्त्यस्य प्रकृतिवियुक्तात्मस्वरूपस्य परमात्मशेषतया तेरविज्ञातत्वेऽपि तस्य तदपृथक्सिद्धविशेषणत्वात्तच्चिन्ता पर्यन्तपर्यवसितैव भवति तत्पर्यन्तज्ञानाभावाच्च न तेषां मुक्तिरपितु कैवल्यमेवेत्यभिप्रायेणात्ममायां जिज्ञासुभिश्चिन्त्यत इत्युक्तम् ॥ ११ ॥

ननु पादयोरेषु बहुष्ववयवेषु सत्स्वपि किमित्यङ्घ्रिमेवबहुमन्यध्वे इत्यत्र भोग्यतमत्वादित्यभिप्रेत्य प्रार्थयन्ते। पर्युष्टयेति। हे विभो! भगवती श्रीर्लक्ष्मीर्वक्षःस्थितापीति शेषः तव यद्विमलाङ्घ्रौ पर्युष्टया पर्युषितया कर्त्री कः अङ्घ्रिपर्यन्तावलम्बिन्येति विवक्षितोऽर्थः तया वनमालया प्रतिपत्निवत् इत्यर्थः सपत्नीवत् संस्पर्द्धिनी स्पर्द्धावती बभूवेत्यर्थः। श्रियो वनमालायाश्च त्वदङ्घ्रौ संस्पर्द्धतुल्यः भोग्यतमत्वात्त्वदङ्घ्रिं सेवन्ते इतिभावः तदेवाहुः यः अमुया श्रिया सुप्रणीतमानीव समर्पितमर्हणमादददादानः स्वीकुर्वाणः सोऽङ्घ्रिः सदा नोऽस्माकमशुभाशयधूमकेतुः स्यात् अस्य पूर्ववदर्थः ॥ १२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तव कीर्तिश्रवणपूर्णसच्छ्रद्धया संसारिणामपि सात्विकानां गुणनिमित्तपापाद्विलेपाभावेनात्यन्तिकी शुद्धिर्भवति किमुत तवेति भावेनाह। शुद्धिरिति हे ईड्य! दुराशयानां नृणां तथा विद्यादिभिः शुद्धिर्न स्यात् यथा सत्वात्मनां पुंसां ते तव यशसि प्रवृद्धसच्छ्रद्धया शुद्धिः स्यादित्यन्वयः। अनेन श्रयोऽपि गुणा अशुद्धिहेतव उत नेति शङ्कापहस्तिता सत्वगुणस्य भगवत्कथारतिहेतुत्वाच्छुद्धिकरत्वेन ज्ञानजनकत्वेन मुक्तिहेतुत्वात् ॥ ९ ॥

अस्तु नित्यनिर्दुःखानन्दः सृष्ट्यादिकर्ता च ततः किमस्माकमिति तत्राहुः। स्यान्न इति। यो मुनिभिः क्षेमाय आर्द्रहृदोह्यमानः यश्च सवनशः त्रिकाले आत्मविद्भिः स्वरूपविज्ञानविद्भिः सात्विकैः पुरुषैः समविभूतिभिः समविक्रमैर्वासुदेवादिभिः व्यूहार्चितः तव सोऽङ्घ्रिरशुभाशयधूमकेतुः स्यादित्यन्वयः ॥ १० ॥

पुनरप्यङ्घ्रिं विशेषयन्ति। यश्चिन्त्यत इति। त्रय्या वेदत्रयेण निरुक्तविधिना स्वहविर्गृहीत्वा प्रयतपाणिभिर्याज्ञिकैः अध्वराग्नौ विचिन्त्यते "उताप्ययंविकल्पयो" रित्यभिधानं यश्चाध्यात्मयोगे उत परमात्मध्यानेऽपि आत्ममायाजिज्ञासुभिः योगिभिः परमभागवतैः परीष्टः सम्यक् पूजितः ॥ ११ ॥

किञ्च येयं श्रीर्भगवती पर्युष्टया वर्जितम्लानभावया निरुत्फुल्लयाऽस्तत्वं पतितया वनमालया सह प्रतिपक्षवत्संस्पर्द्धिनी असंस्पर्द्धिनी स्पर्द्धावतीव तिष्ठतीत्यर्थः—

अस्पर्द्धिनी स्पर्द्धिनीव श्रीरास्ते वनमालया ।
नहि स्पर्द्धा द्वयो दोषाः संविद्रूपां स्पृशन्ति ताम् ॥

इतिवचनात् यश्चामुया श्रिया सुप्रणीतमर्हणमर्चनमाददान आस्ते यद्वा अवयविनो धर्म आह्लादित्वावयवस्य कथं युज्यत इत्यत आह। स इति। सः प्रकाशरूपः पूर्वत्र सच्छब्दरूपः अत्र तु अकारान्त इति अनेन लोकविलक्षणत्वेन हरेरवयवस्य पादस्यावयविवत् ज्ञातृत्वेशत्वादानादिधर्मो युक्त इति ज्ञातव्यम् ॥ १२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

विद्यादिसद्भावेऽपि दुराशयानामिति शुद्धभक्तिश्रद्धाया अभावात् विद्याद्यसद्भावेऽपि सत्वात्मनामिति तद्भावात् तदेवं श्रूयवतामिति तथात्वे किमु पश्यतामिति भक्तसुखार्थमेव स्वचेष्टेति भावः ॥ ९ ॥

मुनिभिरात्मारामैरपि क्षेमाय परमसुखाय सात्वतैर्भक्तैः आत्मात्मत्वेन नायकत्वेन विद्यते येषां तादृशैः समानां स्वर्गापवर्गनरकेष्वपि तुल्यार्थदर्शिनां नारायणपरायणानां विभूतये परमसुखरूपायै स्वरतिक्रमाय इतरसुखभोगातिक्रमाय चार्चितः ॥ १० ॥

यश्चिन्त्यत इत्युक्तमाधिकारिपरम् अत एव त्रय्या निरुक्तविधिनेति त्रयीतात्पर्यपर्यवसितविधिनेत्यर्थः। एतद्ध्यानिनः प्रत्येकं सा सा देवता पृथग्विभाव्यत इति भावः। तथा च सर्वार्थदत्वेन चरणस्य चरणोपनिषदुदाहरिष्यते चरणं पवित्रमित्यादिका ॥ ११ ॥

तादृशस्यापि चरणस्य स्वेषु परमानुग्रहं दर्शयितुमाहुः। पर्युष्टयेत्यर्द्धेन तद्वत् पर्युष्टापि लक्ष्मीर्दुःसहापि कथं सा न त्यज्यत इति पूर्वपक्षमुत्थाप्य तमेव सिद्धान्तेन दर्शयन्ति। य इत्यर्द्धेन योऽहि नोऽस्मत्कर्तृकमभुया वनमालया करणभूतया अर्हणां स्वयं प्रणयपुक्तं यथा स्यात्तथा ददत् स्वीकृतवानिति अनेन स्वैः कदाचिद्दत्तानामेव तदा श्रीभगवान् धृतवानिति ज्ञापितम् यद्यपि तस्या मालाया दिव्यत्वात् पर्युष्टत्वं न सम्भवति स्वरूपा च तत्रेष्टभूषणत्वाच्च सम्भवति तथापि सप्रणयविनोदोक्तिमात्रमिदम् ॥ १२—१५ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अतो यथा त्वच्चरणमेव नमस्यं तथैव त्वद्यश एव श्रवणस्मरणादिविषयीकर्तव्यमित्याहुः। शुद्धिरिति। हे ईड्य नुभोः विद्यादिभिस्तथा शुद्धिर्न भवति यतस्ताभिरेव दुराशयानां विद्यादिभिर्गर्वेण दुष्ट एवाशयः प्रायः स्यादित्यर्थः सत्वात्मनां शुद्धसत्ववपुषा-

केतुस्त्रिविक्रमयुतस्त्रिपतत्पताको यस्ते भयाभयकरोऽसुरदेवचम्वोः ।
स्वर्गाय साधुषु खलेष्वितराय भूमन् ! पादः पुनातु भगवन् ! भजतामघं नः ॥ १३ ॥
नस्योतगाव इव यस्य वशे भवन्ति ब्रह्मादयस्तनुभृतो मिथुरर्द्यमानाः ।
कालस्य ते प्रकृतिपूरुषयोः परस्य शं नस्तनोतु चरणः पुरुषोत्तमस्य ॥ १४ ॥
अस्यासि हेतुरुदयस्थितिसंयमानामव्यक्तजीवमहतामपि कालमाहुः ।
सोऽयं त्रिणाभिरखिलापचये प्रवृत्तः कालो गभीररय उत्तमपूरुषस्त्वम् ॥ १५ ॥
त्वत्तः पुमान् समधिगम्य ययास्य वीर्यं धत्ते महान्तमिव गर्भममोघवीर्यः ।
सोऽयं तयाऽनुगत आत्मन आण्डकोशं हैमं ससर्ज बहिरावरणैरुपेतम् ॥ १६ ॥

भाषा टीका ।

करने को अग्नि के तुल्य होवे कैसा चरणारविन्द है जिसको कि प्रेम युक्त हृदय से मुनि जन धारण करते हैं, और जिस चरणारविन्द को आपके भक्तजन सायुज्य मुक्ति पाने के लिये आत्मज्ञानी हो कर स्वर्ग को उल्लंघन कर, के वैकुण्ठ लोक को जाने के वास्ते चतुर्व्यूह रूप से पूजन करते हैं ॥ १० ॥

हे ईश ! जिस चरण को याज्ञिक लोग यज्ञ की अग्नि के समीप हवि को ग्रहण कर के हाथ जोड़ कर वेदत्रय की कही विधि के अनुसार चिन्तन करते हैं और जिस चरण को योगिजन आत्म माया के जानने कि इच्छा से योग समाधि में चिन्तन करते हैं और जिस चरण को सर्वोत्तम भागवत जन सर्वथा पूजते रहते हैं ॥ ११ ॥

हे विभो ! जिस आपकी वनमाला के हृदय, में रहने से यह जूठी है ऐसा जानकर सौतिनसरीकी लक्ष्मी जी वैर करती हैं तो भी भक्तों कि दिई उस माला से आप सब के और हमारे पूजन को ग्रहण करते हो तिन आप का चरण हम लोगों के पाप नाश को अग्नि के तुल्य हो जावै ॥ १२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

त्वच्चरणस्य भक्तपक्षपातः प्रसिद्ध एवेति स्तुवन्तः प्रार्थयन्ते । केतुरिति । बलिबन्धने त्रिभिर्विक्रमैर्युतः तत्र द्वितीयविक्रमे सत्यलोकं गतस्तव पादः केतुरत्युच्छ्रितो विजयध्वज इव तस्मात्पादच्युतेति त्रिपतत्पताकः त्रिधा पतन्ती त्रिषु लोकेषु वा पतन्ती गङ्गा पताका यस्य तथा सुरदेवचम्वोस्तत्त्वेनलोकभयाभयकरः साधुषु सुरेषु स्वर्गाय खलेष्वसुरेष्वितरायेतरस्मै अधोगमनाय च एवं केतुरूपस्ते पादः स भजतां नोऽघं पुनातु शोधयतु अघादिति पाठे भजतां नः इति कर्मणि षष्ठी अघाद्भजतोऽस्मान्पुनात्विति तथा च श्रुतिः " चरणं पवित्रं विततं पुराणं येन पूतस्तरति दुष्कृतानि । तेन पवित्रेण शुद्धेन पूता अतिपाप्मानमरातिं तरेम । लोकस्य द्वारमर्चिमत्पवित्रं ज्योतिष्मद्भ्राजमानं महस्वत् । अमृतस्य धारा बहुधा दोहमानम् चरणं नो लोके सुधितां दधात्विति" ॥ १३ ॥

ननु युद्धे देवासुरादयः परस्परं जयन्ति जीयन्ते च किमहन्तस्वतन्त्रा आहुः । नसीति । मिथुर्मिथोऽर्द्यमाना युद्धादिभिः पीड्यमाना ब्रह्मादयोऽपि यस्य तव वशे भवन्ति न तु जये पराजये वा स्वतन्त्राः के इव नसि नासिकायामाविध्य बद्धा गावो बलीवर्दा इव कुतः कालस्य कलयितुः प्रवर्तकस्य तवैव कुतः प्रकृतिपुरुषयोरपि परस्य तस्य ते पुरुषोत्तमस्य पादो नः शं तनोतु ॥ १४ ॥

प्रकृतिपुरुषाभ्यां परत्वमुपपादयन्तः कालत्वेन पुरुषोत्तमत्वमाहुः । अस्येति । अस्य जगत उदयादीनां हेतुरसि कुतः अव्यक्तं प्रकृतिर्जीवः पुरुषो महान्महत्तत्त्वं तेषां कालं नियन्तारं त्वामाहुः "अक्षरात्परतः परः महतः परमव्यक्तमव्यक्तात्पुरुषः परः पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गति"रित्याद्याः श्रुतयः किञ्च अयं संवत्सरात्मको यः कालस्त्रिणाभिस्त्रीणि चातुर्मास्यानि नाभयो यस्य सोऽपि त्वमेव अतस्त्वमुत्तमपुरुष इति तथा च गीतासु " यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः । अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः " इति ॥ १५ ॥

त्वमेव प्रकृत्यादिद्वारा जगत्सृष्ट्यादिहेतुरित्युक्तं तत्केन प्रकारेण तदाहुः । त्वत्त इति । त्वत्तः पुरुषो वीर्यं शक्तिं समधिगम्य प्राप्य यया मायया सह महान्तं धत्ते कमिव अस्य विश्वस्य गर्भमिव सोऽयं महान् तयैव माययाऽनुगतः स्वात्मनः सकाशादाण्डकोशं ससर्ज त्वयानुगत इति पाठेऽपि तया मायया त्वयाऽधिष्ठितः सन्निति ॥ १६ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

तव ध्वजत्वं तत्पादच्युतेति त्रिषु लोकेष्विति सप्त दिवि मन्दाकिनी पाताले भोगवती भुवि तु गङ्गेति ज्ञेयं चरणमिति पवित्रं शुद्धं विततं व्यापकं पुराणम् अनादि नित्यनूतनं वा येन पूतः पवित्रीकृतः तेन पवित्रेण पापपर्वतारण्यावकेण शुद्धेन स्वयम् पवित्रेण अरातिं संसारलक्षणं लोकस्य वैकुण्ठस्य सोपानभूता

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

द्वारं प्रापकम् आर्क्ष्मतः पवित्राद्वङ्ग्रेरपि पवित्रं ज्योतिष्मत् सूर्यादिभ्योऽपि भ्राजमानं महत्त्वत् स्वस्मै स्वयं प्रकाशम् अमृतस्य प्रेमानन्दस्य धाराः प्रवाहान् बहुधा वैचित्र्येण पूरयत् परया लोके स्वभक्तजने सुधितां सुधिततां सुधापदादहरणीयतां दधातु ॥ १३ ॥

तत्र देवासुरादीनां परस्परजयपराजययोः अहं किं करोमीति शेषः । तदेव कालत्वमेव परस्य कारणत्वं ॥ १४ ॥

प्रकृतिपुरुषाभ्यां प्रधानजीवाभ्यां परत्वम् उपपादयन्तः युक्त्या प्रतिपादयन्तः अनुमानार्थापत्त्यन्यतरत्वं हि युक्तिरत्र हि प्रकृत्यादिनियन्तृत्वान्यथानुपपत्त्या तत्परत्वं सिद्धं प्रकृतेः परतोऽक्षराज्जीवात् पर इति जीवपरत्वं महत्तत्त्वात् परमव्यक्तं प्रधानं प्रधानात् परस्तत्प्रवर्तकः पुरुषः परमेश्वरात् परं किञ्चिदन्यन्नास्ति सा पुरुषरूपा अत्र तच्छब्दस्य विधेयलीङ्गत्वात् स्त्रीत्वं स हि पुरुषः परमोऽवधिरित्यर्थः । परा गतिः परमपुरुषार्थ इति श्रुतिपदार्थः अतः काष्ठत्वात् गीतावाक्यं स्वरं प्रधानादिवर्गम् अत्यराजीवात् ॥ १५ ॥

तत् तत्कारकहेतुत्वं यथा मायया सह यस्यां मायायामित्यर्थः । अनुगत् व्याप्तः सन् आत्मनः स्वस्मात् सकाशात् इमं प्रकाशमहुतं पाठान्तरे तथा माययैव त्वयाधिष्ठितः नतु शुद्धस्वरूपेणान्यथा विकारप्रसङ्गः स्यादिति ॥ १६ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

त्रिपतत्पताकः त्रिधा पतद्गङ्गाप्रवाहपताक इतराय नरकाय ॥१३॥

कालस्य कालशरीरकस्य ॥ १४ ॥

अस्यासीति । उदयादिहेतुरसि एवंभूतं त्वां कालमाहुः । कालविशिष्टरूपेण सृष्ट्यादिहेतुरसीत्यर्थः । त्रिनाभिः समन्यूनाधिकाहोरात्रनाभिः अपक्षये क्षये ॥ १५ ॥

त्वत्त इति । अमोघवीर्यः कालः त्वत्तः पुमांसं वीर्यमाधिगम्य लब्ध्वा प्रकृतौ गर्भं धत्ते आधत्त इत्यर्थः । सोऽयं कालः ॥१६॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

निरतिशयशुद्धयावहत्वाद्भक्तपक्षपातित्वाच्चाङ्घ्रिमेव वयं मन्यामहे इत्यभिप्रेत्य प्रार्थयन्ते । केतुरिति । योऽङ्घ्रिः त्रिभिर्विचक्रमे त्रिविक्रमैः त्रिलोकसङ्ग्राहकैः न्यासैर्युक्तः तत्र द्वितीयविक्रमे सत्यलोकं गतस्तव पादः केतुरुच्छ्रितो विजयध्वज इव तस्य रूपायन्ति त्रिपतत्पताकः त्रिधा पतन्ती त्रिषु लोकेषु वा पतन्ती गङ्गा पताका यस्य सः अनेन निरतिशयशुद्ध्यावहत्वं सूचितं गङ्गा हि जगत्पावनी तत्पादसम्भवत्वात् असुरदेवचम्वोः तत्सेनयोः भयाभयकरः अनेन भक्तपक्षपातित्वं सूचितं किं च यः साधुषु स्वर्गाय सुखायासाधुषु इतराय दुःखाय च भवति स तव पादोऽङ्घ्रिः हे भूमन् ! हे भगवन् ! भजतां नोऽस्माकमघं पुनातु शोधयतु असुरदेवचम्वोर्भयाभयकर इत्यनेन तयोर्जय-



पराजययोः अस्मार्कोक्त्या तद्वश्यता सूचिता ॥१३॥

तामेवाविष्कुर्वन्तः प्रार्थयन्ते । नसीति । नसि नासिकायां प्रोता नासाभाविद्धा यस्याः बलीवर्दा इव ब्रह्मादयः तनुभृतो देहिनः मिथुर्मिथः युद्धादिभिः अर्द्यमानाः पीड्यमानाः प्राणिस्वमायाः सन्तो यस्य तव वशे भवन्ति वश्या भवन्तीत्यर्थः । ब्रह्मादय इति परोक्ष्यनिर्देशः कल्पान्तरीयब्रह्मादीनामपि तद्वश्यताभिप्रायकः तत्र हेतुत्वेन तं विशिंषन्ति कालस्य कालशरीरकस्य ब्रह्मादीनपि स्ववशी कुर्वतः कालस्यापि नियन्तुः तत्र हेतुः प्रकृतिपूरुषयोः परस्य विलक्षणस्येश्वरस्यैवम्भूतस्यात एव पुरुषोत्तमस्य तथाचोक्तं भगवतैव "यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः । अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तम" इति तव चरणोऽस्माकं शं सुखं तनोतु ॥ १४ ॥

प्रकृतिपुरुषयोः परस्य पुरुषोत्तमस्येत्यनेन ताभ्यां परत्वमेव पुरुषोत्तमत्वमिति सूचितम् तदेवोपपादयन्ति । अस्यासीति । अस्य स्थूलचिदचिदात्मकस्य जगतः उदयस्थितिसंयमानामुत्पत्तिस्थितिलयानां हेतुरसि अनेन पुरुषोत्तमशब्दसमानविषयपरमात्मशब्दप्रवृत्तिनिमित्तं सूचितं तथाहि उदयहेतुरित्यनेन जगत्तत्कार्यत्वं फलितम् अत एव कार्यानुप्रवेशोऽपि "तत्सृष्ट्वा तदेवानुप्राविश"दिति श्रुतेः स्थितिहेतुरित्यनेनान्तः प्रविश्य प्रशासनेन भर्तृत्वं व्याप्यगतदोषासंस्पर्शश्चेत्युभयं फलितम् एतदेव हि परमात्मशब्दस्य प्रवृत्तिनिमित्तं यत्सर्वकार्यव्यापनभरणमिति तेनैव नियमनस्वाम्यादिकं तथा च गीतं भगवता "यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः" इति परमात्मविषय एव पुरुषोत्तमशब्द इति तेनैव गीतम् "उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृत" इति तदेवं परमात्मपुरुषोत्तमशब्दयोः समानविषयत्वं फलितं तत्र पुरुषोत्तमशब्दे "प्रशंसावचनैश्च" इति समासमभिप्रेत्य तत्समानार्थकविशेषणसमासविषयत्वमाहुः । उत्तमपुरुषत्वमिति । तत्रोत्तमत्वस्यावधिसापेक्षत्वादाहुः । अव्यक्तेति । अव्यक्तजीवमहतामुत्तमपूरुष इति सम्बन्धः "यस्मात् क्षरमतीतोऽह"मिति गीतावचनानुगुण्यात् इत्यत्र अव्यक्ताद्यवधिसापेक्षत्वादुत्तमशब्दस्य "समर्थः पदविधिः सापेक्षो नित्यं सर्वः समस्यत" इतिन्यायेन नित्यसापेक्षत्वात्समासः यद्यपि अव्यक्तजीवमहद्भ्य इति पञ्चमीनिर्देश उचितः तथापि पुरुषोत्तमशब्दे नीचोत्तमभावसम्बन्धावलम्बिन्याः शेषषष्ठ्या अपि समासः साधुरिति ज्ञापनाय षष्ठीनिर्देशः तत्राव्यक्तशब्देन प्रकृतिस्तत्संसृष्टश्चेतनश्च विवक्षितः जीवशब्देन मुक्तो नित्यश्च महच्छब्देन महदादिप्रकृतिकार्यं कृत्स्नं विवक्षितं पुरुषोत्तमशब्देन "यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तम" इति गीतावचनात् पञ्चमीनिर्देशगर्भात्पञ्चमीसमासोऽप्यवगम्यते न च तद्विधायकाभावः तात्परस्तपर इत्यनेन पञ्चमी भयेनेत्यत्र पञ्चमीतियोगविभागादेव तदुपपत्तेः अत्र पञ्चमीषष्ठीसमासयोः पुरुषशब्दो बद्धमुक्तोभयावस्थजीवमात्रपर इति संयमहेतुरित्युक्तं संहारहेतुत्वमुपपादयन्ति । कालमिति । कालशरीरकमाहुः कालशरीरकत्वेन संहारहेतुत्वमाहुरित्यर्थः । कोऽसौ काल इत्यतस्तत्स्वरूपमाहुः । यः त्रिणाभिः समन्यूनाधिकाहोरात्रनाभिः त्रीणि चातुर्मास्यानि नाभिर्यस्येति वा स संवत्सरात्मकः अखिलस्य जगतोऽपचये अपक्षये प्रवृत्तो गभीरवेगः सोऽयं काल उत्तमपूरुषत्वमित्याहुरिति सम्बन्धः । अत्र श्रुतयः स्मृतयश्चेति कर्तृपदाध्याहारः "परंज्योति-

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

रूपमुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते स तत्र पर्येति स उत्तमः पुरुष" इत्यादिकाः श्रुतयः "अव्यक्तं पुरुषोत्तमस्य ह्यनादिमध्यान्तमजस्य विष्णो"रित्यादिकाः स्मृतयः अनेन "अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तम" इत्यस्यार्थ उक्तः अत्र च भगवद्गीताभाष्ये वेदार्थावलोकनाल्लोक्यते इति लोक इति स्मृतिरिहाभिधीयत इति भाषितम् कालमाहुरित्यादिना गभीररय इत्यन्तेन सर्वहेतुत्वमुपपादितम् ॥ १५ ॥

अथ सृष्टिहेतुत्वमुपपादयन्निति । त्वत्त इति । पुमाननिरुद्धाख्यः सः जगद्व्यापारेऽधिकृतः अमोघवीर्यः अमोघमप्रतिहतं सङ्कल्परूपेण सृष्ट्यावहं वीर्यं सृष्ट्युपयुक्तविविधविचित्रशक्तिर्यस्य स त्वत्तः सर्वव्यूहमूलभूतात्समधिकृत्य तावदाविर्भूय अत्येति तादर्थ्ये च षष्ठी परिदृश्यमानजगत्सृष्ट्यर्थमित्यर्थः । यथा प्रकृत्या महान्तमहत्तत्त्वाख्यं वीर्यं धत्ते [illegible] कामिव गर्भमिव पुरुषो योषिति गर्भमिव प्रकृतौ महत्तत्त्वमुत्पादयामासेत्यर्थः । प्रकृतावाहितायाः परिणामसामर्थ्यरूपायाः शक्तेः कार्यरूपत्वान्महत्तत्त्वस्य वीर्यत्वव्यपदेशः सोऽयं महान् तथा प्रकृत्याऽनुगतः कारणतयाऽनुगतः कारणभूतप्रकृतिवद्गुणत्रययुक्त इत्यर्थः । आत्मनः सकाशादण्डकोशं ससर्ज अहङ्कारतन्मात्रमहाभूतेन्द्रियद्वारा सृष्टवानित्यर्थः । कथम्भूतं हैमम् आवरणैः पृथिव्यादिभिः सप्तभिर्बहिरावृतम् । अत्र सोऽयमित्यनेन भगवदात्मको महान् विवक्षितः । अण्डकोशशब्दस्तदन्तर्वर्तिब्रह्मादिसमस्तवस्तूनामप्युपलक्षणार्थो ज्ञेयः ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

हे भगवन् ! भूम्नः ते पादो नोऽस्माकं जगतां चाघं पुनातु यस्त्रिविक्रमस्ततः त्रयो विक्रमा एव प्रशस्तकर्माणि यस्य तथा तस्य प्रशस्ते कर्मणि तथेत्यादि तस्य तव केतुर्ध्वजस्त्रयो वेदा एव पतन्त्यश्चलन्त्यः पताका यस्य स तथा यश्चासुरदेवचम्वोः भयाभयकरः किञ्च यः साधुषु स्वर्गाय सुखाय खलेष्वितराय दुःखाय भवतीति ॥ १३ ॥

सुखदुःखयोः कारणत्वेन हरेः पादस्य स्वानन्दत्वं प्रत्यक्षगिनिभावेनाह । नस्योरगाव इति । सुखदुःखयोर्निबन्धनाद् इन्द्रियाभिमानिनो देवाश्च यस्य पादस्य वशे वर्तन्ते नासि नासिकायाम् ओता गावः स्वामिन इव ; यस्य तनुभृतां शरीरिणां आयुषि शतवर्षलक्षणे रच्यमानः * संवत्स्यमानः तावत्कालं स्थितवान् अहञ्च दुःखवानिति अभिमानशून्यश्चेति तनुभृदायुषि रच्यमानस्य पुरुषोत्तमस्य ते चरणो नः शं तनोत्वित्यन्वयः अन्यथा संपरित्यक्तो मृत इत्युच्यते नर इत्यनेन श्रीहरिसंबन्धो देहिनां विज्ञायते तदभिमानशून्यत्वे हेतुमाह । प्रकृतीति । अत्रापि हेतुमाह । कालस्येति । कालप्रेरकस्य तस्य सकाशात् परस्य वा ॥ १४ ॥

---

* रच्यमान अ इति स्थिते अकः सवर्णे दीर्घ सोऽयमा इतिवत् रच्यमान इति अकारान्तपुल्लिङ्गशब्दोऽयम् अत्र विशेषस्तात्पर्यदीपिकातोऽवगन्तव्यः ।

सृष्ट्यादिहेतुपूर्वोक्तस्य कालं स्थापयन्नाह । अस्य जगतः उदयादीनां हेतुरसि "प्रधानादिदमुत्पन्न"मिति श्रुतेः प्रकृत्यादीनां जगद्धेतुत्वादिकं कथमत्राह । अव्यक्तादीनां हेतुरसि अतः कालः कालनिमात्मत्वाच्च काल इत्याह । कालमात्र इति "सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधी"ति श्रुतेः हरेर्विधान्तरेण कालशब्दवाच्यत्वमाह । त्र्यणाभिरिति । तिस्रश्चातुर्मास्यलक्षणा नाभयो यस्य स तथा गभीररयः अतर्कितापारवेगः सोऽयं कालस्त्वं त्वमिति क इति तत्राह । उत्तमेति । पुरुषोत्तमशब्दवाच्यः संहारकर्तृत्वं विशिनष्टि । आक्षिपतीति । अधुना यादवाद्यखिलजगन्निरासे प्रवृत्तः ब्रह्मा पुरुषोत्तमत्वं विवृणोति । अत्येति । अनेन कथं तद्विवृतमभूदित्यत उक्तम् अव्यक्तेति कालस्वरूपाज्ञाने अस्यायमुत्पत्तिसम्भवः इति निश्चयो न स्यादित्यत्र कालेति कालस्वरूपज्ञाता तन्निर्माता वा कीदृशः कालः येन तद्विशेषज्ञानी स्यादित्यत्राह । सोऽयमिति । हरिः यं कालं विशेषतो जानाति सोऽयं काल एव विशिष्ट इत्यन्वयः । कथमत्राह । त्र्यणाभिरिति । अखिलस्य समस्तप्रपञ्चस्योपचये संहारे च प्रवृत्तः अनेन सृष्ट्यादिविशेषविशिष्टं कालं जानातीत्युक्तं भवति अतश्च किमवसितमत्राह । उत्तमेति । एवंविधात्कालादप्युत्तमस्त्वमित्यर्थः । अनेन प्रकृतिपुरुषकालमहत्तत्त्वेभ्य उत्तमत्वात्पुरुषोत्तम इत्युक्तं भवति । तदुक्तं "कालाज्जीवात्तथाव्यक्तान्महतश्चोत्तमो यतः । उत्तमः पुरुषस्तस्माद्भगवान्विष्णुरुच्यत" इति ॥ १५ ॥

एवकं सृजतस्त्वमसि हेतुरिति श्लोकद्वयेन कथितं सर्जनं त्वत्त इति विवृणोति । त्वत्त इति । त्वत्तो ब्रह्माण्डं जगदुत्पन्नम् इति यदुक्तं तत्प्रधानमधिकृत्य प्रधानाभिमानित्वाच्च्यावान् रमादीनामधिकरणं कृत्वा वर्तते तथापि महाप्रलये प्रकृत्या सह रममाणस्तदा स्त्रीरूपायाः तत्त्वतोऽवलीर्णः पुमान् पुरुषनामाऽमोघवीर्यः भवान् प्रधानाभिमानिन्यां सकाश्यां रमायां महान्तमिव स्थितं स्ववीर्यं गर्भं धत्ते पुरुषनामानं चतुर्मुखं प्रधानाख्यं गायत्रीं च सृष्टवानित्येकोऽर्थः स पुमांश्चतुर्मुखो महान्तमिव गर्भं महत्तत्त्वाभिधमात्मानं श्रद्धाभिधां गायत्रीं च प्रधाननाम्न्यां गायत्र्यां धत्ते सृष्टवानित्यपरः ताभ्यां महत्तत्त्वाख्यश्रद्धाख्याभ्यां शेषोऽहङ्कारापरनामा जातः इत्यन्योऽर्थः "नारायणाख्यः परमः शेते लक्ष्म्याश्रितो यदा । स एव पुरुषाख्यं तु द्वितीयं रूपमात्मनः । कृत्वा रमायां पुरुषनामानं तु चतुर्मुखम् । प्रधानाख्यां च गायत्रीं ससर्ज पुरुषात्मकः । चतुर्मुखः स पुरुषो महत्तत्त्वाभिधं पुनः । प्रधाननाम्न्यां गायत्र्यां ससर्जात्मानमेव तु । श्रद्धाभिधां च गायत्रीं ताभ्यां शेषोऽभ्यजायत" इत्यादिवाक्यात् , एकयुक्तवाक्यस्यान्वयभेदो युज्यते सोऽयं महत्तत्त्वाख्यो ब्रह्मा यो नारायणादभिव्यक्तः पुरुषनामा तेन स्वयाऽनुगतः प्रविष्टः श्रद्धाख्यगायत्री सृष्टाहङ्कारादितत्त्वैः सहात्मनः परमात्मनः प्रवेशादुत्पादनसमर्थैर्बहिर्निर्भरावरणैरुपेतं हैममण्डकोशं ससर्जेत्यन्वयः । अण्डाः अण्डकोशसृष्टिकाले स्वक सृजतीत्यस्य विरोधनिरासार्थं स्वयाऽनुगत इत्युक्तम् ॥ १६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

जीवात् पुरुषादुत्तमत्वेन पुरुषोत्तमत्वं व्यज्य प्रकृतिपुरुषोऽप्युत्तमत्वेन व्यञ्जयति । त्वत्त इति । यथेति यस्यां मायायामित्यर्थः । अन्यत्स्पष्टम् ॥ १६ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

स च तवांघ्रिः प्रायः सर्वलोकानुभवप्रसिद्ध एवेत्याहुः । केतुस्त्रिविक्रमितो विजयध्वज इव तव पादः पुनातु त्रिविक्रमेऽवतारे युतः महाविभूतियुक्त इत्यर्थः । त्रिधा पतन्ती त्रिषु लोकेषु या पतन्ती गङ्गैव पताका यस्य सः असुरदेवचम्वोर्यथाक्रममुभयोर्भयाभयकरः साधुषु सुरेषु स्वर्गाय खलेष्वसुरेष्वितराय अधो गमनाय एवंभूतस्ते पादः भजतां नोऽघं पुनातु शोधयतु अघात्विति पाठे षष्ठी आर्षी अघाद्भजतोऽस्मान् पुनातु तथा च श्रुतिः "चरणं पवित्रं विततं पुराणं येन पूतस्तरति दुष्कृतानि" इति ॥१३॥

ननु यूयं ब्रह्माद्या ईश्वरलोकैर्मननीया भूत्वापि किमिति मां भजध्वे तत्राहुः । नसि नासिकायामोता भविद्धा बद्धा बलीवर्दा इव यस्य तव वशे भवन्ति । मिथुर्मिथो मत्सरादिदोषैः पीड्यमाना इत्यनैश्वर्यमुक्तम् अतः कालस्य तेषां कलयितुर्नियन्तुः नच तथा तव कोऽपि नियन्तेत्याहुः । प्रकृतिपुरुषयोरपि परस्य श्रेष्ठस्य ॥ १४ ॥

उक्तमेव पुरुषोत्तमत्वमुपपादयन्ति । अस्य जगत उदयादीनां हेतुरसि तथा अव्यक्तं मायाकारणोपाधिः जीव उपहितः महान् महत्तत्त्वादिः कार्योपाधिः तेषामपि कालं कलयितारं नियन्तारमाहुः । तथा अयं संवत्सरात्मको यः कालस्त्रिणाभिः त्रीणि चातुर्मास्यानि नाभयो यस्य स तव गभीररयः गम्भीरो वेगश्चेष्टा यस्य अतः कार्यकारणातीतत्वात् जीवाद्युत्तमत्वाच्च त्वमेवोत्तमः पुरुषः यदुक्तं गीतासु "यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः । अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तम" इति ॥ १५ ॥

जीवात् पुरुषादुत्तमत्वमुक्त्वा प्रकृतिद्रष्टुः पुरुषादप्युत्तमत्वमभिव्यञ्जयन्ति । त्वत्तः सकाशात् पुमान् आदिपुरुषः समधिगम्य वीर्यं प्राप्य यया मायया द्वारा वीर्यं वीर्यरूपं महान्तं धत्ते कामिव अस्य विश्वस्य गर्भमिव सोऽयं महान् तयैव मायया अनुगतः सन् आत्मनः सकाशादण्डकोषं ससर्ज ॥ १६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तवांघ्रिः सत्त्वपावित्र्यं प्रसिद्धमेवेति स्तुवन्तः स नो मोक्षप्रतिबन्धकपापनिवृत्तये भवत्विति प्रार्थयन्ते । हे भगवन् स्वाभाविकषडैश्वर्यसम्पन्न ! हे भूमन् अनन्तानन्दस्वरूप ! ते पादः भजतां सेवकानां नोऽघं पुनातु शोधयतु कीदृशः यो वामनावतारे त्रिविक्रमयुतः त्रिभिर्विक्रमैः त्रिलोकसंग्राहकैः पादन्यासैर्युतः तत्र द्वितीये विक्रमे सत्यलोकं गतो यः केतुः महाध्वज इव त्रिपतत्पताकः त्रिषु लोकेषु पतन्ती विष्णुपदी पताका यस्य सः असुरदेवचम्वोः क्रमाद्भयाभयकरः साधुषु विहितकारिषु स्वर्गाय खलेषु निषिद्धकारिषु इतराय नरकाय च भवति एवम्भूतः अत्र श्रुतिरप्यनुसन्धेया "चरणं पवित्रं विततं पुराणं येन पूतस्तरति दुष्कृतानि तेन पवित्रेण शुद्धेन पूता अतिपाप्मानमरातिं तरेम । लोकस्य द्वारमर्चिमत्पवित्रं ज्योतिष्मद्भ्राजमानं महस्वत् । अमृतस्य धारा बहुधा दोहमानं चरणं नो लोके सुधितां दधातु" इति ॥ १३ ॥

भगवदंघ्रेः मोक्षप्रतिबन्धकपापनिवर्त्तकत्वं प्रतिपाद्येदानीं सर्वब्रह्मादयस्त्वदधीनास्त्वं च सर्वप्रवर्त्तक इति स्तुवन्तस्तवांघ्रिर्नो मुक्तिं दास्यतीति प्रार्थयन्ते । नसीति । मिथुर्मिथः अर्द्यमानाः पीड्यमानाः ब्रह्मादयो वशं यस्य प्रकृतिपुरुषयोः प्रधानक्षेत्रज्ञयोः परस्योत्कृष्टस्य स्वामिनः "प्रधानक्षेत्रज्ञपति"रिति श्रुतेः अत एव पुरुषोत्तमस्य अचेतनाच्चेतनाच्च स्वरूपेण भिन्नस्य "यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः । अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तम" इति श्रीमुखोक्तेः अत एव कालस्य चेतनाचेतनयोः कलयितुः प्रवर्त्तकस्य "मत्तः सर्वं प्रवर्त्तते" इति स्मृतेश्च यस्य वशे भवन्ति तत्र दृष्टान्तमाहुः । नस्योतगाव इवेति । नसि नासिकायां कृतच्छिद्रायां प्रोताः नद्धा गावो बलीवर्दा इव तस्य ते चरणः नो मुक्तिलक्षणं सुखं तनोतु विस्तारयतु ॥ १४ ॥

ननु मम सर्वप्रवर्त्तकत्वं भवतां ब्रह्मादीनां मम वशवर्त्तित्वं च कथं घटेतेत्यत्राहुः । अस्येति । अस्य चिदचिदात्मकस्य जगतः उदयादीनां त्वं हेतुरसि निमित्तोपादानरूपं कारणमसि सर्वस्य चिदचिदात्मकस्य जगतः कार्यत्वात्तद्वशवर्त्तित्वं भवतस्तु निमित्तकारणत्वेनोपादानकारणत्वेन च सर्वप्रवर्त्तकत्वमित्यर्थः । तथापि उत्तमपुरुषस्त्वं चिदचिल्लक्षणस्वरूपेण विकारादिदोषवर्जितः ननु "प्रधानादिदमुत्पन्न"मिति श्रुतेः प्रधानस्य "जीवाद्भवन्ति भूतानि जीवे तिष्ठन्त्यचञ्चलाः । जीवे प्रलयमृच्छन्ति न जीवात्कारणं पर"मिति श्रुतेर्जीवस्य "हिरण्यगर्भः समवर्त्तताग्रे आदिकर्ता स भूताना"मित्यादिश्रुतेश्चतुर्मुखस्य कालस्य तथान्ये इति श्रुतेः "कालो भवाय भूतानामभवाय च पाण्डव ! कालमूलमिदं ज्ञात्वा भव स्थैर्यपरोऽर्जुन" इति विष्णुपुराणोक्तेश्च कालस्य च जगत्कारणत्वमस्ति कथं मम जगत्कारणत्वमत आहुः । अव्यक्तस्य "मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वर"मिति श्रुतेः शक्तिभूतप्रधानस्य जीवस्य एष परस्यांश इति श्रुतेः अंशभूतस्य क्षेत्रज्ञस्य महतः चतुर्मुखविशेषस्य "यो वै वेदांश्च प्रहिणोति तस्मै" इत्यादिश्रुतेः भगवदनुग्रहेणैव प्राप्तैश्वर्यस्य यो गभीररयो दुरूहवेगः त्रिणाभिः त्रिसंख्याश्चातुर्मास्यचतुष्टया नाभयो यस्य सोऽयं कालः अखिलस्य जगतः प्रपञ्चये संहारे प्रभुः तस्य चांशभूतस्य त्वं कालकलयितारं प्रवर्त्तकं "सर्वस्य वशी सर्वस्येशानः प्रधानक्षेत्रज्ञपतिः यो ब्रह्माणं विदधाति पूर्वं यः कालकालो गुणी सर्वविद्यः" इत्यादिश्रुतयः आहुः प्रधानादीनां भगवच्छक्तीनामुपानामेकाकित्वात् पृथग्जगद्धेतुत्वाभावाद्भगवत्येव श्रुतीनां समन्वयः तथाहि प्रधानशक्तियुक्ताद्भगवतो महदादिद्वारा इदमुत्पन्नम् जीवयतीति जीवो भगवांस्तस्माद्भूतानि भवन्ति हिरण्यं गर्भे यस्य स तथा भगवान् कालयत्यखिलं कलयतीति कालः भगवान् कालमित्यादि श्रुतिस्मृत्योर्विषयः विस्तरस्तु प्राचां ग्रन्थेषु द्रष्टव्यः ॥ १५ ॥

जीवप्रधानादिविलक्षणचिदचिच्छक्तिमतः जगतःस्थित्युदयादिहेतुत्वमभिधायोक्तं तत्रोभयहेतुत्वमुपपादयन्ति । त्वत्त इति । त्वत्तः अमोघवीर्यः अप्रतिहतप्रभावः पुरुषः पुरुषावतारो वीर्यशक्तिं समधिगम्य प्राप्य अस्य जगतः सृष्ट्यर्थमिति शेषः । महान्तं महत्तत्त्वाभिधं गर्भमिव यया प्रकृत्या धत्ते तया शक्तिमत्त्वेनानुगतः अनुसृतः सोऽयं पुरुषः बहिः सप्तभिरावरणैरुपेतं हैमं प्रकाशबहुलमाण्डकोशं विराडभिधमात्मनः शरीरमिति शेषः ससर्जेत्यन्वयः ॥ १६ ॥

तत्तस्थुषश्च जगतश्च भवानधीशो यन्माययोत्थगुणविक्रिययोपनीतान् ।
अर्थान् जुषन्नपि हृषीकपते ! न लिप्तो येऽन्ये स्वतः परिहृतादपि बिभ्यति स्म ॥ १७ ॥
स्मायावलोकलवदर्शितभावहारिभ्रूमण्डलप्रहितसौरतमन्त्रशौण्डैः ।
पत्न्यस्तु षोडशसहस्रमनङ्गबाणैर्यस्येन्द्रियं विमथितुं करणैर्न विभ्व्यः ॥ १८ ॥
विभ्व्यस्तवामृतकथोदवहास्त्रिलोक्याः पादावनेजसरितः शमलानि हन्तुम् ।
आनुश्रवं श्रुतिभिरङ्घ्रिजमङ्गसङ्गैस्तीर्थद्वयं शुचिषदस्त उपस्पृशन्ति ॥ १९ ॥

बादरायणिरुवाच ॥

इत्यभिष्टूय विबुधैः सेशः शतधृतिर्हरिम् ।
अभ्यभाषत गोविन्दं प्रणम्याम्बरमाश्रितः ॥ २० ॥

---

### भाषा टीका ।

हे भूमन् ! हे भगवन् ! त्रिविक्रम वामन अवतार मे आपका जो पाद तीनों लोकों के उपर पताका के तुल्य होगया थो वह पाद असुर सेना के भय देने वाला है देवसेना के अभय देने वाला है साधु पुरुषों को स्वर्ग देने वाला दुष्टों को नरक देनेवालों है वह चरण भजन करने वाले हमलोगों को पवित्र करै ॥ १३ ॥

आप प्रकृति पुरुष दोनों से परे हो जिन आप के काल के वश होकर ब्रह्मादिक सब देह धारी जीव आपस मे दुखित हो कर जैसे नाक मे पोया हुआ बैल होवे तैसे आपकी आज्ञा को करते हैं तिन आप पुरुषोत्तम का चरण हम लोगों के कल्याण को करै ॥ १४ ॥

इस जगत् की उत्पत्ति पालन नाश के आप हेतु हो प्रकृति जीव महत्तत्व इनके भी आप नियंता हो सो आप तीन चातुर्मास रूप, काल होकर इस संसार के नाश करने मे प्रवृत्त हो ऐसे गंभीर वेग वाले काल रूप आपही उत्तम पुरुष हो ॥ १५ ॥

महत्तत्व रूपी आदि पुरुष ने आप से वीर्य को प्राप्त होकर आपकी उस माया के द्वारा जगत् रूप गर्भाधान किया उसी अमोघ वीर्य वाले पुरुष ने उसी माया के अनुगत होकर अपने स्वरूप से बाहिर सात आवरणों के सहित सुवर्ण मय ब्रह्मांड अंडकोश को उत्पन्न किया है ॥ १६ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

नन्वेवं भूतभीश्वरत्वं मम कुतोऽवगतं मत्राह्निरित्याहुः । तदिति । तत्तस्मात्तस्थुषः स्थावरस्य जगतो जङ्गमस्य च भवानधीशः यद्यस्मान्मायया उज्जृम्भिता या गुणविक्रिया इन्द्रियवृत्तिस्तयोपनीतानर्थान्विषयान् जुषन् जुषमाणोऽपि हे हृषीकपते ! न लिप्तवान् ये त्वन्ये जीवा योगिनो वा स्वतः परिहृतादप्यविद्यमानात्तद्विषयजोषणाद्बिभ्यति वासनामात्रेण बध्यन्त इत्यर्थः ॥ १७ ॥

अलिप्तत्वमाहुः । स्मायेति । स्मायावलोकः मन्दस्मितविलासितोऽवलोकस्तस्य लवः कटाक्षस्तेन दर्शितो यो भावोऽभिप्रायस्तेन मनोहारि यद्भ्रूमण्डलं तेन प्रहिता ये सौरता मन्त्रास्तैः शौण्डैः प्रगल्भैरनङ्गबाणैः कामस्य बाणैः संमोहनैः करणैः कामकलादिभिः षोडशसहस्रं पत्न्यो यस्येन्द्रियं मनो विमथितुं क्षोभयितुं न विभ्व्यो न समर्थाः स भवान्न लिप्त इति पूर्वेणान्वयः ॥ १८ ॥

तवामृतरूपा या कथा तदेव उदकं वहन्तीति तथा कीर्त्तिनदी तथा पादावनेजसरितो गङ्गाख्यश्च त्रिलोक्याः शमलानि हन्तुं विभ्व्यः केन प्रकारेण आनुश्रवं गुरोरुच्चारणमनुश्रूयत इत्यनुश्रवो वेदस्तत्र भवं कीर्त्तिरूपं तीर्थं श्रुतिभिः अङ्घ्रिजमङ्गसङ्गैः च शुचिषदः स्वाश्रमधर्मे स्थितास्तव तीर्थद्वयमुपस्पृशन्ति सेवन्त इति ॥ १९ ॥

विबुधैः सह ॥ २० ॥ २१ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

एवं सृष्ट्यादिकर्तृत्वेन माययेति अत्र सर्वावतारावतारिविशेमयोः श्रीकृष्णस्य स्तोतव्यत्वेन प्रकृतत्वात् स्वांशेन प्रकृतिप्रवर्त्तकपुरुषरूपेण वर्णनमिदं ज्ञेयं "कर्मफलं प्रयोक्ष्यरी"ति न्यायेन जुषमाणत्वेऽपि स्वरूपभूतचिच्छक्त्याऽलिप्तत्वं मायां व्युदस्य चिच्छक्त्या कैवल्ये स्थित आत्मनी"ति श्रीमदर्जुनोक्तेः ॥ १७ ॥

साक्षाद्रूपेऽप्यलिप्तत्वमाहुः स्मायेति । अभिप्रायोऽत्र रमणरूपः प्रहिताः प्रयुक्ताः सौरताः सम्भोगाङ्गरूपा मन्त्रवत् सम्मोहका भावहावहेलावल्यस्ते च ते शौण्डाश्च प्रगल्भास्तैरनङ्गबाणरूपैः करणैः क्रियते वशीक्रियते नायक एभिरिति करणानि तैस्तथा च कामकलाभिरिति व्याख्यातं कामस्य सम्भोगशृङ्गारस्य कला अलङ्कारशब्दवाच्याः भावहावहेलालीलाविलासविच्छित्तिविब्बोककिलकिञ्चितादयो द्वाविंशतिः विशेषेण मथितुं क्षोभमप्रेमवतीतुल्यत्वेन क्षोभयितुं न शेकुः किन्तु यासां यादृशः प्रेमा तादृशत्वमेव शेकुरिति प्रेमवश्य एव त्वं न तु कामीत्यर्थः ॥ १८ ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

तस्मादविस्मयैनैश्वरत्वात् केन प्रकारेणाभयनदीनां शमक्षमत्वम् ॥ १९ ॥

अनन्तरमाश्रित इति । नहि देवाः भुवं स्पृशन्ति इति स्वमर्यादादर्शनाय भगवतोऽपि मनुष्यमर्यादायां स्थेयत्वं दर्शयतीति भावः ॥ २० ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अर्थान् कार्यभूतान् जुषन् लीलारसास्वादकतयानुभवन्नपि न लिप्तः अकर्मवश्य इत्यर्थः । परिहृतादपि वर्जितादपि ॥ १७ ॥ १८ ॥

आनुभवं वेदसिद्धं श्रुतिभिः कर्णपुटैः ॥ १९—३६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथोदयहेतोः पाश्चात्यं स्थितिहेतुत्वमुपपादयन्त आहुः । तदिति । ततः उदयहेतुत्वादनन्तरमित्यर्थः । तस्थुषः स्थावरस्य जगतो जङ्गमस्य च सृष्टस्य चराचरात्मकस्य जगत इत्यर्थः । भवानधीशः अधीशत्वे चात्रान्तः प्रविश्य प्रशासितृत्वं मन्वाद्यन्तर्यामिरूपेण पालकत्वमनिष्टपरिहारेष्टप्रापणात्मकं च इदमेव हि स्थितिहेतुत्वं यन्मन्वाद्यन्तर्यामिविष्ण्वाद्यवतारूपेणानिष्टपरिहारेष्टप्रापणरूपं तत्रान्तर्यामिकृत्यमाह । यन्मायया यस्य तवान्तर्यामिणो मायया तत्तज्जीवकर्मानुगुणसङ्कल्पेनोत्था विजृम्भिता गुणविक्रिया गुणपरिणामात्मकेन्द्रियवृत्तिस्तयोपनीतानर्थान् शब्दादिविषयान् जुषन् अध्यारोपितभेषणोऽत्रजुषिः परस्मैपदमार्षं जोषयन् अनुभावयन्नित्यर्थः । यद्वा लीलारसौपयिकतया जीवद्वारानुभवन्नित्यर्थः। अथापि न लिप्तः पुण्यपापाभ्यामिति शेषः। अकर्मवश्यत्वादिति भावः । तत्र हेतुत्वेन सम्बोधयन्ति हृषीकपत इति। हृषीकानामिन्द्रियाणां तत्पतित्वं तद्वशीकर्तृत्वं तदवश्यत्वं तद्व्यापारात्मकपुण्यापुण्यकारयितृत्वञ्च त्वद्व्यतिरिक्तास्तु नैवंविधा इत्याहुः। येऽन्य इति । त्वद्व्यतिरिक्ताः सर्वे जीवा योगिनो वा स्वतः परिहृतादविद्यमानात्यक्ताद्वा विषयजोषणाद्बिभ्यति वासनामात्रेण बध्यन्त इत्यर्थः ॥ १७ ॥

हृषीकपतित्वमस्मिन्नेवावतारे प्रसिद्धमित्याहुः। स्मायावलोकेति । स्मायावलोको मन्दस्मितविलासितोऽवलोकः स्मेरावलोक इति पाठेऽपि स एवार्थः तस्य लवः कटाक्षस्तेन सन्दर्शितो यो भावोऽभिप्रायविशेषस्तेन मनोहारि यत् भ्रूमण्डलं तेन प्रहिता ये सौरतमन्त्राः सुरतालापाः तैः शौण्डैः प्रगल्भैरनङ्गबाणैः सम्मोहनैः शरैः कामशास्त्रैरपि करणैः षोडशसहस्रमपि पत्न्यः यस्य तवेन्द्रियं विमथितुं क्षोभयितुं वशीकर्तुमितियावत् न विभ्व्यः न समर्थाः प्रबभूवुः त्वन्तु सर्वस्य वशीति भावः । तथाच श्रुतिः सर्वस्य वशी सर्वस्येशान इति ॥ १८ ॥

किं वक्तव्यमर्थान् जुषन्नपि न लिप्त इति यतस्त्वच्चरितं चरणोदकमेव च निर्लेपतामाहतुः इत्याहुः । विभ्व्य इति । उदयहाथवत्रोनद्यां रूढः अत एव "उदकस्योदः संज्ञायाम्" इत्युदादेशः तवा-



मृततुल्या याः कथास्ता एवोदवहा नद्यः तथा पादावनेजसरितः पादक्षालनजलात्मिका गङ्गाद्याः सरितश्च त्रिलोक्याः शमलानि दुरितानि हन्तुं विभ्व्यः समर्थाः यत एवमतएव शुचिषदः शुचये आत्मविशुद्ध्यर्थं सीदन्ति विलसन्तीति तथात्मविशुद्धिकामा इत्यर्थः ते तवानुभवमनुभवो वेदः गुरूच्चारणमनुश्रूयत इति व्युत्पत्तेः तत्सिद्धं कीर्तिरूपतीर्थं श्रुतिभिः श्रवणेन्द्रियैः अङ्घ्रिजं गाङ्गत्वङ्गसङ्गैः स्नानादिभिरित्येवं तीर्थद्वयमुपस्पृशन्ति सेवन्ते ॥ १९ ॥

इतीति । अनन्तरमाकाशमाश्रितः शतधृतिर्ब्रह्मा सेशैः शिवसहितैर्विबुधैः देवैः सह हरिं श्रीकृष्णमित्येवमभिष्टूय स्तुत्वा पुनः प्रणम्य गोविन्दं प्रत्यभाषत उवाचेत्यर्थः ॥ २० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ननु तव सहकारिकारणत्वं मुख्यकारणत्वं चतुर्मुखस्यातः स्वामित्वं च तस्येति तत्राह । तस्थुषः इति । यतो यदनुप्रवेशमन्तरेण एषां तत्त्वानां सर्जनशक्तिर्नास्ति तदनुप्रवेशो शक्ति च ततस्माज्जगतस्तस्थुषां जगतश्चाधिकः ईशः । नन्वेतद्दर्शनं कथं ज्ञायत इति तत्राह । यदिति । मायया इच्छया उत्थगुणविक्रियया सत्त्वप्रकृतिगुणविकारेणोपनीतान् प्राप्तानर्थान् विषयान्सविशिष्टेषु स्थित्वा जुषन्नपि न लिप्त इति यस्तेनाधीश इति ज्ञायते हृषीकपत इति संबुद्ध्येन्द्रियस्वामित्वस्य जीवस्य सत्त्वेऽपि तदनियतत्वदर्शनादीशानियतत्वदर्शनाच्च हरेरिन्द्रियेशत्वं मुख्यमिति ज्ञायते। ननु योगिष्वनैकान्तोऽधालेपहेतुरत्राह। येऽन्य इति। येऽन्ये योगिनः सनकादयः परिहृतानिति द्वितीया पञ्चम्यर्थे स्वतः भवतः प्रसादात्परिहृतेभ्यो विषयेभ्यो बिभ्यति स्म अनर्थं स्मृत्वेति शेषः। "भीत्रार्थानां भयहेतु"रित्यतः पञ्चमी अनेन विषयालेपने योगिनां यस्तद्भवतः प्रसादात् । सोऽहि च भगवतस्तु स्वतो न अन्यनियतं नित्यं चेत्युक्तं भवति ॥ १७ ॥

विषयालेपो नाम तदजितत्वमित्याह । स्मायेति । स्मायो मन्दहासस्तेन सहितोऽवलोकः तस्य लवेन सह दर्शितो भावः शृङ्गारचेष्टा तया हारि मनोहरं भ्रूमण्डलं तेन सह प्रहितः प्रयुक्तः सौरतः सुरते विद्यमानो मन्त्रः तेन शौण्डैर्निशितैरनङ्गस्य बाणायमानैः करणैः आलिङ्गनादिलक्षणैः साधनैर्निमथितुं विलोडयितुं जेतुमित्यर्थः ॥ १८ ॥

यद्ययं भगवान् देवदत्तवाद्विषयलम्पटत्वेन स्त्रीजितस्तर्हि तत्कथाकीर्तनामं पापनाशनं न स्यात्नच तथा निःसङ्गत्वेन स्त्रीजितो नैवेति तर्कं गर्भीकृत्य स्तुवन्ति विभ्व्य इति । सप्तसुप्रथमेति सूत्राद्विभक्तिरिति प्रथमा षष्ठ्यर्थे त्रिलोक्याः यदनन्यसाध्यं तत्सर्वं विभ्वनस्तव अमृतकथोदवहाः अमृतकथालक्षणा नद्यः पादावनेजसरितश्चेति यत्तीर्थद्वयं तदुपस्पृशन्ति स्नानादियोग्यं कुर्वन्ति अत्र किं प्रमाणमत्राह। आनुभवमिति। श्रुतिप्रसिद्धं सत्यक् स्रवन्ति सरितो नद्येन अन्तर्हृदा मनसा पूयमाना" इत्यादेः कुत्राऽप्युरिरयत उक्तं अंघ्रिजमिति अंघ्रिलंघनमतिक्रमणं पञ्जूणां पराक्रमलक्षणकृत्येत्यर्थः । अनयत्र प्रसिद्धं आम वाघ गत्यर्थाविति धातुः कैः करणैः श्रुतिभिः श्रवणैरङ्गसङ्गैश्च किं फलमुद्दिश्य

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

शमलानि मलानि निहन्तुं मलं "विष्ठाऽघयोर्नरकी"ति यादवः शुचावग्नौ सीदति निषीदति तिष्ठतीति शुचिषत् तस्य वन्द्या- कमपदद्वयस्य वा ॥ १९ ॥ २४ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तदेव दर्शयति । तदिति । यस्मादेवं तथांशः पुरुषः अपूर्वा- दीशः तत्र वेशरूपेण जुषन् जोषयन्नपीत्यर्थः । न लिप्तः "कर्मफलं प्रयोक्त्री"ति न्यायेनेति भावः ॥ १७ ॥

नन्वहमत्र तु कामीव लक्ष्ये नेत्याहुः । स्मायेति । अनङ्गबाण- रूपैः करणैः स्वाधिकप्रेमवतीरूपत्वेन कृत्रिमैर्भावहावादिभि- र्विशेषेण सोत्तमप्रेमवतीतुल्यत्वेन मथितुं किन्तु यावांस्तत्र प्रेमा प्रकटावहेत्यर्थः । इति प्रथमस्कन्धपद्यवत् प्रेमवश्य एव त्वं नतु कामीत्यर्थः ॥ १८ ॥

तत्र किं वक्तव्यं तव चरितं कामजयमिति यतस्त्वत्कथापि कामादिशमलमपहन्तीत्याहुः । विभ्व्य इति । अत्रोदवहाशब्दस्य नद्यां रूढिर्तेषां यौगिकत्वेऽमृतत्वं तिरस्कृतं स्यात् पादावनेज- सरित इति तु दृष्टान्तत्वेनोक्तं शमलं निहन्तुं विभ्व्य इत्यपि किं वक्तव्यं यतस्ततीर्थद्वयं सुखविशेषप्राप्त्यर्थं शुचिषदो निर्मल- चित्ता अपि उपस्पृशन्ति सदा सेवन्ते ॥ १९ ॥ २० ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

एवं च मुख्यभूतः परमपरमेश्वरस्त्वमेवेत्याहुः । तदिति । यस्मा- देवं तस्मात् तस्थुषः स्थावरस्य च जगतो जङ्गमस्य च भग- वानधीशः स्रष्टा पुरुष ईशत्वं तु तमप्यधिकरोषीत्यर्थः । यस्मा- न्मायया उत्थिता या गुणविक्रिया इन्द्रियवृत्तिस्तयोपनीतान् विषयान् मर्त्यादिशरीरेषु जीवद्वारा परमात्मैव त्वं जुषमाणः सन्नपि हृषीकपते । हे इन्द्रियनियन्तः । न लिप्तः ये त्वन्ये योगि- नस्ते स्वतःस्वेन परिहृतादपि विषयजोषणाद्बिभ्यति वासनामात्रेण बध्यन्ते इत्यर्थः ॥ १७ ॥

स्वयं भगवद्रूपः साक्षात्त्वं स्वप्राकृतविषयेष्वपि न लिप्त इत्याहुः । स्मायावलोका मन्दस्मितविलसितोऽवलोकः तस्य लवः कटाक्षः तेन दर्शितो यो भावो ऽभिप्रायस्तेन मनोहारि यद्भ्रूमण्डलं तेन प्रहिता ये सौरता मन्त्रास्तैः शौण्डैः प्रगल्भैः अनङ्गस्य बाणै- र्बाणतुल्यकरणैः कामकलाभिः षोडशसहस्रपत्न्यः विमथितुं क्षोभयितुं न शेकुः पत्नीनां चिच्छक्तिवृत्तित्वात्तासां काम- कला अप्यप्राकृताश्चिन्मय्य एव ताभिरप्यवशीकारदर्शनाद् लिप्त एव त्वं किं च पारिजाताद्याहरणाद्यपितवशीकार- दर्शनात् तासु कदाचित्तासां चिद्विशेषप्रेममय्योऽपि भवन्ती- त्युज्ज्वलनीलमणौ प्रतिपादितं ततश्च त्वं प्रेमवश्य एव नतु प्राकृताप्राकृतकामवश्य इतिभावः । यद्वा विमथितुं अजसुन्दर्य इव विशेषेण मथितुं न शेकुः किन्तु यावांस्तत्र प्रेमा प्रकटाव- देवेत्यर्थः ॥ १८ ॥

यद्यपि त्वमेवमलिप्तस्तथापि तव लीलामृतं चरणामृतं च संसारबन्धाल्लोकान्मोचयत्येवेत्याहुः । विभ्व्य इति । तव अमृत- रूपा याः कथास्ता एव उदवहाः पुण्यनद्यः पादावनेजसरितो गङ्गाश्च शमलान्यविद्यामालिन्यानि हन्तुं विभ्व्यः समर्थाः केन प्रकारेण आनुश्रवं गुरोरुच्चारणमनुश्रूयन्ते इत्यनुश्रवाः पुराणा- द्यास्तत्र भवं लीलामृतन्तीर्थं श्रुतिभिः श्रवणेन्द्रियैः अङ्घ्रिजं तीर्थं च अङ्गसङ्गैः एवं शुचिषदः शुद्धचेष्टाजनाः तीर्थद्वयमुपस्पृ- शन्ति अधिकं सेवन्ते ॥ १९—२० ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

स्थितिहेतुत्वमुपपादयन्ति । तदिति । तस्मिन् ब्रह्माण्डकोशे तस्थुषः स्थावरस्य जगतो जङ्गमस्य भवान् अधीशः स्थिति- कर्त्ता अधीशत्वे हेतुमाहुः । यत् यस्माद्धेतोः "पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति । तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः" इति स्मृतेः भक्तैरुपनीतान् अर्थान् जुषन् जुषमाणोऽपि हे हृषीकपते तथा प्रसृता गुणविक्रिया त्रिगुणसृष्टिर्येषा मायया तया न लिप्तस्त्वम् परमेश्वरात्त्वत्तोऽन्ये ये जीवास्ते तु "ये हि संस्प- र्शजा भोगा दुःखयोनय एव ते । आद्यन्तवन्तः कौन्तेय । न तेषु रमते बुध" इति स्मृतेः स्वतः परिहृतात् मायोत्थाद्विषयजो- षणाद्बिभ्यति अतोऽधीशोऽसि त्वम् ॥ १७ ॥

हृषीकपतित्वं निरूपयन्ति । स्मायेति । स्मायो मन्दहास्येन सहितोऽवलोकः तिर्यक्प्रेक्षणं तस्य लवेन दर्शितो यो भाव आशयः तेन हारि मनोहरं भ्रूमण्डलं तेन प्रहिताः प्रयुक्ताः ये सुरते भावाः सौरता मन्त्राः तैः शौण्डैः कामिजनपरा- भवे प्रगल्भैः अनङ्गबाणैर्मदनबाणैः करणैरालिङ्गनादिलक्षणैः साधनैः षोडशसहस्रपत्न्यः यस्येन्द्रियं मनः विमथितुं विलो- डयितुं जेतुं न विभ्व्यः न समर्थाः बभूवुः ॥ १८ ॥

अविभ्वीत्वं निरूपयन्ति । विभ्व्य इति । तव नास्ति मृतं मरणं याभिस्ताः मुक्तिप्रदाः याः कथाः ता एव उदवहाः मुक्तिप्रदशास्त्ररूपाः नद्य इत्यर्थः । तथा पादावनेजसरितः चर- णकमलप्रक्षालनोदवहाः श्रीगङ्गाद्याः त्रिलोक्याः शमलानि हन्तुं विभ्व्यः समर्था भवन्ति नदीद्वयसेवनप्रकारं तदधिकारिणश्चाहुः गुरूच्चारणादनु अनन्तरं श्रूयते इत्यनुश्रवं तदेवानुश्रवमु- पनिषदादिशास्त्ररूपम् श्रुतिभिः श्रवणेन्द्रियैः अङ्घ्रिजं चाङ्गसङ्गैः एवं तीर्थद्वयं शुचौ सीदन्तीति तथा गङ्गादितीर्थवासिनो वेदान्त- श्रवणमननाद्यर्थं गुरुसमीपवर्तिनश्च उपस्पृशन्ति सेवन्ते ॥ १९ ॥

विबुधैर्देवैः सह सेशः ईशेन शिवेन सहितः ॥ २०—२१ ॥

---

### भाषा टीका ।

तिससे आप स्थावर जंगम दोनों के अधीश हो माया से उत्पन्न भये जो गुण उनके विकारों से उत्पन्न जो विषय हैं तिन को आप सेवन करते हो तौभी उनमे लिप्त नहीं होते हो आप सब इंद्रियों के पति हो और दूसरे सब योगि लोग तो विषयोंको छोड कर दूर रहते हैं तौभी उनसे डरते रहते हैं ॥ १७ ॥

आप की जो सोला हजार रानी हैं सो सब मन्दहास से प्रिय दृष्टियों के लेशमात्र से दिखाया जो भाव तिस से मन का हरने

ब्रह्मोवाच ॥

भूमेर्भारावताराय पुरा विज्ञापितः प्रभो ! ।
त्वमस्माभिरशेषात्मंस्तत्तथैवोपपादितम् ॥ २१ ॥
धर्मश्च स्थापितः सत्सु सत्यसन्धेषु वै त्वया ।
कीर्तिश्च दिक्षु विक्षिप्ता सर्वलोकमलापहा ॥ २२ ॥
अवतीर्य यदोर्वंशे बिभ्रद्रूपमनुत्तमम् ।
कर्माण्युद्दामवृत्तानि हिताय जगतोऽकृथाः ॥ २३ ॥
यानि ते चरितानीश ! मनुष्याः साधवः कलौ ।
शृण्वन्तः कीर्तयन्तश्च तरिष्यन्त्यञ्जसा तमः ॥ २४ ॥
यदुवंशेऽवतीर्णस्य भवतः पुरुषोत्तम ! ।
शरच्छतं व्यतीयाय पञ्चविंशाधिकं प्रभो ! ॥ २५ ॥
नाधुना तेऽखिलाधार ! देवकार्यावशेषितम् ।
कुलं च विप्रशापेन नष्टप्रायमभूदिदम् ॥ २६ ॥
ततः स्वधाम परमं विशस्व यदि मन्यसे ।
सलोकाँल्लोकपालान्नः पाहि वैकुण्ठकिङ्करान् ॥ २७ ॥
* ( संस्तुतो भगवानित्थं विबुधैः पद्मजादिभिः ।
प्रतिनन्द्याह तान् राजन् ! मायामनुज ईश्वरः ॥ ० ॥ )

श्रीभगवानुवाच ॥

अवधारितमेतन्मे यदात्थ विबुधेश्वर ! ।
कृतं वः कार्यमखिलं भूमेर्भारोऽवतारितः ॥ २८ ॥

भाषा टीका ।

आत्मा जो भूमंडल तिस से प्रेरित जो मनो कीसी चतुराई इन चेष्टाओं से जो अपनी सब इंद्रियों से काम देव के बाणों को चला कर भी आप की इंद्रियों के चलित करने को समर्थ नहीं हो सकीं ॥ १८ ॥

आप की कथा रूपी अमृत जल प्रवाह की जो नदी हैं और आप के चरणारविंद के प्रक्षालन के जल की जो नदी गंगाजी हैं ये दोनों प्रकार की नदी सब जीवों के पापों को नाश करने में समर्थ हैं तिस में कथा नदी तो श्रवण से पवित्र करती हैं और गंगाजी स्नानादि अंगसंग से पवित्र करती हैं जो पुरुष अपने धर्मों में स्थित हैं वे लोग आप के इन दोनों तीर्थों का अवगाहन करते हैं ॥ १९ ॥

श्रीशुक उवाच ॥

महादेवजी के सहित ब्रह्माजी इस प्रकार से सब देवों के सहित श्रीकृष्णचंद्र की स्तुति करके प्रणाम करके आकाशही में स्थित होकर यह वचन बोले ॥ २० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

विक्षिप्ता विस्तारिता ॥ २२ ॥
उद्दामानि वृत्तानि विक्रमा येषु तानि कर्माणि ॥ २३—२८ ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

भूमेरिति युग्मकम् अशेषात्मभाविनि सर्वान्तर्यामिस्त्वम् भूम्ना-

* इत्यधिकः पाठो वीरराघव विजयध्वजयोः ।

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

दीनां दुःखं ज्ञात्वैवेत्यर्थः । तद्विज्ञापनं त्वया तथैवोपपादितं सत्यसन्धेषु सत्यप्रतिज्ञेषु ॥ २१ ॥ २२ ॥

विभ्रज्जगति दर्शयन् ॥ २३ ॥

यानीति । यच्छब्दद्वयोत्तरवाक्यगतत्वेन तच्छब्दानपेक्षत्वं साधु चन्द्रमसि पुष्करैः कृतमितिवत् प्रशस्तेति श्रवणकीर्त्तनयोः स्वतः पुरुषार्थत्वं तत्याज्यानुषङ्गिकत्वं चोक्तम् ॥ २४ ॥

विवक्षितमाह । यदुवंश इति ॥ २५ ॥

नष्टप्रायमदर्शनप्राप्तप्रायम् ॥ २६ ॥

ततो हेतोः स्वधाम प्रापञ्चिकाप्रकटीभूतं द्वारकाया एवाप्रकटप्रकाशं स्वयं भगवत्कृष्णरूपेण प्रविश्य स्वांशविष्णुरूपेण तु सलोकांल्लोकपालांश्च पाहि नानावैकुण्ठनाथैः स्वविलासैश्च वैकुण्ठकिङ्करान् पाहीति सर्वांशमूलावतारित्वात् ॥ २७ ॥

अवधारितं श्रुतं अखिलं दैत्यसंहारादि ॥ २८ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तदेवाह सप्तभिः । भूमेरिति । हे अशेषात्मन् ! समस्तचिदचिद्विग्रहात्मन् ! तदस्माद्विज्ञापितं तथैव यथाविज्ञापनम् उपपादितं साधितम् ॥ २१ ॥

सत्ये धर्मे इति सन्धाभिसन्धिर्येषां तेषु सत्सु सर्वेषां लोकानां जनानां शृण्वतां वदतां च मलमपहन्तीति तथा सा कीर्तिर्दिक्षु विक्षिप्ता विस्तारिता ॥ २२ ॥

अवतीर्येति । न विद्यते उत्तमं यस्मात्तद्रूपं वपुर्बिभ्रद्बिभ्राणः जगतो हिताय श्रेयःसाधनाय उद्दामानि उदाराणि वृत्तानि वार्ताः येषु तानि उदारकथाविषयकर्माणीत्यर्थः । तानि कर्माणि यत्कथाः कृतवानसीत्यर्थः ॥ २३ ॥

जगतो हिताय कथा इत्येतदेवोपपादयन्ति । यानीति ! हे ईश ! ते तवाञ्जसा सुखेन तमः प्रकृतिं तत्कार्यं संसारमित्यर्थः तरिष्यन्ति ॥ २४ ॥

यदुवंश इति । हे पुरुषोत्तम ! हे विभो ! पञ्चविंशाधिकं शरच्छतं वर्षशतं व्यतीयाय व्यतिक्रान्तमभूत् ॥ २५ ॥

ततः किमत आह । नेति । हेऽखिलाधार ! तव देवकार्यावशेषितमवशेषितं देवकार्यमित्यर्थः । तत्कर्त्तव्यमधुना तव नास्तीदं कुलं यदुकुलं नष्टप्रायं नष्टवत् ॥ २६ ॥

ततोऽपि किमत आह । तत इति । ततः अवतारप्रयोजनस्य पूर्णत्वादधुना परमं सर्वोत्कृष्टं स्वधाम स्वस्थानं परमं पदं अवगच्छ यदि मन्यसे न वयं विधातुं प्रभवा इति भावः । हे वैकुण्ठ ! लोकैः सहितान् किङ्करानस्मान् लोकपालान् योऽहि वैकुण्ठस्य तव किङ्करानिति वा किङ्करविज्ञापनानुवर्तनमेव तत्पालनमितिभावः ॥ २७ ॥

संस्तुत इति । पद्मजादिभिर्ब्रह्मादिभिर्विबुधैरित्थं संस्तुतः स्तुतिपूर्वकं विज्ञापितः भगवानमायामनुजः स्वसङ्कल्पोपात्तमनुजावतारः प्रतिनन्द्य तद्विज्ञापनमभिनन्द्य हे राजंस्तान् विबुधानाह ॥ ० ॥

तदेवाह । अवधारितमिति । हे विबुधेश्वर ब्रह्मन्नेतन्मे मयाऽवधारितं विचार्य निश्चितं किन्त्वद । यदत्रभवन्तः उक्तवानसि तदेव करिष्यामीति । कृतमिति । वो युष्माकम् ॥ २८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

पञ्चविंशाधिकं पञ्चविंशत्यधिकं तदुक्तं "वत्सराणां शतं चैव ऋतूनां पञ्चविंशकम् । अवतीर्णस्य कृष्णस्य यदा प्रागात्तदाहरिम् । स्वस्थानगमनापेक्षी ब्रह्मा तुष्टाव सामर इति ॥ २५ ॥

अवशिष्टदेवकार्यापेक्षयापि न स्थेयमित्याह । नाधुनेति । यदुकुलमवशिष्टमपेक्ष्यापि न स्थेयमित्याह । कुलं चेति ॥ २६ ॥

ऋषीणां देवत्वात्तेषां कलेरप्रवेशात्स्य चापेक्षितत्वात्तत्कुलसंहारार्थं किञ्चित्कालविलम्बापेक्षायां तत्कृत्वा झटिति स्वधाम प्रवेष्टव्यमित्याशयेनाह । ततः स्वधामेति । तदुक्तं च—

संवत्सरद्वयं चैव पश्चात्स्थित्वा जनार्दनः ।
अभिपेदे परं स्थानं चतुर्मासाधिकं पुनरिति ॥ २७ ॥

अवधारितं निश्चितम् ॥ २८ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

भूमेरिति युग्मकम् । उपपादितं त्वयेत्युत्तरेणान्वयः ॥ २१-२५ ॥

नष्टप्रायमदर्शनगततुल्यम् ॥ २६ ॥

स्वधाम प्रापञ्चिकाप्रकटीभूतं द्वारकाया एव प्रकाशं श्रीकृष्णरूपेण प्रविश्य श्रीविष्णुरूपेण तु सलोकाँल्लोकपालांश्च पाहि नानावैकुण्ठनाथरूपैश्च वैकुण्ठकिङ्करान् पाहीति सर्वांशमूलावतारित्वात् ॥ २७ ॥ २८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ननु युष्माभिः क्षीरोदशायेव विज्ञापितः नत्वहं तत्राह । अशेषात्मन् हे सर्वावतारावतारिस्वरूप ! तस्यापि स्वरूपत्वादित्यर्थः ॥ २१ ॥

विक्षिप्ता विस्तारिता ॥ २२—२४ ॥

शरच्छतं वर्षशतम् ॥ २५ ॥

न देव कार्यावशेषितं देवकार्यस्यावशेषो नास्त्यधुनेत्यर्थः । नष्टप्रायमन्तर्हितप्रायं नश्वरदर्शनार्हत्वात् ॥ २६ ॥

स्वधाम प्रपञ्चागोचरीभूतं द्वारकायाः प्रकाशविशेषं कृष्णरूपेण प्रविश्य वैकुण्ठश्वेतद्वीपादिकं तु नारायणादिस्वरूपेण सर्वांशमूलावतारित्वात् ॥ २७ ॥ २८ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

विक्षिप्ता विस्तारिता ॥ २२ ॥

उद्दामानि अनुपमानि वृत्तानि विक्रमा येषु तानि २३—२७

अवधारितं निश्चितं स्वीकृतम् ॥ २८ ॥

---

तदिदं यादवकुलं वीर्यशौर्यश्रियोद्धतम् ।
लोकं जिघृक्षद्रुद्धं मे वेलयेव महार्णवः ॥ २९ ॥
यद्यसंहृत्य दृप्तानां यदूनां विपुलं कुलम् ।
गन्तास्म्यनेन लोकोऽयमुद्वेलेन विनङ्क्ष्यति ॥ ३० ॥
इदानीं नाश आरब्धः कुलस्य द्विजशापतः ।
यास्यामि भवनं ब्रह्मन्नेतदन्ते तवानघ ! ॥ ३१ ॥
श्रीशुक उवाच ।
इत्युक्तो लोकनाथेन स्वयम्भूः प्रणिपत्य तम् ।
सह देवगणैर्देवः स्वधाम समपद्यत ॥ ३२ ॥

भाषा टीका ।

ब्रह्मोवाच ।

हे सर्वात्मा! पूर्व काल में पृथिवी के भार उतारने के वास्ते हमने आपको प्रार्थना किया था सो सब आपने उसी प्रकार कर दिया ॥ २१ ॥

सत्यप्रतिज्ञा वाले सत्पुरुषों में धर्म का स्थापन आपने कर दिया और सब लोगों के पापों के नाश करने वाली कीर्ति भी आपने सब दिशों में फैला दी है ॥ २२ ॥

यदुवंश में अवतार लेकर दिव्य मनोहर रूपको धारण करके जगत् के हितके लिये अति सुंदर अद्भुत चरित्र कर्म भी आपने बहुत किये ॥ २३ ॥

हे ईश्वर! जो आप के चरित्र हैं तिनको कलियुग में जो मनुष्य सत्पुरुष सुनेंगे वा कीर्तन करेंगे वे सब अनायास से अज्ञान कृत संसार को तर जायँगे ॥ २४ ॥

हे प्रभो पुरुषोत्तम यदुवंश में अवतार लेकर आप को एक सौ पच्चीस वर्ष बीतगये हैं ॥ २५ ॥

हे अखिलाधार प्रभो! अब आपको कोइ भी देवकार्य करना नहीं बाकी रहा है औ यह आप का यदु कुल भी ब्राह्मणों के शाप से प्रायः नष्ट सरीखा होगया है ॥ २६ ॥

हे वैकुंठ! तिस कारण से यदि आप की इच्छा होवे तो अपने वैकुंठ धाम को आप पधारो सब लोकों के सहित हम लोकपालों की रक्षा करो ॥ २७ ॥

श्रीभगवानुवाच ।

हे देवेश्वर! जो आपने कहा है सो बात मैंने निश्चय करली है तुम लोगों के सब काम हमने कर लिये हैं औ भूमी का भार सब उतार लिया है ॥ २८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

वीर्यशौर्ययुक्तया श्रिया ॥ २९ ॥

उद्वेलेन उल्लङ्घितमर्यादेन ॥ ३० ॥

वैकुण्ठं यास्यंस्तव भवनं यास्यामि ॥ ३१ ॥ ३४ ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

वीर्येत्यत्रैकवद्भावे फलीभवं स्यादतो वीर्यशौर्ययुक्तयेति व्याख्यातम् उद्धतमयथ्यं लोकं जगदेव जिघृक्षत् अनन्तत्वेन प्राप्तुमिच्छत् ॥ २९ ॥

उल्लङ्घितमर्यादेनेति । मद्वियोगादुन्मत्तत्वेन कर्तव्याकर्तव्यविचारलोपात् ॥ ३० ॥

नाशोऽस्यैवम् अप्रकटद्वारकायां प्रवेशनमित्यर्थः । एतस्य प्रवेशनस्यान्ते विकुण्ठासुतरूपेण वैकुण्ठं यास्यन् ॥ ३१ ॥

लोकनाथेनेति । लोकसङ्ग्रहार्थं आज्ञयाज्ञापवर्थमसूचितमिति भावः ॥ ३२ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तर्ह्यधुना विज्ञापितमवधारयेत्यत आह । तदिदमिति । तत्रापीदं यादवकुलं वीर्यादिभिरुद्धतमनिवार्यं वीर्यं पराभिभवसामर्थ्यं शौर्यं युद्धे स्वगृह इव प्रवेशसामर्थ्यं श्रीर्धनादिसम्पत् अतः किमत आह । लोकं विश्वमाग्रसितुमुद्युक्तं मे मया वेलया महार्णव इव रुद्धं निवारितम् ॥ २९ ॥

ततो यदि कुलमसंहृत्य गन्तास्मि गमिष्यामि तर्ह्यनेन कुलेनायं लोक उद्वेलेन उल्लङ्घितमर्यादेन यदुकुलेन विनङ्क्ष्यति विनष्टो भविष्यति उद्वेलेनेति पाठे उद्वेलेन वेलामतिक्रान्तेन महार्णवेन यथा नङ्क्ष्यति तद्वदनेनेत्यर्थः ॥ ३० ॥

कदा तर्हि संहारस्तत्राह । इदानीमिति । द्विजशापादारब्ध एव नाशारम्भनाशं वस्यचलितुमे किन्नाशेव निरवशेषं विनङ्क्ष्यतीति भावः । हेऽनघ! एतदन्ते कुलनाशान्ते हे ब्रह्मन्! तव भवनं यास्यामि श्रीवैकुण्ठं यास्यंस्तव भवनं यास्यामीत्यर्थः ॥ ३१ ॥

अथ तस्यां महोत्पातान् द्वारवत्यां समुत्थितान् ।
विलोक्य भगवानाह यदुवृद्धान् समागतान् ॥ ३३ ॥
श्रीभगवानुवाच ।
एते वै सुमहोत्पाता व्युत्तिष्ठन्तीह सर्वतः ।
शापश्च नः कुलस्याऽऽसीद्ब्राह्मणेभ्यो दुरत्ययः ॥ ३४ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इतीति । लोकनाथेन श्रीकृष्णेनेत्थमुक्तश्चतुर्मुखः प्रणिपत्य प्रणाम्य देवगणैः सह स्वधाम स्वस्थानं सत्यलोकं समपद्यत समगात् ॥ ३२ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तर्हि कालक्षेपे किं कारणं तत्राह । तद्दिदमिति । मे मौध्वंलोकं जिघृक्षसि प्राप्तुमिच्छसि ॥ २९ ॥

अनुपसंहारे को दोष इति तत्राह । अनेनेति । उत्सर्पेण वीर्यशौर्यादिगुणैरुत्सेकेनानेन यादवकुलेन सतो यदुकुलस्योत्कर्षं युगधर्माद्विच्छत्तीत्यभिप्रायेणोक्तमाचार्यैः "सतामपि कलौ प्राप्ते विकारो मनसो भवेत् । तस्मात्यदुकुलं संजह्रे नैते स्युः पापिनाशिनः । पुनर्लोकविघातार्थं लोकरक्षाविधानद्विः । आविश्य रक्षामकरोज्जगतः पुरुषोत्तमः । स्वात्मना संहृतानेन पुरुषार्थोऽधिको भवेत् । इत्यनुग्रहबुद्ध्या च संजह्रे स्वकुलं विभु"रिति ॥ ३० ॥

एतदन्ते एतस्य यदुकुलसंहारस्यान्ते तव प्रीत्यै भवनं यास्यामि ॥ ३१—३५ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

वर्त्ततमचक्ष्वं लोकं भगवेव जिघृक्षत् अनन्तत्वात् प्राप्तुमिच्छत् ॥ २९ ॥

नन्वेतेषां ब्राह्मणानां वदान्यानां नित्यं वृद्धोपसेविनां व्याप्त्या सर्वत्र भद्रमेव भवतु तत्राह । वहीति । उद्वेलेन माद्वियोगादुत्पत्त्यचेष्टेन ॥ ३० ॥

नाशः अदर्शनं निगूढायां द्वारकायां प्रवेशनमित्यर्थः एतस्य प्रवेशनस्यान्ते तव भवनं विकुण्ठासुतरूपेण यास्यामि तदुपरिगं तद्वैकुण्ठं यास्यामीत्यर्थः ॥ ३१ ॥ ३२ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

वीर्यं पराक्रमः शौर्यं युद्धोत्साहः तयोः श्रिया सम्पत्त्या उद्धतं इतात् इतनाद्युद्धतम् अपथ्यमित्यर्थः । लोकं जिघृक्षत् अनन्तत्वाद् प्राप्तुमिच्छत् मयाचिन्त्यशक्तिना द्वारकायामेव रुद्धमन्यथा सर्वभूलोकेऽपि मातुमशक्यं स्यादिति ॥ २९ ॥

इतातो भावकत्वेन भूताद्युद्धारायाम् उद्वेलेन अतिक्रान्तमर्यादसमुद्रोपमेनेत्यर्थः । लोको भूलोकः यद्यपि मत्परिजनानामेषां परमधार्मिकाणां यदूनां भारं पृथ्वी भारं न मन्यते तदपि तस्याः स्वामिना मयाऽस्मभारोऽवतारणीय एव सुकुमार्यां सन्तापा अति बहुतरभूषणभारो यथा तत्कान्तेनावतार्यते तथा यद्यपि स्पृहणीयवस्तुनो भारः सुसह एव तदप्यतिभारस्तु न सुसहो यथा कस्माश्चित्प्राप्तोऽपि कनकराशिभारो वृष्णुनापि बलिना दुर्वह एव भूतस्थचरणोऽन्यथावदुरिति व्याख्यातोऽपि पृथिव्या दुःसह एव इष्ट इति ॥ ३० ॥

नाशोऽदर्शनं निगूढायां द्वारकायां प्रवेशनमित्यर्थः एतस्य प्रवेशनस्यान्ते तव भवनं विकुण्ठासुतरूपेण यास्यामि तदुपरिगं वैकुण्ठं यास्यामीति सन्दर्भः ॥ ३१—३२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

मे इदं यादवकुलं वीर्यशौर्ययुक्तया श्रिया ऊर्ध्वं लोकं जिघृक्षति परिभाव्य स्थातुमिच्छतीति कथितोऽर्थः ॥ २९ ॥

किञ्चायं लोकः अनेन कुलेनोद्वेलेन मनुष्यलोकमर्यादामतिक्रम्य वर्त्तमानेन विनङ्क्ष्यति देवलोकतुल्यतां प्राप्य मनुष्यलोकभावाच्चलिष्यतीत्यर्थः । तथा देवलोकमनुष्यलोकयोर्विशेषाभावः स्यादिति भावः । एतदन्ते यदुकुलसंहारान्ते स्वधाम यास्यन् तव भवनं यास्यामि ॥ ३०—३५ ॥

भाषा टीका ।

यह जो यादव कुल है सो सुरता वीरता की सम्पत्ति से बड़ा अभिमानी होरहा है सो सब संसार को नष्ट करदेता परंतु जैसे समुद्रको किनारा रोकता है तैसे मैंने इस को रोक रखा है ॥२९॥

यदि इन गर्वित यदुओं के विना समेटे मैं जाऊँगा तो तब निर्मर्यादा वाले इस कुल के उपद्रव से यह सब लोक नष्ट होजायगा ॥ ३० ॥

हे ब्रह्मन् ! इस वक्त ब्राह्मणों के शाप के निमित्त से इस कुल का नाश का आरंभ कर दिया है इस के होने पर हे अनघ ! तुमारे लोक को आवेंगे ॥ ३१ ॥

श्रीशुक उवाच ।

लोकनाथ श्रीकृष्ण के इसने कहने पर ब्रह्माजी भगवान् को प्रणाम करके देव गणों के सहित अपने धाम को चले गये ॥ ३२ ॥

नवस्तव्यमिहास्माभिर्जिजीविषुभिरार्यकाः ! ।
प्रभासं सुमहत्पुण्यं यास्यामोऽद्यैव माचिरम् ॥ ३५ ॥
यत्र स्नात्वा दक्षशापाद्गृहीतो यक्ष्मणोडुराट् ।
विमुक्तः किल्बिषात्सद्यो भेजे भूयः कलोदयम् ॥ ३६ ॥
वयं च तस्मिन्नाप्लुत्य तर्पयित्वा पितॄन् सुरान् ।
भोजयित्वोशिजो विप्रान्नानागुणवताऽन्धसा ॥ ३७ ॥
तेषु दानानि पात्रेषु श्रद्धयोप्त्वा महान्ति वै ।
वृजिनानि तरिष्यामो दानैर्नौभिरिवार्णवम् ॥ ३८ ॥

श्रीशुक उवाच ॥

एवं भगवताऽऽदिष्टा यादवाः कुरुनन्दन ! ।
गन्तुं कृतधियस्तीर्थं स्यन्दनान् समयूयुजन् ॥ ३९ ॥
तन्निरीक्ष्योद्धवो राजन् ! श्रुत्वा भगवतोदितम् ।
दृष्ट्वाऽरिष्टानि घोराणि नित्यं कृष्णमनुव्रतः ॥ ४० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

प्रभासं यास्याम इति वदतोऽयमभिप्रायः एते देवांशाः कदाचिदपि कारागारेऽत्रैव त्विह म्रियन्ते न तु सद्यो मोक्षम् द्वारवत्यां मृता मुक्तिं यास्यन्ति तस्माद्भ्युदयफलं प्रभासं नेष्यामीति ॥ ३५ ॥

दक्षशापाद्यक्ष्मणा गृहीत उडुराट् चन्द्रो यत्र स्नानमात्रं कृत्वा किल्बिषात्तस्माद्रोगदुःखात्सद्यो विमुक्तः सन्भूयः कलावृद्धिं भेजे ॥ ३६ ॥

उशिजः कमनीयान् अन्धसा अन्नेन ३७ ॥

उप्त्वेति । यथा सुक्षेत्रे बीजमुप्तं बहुफलं भवति तथा दानं सत्पात्र इति द्योतयति ॥ ३८—४१ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

अथ ब्रह्मणो विसर्जनानन्तरं महोत्पातानिति तु तादृक्छ-लैव अन्यथा "मुनिवासनिवासे किं घटेतारिष्टदर्शनमिति तदुत्तम-वात ॥ ३३ ॥

सर्वतो दिव्यभौमदैहिकभेदेन नव यानिकारः कर्तुं यादव इत्याह । शापश्चेति ॥ ३४ ॥

अस्माभिरिति । बहूनां अस्माकमेवाभिमतं जिजीविषुभिरिति स्वात्मवदेव तेषामप्युत्पातनिरसनमभिमतम् एते चाद्धेव्यादिष्टाः द्वारवत्यां मृता मुक्तेरपीति वयवस्थायां मङ्गलरूपायां तत्राम-मङ्गलानुकरणमपि माभूदित्यर्थः ॥ ३५ ॥

तीर्थस्य अक्षशापक्षमनयोग्यतामाह । यत्रेति ॥ ३६ ॥

वयमिति युग्मकम् तस्मिन् प्रभासे ॥ ३७ ॥ ३८ ॥

भगवतेति । तदाज्ञां कोऽन्यथा कुर्यादिति भावः । व्याजमय-वाक्यश्रुत्या विदितं राजानं सान्त्वयति । कुरुनन्दनेति ॥ ३९ ॥

तन्निरीक्ष्येत्यत्र पाठो नतु तानिति तत् प्रभासयात्रोद्यमनं दृष्ट्वा पश्चाज्जनपरम्परयैव यदुभ्यो भगवतोदितम् एते वै इत्यादि पद्यपञ्चकं श्रुत्वा तस्माद्गुप्तीकृत्यैव तेभ्यस्तेनोपदेशाद् घोराण्य-रिष्टानीति यद्यपि तत्र सम्भवति तथापि बहिर्देशेष्वा तद्दाभासानेव दृष्ट्वा विविक्ते रहसि ॥ ४० ॥ ४१ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अन्धसा अन्नेन ॥ ३७—५० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथेति । अथ ब्रह्मगमनानन्तरं विलोक्य समागतान् यदुवृद्धाना-हेति सम्बन्धः ॥ ३३ ॥

तदेवाह । एत इति । शापश्चेति च एते यतः शाप आसीत्ततो महोत्पाता उत्तिष्ठन्तीत्यर्थः ॥ ३४ ॥

तर्हि किमिदानीं कर्तव्यमित्यत्राह । नवस्तव्यमिति । हे आर्यकाः ! जीवितुमिच्छद्भिरस्माभिरिह पुरे न वस्तव्यं न स्थातव्यं किन्त्वद्यैव प्रभासं यास्यामः माचिरं विलम्बं माकुरुत ॥ ३५ ॥

तत्रापि विप्रशापोऽनिवार्य एवेत्यत आह । यत्रेति । उडुराट् चन्द्रः दक्षशापात् यक्ष्मणा क्षयरोगेण गृहीतो यत्र प्रभासे स्नात्वा स्नान-मात्रं कृत्वा किल्बिषात् यक्ष्मणो विमुक्तः सद्य एव पुनः कलोदयं लेभे प्राप्तवान् ॥ ३६ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अतो वयमपि तस्मिन् प्रभासे आप्लुत्य नानागुणवता षड्रसोपेतेनान्धसा अन्नेन उशिजः कमनीयान् विप्रान् भोजयित्वा ॥ ३७ ॥ तेषु विप्ररूपेषु पात्रेषु महान्ति दानानि उप्त्वेत्यनेन यथा सुक्षेत्रे बीजमुप्तं बहुफलं भवति तथा सत्पात्रे दानमपीति द्योतितं नौभिरर्णवमिव दानैर्वृजिनानि विप्रशापप्रयुक्तदुःखानि तरिष्यामः ॥ ३८ ॥

एवमिति । एवं हे कुरुनन्दन ! तीर्थं प्रभासं गन्तुं कृतधियः स्यन्दनान् रथान् संमयूयुजन्वाहैर्युक्तांश्चक्रुरित्यर्थः ॥ ३९ ॥

तदिति । हे राजन् ! भगवतोक्तं श्रुत्वा तदुद्योजनं निरीक्ष्य च घोराणि अरिष्टान्युत्पातान् दृष्ट्वा च नित्यं कृष्णमनुव्रतः हेतुगर्भमिदम् ॥ ४० ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

यत्र प्रभासे दक्षशापादुत्पन्नाद्यक्ष्मणः किल्बिषात्प्रमुक्तोऽभूत् ॥ ३६ ॥

उशिजोऽग्नीन् ॥ ३७—३९ ॥

अरिष्टानि अशुभानि ॥ ४० ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अथ तस्यां महोत्पातानिति तदिच्छयैव । मुनिवाससनिवासे किं घटेतारिष्टदर्शनमिति तदसम्भवात् ॥ ३३—३४ ॥

अस्माभिरिति । तेषां स्वसाम्यमेव निर्दिष्टम् । तत्र जिजीविषुभिरित्यात्मवदेव तेषामुत्पातनिरसनमभिप्रेतम् । तत्र व्याजमात्रं प्रभासमित्यादि । मङ्गलरूपायां स्वपुर्याममङ्गलानुकरणमपि माभूदित्यभिप्रायश्च अनुकरणमात्रत्वञ्च जिजीविषुभिरित्यनेनैव व्यञ्जितम् । अन्यथा श्रीभगवल्लीलारमङ्गः स्यात् ॥ ३५ ॥

तत्र च तीर्थे ब्रह्मशापस्यापि शमनयोग्यतां दर्शयति । यत्रेति । अन्यथा श्रीभगवतो युक्तिभङ्गः स्यात् ॥ ३६ ॥

तन्नौकादृष्टान्तेन साधनेन तदेव द्रढयति । वयमितियुग्मकेन । एतद्ध्याख्यानिःशेषविवरणं श्रीकृष्णसन्दर्भे सप्तदशोत्तरशततमवाक्यचूर्णिकामारभ्य चतुस्त्रिंशदुत्तरतत्पर्यन्तग्रन्थे दृष्टम् ॥ ३७—३९ ॥

तन्निरीक्ष्येति । प्रथमं यादवानां प्रभासयात्रोद्यमदर्शनं पश्चादेव श्रीभगवतस्तेभ्यः स्वानुगुपदेशश्रवणमिति तस्माद् परोक्षीकृत्य तेभ्यस्तेन तदुपदिष्टं परम्परयैव तच्छ्रवणमिति लभ्यते तादृश तदुपदिष्टायामपि दृष्टारिष्टानीति यस्तुन तत्पाता मायेऽपि बहिर्दृष्ट्या तदाभासः स्यादेवेति निर्णीतमिति गम्यते ॥ ४० ॥ ४१ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

महोत्पातान् भगवदिच्छयैवाविर्भूतान् मुनिवाससनिवासे किं घटतामरिष्टदर्शनमित्युक्तं स्तत्र तदसद्भावात् ॥ ३३ ॥ ३४ ॥

प्रभासमिति । माथुरपरिकरैर्विश्लिष्टेव द्वारिका सदा विराजतु तेषु प्रविष्टान् देवानेव यादवरूपानलक्षितं तेभ्यः सकाशात् योगबलेन निष्काश्य प्रभासं नीत्वा तत्रैव तान् मायया मौसलसङ्ग्रामं प्रापय्य स्वर्गं प्रस्थाप्य विकुण्ठादिस्वरूपोऽहमपि वैकुण्ठादिधामानि यास्यामि पूर्णस्वरूपेण तु सपरिकरोऽहं द्वारकायां सदैवास्म्येवेति भगवन्मनोमतं ज्ञेयम् ॥ ३५ ॥

यक्ष्मणा रोगेण गृहीतोऽपि यत्र स्नानमात्रं कृत्वा तस्मात् दुःखाद्विमुक्तः कलावृद्धिं भेजे ॥ ३६ ॥

उशिजः कमनीयान् अन्धसा अन्नेन ॥ ३७ ॥

उप्त्वेति । यथा सुक्षेत्रे बीजमुप्तं बहुफलं भवति तथा दानं सत्पात्रे इति द्योतयति ॥ ३८—४१ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

उडुराट् चन्द्रः दक्षशापाद्यक्ष्मणा गृहीतः यत्र प्रभासे स्नानमात्रं कृत्वा किल्बिषात् यक्ष्मदोषलक्षणात्पापाद्विमुक्तः सन् कलोदयं कलावृद्धिं भेजे ॥ ३६ ॥

नानागुणवता मधुरत्वादिगुणयुक्तेन अन्धसा अन्नेन उशिजः तपोवृत्त्यादिभिः कमनीयान् ॥ ३७ ॥

यथा सत्क्षेत्रे सत्फलसिद्धये बीजमुप्तं बहुफलं स्यात्तथा सत्पात्रे दानमिति द्योतयितुमाह । उप्त्वेति ॥ ३८ ॥ ३९ ॥

अरिष्टानि दुर्निमित्तानि ॥ ४०—४१ ॥

---

### भाषा टीका ।

इसके अनन्तर उस द्वारका में उत्पन्न भये महा उत्पातों को देख कर आये हुये वृद्ध ज्ञानी मनुष्यों से भगवान् कृष्णचन्द्र यह वचन बोले ॥ ३३ ॥

श्री भगवानुवाच ।

इतने ए सब महा उत्पात यहां सब ठिकाने दीखते हैं और हमारे कुल को ब्राह्मणों का बड़ा भारी शाप भी होगया है ॥ ३४ ॥

हे वृद्धजनो ! इस से आगे हम को यहां नहीं रहना चाहिये बड़े पुण्य वाले प्रभास क्षेत्र को आजही चले जावें विलम्ब मत करो ॥ ३५ ॥

जिस प्रभास तीर्थ में स्नान करने से चन्द्रमा दक्ष के शाप से भया जो राजयक्ष्मा क्षय रोग तिस से शीघ्रही छूट गये और फिर पहिले से कलाओं को प्राप्त भये हैं ॥ ३६ ॥

हम भी उसी प्रभास में स्नान कर के पितर देवतों का तर्पण कर के अनेक प्रकार के गुणदायक अन्न का सुन्दर ब्राह्मणों को भोजन करावेंगे ॥ ३७ ॥

उन सत्पात्रों के अर्थ हम लोग बड़े दान देवैंगे और श्रद्धा करेंगे तो जैसे नौकों से बड़े समुद्र को तर जाते हैं तैसे हम भी सब दुःखों को तर जावेंगे ॥ ३८ ॥

श्री शुक उवाच ।

हे कुरु नन्दन ! परीक्षित जो इस प्रकार से भगवान् के

विविक्त उपसङ्गम्य जगतामीश्वरेश्वरम् ।
प्रणम्य शिरसा पादौ प्राञ्जलिस्तमभाषत ॥ ४१ ॥

उद्धव उवाच ।

देवदेवेश ! योगेश ! पुण्यश्रवणकीर्तन ! ।
संहृत्यैतत्कुलं नूनं लोकं सन्त्यक्ष्यते भवान् ॥
विप्रशापं समर्थोऽपि प्रत्यहन्न यदीश्वरः ॥ ४२ ॥
नाहं तवाङ्घ्रिकमलं क्षणार्धमपि केशव ! ।
त्यक्तुं समुत्सहे नाथ ! स्वधाम नय मामपि ॥ ४३ ॥
तव विक्रीडितं कृष्ण ! नृणां परममङ्गलम् ।
कर्णपीयूषमास्वाद्य त्यजन्त्यन्यस्पृहां जनाः ॥ ४४ ॥
शय्यासनाटनस्थानस्नानक्रीडाऽशनादिषु ।
कथं त्वां प्रियमात्मानं वयं भक्तास्त्यजेम हि ॥ ४५ ॥
त्वयोपभुक्तस्रग्गन्धवासोऽलङ्कारचर्चिताः ।
उच्छिष्टभोजिनो दासास्तव मायां जयेमहि ॥ ४६ ॥
वातरशना य ऋषयः श्रमणा ऊर्ध्वमन्थिनः ।
ब्रह्माख्यं धाम ते यान्ति शान्ताः संन्यासिनोऽमलाः ॥ ४७ ॥
वयं त्विह महायोगिन् ! भ्रमन्तः कर्मवर्त्मसु ।
त्वद्वार्तया तरिष्यामस्तावकैर्दुस्तरं तमः ॥ ४८ ॥

भाषा टीका ।

आज्ञा देने से सब यादव प्रभास जाने का विचार कर के अपनी २ गाडी रथों को जोडने लगे ॥ ३९ ॥

इतनी बात देख कर और भगवान् के वचन को सुन कर और बडे कठिन उत्पातों को देख कर सदा काल जो श्रीकृष्ण के अनुवर्त्तन करने वाले उद्धवजी एकान्त में जाकर जगत् के ईश्वरों के भी ईश्वर श्रीकृष्णचन्द्रचरणों को मस्तक से प्रणाम कर के हाथ जोड कर प्रार्थना करने लगे ॥ ४०—४१ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

लोकं मर्त्यलोकम् न प्रत्यहन् न प्रतिहतवान् ॥ ४२—४४ ॥

शय्यादिषु त्वां भक्ता नित्यं सेवितवन्तो वयं कथं त्यजेम ॥ ४५ ॥

अकर्तुमशक्नुवन् प्रार्थये न मायाभयादित्याह । त्वयेति । चर्चिता अलंकृताः हि निश्चितं जयेम ॥ ४६ ॥

संन्यासिनो हि ब्रह्मचर्यादिक्लेशैः कथंचित्तरन्ति वयं त्वनायासेनैव तरिष्याम इत्याह । वातरशना इति । ऊर्ध्वमन्थिनः ऊर्ध्वरेतसः ॥ ४७ ॥

तावकैर्भक्तैः सह त्वद्वार्तया दुस्तरं तमः संसारम् ॥ ४८ ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

देवदेवेति सार्द्धकम् संहृत्य संहारानुकरणेन अप्रसङ्गेनीत्वेत्यर्थः । अत एव नूनमिति वितर्कं पञ्चमात् ॥ ४२ ॥

अतएव त्वं वञ्चितं मत्वा प्रार्थयते । नाहमिति । यथा यादवान्नेष्यसि तथा मामपि नयेत्यपरार्थः ॥ ४३ ॥

त्वत्कृतृत्यागाशक्यत्वं कैमुत्येन वर्णयति । तवेति । विक्रीडितमिति भावे निष्ठा लीलाश्रवणेऽपि त्वदेकनिष्ठत्वं स्यात् किं पुनः साक्षाद्दर्शनादाविति भावः ॥ ४४ ॥

तदेवाह । शय्येति ॥ ४५ ॥

परोक्षपूजायामपि साधकभक्तानामपि उपभुक्तस्रगादिना मायाजयः सुप्रसिद्ध एव किं पुनः साक्षाद्वयमिति भावः ॥ ४६ ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

वातरसनेति । रसनाशब्देन वस्त्रं लक्ष्यते हिरण्यरसन इत्यत्र चतुर्थं तैरेव तथा व्याख्यातत्वात् ते तव धाम स्वरूपम् ॥ ४७ ॥

वयं त्विति युग्मकम् । वयमिति साधकभक्तेषु स्वाभेदमङ्गीकृत्य बहुवचनं तरिष्यामस्तर्तुं शक्नुमेत्यर्थः ॥ ४८ ॥ ४९ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अतः विविक्ते एकान्ते तं श्रीकृष्णं समभाषत ॥ ४१ ॥

तदेवाह । देवेत्यादिना एवं विज्ञापित इत्यतः प्राक्तनेन । हे देव ! स्वतेजसा दीप्यमान हे देवानां ब्रह्मादीनामीश ! हे योगेश ! योगनिर्वाहक ! पुण्यं श्रृण्वतां कीर्तयतां च पुण्यावहं श्रवणं कीर्तनं च यस्य तस्य सम्बोधनं लोकं नूनं सन्त्यक्ष्यते त्यक्तुमिच्छसि तथानुमिनोमीति भावः । कुतः हे ईश्वर ! यत् यस्मात्समर्थोऽपि विप्रशापं न प्रत्यहन्न प्रतिहतवान् ॥ ४२ ॥

ततः किमत आह । नाहमिति । त्यक्तुं नोत्सहे न मृष्यामि तर्हि किंविधेयमित्यत आह । स्वधाम नय मामपीति । स्वधाम वैकुण्ठम् ॥ ४३ ॥

त्यागोत्साहमसम्भावयन्नाह । तवेति । कर्णपीयूषं श्रोत्रयोरमृततुल्यं परममङ्गलावहं च तव विक्रीडितमेवास्वाद्य श्रुत्वाऽन्यस्पृहां देहतदनुबन्धिपुत्रदारादिविषयस्पृहां त्यजति त्वामेवाभजत इत्यर्थः ॥ ४४ ॥

कथं पुनः शय्यादिषु सहवर्तमानं प्रियतमं तत्र हेतुरात्मानं त्वां कथं त्यजेमहि तत्रापि भक्ता वयं कथं त्यजेमहि ॥ ४५ ॥

त्वां त्यक्तुमशक्नुवन् स्वधाम नय मामिति प्रार्थये ननु संसृतिभयादित्यभिप्रेत्याह । त्वयेति । त्वयोपभुक्तैः स्रगादिभिश्चर्चिताः अलंकृताः त्वदुच्छिष्टभोजिनश्च दासा वयं तव मायां जयेम हि निश्चितं न मायातरणार्थमस्माभिर्यतितव्यमित्यर्थः ॥ ४६ ॥

त्वत्पदं त्वन्मायातरणं चास्माकं सुलभमेवासीदित्यभिप्रेत्याह । वातरसना इति । दिगम्बराः कौपीनमात्रधारिणः ननु नग्नाः श्रमणाः अनशनादिभिः श्रमवन्तः ऊर्ध्वमन्थिनः ऊर्ध्वरेतसः सन्न्यासिनः चतुर्थाश्रमिणः शान्ता रागद्वेषादिरहिताः ब्रह्माख्यमिति मध्यमपदलोपी समासः ब्रह्मलोकाख्यमित्यर्थः—

> एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति
> स वायुलोकं स वरुणलोकं स आदित्यलोकम्
> स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोकम् ।
> अश्व इव रोमाणि विधूय पापं चन्द्र इव
> राहोर्मुखात्प्रमुच्य धूत्वा शरीरमकृतं कृतात्मा
> ब्रह्मलोकमभिसम्भवानि स वा एष दिव्येन चक्षुषा
> मनसैतान् कामान् पश्यन् रमते एते ब्रह्मलोक

इत्यादिषु ब्रह्मलोकत्वेन प्रसिद्ध इत्यर्थः । तत् ते तव धाम स्थानं यान्ति ॥ ४७ ॥

एवमन्ये ब्रह्मचर्यादिभिः क्लेशैस्तरन्ति वयं त्वनायासेन तरिष्याम इत्याह । वयं त्विति । हे महायोगिन्निह संसारे कर्मवर्त्मसु कर्मार्जितेषु सुखदुःखादिषु स्वर्गनरकपदवीषु वा भ्रमन्तोऽपि वयं तावकैस्त्वद्भक्तैः सह त्वद्वार्तया दुरन्तमपि तमः तमःकार्यं संसारं तरिष्यामः अनायासेनेति शेषः ॥ ४८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

भवान् समर्थोऽपि विप्रशापं न प्रत्यहन् यस्मान्नूनमिदानीं लोकं संत्यक्ष्यते ॥ ४१—४४ ॥

शय्यासनादिषु प्रियम् ॥ ४५ ॥

तवाधीना मायां प्रकृतिम् ॥ ४६ ॥

श्रमणा भिक्षावृत्तयः ॥ ४७ ॥

तावकैः तव भक्तैः सह त्वद्वार्तया ॥ ४८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

देवदेवेति सार्द्धकम् । अत एव नूनमिति वितर्कोक्तिः संहृत्य संहारमुद्रया स्वाङ्गेन नीत्वेत्यर्थः ॥ ४२ ॥

अतः कस्मिंस्तल्लोपनमनयनं दृष्ट्वा प्रार्थयते । नाहमिति । यथा वाद्यलोकेभ्यस्तथा मामपि नयेत्यपि शब्दार्थः स्वकर्तृकत्यागाशक्यत्वं कैमुत्येन दर्शयति । तवेति ॥ ४३—४४ ॥

तदेवाह । शय्येति ॥ ४५ ॥

त्यक्तुमशक्नुवन्नेव प्रार्थये न मायाभयात् अतः साधकभक्तानामपि तत्तरणमारोपितत्वत्सम्बन्धेनापि सुलभ्यमिति दर्शयन् सजातीयवासनात्वेन तेष्वपि स्वाभेदमङ्गीकुर्वन्स्वमतप्रयोगेणैव तेषां तदाह । त्वयोपभुक्तेति । परोक्षपूजादावपीति भावः । जयेम जेतुं शक्नुमः ॥ ४६ ॥ ४७ ॥

वयमिति युग्मकम् । तरिष्यामस्तर्तुं शक्नुमेत्यर्थः ॥ ४८—५० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

देवानामपि देवा ब्रह्मादयस्तेषामीशेति देवकार्यं ब्रह्मप्रार्थितं च त्वया सर्वं सम्पादितमिति भावः । न केवलमेतदर्थमेवावतीर्णस्त्वमभूः किन्तु दुर्वितर्कविचित्ररसमयरूपगुणचरित्रप्रकाशनया भक्तजनानन्दनार्थमपीत्याह । हे योगेशेति यदुक्तं "स्वमहिमलीलौपयिकं स्वयोगमायाबलं दर्शयता गृहीत"मिति अनित्यमायाजमतानिरस्तार्थमपीत्याह । पुण्येति । अत एव त्वदीयसर्वविधिविलसितस्य निष्पन्नत्वादिदानीमिमं लोकं सन्त्यक्ष्यते नूनमिति वितर्कं भवानन्तर्धास्यतीति तर्कयामि किं च शापनिवर्तकं प्रभावस्त्वमनुपविशसि किं त्वद्दर्शनादपि प्रभावस्तानन्तमधिकं भवेत् विप्रशाप एषां मा फलत्विति तव मनोगते सत्यपि किं शापः प्रभवितुं शक्नुयात् तस्मात्तवाज्ञा अन्ताकृत्स्यैव दृश्यते यत् यतः समर्थोऽपि भवान् विप्रशापं न प्रत्यहन् न प्रतिहतवान् ॥ ४२ ॥

नन्वीश्वरोऽहं यथेच्छामि तथा करोमि तेन तव किमिति चेत्तत्राह । नाहमिति ॥ ४३ ॥

अन्यस्पृहां पुत्रकलत्रादिमोक्षान्तस्पृहां त्यजन्ति ननु विक्रीडितं त्यक्तुं शक्नुवन्ति अहं तु त्वामपि त्यक्तुं कथं शक्नुयामिति भावः ॥ ४४ ॥

किं च शय्यादिषु त्वां भक्ताः पादसंवाहनाद्यैः नित्यं सेवितवन्तो वयं कथं त्यजेम ॥ ४५ ॥

स्मरन्तः कीर्तयन्तस्ते कृतानि गदितानि च ।
गत्युत्स्मितेक्षणक्ष्वेलि यन्नृलोकविडम्बनम् ॥ ४९ ॥

श्रीशुक उवाच ।

एवं विज्ञापितो राजन् ! भगवान् देवकीसुतः ।
एकान्तिनं प्रियं भृत्यमुद्धवं समभाषत ॥ ५० ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
वैयासिक्याम् एकादशस्कन्धे
षष्ठोऽध्यायः ॥ ६ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

त्वत्पदकुमशक्नुवन्नेव प्रार्थये ननु मायामशक्यामाह । त्वयेति । मायां जयेमेति सा यद्यस्मान् प्रतिविम्बयन्ती मायाति तर्ह्येभिरेवास्त्रैः प्रबलीभूय तां जयेम नतु ज्ञानादिभिरित्यर्थः ॥ ४६ ॥

वातरशनाख्यास्तैस्तैर्नामभेदैरभ्यासादिभिः साधनैर्ब्रह्माख्यं तव धाम [यत्परं परमं ब्रह्म सर्वं विभजते जगत् । ममैव तद् घनं तेजो ज्ञातुमर्हसि भारत] अर्जुनं प्रति त्वदुक्तेस्तवैव तेजोविशेषं ते यान्ति सत्यं ते यान्तु यान्तु न तत्र लिप्सामः किन्तु त्वन्मुखचन्द्र-मधुरस्मितसुधापानमत्ता एव तिष्ठाम इति भावः ॥ ४७ ॥

किञ्च त्वदेकान्तिनो महाभक्ता मायातरणं भक्तेः फलत्वेन नैवानुसन्दधते यान्तु न तादृशा इति तादृशीं प्रौढिं कथं कुर्म इति दैन्येनैवास्मानि मायासितीर्षामारोप्याह । वयन्त्विति । नुर्भि-ऽधपक्रमे यन्तु दासा अपि मनवर्त्मसकाविनस्तद्रजसापि तामा-ऽऽपासमायिकीयंच एवेति भावः । हे महायोगिन्निति तव योगमायां मायाञ्च नैव विविद्धाम इति भावः । तावकैस्त्वद्भक्तजनैः सहेति ते सत्सङ्गपूर्वसमाया एवेति तैरेवास्माकं सान्निध्यमुपपद्यते न वातरशनाद्यैरिति भावः । तत्रत्ये च कः प्रकार इत्यत आह । स्मरन्त इति । त्वदीयचरित्रश्रवणकीर्तनादिसुखसंगतेजसैवा-स्माकं तत्समस्तरणं सुगममेवेति भावः । क्ष्वेलिः प्रेयस्या सह सौरतपरिहासः ॥ ४८ ॥ ४९ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

लोकं भूलोकम् न प्रत्यहम् प्रतिहतत्वात् ॥ ४२—४४ ॥

शय्यादिषु प्रियम् अतिस्नेहविषयं त्वामात्मानमन्तर्यामिणं वयं भक्ताः कथं त्यजेमहि ॥ ४५ ॥

ननु मायातो भीतोऽसि किं तत्राह । त्वयेति । चर्चिताः अलं-कृताः मायां कार्यकारणरूपां प्रकृतिम् ॥ ४६ ॥

श्रमणा भिक्षावृत्तयः ऊर्ध्वमन्थिनः ऊर्ध्वरेतसः नैष्ठिकाद्यः शान्ता बहुयत्नेन शान्तिं प्राप्ताः ब्रह्माख्यं बृहत्त्वेन ब्रह्मनामकं धाम स्थानं यान्ति अर्चिरादिमार्गेण प्राप्नुवन्ति "ब्रह्मणः सदनादूर्ध्वं तद्विष्णोः परमं पदं शुद्धं सनातनं ज्योतिः परं ब्रह्मेति यद्विदुरिति" महा-भारते भगवद्वाक्यैः ब्रह्मणस्पदं सुप्रसिद्धम् ॥ ४७ ॥

वयं तु संगमेनोपायेन मायां तीर्त्वा तत्स्थाम इत्याह । वयं त्विति । तावकैस्त्वद्भक्तैः सह त्वद्वार्तया तमः संसारं तरि-ष्यामः ॥ ४८ ॥

---

भाषा टीका ।

उद्धव उवाच ।

हे देवदेवों के ईश ! हे पुण्यश्रवणकीर्तन ! मेरे को माळूम होता है कि आप इस कुलको संहार कर के इस लोक का त्याग करोगे जिस से कि ब्राह्मणों के शाप के नाश करने को समर्थ हो तो भी आप ने नाश नहीं किया है ॥ ४२ ॥

हे केशव ! हे नाथ ! मैं आप के चरण कमल को आधे क्षण भी छोडने नहीं चाहता हूं मेरे को भी आप अपने धाम को लेजाओ ॥ ४३ ॥

हे कृष्ण ! आप का लीला चरित्र मनुष्यों को परम मङ्गल कारक है उस चरित्र रूपकथा के अमृत को प्राप्त हो के से मनुष्य और मनोरथों को छोड देते हैं ॥ ४४ ॥

शयन बैठना चलना स्नान क्रीडा भोजन इत्यादि कों में आप के सङ्ग रहने वाले प्रिय भक्त हम लोग आप आत्मा अंतर्यामी को कैसे छोड सके हैं ॥ ४५ ॥

आप के भोगे हुये फूलमाला वस्त्र अलङ्कार इनों से भूषित होकर आप के उच्छिष्ट प्रसाद को पाकर हम लोग आप के दास आप की माया को जीत जाते हैं ॥४६॥

दिगम्बर परिश्रम वाले सन्यासी जो ऊर्ध्वरेता ऋषि जन निर्मल मन वाले शान्त पुरुष आप के ब्रह्मनामक धाम को जाते हैं ॥ ४७ ॥

हे महायोगि ! हम लोग तो इहां कर्म मार्गों में भ्रमते हुये हैं तो भी आप के भक्तों के सङ्ग में आप का चरित्र कथन करने से संसार को तर जावेंगे ॥ ४८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

क्ष्वेली परिहासः कुन्तैकत्वम् ॥ ४९

श्रीधरस्वामिकृतभावार्थदीपिका ।

एकान्तिनमित्यादि । स्वाभिप्रायावज्ञाने हेतुः ॥ ५० ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
षष्ठोऽध्यायः ॥ ६ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

सम्यक् निष्कैतवतयाऽभाषत ॥ ५० ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीराधारमणदासगोस्वामिकृतदीपिकादीपने टिप्पणे
षष्ठोऽध्यायः ॥ ६ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

इति श्रीमद्भागवतव्याख्याने एकादशस्कन्धीये
श्रीसुदर्शनसूरिकृतशुकपक्षीये
षष्ठोऽध्यायः ॥ ६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

कथं भूताः सन्तस्तव कृतानि चेष्टितानि गदितानि सूनृतानि स्मेक्षिः परिहासः गत्यादीनां कृष्णैकचन्द्रावः तथ नृलोक-विडम्बनं मनुष्यचेष्टानुकरणं तच्च स्मरन्तः स्मारयन्तश्च तरिष्याम इति पूर्वेणा सम्बन्धः ॥ ४९ ॥

हे राजन्नेकान्तिनमनन्यदैवतमत एव प्रियं भृत्यं चोद्धवं समभाषत ॥ ५० ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
षष्ठोऽध्यायः ॥ ६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

गत्युत्स्मितेक्षणोक्ष्वेलि यन्नृलोकविडम्बनं तानि च तव स्मरन्तः उत्पन्नतत्त्वज्ञानोऽच्युतस्यो भ्रमन्त इत्यात्मनो ऽवमतां चकोति परसाधूनां स्वभाव इति प्रदर्शनाय "आत्मनो ऽवमतां कुर्युरसमा अपि सर्वशः । कदाचिदेवे स्वगुणान् हिनस्त्येव हि साधव" इति वचनादुक्तं युक्तमिति ॥ ४९ ॥

एकः श्रीहरिरेव सर्वोत्तम इति भावो यस्य स एकान्तिनं मुख्यप्रियमिति वा "एके मुख्यान्यकेवला" इत्यभिधानम् ॥ ५० ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
षष्ठोऽध्यायः ॥ ६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
षष्ठोऽध्यायः ॥ ६ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

एकान्तिनमित्यादिकं स्वाभिप्रायावज्ञाने हेतुः ॥ ५० ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
एकादशस्य षष्ठोऽयं सङ्गतः सङ्गतस्सताम् ॥ ६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

गत्यादीनां कृष्णैकत्वं क्ष्वेली परिहासः कृतादीनि स्मरन्तः कीर्तयन्तश्च सन्तः तमस्तरिष्याम इति पूर्वेणान्वयः । एवं भक्त्युपाये सिद्धेऽपि भगवत्सन्निधौ तु कुत्रचित् एवेति भावः ॥ ४९—५० ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
षष्ठाध्यायार्थप्रकाशः ॥ ६ ॥

---

भाषा टीका ।

आप के किये हुये कहे हुये चरित्रों को स्मरण करके कीर्तन कर के आप की चाल मन्द हास से देखना परिहास आदिकों में जो मनुष्य नाट्य है तिसको स्मरण कर के हम लोग संसार को तर जावेंगे ॥ ४९ ॥

श्री शुक उवाच ।

हे राजन् ! परीक्षित इस प्रकार से प्रार्थना करने से देवकीनन्दन भगवान् एकान्ति प्रिय उद्धव भक्त के प्रति अच्छे तरह कहने लगे ॥ ५० ॥

इति श्रीमद्भागवत एकादशस्कन्ध षष्ठाऽध्याय
श्रीवृन्दावनस्थ पं० भागवताचार्यकृत
भाषा टीका समाप्ता ॥ ६ ॥

---

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे षष्ठोऽध्यायः ॥ ६ ॥

—:※:—

# अथ सप्तमोऽध्यायः ।

—:*:—

श्रीभगवानुवाच ॥

यदात्थ मां महाभाग ! तच्चिकीर्षितमेव मे ।
ब्रह्मा भवो लोकपालाः स्वर्वासं मेऽभिकाङ्क्षिणः ॥ १ ॥
मया निष्पादितं ह्यत्र देवकार्य्यमशेषतः ।
यदर्थमवतीर्णोऽहमंशेन ब्रह्मणाऽर्थितः ॥ २ ॥
कुलं वै शापनिर्दग्धं नङ्क्ष्यत्यन्योऽन्यविग्रहात् ।
समुद्रः सप्तमेऽह्न्येतां पुरीं च प्लावयिष्यति ॥ ३ ॥
यर्ह्येवायं मया त्यक्तो लोकोऽयं नष्टमङ्गलः ।
भविष्यत्यचिरात्साधो ! कलिनाऽपि निराकृतः ॥ ४ ॥
न वस्तव्यं त्वयैवेह मया त्यक्ते महीतले ।
जनो ऽधर्मरुचिर्भद्र ! भविष्यति कलौ युगे ॥ ५ ॥
त्वं तु सर्वं परित्यज्य स्नेहं स्वजनबन्धुषु ।
मय्यावेश्य मनः सम्यक् समदृग्विचरस्व गाम् ॥ ६ ॥
यदिदं मनसा वाचा चक्षुर्भ्यां श्रवणादिभिः ।
नश्वरं गृह्यमाणं च विद्धि मायामनोमयम् ॥ ७ ॥
पुंसोऽयुक्तस्य नानाऽर्थो भ्रमः स गुणदोषभाक् ।
कर्माकर्मविकर्मेति गुणदोषधियो भिदा ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

सप्तमे तूद्धवस्यात्मज्ञानसिद्ध्यै हरिः स्वयम् ।
अवधूतेतिहासोक्तगुरुष्वष्टाववर्णयत् ॥

यदात्थ संहृत्यैतत्कुलमिति स्ववासं वैकुण्ठवासं प्रति ॥१।२॥

त्वं च सर्वत्यागेनाऽऽत्मनिष्ठो भवेति वक्तुमाह । कुलमिति त्रयेण ॥ ३ ॥

तदैवायं नष्टमङ्गलो भविष्यति निराकृतो नितरामाक्रान्तः ॥४॥

न वस्तव्यमेव त्वया ॥ ५—६ ॥

ननु गुणदोषाभ्यां विषमे लोके कुतः समदृष्टिः स्यामत आह । यदिदमिति । मनआदिभिर्गृह्यमाणं मनोमयत्वान्मायेति विद्धि तथापि न स्थिरं किन्तु नश्वरं विद्धि ॥ ७ ॥

मनोमयत्वे हेतुः । पुंस इति । विक्षिप्तमनसः नानार्थो भेदविषयो भ्रमः स भ्रम एव गुणदोषभाक् ननु वेदेनैव विधिनिषेधाभ्यां भेदस्य सत्यतोक्ता न भ्रमविजृम्भितगुणदोषयुक्‌: कर्म विहितम् अकर्म तल्लोपः विकर्म निषिद्धमिति भेदः अविद्यावद्विषय एव वेद इत्यर्थः ॥ ८ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

तत्कुलसंहारादिकं स्वधामनि तव नयनं चात्थ ॥ १ ॥

अंशेन बलदेवेन सह ॥ २ ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

शापनिर्दग्धमित्यनुकरणाभिप्रायेण वस्तुतस्तु शापेऽपि निर्गते दग्धं दाहो यस्मात्तादृशं सत् नङ्क्ष्यति प्राकृतलोकानामदर्शनमेव प्राप्स्यतीत्यर्थः । प्लावयिष्यति समुद्रः स्वदत्तभूमौ चतुर्दिक्ष्वाचरिष्यति ननु मध्येऽपि "वञ्चयित्वा महाराज ! श्रीमद्भगवदालय"मिति वक्ष्यमाणत्वात् ॥ ३ ॥

यर्ह्येव त्यक्तस्तदैवेत्यन्वयः ॥ ४ ॥

नवस्तव्यमेवेति । एकत्र स्थानं बद्ध्वा न स्थेयमित्यर्थः । समदृग्विचरस्व गामित्युक्तेः ॥ ५ ॥

यद्यपि नोद्धवोऽल्पवापि मत्त्यूनो यद्गुणैर्नार्हित इति भगवदुक्तेरुद्धवस्य सिद्धत्वेनोपदेश्यत्वं न सम्भवति तथापि तन्मतादरणाय तमुपदिश्य ज्ञानयोग्यान् प्रत्याह । त्वन्त्विति सप्तभिः । समं ब्रह्मैव पश्यतीति तथाभूतः सन् ॥ ६ ॥

मनोमात्रविलासितत्वान् मायेति मिथ्येति विद्धि तदपि मिथ्याभूतमपि ॥ ७ ॥

अयुक्तस्य पुंसः नानाभेदो विषयो यस्य तथाभूतो भ्रमो भवति स भ्रम एव गुणदोषबुद्धिहेतुर्भवतीत्यन्वयः । नेति समाधानं भ्रमेति भ्रमेण विजृम्भिता प्रकाशिता गुणदोषबुद्धिर्यस्य तस्यैव अविद्याऽनात्मनि आत्मबुद्धिस्तद्वतोऽज्ञा विषया अधिकारिणो यस्य तथाभूत एव विधिनिषेधलक्षणो वेदः ननु स्वरूपज्ञविषयः "त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुने"ति श्रीभगवदुक्तेः ॥ ८ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

॥ १—५

गां भूमिम् ॥ ६ ॥

मायामनोमयं मायाशब्देन गुणाः लक्ष्यन्ते गुणवश्यमनोग्राह्यं न विद्धन्मनोग्राह्यम् आत्मस्वरूपमेव तथा विद्धीत्यर्थः ॥ ७ ॥

अयुक्तस्य इति पदं नानार्थो भ्रमः नानाविधदेहविषयभ्रमः सगुणदोषकृत् पुण्यपापहेतुरित्यर्थः । तदेवोपपादयति । कर्मेति । कर्म काम्यं विकर्म पापम् उभयमपि दोषः अकर्म निष्कामकर्म स गुण इत्यर्थः ॥ ८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

भाषणमेवाह । यदित्यादिना । हे महाभाग ! मां प्रति यदात्थ संहृत्यैतत्कुलं नूनं लोकं सन्त्यक्ष्यते भवानिति तन्मे चिकीर्षितमेव तथा ब्रह्मा भवो रुद्रः लोकपालाश्च मम स्वर्वासं श्रीवैकुण्ठवासमभिकाङ्क्षिणः अभिकाङ्क्षन्त इत्यर्थः ॥ १ ॥

नन्ववतारप्रयोजनमनिष्पाद्य कथं गमिष्यसीत्यत आह । मयेति । किन्तद्देवकार्यमित्यत आह । यदर्थमिति । ब्रह्मणाऽर्थितः प्रार्थितोऽहम् अत्र बलभद्रेण सह यदर्थमवतीर्णः तद्भूभारहरणात्मकमिति भावः ॥ २ ॥

ननु न भारोऽपनीतः दुःसहभारात्मकस्य यदुकुलस्याद्यापि स्थितत्वादित्यत आह । कुलं वा इति । शापेनैव नितरां दग्धमायमन्योऽन्यकलहाग्निरवशेषं नङ्क्ष्यति वै निश्चितं तर्हि पुरीं कः पालयिष्यतीत्यत आह । समुद्र इति । न कोऽपि पालयिष्यति किन्त्विन्मारभ्य सप्तमेऽह्नि एतां द्वारकां पुरीं समुद्रः प्लावयिष्यति नाशयिष्यतीत्यर्थः ॥ ३ ॥

त्वया त्विह न स्थातव्यमिति वक्तुमाह । यर्हीति । यर्ह्येवायं लोको मया त्यक्तः तदैवाचिरात् नष्टमङ्गलः हे साधो ! कलिना निराकृतः अभिभूतश्च भविष्यति ॥ ४ ॥

अतो मया त्यक्ते इहास्मिन्महीतले त्वया न वस्तव्यं न स्थातव्यं हे भद्र ! अधर्मे रुचिर्यस्य तथा भूतो भविष्यति अतोऽपीह न वस्तव्यमित्यभिप्रायः ॥ ५ ॥

तर्हि किंविशेषं क्व गन्तव्यमित्यत आह । त्वन्त्विति । सर्वं शब्दादिविषयं स्वजनेषु बन्धुषु स्नेहं च त्यक्त्वा मनो मयीश्वरे सम्यक् निवेश्य समदृक् सर्वस्य ब्रह्मात्मकत्वानुसन्धानरूपसमदृष्टिमान् गां भूमिं विचरस्व ॥ ६ ॥

सर्वं परित्यज्येति शब्दादिविषयत्याग उक्तः वैराग्यमन्तरेण त्यागासम्भवात्तत्र वैराग्यजननार्थं तेषां नश्वरत्वं प्रकृतिगुणवश्यमानसानामेव सुखकरत्वं चाह । यदिदमिति । यन्मनआदिभिर्गृह्यमाणं तदिदं सर्वं नश्वरं मायामनोमयं च विद्धीति सम्बन्धः मायाशब्देन तद्गुणवश्यं लक्ष्यते मायागुणवश्यं यन्मनः तत आगतं "तत आगत इत्यधिकारे मयट्च" इति मयट् प्रकृतिगुणवश्यमनोजन्यमेव विषयसुखं गुणवश्यमानसानामेव तद्भासते न तु विशुद्धमानसानामित्यर्थः ॥ ७ ॥

समदृग्विचरस्वेत्युक्तं ननु देवमनुष्यतिर्यक्पादपादिभेदभिन्नतया प्रतीयमानेषु वस्तुषु विभिन्नैव दृष्टिः स्यान्न त्वेकरूपेत्यत आह । पुंस इति । अयुक्तस्य सर्वान्तरात्मनि सर्वशरीरके मयि चित्तमयुञ्जतः पुंसः नानार्थः नाना अर्था यस्य सः यो नानार्थविषयः प्रत्ययः स भ्रमरूपः तत्तद्ब्रह्मात्मकस्वतन्त्रवस्तुविषया प्रतीतिर्भ्रमरूपेत्यर्थः । सर्वान्तरात्मनि मयि चित्तं युञ्जतस्तु मदात्मकत्वेनैकरूपा या प्रतीतिः सा तु प्रमितिरूपेति भावः । अस्तु नानार्थो भ्रमः ततः किमत आह । गुणदोषभागिति यस्य पुंसो भ्रमः स गुणदोषभाक् सुखदुःखभाक् पुण्यापुण्यभाग्वा गुणदोषकृदिति पाठे तु भ्रमो गुणदोषकृत्सुखदुःखकृदित्यर्थः । किं भ्रमः स्वरूपेणैव गुणदोषावहः नेत्याह । कर्मेति । यस्य कर्माकर्मविकर्मेतिभिदा भेदः तस्य भिदः गुणदोषौ भिन्नौ गुणदोषभिद इति पाठे कर्माद्यनुष्ठानबुद्धिप्रयुक्तसुखदुःखदुःखश्चेत्यर्थः । कर्मावश्यं कर्तव्यं नित्यं नैमित्तिकञ्च अकर्म अकर्तव्यं प्रतिषिद्धमित्यर्थः । विकर्म विविधफलाय चोदितं काम्यं कर्म अयमर्थः स्वतन्त्रवस्तुभ्रमदेहात्मभ्रमतोऽज्ञस्य पुंसः विधिनिषेधशास्त्रात्मकभेदभिन्नशास्त्रवश्यता तदनुवर्तनातिक्रमनाभ्यां सुखदुःखे च भ्रमस्य शास्त्रवश्यतापादनद्वारा गुणदोषकरत्वं न स्वरूपेणेति नचैतावता ब्रह्मविदां शास्त्रातिलङ्घनं न दोषायेति मन्तव्यं तेषामपि निश्चितं स्वतन्त्रवस्तु प्रतीतिभ्रमाणामाभोक्षं कदाचिद्भ्रमानुवृत्तिदर्शनात्तत्प्रयुक्तशास्त्रवश्यत्वस्यावर्जनीयत्वात् , न ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

भगवान्यदुबन्धुसंवादव्याजेन स्वतत्त्वमुद्धवायोपदिशन्नस्यावसरेण तत्रादावुद्धवोक्तं स्वाभीष्टमिति वदन् ब्रह्मादीनां स्वलोकगमनाभिलाषं देवकार्यकरणावतारप्रयोजनं स्वधामगमनानन्तरं द्वारवत्याः समुद्रे मज्जनं लोकस्य पापवृद्धित्वेनामङ्गलत्वं कालेऽकृतयोकादुद्धवस्य निर्याणप्रेरणं स्वस्मिन्मनः प्रवेश्य महीपर्यटननियोग इत्यादि वक्ति । यदात्थमामित्यादिना । मां स्वलोकगतं कर्तुमभिकाङ्क्षिणः ॥ १—२

स्वर्गारोहणानन्तरं सप्तमे दिवसे ॥ ३ ॥

यर्हि यदा ॥ ४ ॥

मयमंत्यचारीति पदच्छेदः ॥ ५—६ ॥

क्षितिसंचरणे इत्थं भक्षविशेषमुपदिशति । यदिदमिति । मनआदिसर्वेन्द्रियैर्गृह्यमाणं यदिदं विश्वं तदिदं नश्वरं क्षणभङ्गुरं विद्धि नान्यदनिर्वाच्यं तदीति तथाह । विद्धीति । विद्धीत्युभयत्र संबध्यते मनोमयीं मायां च मन्मनःप्रधानप्रकृतिनिर्मितां विद्धि मे बुद्धिः प्रधानीकृत्य प्रकृत्या रचितत्वात् नानिर्वाच्यं विद्धि मूढदृष्टे इति यन्मायामयामिति प्रयोगो युज्यते अचेतनप्रकृतेः कार्यात्मकत्वमस्तु चेतनायाः कथमिति इत्यमाशङ्क्य "प्रकृतिः सा परा मह्यं रोदसी लोकधारिणी । ऋता सत्यामरा जया लोकानामात्मसंहिते"त्यनेन परिहर्तव्या प्राधान्यापेक्षयोपपन्न इत्यर्थः ॥ ७ ॥

एवं प्राधान्यज्ञानपूर्वकं भक्त्या मयि मनो युञ्जानस्य योगिनोऽनर्थोपशमो नान्यस्येत्याह । पुंस इति । अयुक्तस्य मयि मनो योगरहितस्य पुंसो मत्प्रेरितप्रकृतिरचिते नानाविधेऽर्थे यो भ्रमो मामन्तरेण स्वकर्तृत्वज्ञानं स गुणदोषकृत् स्वर्गनरककृत् अनेन तज्जोऽयमसुखदुःखात्मकः अपारः संसारो लक्ष्यत इति ज्ञातव्यं तदुक्तं "स्वर्गाद्याश्च गुणाः सर्वे दोषाः सर्वे तथैव च । आत्मनः कर्तृताभ्रान्त्या जायन्ते नात्र संशयः । परमात्मानमेवैकं कर्तारं वेत्ति यः पुमान् । स मुच्यतेऽस्मात्संसारात्परमात्मानमेति चे"ति भ्रमस्य निमित्तमाह । कर्मेति सर्वं हि परमेश्वरः करोतीति ईश्वराधीनक्रियायाम् इदं मया क्रियते इदं मया न क्रियते इदं विपरीतं क्रियत इति कर्माकर्मविकर्मेति भिदा बुद्धिभ्रमो गुणाकर्षी रजस्तमोरूपो दोषधियो दोषबुद्धेः पुरुषस्य भवतीति यदस्मादुक्तस्य मूलकारणं रजस्तमसोः यत्किं विज्ञाय तौ परिहृत्य मय्येव स्थापनेन युक्तेन्द्रियजयो युक्तचित्तस्त्वम् इदं जगदात्मानं विरिञ्चे ईक्षस्व कार्यकारणात्मके जगति विततं विस्तृतशक्तिमात्मानं विरिञ्चिम् अधीश्वरे मयि ईक्षस्व मदाधारं पश्येत्यर्थः तदुक्तम् "आत्मशब्दोदितो ब्रह्मा परमात्माभिधो ह्यहम् सर्वं ब्रह्मणि वीक्षेत मयि ब्रह्माणमेव चेति ॥ ८—९ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

यदुकुलसंहारादिकं ख्यापिन तव मयनं चात्थ ॥ १ ॥

अंशेन बलदेवेन सह ॥ २ ॥

शापनिर्दग्धमित्यनुकरणाभिप्रायं वस्तुतस्तु शापेऽपि निर्मितं दग्धं दाहो यस्मात्तथाभूतं सत् नङ्क्ष्यति अदर्शनमेव प्राप्स्यतीत्यर्थः । प्लावयिष्यति चतुर्दिक्षु प्लावयिष्यति ननु मध्येऽपि "वर्जयित्वा महाराज श्रीमद्भगवदालय"मिति वक्ष्यमाणात् ॥ ३ ॥

तव स्वधामगमनं तु किञ्चिद्विलम्बेनैव करिष्यामि यतो मुनिषु मदुपदेशग्रहणाय सम्प्रति त्वां स्थापयिष्यामीत्यभिप्रेत्य तथोपदेष्टुमुपक्रमते । यर्ह्येवेति । नोद्धवोऽण्वपि मन्न्यूनो यद्गुणैर्नार्दितः प्रभुः । अतो मद्वयुनं लोकं ग्राहयन्निह तिष्ठत्विति तृतीयस्य तदुक्तेः ॥ ४—५ ॥

अनन्तरमुपलक्ष्य तदुपदेशवान् प्रथमेवाह । त्वन्त्वित्यादि । यदि सर्वनिजोपदेशेन तत्र ज्ञानयोग्यान् प्रथमेवाह । त्वमिति सप्तभिः ॥ ६ ॥

जागरे मायाप्रधानं स्वप्ने मनःप्रधानं विद्धि अत एव नश्वरं विद्धीत्यर्थः ॥ ७ ॥

अयुक्तस्य । असमाहितचित्तस्य भ्रम एव नानाज्ञानार्थः बहुविधार्थो यत्र तथाविधः स एव च गुणदोषभाक् गुणदोषबुद्धिहेतुरित्यर्थः । अतः कर्माकर्मेति ॥ ८—९ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

सप्तमे ज्ञानवैराग्ये विधित्सुः कृष्ण उद्धवे ।
अवधूतोक्तगुरुषु प्रोवाचाष्टौ धरादिकान् —

स्वयासं वैकुण्ठवासम्प्रति ॥ १ ॥

अंशेन बलदेवेन सह ॥ २ ॥ — ॥ ३ ॥

अत्रान्तरे मनसि भगवान् किञ्चित्परामममर्श रुक्मिण्यादिविवाहबाणाद्यसुरवधप्रसङ्गतस्तत्र तत्र बन्धुमिलनप्रसङ्गतश्चेन्द्रप्रस्थमिथिलादिषु च यातायातैर्मा दिदृक्षूणां भूतलस्थभक्तानां मनोरथो मया प्रायः संपादित एव पृथिव्या अधः स्थितानां बलिराजिनन्दनादीनामपि षड्गर्भानयनगुरुपुत्रानयनप्रसङ्गेन ऊर्ध्वस्थानामदितिकश्यपादीनामपि पारिजाताद्याहरणप्रसङ्गेन महावैकुण्ठस्थानामादिपुरुषभूमादीनामपि विप्रबालकानयनप्रसङ्गेन वाञ्छितं मद्दर्शनं निष्पादितमेव किन्तु बदरिकाश्रमवासिनां नरनारायणादिपरमहंसमहामुनीन्द्राणामेव मद्दर्शनोत्सुक्यं न सफलीभूतं बभूव सम्प्रति तु सपादशतवर्षपर्यन्ता मत्प्राकट्यमर्यादा च पूर्णेत्यतस्तत्र प्रस्थापयितुमयमुद्धव एव निरूपयितव्यः अयं हि मत्तुल्यत्वान्मत्प्रतिमूर्तिरिव तेभ्यः उपायनत्वेन देयं मदीयभगवच्छब्दवाच्ययोर्ज्ञानवैराग्ययोरेकमेकं कणं मद्भक्तियोगं च महाधनं रत्नमिवाहाय यास्यंस्तेषां मनोऽभीष्टं स्वपूर्णमेव पूरयिष्यति यद्यप्यस्य सप्रेमपरिपूर्णस्य तदुत्थे ज्ञानवैराग्ये वर्त्तेते एव सम्प्रति मयोपदेष्टव्ययोः पृथग्ज्ञानवैराग्ययोर्नास्त्येवास्य जिघृक्षा तदपि मदिच्छायां सत्यां तत्राप्यस्य जिघृक्षा स्वयमुत्पत्स्यते तथैव यद्यप्यस्य मद्विच्युतौ सद्य एव प्राणहानिस्तदपि मदिच्छाशक्तिरेव बलवती प्राणानस्य पालयित्वा तावद्दूरमप्येनं यापयिष्यति प्रापयिष्यत्योकालक्षितं मदन्तिकेऽपि स्थापयिष्यतीति परामृश्य च श्रीमदुद्धवस्यापि ज्ञानवैराग्ययोर्भक्तियोगस्य च जिघृक्षां संचारयन्नाह । त्वं त्विति । स्वजनबन्धुषु यादवादिषु स्नेहं परित्यजेति तेषु तव स्नेहो द्विविधः मत्परिकरत्वात् प्रथमत एव स्वदेहसम्बन्धेनैकः मत्सम्ब-

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

त्यागो द्वितीयः तत्र पूर्वं एव त्वया त्यक्तुं शक्यः स एव मया त्यागे विधीयते नतूत्तरः त्वदशक्यत्वाद्विगीतत्वाच्चेति भगवद्वाक्य तत्त्वेन ज्ञायत एव ॥ ४—६ ॥

ननु कीदृशं समदृक्त्वमित्यत आह । यदिदमिति । मनआदिभिर्गृह्यमाणं यदिदं पृथिव्यादिकं वस्तु तत्सर्वं जागरे मायामयं मायाकल्पितत्वांशेन तुल्यमेव स्वप्ने मनोमयं मनःकल्पितत्वेनांशे सर्वं तुल्यमेव ॥ ७ ॥

उक्तमेवार्थं प्रपञ्चयति । पुंस इति । नानार्थो नानाविधोऽर्थो यो गुणदोषभाक् अयमर्थो गुणं भजत इत्युत्कृष्टः अयमर्थो दोषं भजत इति निकृष्टः पुंसोऽयुक्तस्याज्ञानिनो भ्रमः भ्रमप्रतीत इत्यर्थः । गुणप्रवाहपतितानां कोवार्थं उत्कृष्टः को वा निकृष्टस्तेषां वा क उत्कर्षः को निकर्षः यदुक्तं चित्रकेतुना "गुणप्रवाह एतस्मिन् कः शापः को न्वनुग्रहः । कः स्वर्गो नरकः को वा किं सुखं दुःखमेव वेति ननु वेदेनैव विधिनिषेधाभ्यां गुणदोषावुक्तौ सत्यं वेदोऽप्य-विद्यावद्विषय एवेत्याह । कर्म विहितम् अकर्म तल्लोपः विकर्म निषिद्धमिति भिदा भेदो गुणदोषधियो गुणदोषयोर्वेद वीर्यस्य तस्याज्ञानिन एवोक्तेत्यर्थः ॥ ८ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

नाहं तवाङ्घ्रिकमलं क्षणार्द्धमपि केशव त्यक्तुं समुत्सहे नाथेत्यादिवादिनमुद्धवं मत्स्विमन्तध्याने स्वप्राप्तये संक्षेपतः संन्यासैकान्त्यं स्वभक्तिमात्मज्ञानं तद्दार्ढ्यार्थं यदुभूतसंवादरूपेषु चतुर्विंशद्गुरुषु अष्टगुरूनाह श्रीभगवान् । यदात्थेति । संहृत्यैतत्कुलं नूनं लोकं सन्त्यक्ष्यते भवानिति यदात्थ तन्मे चिकीर्षितं कर्तुमिष्टमेव ब्रह्मादयोऽपि मे स्ववासं ये स्वर्गे लोकेऽमृतत्वं भजन्ते इति श्रुत्युक्तपरमधामवासं प्रति अभिकाङ्क्षिणः आकाङ्क्षावन्तः सन्ति ॥ १ ॥

अहमपि स्वधाम गन्तुं प्रार्थितपुरोऽस्मीत्याह । मयेति । अंशेन बलेन सह ॥ २ ॥

त्वं च सर्वतो विरक्तो भूत्वा मद्भक्तिनिष्ठो भवेति वक्तुमाह । कुलमिति श्लोकत्रयेण ॥ ३ ॥

यर्हि मया त्यक्तो भविष्यति तर्ह्ययं लोको नष्टमङ्गलो भविष्यति अत एव कलिना नितरामाक्रान्तो भविष्यति ॥ ४ ॥

हे भद्र ! इह गृहे त्वया नैव वस्तव्यम् ॥ ५ ॥

सर्वं परित्यज्य त्यक्तेष्वपि स्नेहं च परित्यज्य सम्यङ्मयि मनः आवेश्य समदृक् सन् गां पृथिवीं विचरस्व ॥ ६ ॥

सर्वपरित्यागे त्याज्यस्य दोषः भगवति मनःसमावेशने भगवद्गुणश्चापेक्षितः समदृक्त्वे सर्वस्यैकात्मकत्वं चापेक्षितमतो भगवान् स्वस्य सर्वहेतुत्वेन गुणं सर्वस्य नश्वरत्वेन दोषं सर्वस्य स्वशक्तिरूपमायाकार्यत्वेनैकात्मकत्वं चाह । यदिदमिति । इदं मनआदिभिर्गृह्यमाणं जगत् नश्वरं क्षणभङ्गुरं विद्धि यतो मायामनोमयं मायाप्रेरकमनःप्रधानं जगदुपादानरूपायाः मम शक्तेः प्रेरकेण मम मनसा जगन्निर्माणे प्रधानभूतेन रचितमित्यर्थः । सर्वस्य जगतो ह्यनित्यत्वात् तत्र विरक्तः सन् मम मायाकार्यत्वेन समं मत्वा समदृक् सन्सर्वहेतुत्वेन सर्वेश्वरं मां जानन् मद्भक्तः सन् पृथ्वीं विचरस्वेति फलितोऽर्थः ७ ॥

ननु मां पर्यटतो मम विहितकर्मलोपः स्यादत्राह । पुंस इति । अयुक्तस्य अविवेकिनः जगत्कारणाज्ञानभक्तिरहितस्य नानार्थः संसारः भ्रमः स्वाभयोऽन्याश्रयो वेत्यादिभ्रमविषयो भवति अतः स पुमान् गुणदोषभाग्भवति अत एव तस्य गुणदोषधियः पुंसः कर्माकर्मविकर्मेति भिदो भवन्ति अविवेकासिद्ध्यर्थं विहितं कर्मानुष्ठेयमेवाकर्माविहितलोपो नैव कर्तव्यो विकर्म निषिद्धाचरणं नैवकर्तव्यमित्यर्थः । विहितमनुष्ठेयं निषिद्धं दूरतो हेयमेवेति सिद्धान्तः ॥ ८ ॥

---

### भाषा टीका ।

#### श्री भगवानुवाच ।

हे महाभागी उद्धव जी तुमने जो बात हम से कही है सो तो हमारी करने की इच्छा है ही है ब्रह्मा महादेव और सब लोकपाल मेरा वैकुण्ठ में वास करना चाहते हैं ॥ १ ॥

मैंने इहां का सब देवतों का कार्य्य कर दिया है जिस के वास्ते ब्रह्मा के प्रार्थना करने से अंश बलदेवजी सहित हम अवतीर्ण भये हैं ॥ २ ॥

यह कुल शाप से दग्ध होकर परस्पर के वैर से नष्ट हो जावगा और आज से सात में दिन इस पुरी को समुद्र डुबाय देगा ॥ ३ ॥

मेरे न रहने से इस लोक का मङ्गल नष्ट होजायगा, जब तबही हे साधु उद्धव कलियुग भी इस लोक के मनुष्यों को हत भागी कर देगा ॥ ४ ॥

मै जब इस महीतल को त्याग देऊंगा तब तुम यहां नहीं रहना हे भद्र इहां के लोग सब अधर्म में रुचि करैगा ऐसा कलियुग का धर्म है ॥ ५ ॥

तुम तो अपने स्वजन बन्धुओं में सब स्नेह को छोड अच्छी तरह मेरे में मन लगा कर समदृष्टि होकर पृथिवी में विचरो ॥ ६ ॥

जो यह संसार में मन से वचन से नेत्रों से कर्णों से ग्रहण किया जाता है सो सब नश्वर अनित्य है इनको मनो मय जगन्माया रचित जानो ॥ ७ ॥

अज्ञानी पुरुष का नाना पदार्थों में मन का भ्रम रहता है उसी से गुण और दोष देखा जाता है गुण दोष की बुद्धि ही से कर्म अकर्म विकर्म एगुणों के भेद भी यथा विकार माने जाते हैं और किये जाते हैं ॥ ८ ॥

---

तस्माद्युक्तेन्द्रियग्रामो युक्तचित्त इदं जगत् ।
आत्मनीक्षस्व विततमात्मानं मय्यधीश्वरे ॥ ९ ॥
ज्ञानविज्ञानसंयुक्त आत्मभूतः शरीरिणाम् ।
आत्मानुभवतुष्टात्मा नान्तरायैर्विहन्यसे ॥ १० ॥
दोषबुद्ध्योभयातीतो निषेधान्न निवर्तते ।
गुणबुद्ध्या च विहितं न करोति यथाऽर्भकः ॥ ११ ॥
सर्वभूतसुहृच्छान्तो ज्ञानविज्ञाननिश्चयः ।
पश्यन्मदात्मकं विश्वं न विपद्येत वै पुनः ॥ १२ ॥

श्रीशुक उवाच ।

इत्यादिष्टो भगवता महाभागवतो नृप ! ।
उद्धवः प्रणिपत्याह तत्त्वजिज्ञासुरच्युतम् ॥ १३ ॥

उद्धव उवाच ।

योगेश ! योगविन्यास ! योगात्मन् ! योगसम्भव ! ।
निःश्रेयसाय मे प्रोक्तस्त्यागः संन्यासलक्षणः ॥ १४ ॥
त्यागोऽयं दुष्करो भूमन् ! कामानां विषयात्मभिः ।
सुतरां त्वयि सर्वात्मन्नभक्तैरिति मे मतिः ॥ १५ ॥
सोऽहं ममाहमिति मूढमतिर्विगाढस्त्वन्मायया विरचितात्मनि सानुबन्धे ।
तत्त्वञ्जसा निगदितं भवता यथाहं संसाधयामि भगवन्ननुशाधि भृत्यम् ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

कथमात्मनि परिच्छिन्ने विततं जगदीक्षणीयं तत्राऽऽह । आत्मानमिति । मयि ब्रह्मणि तद्रूपेणेक्षस्व ॥ ९ ॥

नन्वेवं युक्तचित्तत्वेन कर्माकरणे देवा दयो विघ्नान् करिष्यन्ति तत्राऽऽह । ज्ञानेति । ज्ञानं वचनात्पदार्थनिश्चयो विज्ञानं तदर्थानुभवस्ताभ्यां सम्यग्युक्तस्तत आत्मानुभवेनैव तुष्टचित्तोऽतः शरीरिणां देवादीनामात्मभूतोऽन्तरायैर्न हन्यसे अयं भावः यावदनुभवं यथाश्रमं कर्माणि कुर्वीतैव तदनन्तरं सर्वेषामात्मभूतत्वान्न कोऽपि विघ्नानाचरति तथा च श्रुतिः "तस्य ह न देवाश्च नाभूत्या ईशते आत्मा ह्येषां स भवती"ति ॥ १० ॥

तत्रोत्पन्नज्ञानस्यापि यथेष्टाचरणप्रसङ्ग इत्याह । दोषबुद्ध्येति । गुणदोषबुद्ध्यतीतोऽपि प्राक्तनसंस्कारान्निषेधान्निवर्तत एव किन्तु न दोषबुद्ध्या विहितं च प्रायशः करोति न गुणबुद्ध्या यथाऽर्भकः सङ्कल्पविकल्परहितः किञ्चित्करोति कुतश्चिन्निवर्तते तद्वत् ॥ ११ ॥

एवं भूतस्य न पुनः संसार इत्याह । सर्वभूतेति । न विपद्येत न पुनः संसरेत् ॥ १२ ॥ १३ ॥

त्वं तु सर्वं परित्यज्येत्याद्युपदेशमात्मनोऽयोग्यं मन्वानः पृच्छति । योगेशेति । योगफलदायिन् योगविदां न्यासो नामातिगोप्यो निक्षेपविशेषः यद्वा योगो विन्यस्यते क्रियते यस्मिन् योगात्मन् योगे आत्मा प्रकटो भवति यस्य योगस्वरूपेति वा योगस्य सम्भवो यस्मात् चतुर्भिरेतैः सम्बोधनैः स्वमहिम्ना केवलं त्वयोपदिष्टं न तु मदधिकारं पर्यालोच्येति द्योतितम् तदाह । निःश्रेयसायेति । नचारोग्याद्यर्थं सर्वस्वदानादिवदयं त्यागः किन्तु संन्यासलक्षणोऽप्रत्यापत्तिरूपः ॥ १४—१५ ॥

यं प्रति त्यागाद्युपदिष्टं सोऽहं मूढमतिः कुतः ममेत्यहमिति च सानुबन्धे पुत्रादिसहिते त्वन्मायया विरचिते आत्मनि देहे विगाढो निमग्नोऽतस्तत्तु भवता निगदितं यथाहमञ्जसा संसाधयामि तथा भृत्यं मामनुशाधि शनैः शिक्षय ॥ १६ ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

यस्मादयुक्तस्यैव भ्रमस्तस्मात् आत्मनि स्वपदवाच्याधिष्ठाने तद्रूपेण ब्रह्मरूपेण जहदजहल्लक्षणयेति शेषः ॥ ९

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

वेदतात्पर्यनिश्चयः तत्त्वमसीत्यादिवेदवाक्यार्थावधारणं तदर्थानुभवः वेदार्थसाक्षात्कारः तेनैव आत्मानुभवेन ब्रह्मानुभवेन सततं तुष्टचित्तत्वात् आत्मभूतः ब्रह्मत्वेन स्वरूपभूतः यावदनुभवम् अनुभवपर्यन्तं ब्रह्मसाक्षात्कृतेः पूर्वमित्यर्थः । यथासम्भवं ज्ञानाऽविरोधेन तदनन्तरम् अनुभवानन्तरं कर्माकरणेऽपि कोऽपि दोषादिः तथाच ब्रह्मानुभाविनो विघ्नाभावे प्रमाणं श्रुतिः ह इत्यस्यायमर्थः देवा अपि तस्य ब्रह्मानुभाविनः अभूत्यै ब्रह्मभावप्रतिबन्धाय नेशते न समर्था भवन्ति हि यतः स ज्ञानी एषां देवादीनामात्मा स्वरूपं भवति नहि स्वस्वरूपे कोऽपि विघ्नमाचरति ॥ १० ॥

निषेधात् सुरापानादेः दोषबुद्ध्या हेयबुद्ध्या न गुणबुद्ध्या उपादेयबुद्ध्या उभयातीतः पुमान् निषेधान्निवर्त्तते किन्तु दोषबुद्ध्या न विहितं च करोति किन्तु गुणबुद्ध्या नेत्यन्वयः ॥ ११ ॥

एवम्भूतस्य जीवन्मुक्तस्य ज्ञानविज्ञानाभ्यां परोक्षाऽपरोक्षानुभवाभ्यामात्मविषयको निश्चयो यस्य स तथा न संसरेज्जन्मादि नानुभवेत् ॥ १२ ॥

महाभागवतत्वेन कृष्णाख्यपरमतत्त्वस्य नित्यप्राप्तेस्तदुपदेशगौरवेणैव तत्त्वजिज्ञासुरित्यर्थः ॥ १३ ॥

आत्मनोऽयोग्यमिति । भगवता स्वत्यागात् स्वायोग्यतातिशयमननादित्यर्थः । निरुपमस्य भगवतो निक्षेपविशेषत्वेन सर्वानुचितमित्यरुचौ यद्योगि योगश्चित्तवृत्तिनिरोधः योगे सम्प्रज्ञातसमाधौ आत्मा स्वरूपं प्रकटो ज्ञातो भवति यस्य तदुक्तं पतञ्जलिना "तदा द्रष्टुः स्वरूपेऽवस्थान"मिति अत्र प्रकटपदाध्याहारात् पक्षान्तरं योगस्वरूपेति योगोऽसम्प्रज्ञातसमाधिः स्वरूपं निर्विकल्पकं यस्य स तथा तदुक्तं पातञ्जले "विरामप्रत्ययाभ्यासपूर्वः संस्कारशेषोऽन्य" इति विरामप्रत्ययो नेति नेतीत्येतद्वापवादस्तदभ्यासपूर्वः अन्योऽसम्प्रज्ञातसमाधिः सच ब्रह्मात्मक एव अभावस्याधिकरणात्मकत्वादित्यर्थः । योगस्य सम्भवः सुगमत्वोत्पत्तिर्यस्माज्ज्ञातात्तदप्युक्तं तत्रैव "ईश्वरप्रणिधानाद्वे"ति नवारोग्याद्यर्थमिति कालपुरुषप्रतिमद्दी सर्वस्वं त्यक्त्वा स्वप्राणान् रक्षति पुनश्च द्रव्यार्जनं करोति इति तदीयसर्वस्वदानवत्मायं सन्यासरूपस्त्यागः पुनर्ग्रहणे प्रत्यापत्तिः अवस्थापाशरूपः पुनरग्रहणस्वरूपः शिश्नोदरेन्द्रियलोलतेति पुनर्ग्रहणे वान्ताशित्वेन निन्दाश्रवणादित्यर्थः ॥ १४ ॥

त्वयि भक्तैस्तु सुतरां दुष्करः इति मे मतिर्निश्चयः तदुक्तं त्वयैव युञ्जानानामभक्तानां प्राणायामादिभिर्मनः । अक्षीणवासनं राजन् ! दृश्यते पुनरुत्थितमिति ॥ १५ ॥

स इति तच्छुश्रूषवलात् यं प्रतीत्यध्याहृतम् असौ देहे निमग्नत्वात् तत्तु स्वजनादौ स्नेहत्यागादिकं अज्ञस्याऽनायासेनैव ॥ १६ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

इदं जगत् शरीरमात्मनि जीवेन पार्थ विद्धीत्यर्थः ।
आत्मानं जीवं मयि विततं मया पार्थ विद्धीत्यर्थः ॥ ९ ॥

ज्ञानविज्ञानसंयुक्तः साधारणासाधारणाकारविषयज्ञानवान् ॥ १० ॥

दोषेति । उभयातीतः गुणदोषातीतः तदेव विवृणोति । दोषबुद्ध्या निषेधाच्च निवर्त्तते निषेधमनुवर्त्तते एव निषिद्धानाचरणमेव दोषातीतत्वमित्यर्थः । गुणबुद्ध्या विहितं काम्यं न करोति काम्याननुष्ठानमेव गुणातीतत्वमित्यर्थः । काम्यानां त्यागो दुष्कर इत्युत्तरश्लोकाभिधानात् यथार्भकः बालवदनाविष्कृतस्वयाथात्म्यः ॥ ११ ॥

ज्ञानविज्ञाननिश्चयः सांख्यप्रसंख्यानवान् सांख्यदर्शनाद्वैतस्यमाह । पश्यन्मदात्मकमिति ॥ १२—१३ ॥

योगेशं योगनिर्वाहकं योगविन्यासं विन्यस्यतेऽनेनेति विन्यासः योगोपदेष्टा योगात्मन् योगस्याधार योगशास्त्रजनक १४–१५
विरचितात्मनि संसारे इति शेषः ॥ १६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यस्मादज्ञानार्थप्रतीतेर्भ्रमस्य सुखदुःखगर्भसंसृतिहेतुत्वं ततस्तन्निवृत्तये सर्वं ब्रह्मात्मकं पश्येत्याह । तस्मादिति । युक्तेन्द्रियग्रामः नियमितेन्द्रियगणः युक्तचित्तः मय्यावेशितचित्तः इदं जगच्चिदचित्परिणामात्मकं देवमनुष्यादिशरीरजातमात्मनि जीवे ईक्षस्व जीवेन पार्थ पश्य आत्मानं जीवं मय्यधीश्वरे विततं व्याप्तं मया पार्थ पश्येत्यर्थः सर्वेषमीक्षमाणस्य भ्रमस्तन्मूला संसृतिश्च निवर्त्तत इति भावः ॥ ९ ॥

नन्वित आरब्धैर्यमीक्षमाणस्याप्यनादितया विषयप्रवणेन्द्रियस्योत्कर्षवैलक्षण्यस्यान्तरायैर्विहतिः स्यात्तत आह । ज्ञानेति । ज्ञानविज्ञानसंयुक्तः साधारणासाधारणाकारविषयज्ञानवान् पृथिव्यादीनामात्मपर्यन्तानां तत्त्वानां साधर्म्यवैधर्म्याभिज्ञः शरीरिणामात्मभूतः आत्मवत्सर्वसुहृद्भूतः आत्मानुभवेनैव निरतिशयसुखरूपेण सन्तुष्टः विघ्नैर्न विहन्यते नहि निरतिशयानन्दोदधिमग्नः शब्दादिसुखलेशाभासानुभवसदृशैकरूपैरन्तरायैर्विहन्यते । तत्र तस्य रुचेरभावादिति भावः । ज्ञानविज्ञानसंयोगस्त्वनात्मनामनुपादेयत्वार्थः । तच्च शब्दादिविषयेष्वरुच्यर्थं ततश्चानुभवतुष्टिः ॥ १० ॥

नान्तरायैर्विहन्येत इत्यनेनैहिकपारलौकिकशब्दादिवैषयिकसुखतदर्थकर्मरूपान्तरायैर्विहतिर्नास्तीत्युक्ते तर्हि स किं विधिनिषेधौ नानुवर्त्तेत एवेत्यपेक्षायां तस्य विशेषमाह । दोषेति । आत्मानुभवसन्तुष्ट इत्यनुषज्यते तदयमर्थः आत्मानुभवसन्तुष्टः, उभयातीतः वैषयिकसुखदुःखातीतोऽपि दोषबुद्ध्या—

नाविरतो दुश्चरितान्नाशान्तो नासमाहितः ।
नाशान्तमानसो वापि प्रज्ञानेनैनमाप्नुयादिति ॥

निषिद्धाचरणस्यात्मप्राप्तिविरोधित्वरूपदोषबुद्ध्या निषेधाच्च निवर्त्तते किन्तु निषेधमनुवर्त्तत एव तथा गुणबुद्ध्या स्वर्गादिसुखसाधनत्वबुद्ध्या विहितं काम्यं कर्म न करोति निषिद्धाचारः प्रत्यवायजननद्वारा आत्मानुभवाद्यथा प्रच्यावयेत्तथा गुणबुद्ध्या कृतं काम्यं कर्म स्वफलजननद्वारा तस्मात्प्रच्यावयेदिति तदपि न करोतीत्यर्थः एवं भूतोऽपि यथा अर्भकः अर्भको यथा स्वस्वभावमनाविष्कुर्वन्नवतिष्ठते तद्वदयमपि स्वमाहात्म्यमनाविष्कुर्वन्नवतिष्ठेत

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इत्यर्थः । अथामेकहृष्टान्तेन विदुषः कामचारोऽनुज्ञायत इति न मन्तव्यं तस्य "नाविरतो दुश्चरिता" दिति विद्याविरोधित्वश्रवणात्तस्य विद्यायामनन्वयात्तथा चानाविष्कारस्यैवान्वयात् तथाच श्रुतिः बाल्येन तिष्ठासेदिति शारीरकसूत्रं च "अनाविष्कुर्वन्नन्वयात् तस्यायमर्थः बालस्य यत्स्वमाभानाविष्काररूपं कर्म इति तदुपादानो यत्नेन विद्वान् कुतः अन्वयात्तस्यैवान्वयात् बाल्येन तिष्ठासेदित्यस्मिन् विधौ तस्यैव ह्यन्वयसम्भवः इतरेषां तु विद्याविरोधित्वश्रवणात् नाविरतो दुश्चरितादिति आहरशुद्धौ सत्त्वशुद्धिरिति च ॥ ११ ॥

एवम्भूतस्य न पुनः संसृतिरित्याह । सर्वभूतसुहृदिति । सर्वभूतसुहृदित्यनेनात्मभूतः शरीरिणामिति पूर्वोक्तं विवृतं शान्त इत्यनेन वैराग्यवत्त्वमुक्तं तेन नान्तरायैर्विहन्यत इत्यस्यार्थं उक्तः ज्ञानविज्ञाननिश्चय इत्यनेन ज्ञानविज्ञानसंयुत इति प्रत्यभिज्ञापितं पश्यन्मदात्मकं विश्वमित्यनेन जगदात्मानि वीक्षेतेत्यादार्थ उक्तः एवम्भूतः पुनर्न विपद्येत न संसरेत् ॥ १२ ॥

इतीति । हे नृप ! उद्धवः प्रणिपत्य नमस्कृत्य तत्त्वमुपास्योपासकोपासनतत्साधनयथावस्थितस्वरूपं ज्ञातुमिच्छुरच्युतं श्रीकृष्णं प्राह ॥ १३ ॥

तदेवाह । योगेशेत्यादिषड्भिः । तावन्नाहं त्वत्प्रश्नोत्तरदानप्रभुरिति भावोच्चरत्याभिप्रायेण सम्बोधयति योगेशेत्यादि योगेश योगनिर्वाहक ददामि बुद्धियोगं तमिति भगवता गीतत्वादिति भावः योगविन्यास विन्यस्यतेऽनेनेति विन्यासः योगोपदेष्टः योगात्मन् योगस्याधार योगफलरूपेति वा योगसम्भव ! योगशास्त्रजनक योगश्चात्र ब्रह्मोपासनात्मकः त्वं तु सर्वं परित्यज्येत्यादिना भगवति चित्तनिधानात्मकभक्तियोगस्य विषयाभिलाषत्यागादिपूर्वकत्वमुक्तं तदघटमानं मन्वानः तद्गतिं पृच्छति । निःश्रेयसायेति सार्धद्वयेन । निःश्रेयसाय मोक्षाय त्यागः प्रोक्तः स च नारोग्याद्यर्थसर्वस्वदानादिवद्यं त्यागः किन्तु संन्यासलक्षणः अप्रत्यापत्तिरूपः प्रोच्यताम् १४

ततः किमत आह । त्याग इति । हे भूमन् ! कामयन्त इति कामा विषयाः तेषां त्यागो विषयात्माभिर्विषयप्रवणचित्तैर्दुष्करः दुःखेनापि कर्तुमशक्यः सर्वात्मनि त्वयि अभक्तैस्तु सुतरां दुष्कर इति मे मतिः सञ्जातभक्तियोगैस्तु निरतिशयसुखरूपत्वदनुभवनिष्ठत्वात्कथं चित्कामत्यागः सम्भवेदपि त्वदभक्तैस्तु सुतरां दुष्कर इति भावः ॥ १५ ॥

सोऽहमिति । यं प्रति त्याग उपदिष्टः सोऽहं त्वन्मायया विरचिते आत्मनि देहे सानुबन्धे पुत्रकलत्रादिसहिते अहं ममाभिमानमूढमनिरत एव विगाढः मग्नः भवता यन्निगदितं त्वं तु सर्वं परित्यजेत्यादि तद्यथाञ्जसा सुखेन साधयामि तथा हे भगवन् ! भृत्यं मामनुशाधि विविच्य ज्ञापय भृत्यमिति हेतुगर्भम् ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

पक्षधरपतिवन्धके सत्यन्तरायैरकृती ज्ञानप्रकारो विहितः स्यादित्यत्राह । ज्ञानेति । शरीरिणामात्मभूतः "आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुने"तिवचनात् आत्मौपम्येन सर्वाणि भूतानि पश्यन्नित्यर्थः । आत्मनः परमात्मनोऽनुभवेनैव तुष्टः आत्मा मनो यस्य स तथा अनेन "तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्" इतिसूत्रार्थो दर्शित इति ॥ १० ॥

एवंविधज्ञानिनः कर्मकरणप्रकारं श्लोकद्वयेनाह । दोषबुद्ध्येति । यः शान्तः क्रोधरहितः ज्ञानविज्ञानाख्यया वैष्णवसिद्धान्ते निश्चलः पर्वतवत् स्थिरो विश्वं मदात्मकं मम सर्वस्वातन्त्र्यात्मदधीनं पश्यन्नत एव ममाधिष्ठानत्वेन सर्वभूतसुहृत विश्वेषां भूतानां निरुपाधिकप्रीतिकृदत एवोभयातीतः ऐहिकामुष्मिकविषयविरक्तो निषिद्धाचरणाद्दोषः स्यादिति दोषबुद्ध्या तद्दोषानुत्पत्तये निषेधात्निषेधवचनान्न निवर्तते विहितकरणात्सुखादिगुणो भवतीति गुणबुद्ध्या विहितं न करोति किं तर्हि यथार्भकः फलानुसंधानरहितः क्रीडालक्षणं कार्यं करोति तथा किन्तु स्वतन्त्रकर्ता नारायण एव मयि स्थित्वा विहितकरणे प्रेरयति निषिद्धान्निवर्तयति तद्भक्तिरेव मम तत्फलमिति निरूप्य कर्म करोति स पुनर्न विपद्यते संसारलक्षणां विपदं न प्राप्नोतीत्यन्वयः—

> कर्तृत्वमात्मनो यस्माज्ज्ञाननिष्ठो न मन्यते ।
> अतोऽकुर्वन्नपि सदा दोषबुद्ध्या न निन्दति ।
> गुणबुद्ध्या न विहितं किन्त्वीशप्रेरितोऽस्वयम् ।
> स एव च मयि स्थित्वा निन्द्यानिन्द्ये करोत्यजः ।
> न मे दोषो न च गुणः कर्तृत्वाभावतः स्फुटम् ॥
> स्वातन्त्र्यं परवश्च चेशस्य येऽज्ञास्तेषु भवेदपि ।
> इति मत्वा निवर्तेत निन्द्यात्कुर्याद्गुणानिति ॥

इति वाक्यसिद्धोऽयमर्थः ये अज्ञास्तेष्वज्ञेषु दोषो गुणाश्च भवेदित्यर्थः ।

> अनित्या मे गुणा न स्युर्दोषा नैव कथञ्चन ।
> इति मत्वा शुभं कुर्यान्निवर्तेदशुभादपि ॥
> ज्ञानी स्वकर्तृत्वाभावाद्दोषाकर्तृत्वनिश्चयात् ।
> किन्तु पूर्णगुणावेक्ष न तु दोषाद्यनुस्मरेत् ॥
> नवाल्पगुणासिद्ध्यर्थं शास्त्रस्कुलनिश्चयः ।

इत्येतदप्युक्तार्थे मानम् ।

> वैलक्षण्याद्धरेर्भिन्नं स्वतन्त्रत्वात्तदात्मकम् ॥
> इति विश्वं प्रपश्यन्ति ज्ञाननिष्ठा हरेः प्रियाः ।

इत्येतज्ज्ञानार्थिना विश्वमेव द्रष्टव्यमित्याद्यन्नर्थे मानम् ॥११-१३॥

योगस्यय मनिसमादेरोश योगस्य ज्ञानस्य विशेषेण न्यासो देवादिषु येन स तथा तस्य सम्बोधनं योगविन्यासेति योगात्मन् ज्ञानस्वरूप ! योगसम्भव उपायजनक—

> ज्ञानं तु योगशब्दोक्तं युज्यतेऽनेन यत्सुखम् ॥
> कश्चिद्योग उपायः स्यात्कश्चिच्चित्तनिरोधनमिति ।

त्यागं दानाद्व्यावर्तयति संन्यासलक्षण इति सर्वदुःसङ्गपरित्यागलक्षण इत्यर्थः ॥ १४ ॥

ततः किमत्राह । त्याग इति । कामानामयं त्यागः सुतरां त्वदभक्तैर्दुष्करः ॥ १५ ॥

त्वन्मायया सोऽहमुरुबन्धनामा सानुबन्धे विरचितात्मनि निर्मितदेहे ममाहमिति मूढमानिरत एव विगाढ इति यत्त्वमाज्ञप्ता निगदितं यथा साधयामि तथा भृत्यं मां शाधीत्यन्वयः ॥ १६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

ज्ञानेत्यत्रात्मा ब्रह्म ॥ १०—१२ ॥

श्रीमानुद्धवोऽपि महाभागवतत्वात् श्रीभगवतस्तथोपदेशगौरवेण तत्र जिज्ञासुरिव श्रीभगवता ख्यत्यागात्स्वाश्रयणातिशयमनेन तत्राप्यानितिकृष्ट इव सदैन्यमाहेत्याह । इतीत्यादिभिः ॥ १३ ॥

तथैव तस्य वाक्यं दर्शयति । योगेशेति त्रिभिः ॥ १४—१७ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तस्माद्युक्तेन्द्रियग्रामः निरुद्धेन्द्रियवृन्दः निरुद्धचित्तः सन् इदं सुखदुःखमयं जगत् आत्मनि भोक्तरि जीवे भोग्यत्वेन स्थितं पश्य तं च भोक्तारमात्मानं मय्यधीश्वरे परमात्मनि नियन्तरि नियम्यत्वेन स्थितमीक्षस्व ॥ ९ ॥

नन्वेवं युक्तचित्तत्वेन कर्माकरणे देवादयो विघ्नान् करिष्यन्ति तत्राह । ज्ञानेति । ज्ञानं वेदतात्पर्यनिश्चयः विज्ञानं तदर्थानुभवः ताभ्यां सम्यक् युक्तः तनश्चात्मानुभवेनैव तुष्टचित्तः ततश्च शरीरिणां देवादीनामप्यात्मभूतः प्रीतिपात्रीभूतः स्याः तथाच श्रुतिः "आत्मा ह्येषां स भवती"ति ततश्च नैव ते विघ्नान् कुर्य्युरिति भावः ॥ १० ॥

किञ्चोत्पन्नज्ञानोऽपि न यथेष्टाचरणो भवतीत्याह । दोषेति । गुणदोषबुद्ध्यतीतोऽपि ज्ञानी प्राक्तनसंस्कारतो निषिद्धान्निवर्त्तत एव किन्तु न दोषबुद्ध्या विहितञ्च प्रायशः करोति न तु गुणबुद्ध्या यथाऽर्भकः सङ्कल्पविकल्परहितः किञ्चित् करोति कुतश्चिन्निवर्त्तते च तद्वदिति ॥ ११-१२-१३ ॥

हे योगेश ! योगानां कर्मयोगज्ञानयोगभक्तियोगानामीश्वर अतएव योगविन्यास ! अनधिकारिण्यपि मयि योगं ज्ञानं सम्प्रति स्वप्रभावादेव विन्यस्यसीत्यर्थः । योगात्मन् ! हे योगस्वरूप यदि त्वं मया प्राप्तस्तर्हि सर्वे योगाः प्राप्ता एवेति भावः । किञ्च योगाद्भक्तियोगादेव त्वं सम्भवसि भक्तेष्वाविर्भवसीति मह्यं भक्तियोगो विशेषतो देय इति भावः ॥ १४ ॥

विषयात्मभिर्विषयाविष्टचित्तैस्त्वद्भक्तैरपि दुष्करः अभक्तैस्तु सुतराम् ॥ १५ ॥

स च विषयाविष्टचित्तोऽहमेव यतस्त्वन्मायया विरचिते आत्मनि देहे सानुबन्धे पुत्रकलत्रादिसहिते विगाढो निमग्न इति देहस्यान्धकूपत्वमारोपितं तेन तदावेशत्याजनमेव तस्मादुद्धारः प्रथमं कार्यस्तदनन्तरमेव ज्ञानाद्युपदेश इति ध्वनिः तत्तस्मात् ॥ १६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ननु अयुक्तस्य गुणदोषधियः आवश्यकतया कर्मण्येवाधिकारोऽस्तु मया किं कर्त्तव्यं तत्राह । तस्मादिति द्वाभ्याम् । ज्ञानभक्तिहीनः गुणदोषभाक् भवति अतस्तस्यावश्यकतया कर्मण्यधिकारः भवांस्तु मज्ज्ञानभक्तियुक्तः तस्माद्युक्तः युक्तेन्द्रियग्रामः नियमितेन्द्रियसमूहः युक्तचित्तः नियमितेन्द्रियनायकः आत्मनि जगदात्मनि अधीश्वरे चेतनाचेतननियन्तरि मयि विततं जगत् आत्मानं च ईक्षस्व ॥ ९ ॥

एवं ज्ञानविज्ञानसंयुक्तः समानातिशयशून्यसर्वज्ञाकसर्वेश्वरैकान्तिकीयविषयं ज्ञानं चिदचिद्ब्रह्मस्वरूपभेदविषयं विविधं ज्ञानं विज्ञानं ताभ्यां सम्यक् युक्तः शरीरिणाम् आत्मभूतः आत्मवत्प्रेष्ठः अनुभवेन तुष्टः सन्तुष्टः आत्मा मनो यस्य सः अन्तरायैर्विघ्नैर्न विहन्यसे ॥ १० ॥

ननु ज्ञानभक्तिसम्पन्नः सम्यक् विधिनिषेधशास्त्रमवधूयापि किं नेत्याह । दोषबुद्ध्येति । उभयातीतः गुणदोषबुद्धिवर्जितः सम्यक् दोषबुद्ध्या निषेधान्न निवर्त्तते अथोऽभ्यासान्निवर्त्तते एव विहितं च गुणबुद्ध्या न करोति अथोऽभ्यासादेव करोति यथा अर्भकः दोषबुद्ध्या चाण्डालादिभ्यो न निवर्त्तते किन्तु तत्सङ्गानभ्यासान्निवर्त्तते एव बन्धुषु च गुणबुद्ध्या न प्रविशति किन्तु अभ्यासात्तेषु प्रविशत्येव तद्वत् ॥ ११ ॥

पुनर्न विपद्येत जन्ममरणो न भजेत् ॥ १२ ॥

तत्त्वजिज्ञासुः संक्षेपतः श्रुतं भगवत्तत्त्वं विस्तरतः पुनस्तदेव सपरिकरं ज्ञातुमिच्छुः अच्युतं नित्यमूर्तिं श्रीकृष्णं प्राह ॥ १३ ॥

योगानां ज्ञानभक्तिवैराग्याणामीश फलद योगाः विन्यस्यन्ते समर्प्यन्ते यस्मिन् हे योगनिधान ! योगाः आत्मानः प्रियतमाः यस्य हे योगप्रिय योगानां सम्भवो यस्मात् हे योगप्रवर्त्तक योगानां फलदेन निधानेन योगस्नेहिना प्रवर्त्तकेन च भवता मे मम निःश्रेयसाय संन्यासलक्षणः सम्यक् सर्वविसर्जनरूपस्त्यागः त्वं तु सर्वं परित्यज्य इत्यादिना प्रोक्तः यद्यपि मय्यावेश्य मनः सङ्कल्पमित्यनेन भक्तियोगः तस्माद्युक्तेन्द्रियग्राम इत्यादिना ज्ञानयोगश्च प्रोक्तस्तथापि त्यागो दुष्कर इति वक्तुं निःश्रेयसाय मे प्रोक्तस्त्याग इत्युक्तम् ॥ १४ ॥

काम्यन्ते इति कामाः गृहादिपदार्थाः विषयेषु आत्मा मनो येषां तैः ॥ १५ ॥

यं प्रति त्यागाद्युपदिष्टं सोऽहं ममेति अहमिति च मूढमतिः सानुबन्धे देहगेहादिसहिते त्वन्मायया त्वच्छक्त्या प्रकृत्या रचितः आत्मा स्वरूपं यस्य तस्मिन् संसारे गाढो निमग्नः तत्त्यागादिकं भवता निगदितं यथा अञ्जसा सुखेन संसाधयामि तथा भृत्यं मां संशाधि सम्यक् शिक्षय ॥ १६ ॥

---

भाषा टीका ।

तिससे संपूर्ण इन्द्रिय समूह को असद्विषय से रोककर चित्तको एकाग्र करके इस सब जगत् को आत्मा में स्थित आत्मा के अधीन देखो और ज्ञान व्याप्ति से व्याप्त सूक्ष्म आत्मा को अधीश्वर मेरे अधीन देखो ॥ ९ ॥

शास्त्र ज्ञान अनुभव ज्ञान इन दोनों से युक्त होकर सब देहधारियों के सुहृद आत्मा होकर परमात्मा के अनुभव ही से यदि सन्तुष्ट रहोगे तो कोई संसार के विघ्न तुमको नहीं लगेंगे ॥ १० ॥

जो पुरुष गुण दोष की दृष्टि से रहित है सो भी दोष की शंका से निषिद्ध कर्मों से नहीं निवृत्त होता है और न गुण की बुद्धि से विहित कर्मों में प्रवृत्त होता है

सत्यस्य ते स्वदृश आत्मन आत्मनोऽन्यं वक्तारमीश ! विबुधेष्वपि नानुचक्षे ।
सर्वे विमोहितधियस्तव माययेमे ब्रह्मादयस्तनुभृतो बहिरर्थभावाः ॥ १७ ॥
( यावत्पदाब्जरसिकैर्नहि सङ्गता ये तद्युक्तिभिर्विमृशतामपि नापयाति ।
सत्सङ्गमो गृहजुषामपि दम्पतीनां तत्सात्मनां खलु नृणां हतरंहसां स्यात् ॥ ० ॥ )
तस्माद्भवन्तमनवद्यमनन्तपारं सर्वज्ञमीश्वरमकुण्ठविकुण्ठधिष्ण्यम् ।
निर्विण्णधीरहमुह वृजिनाभितप्तो नारायणं नरसखं शरणं प्रपद्ये ॥ १८ ॥

श्रीभगवानुवाच ।

प्रायेण मनुजा लोके लोकतत्त्वविचक्षणाः ।
समुद्धरन्ति ह्यात्मानमात्मनैवाशुभाशयात् ॥ १९ ॥
आत्मनो गुरुरात्मैव पुरुषस्य विशेषतः ।
यत्प्रत्यक्षानुमानाभ्यां श्रेयोऽसावनुविन्दते ॥ २० ॥
पुरुषत्वे च मां धीराः सांख्ययोगविशारदाः ।
आविस्तरां प्रपश्यन्ति सर्वशक्त्युपबृंहितम् ॥ २१ ॥
एकद्वित्रिचतुष्पादो बहुपादस्तथापदः ।
बह्व्यः सन्ति पुरः सृष्टास्तासां मे पौरुषी प्रिया ॥ २२ ॥
अत्र मां मृगयन्त्यद्धा युक्ता हेतुभिरीश्वरम् ।
गृह्यमाणैर्गुणैर्लिङ्गैरग्राह्यमनुमानतः ॥ २३ ॥
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
अवधूतस्य सम्वादं यदोरमिततेजसः ॥ २४ ॥

भाषा टीका ।

किन्तु बालक की नाईं साधन दशा में किये हुवे अभ्यास ही से शुभ कर्म में ही उसकी प्रवृत्ति रहती है ॥ ११ ॥

जो सब प्राणियों का मित्र है शान्त है शास्त्रज्ञान अनुभव ज्ञान से निश्चय करने वाला है वह सब जगत् को हमारे स्वरूप देखता है तो वह फिर संसार को नहीं प्राप्त होता है ॥ १२ ॥

श्री शुक उवाच ।

हे नृप ! भगवान् के ऐसे आज्ञा देने से वे महा भागवत उद्धव जी तत्त्व के जानने की इच्छा वाले भये फिर अच्युत भगवान् को प्रणाम करके प्रश्न करने लगे ॥१३॥

हे योगवाला ! हे योगियों के परम धन ! हे योगियों के प्राण ! हे योग के पैदा करने वाले ! मेरे मोक्ष कल्याण के लिये आपने सन्यासरूपी त्याग का कथन किया है ॥ १४ ॥

हे व्यापक ! हे सर्वान्तर्यामि विषय में मन रखने वाले पुरुषों को कामनाओं का छोड़ना यह त्याग बड़ा कठिन है और जो आप के भक्त नहीं हैं तिन को तो बहुतही कठिन है यह बात मेरे विचार में है ॥ १५ ॥

सो मै तो बड़ा मूर्ख बुद्धिवाला हूं आप की माया से रचित जो देहादिक तिस के मोह में डूबा हूं तब आप के कहे हुवे उस ज्ञान मार्ग को जैसे मैं सहज में समुझ जाऊं और उस का साधन कर सकूं तैसे मुझ भृत्य को आप सिखाइये ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

मया संक्षेपत उक्तं विस्तरतस्त्वन्यान्पृच्छामि चेदत आह । सत्यस्येति । स्वदृशः स्वप्रकाशस्य सत्यस्याऽऽत्मनः आत्मनो मां प्रति वक्तारं ते त्वत्तोऽन्यं नानुचक्षे न पश्यामि स्वदृशः स्वतःसिद्धज्ञानात्त्वत्तोऽन्यमिति वा कुत इत्यत आह । सर्वे इति । बहिरर्थभावा विषयेष्वर्थबुद्धयः ॥ १७ ॥

केचिद्दुःखोत्था भवन्ति केचित्सेविताः फलकाले विनश्यन्ति केचिदज्ञाः केचिच्छ्रद्धयोऽसमर्थाः केचित् स्थानाद्भ्रष्टास्तत्र त्वामनवद्यमित्यादीनि पञ्च विशेषणानि न अन्तः कालतः पारं देशतश्च यस्य तम् कालादिभिरकुण्ठो विकुण्ठलोको धिष्ण्यं

### श्रीधरस्वामिकृतभावार्थदीपिका ।

कथाते यस्य तमुद्दिश्य भगवन् ! हे स्फुटम् निर्वेदे हेतुः वृजिनैर्दुःखैरभितप्तः हृकारगौरवाय वृकारो युक्त इव पठनीयः नन्वनवद्यत्वादीनि कुतो मम तदाह । नारायणामिति । अनुकम्पिताशाहं नरो जीवस्तस्य सखायं भवन्तं शरणं प्रपद्ये ॥ १८ ॥

तदेवमसम्भावनाविपरीतभावनाभ्यामुपदिष्टं तत्त्वमनवगाहमानं प्रति तन्निवृत्तये गुरूपदेशं विनाऽपि स्वान्वयव्यतिरेकाभ्यामेव तत्त्वप्रतिपत्तिर्भवतीति दर्शयितुमाह । प्रायेणेति । लोकतत्त्वस्य विचक्षणाः परीक्षकाः अशुभाशयाद्विषयवासनातः ॥ १९ ॥

तदुपपादयति । आत्मनः पश्वादिशरीरेऽप्यात्मैव हिताहितज्ञाने गुरुः ॥ २० ॥

तत्र प्रत्यक्षं दर्शयति । पुरुषत्वे चेति । तथाच श्रुतिः "पुरुषत्वे चाविस्तरामात्मा स हि प्रज्ञानेन सम्पन्नतमो विज्ञातं वदति विज्ञातं पश्यति वेद श्वस्तनं वेद लोकालोकौ मर्त्येनामृतमीप्सत्येवं सम्पन्नोऽथेतरेषां पशूनामशनापिपासे एवाभिविज्ञान" मिति ॥ २१ ॥

अतः पुरुषत्वं स्तौति । एकेति ॥ २२ ॥

अनुमानमाह । अत्र पौरुष्यां पुरि युक्ता अप्रमत्ता अग्राह्यं ग्राह्येभ्योऽहङ्कारादिभ्यो व्यतिरिक्तं मामद्धा साक्षान्मृगयन्ति मार्गेण प्रकारद्वयमाह । गृह्यमाणैर्बुद्ध्यादिभिर्गुणैर्हेतुभिः जडानां प्रकाशः स्वप्रकाशमेकं विना न घटत इत्यनुपपत्तिमुखेन लक्षकैः तथा तैरेव लिङ्गव्याप्तिमुखेनानुमानेन ईश्वरं प्रवर्तकं मृगयन्ते बुद्ध्यादिकरणानि कर्तृप्रयोज्यानि करणत्वाद्वास्यादिवदिति तदुक्तम् "भगवान्सर्वभूतेषु लक्षितः स्वात्मना हरिः । दृश्यैर्बुद्ध्यादिभिर्द्रष्टा लक्षणैरनुमापकै" रिति नचैवाता आनुमानिक आत्मेति मन्तव्यम् देहादिव्यतिरिक्तत्वंपदार्थशुद्धिमात्रस्यैवानुमानेन विवक्षितत्वात् ॥ २३ ॥

भूयोऽन्वयव्यतिरेकाभ्यामसम्भावनादिनिवृत्तावितिहासमाह—अत्रापीति ॥ २४ ॥ २५ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

सत्यस्येत्यादि । षष्ठीत्रयं कर्मणि आत्मनः परमात्मनः पुनरात्मनो मे मां प्रतीत्यर्थः द्वितीयपक्षे स्वदृश इति पञ्चम्यन्तं ते इत्यस्य विशेषणम् ॥ १७ ॥

तस्माद्ब्रह्मादीनां त्वन्मायामोहितत्वात् तद्व्यावृत्त्यर्थं तेषां दुःशीलादीनां क्रमेण व्युदासार्थं तदाह तत्राह नारायणं नरस्य महत्स्रष्ट्रादिपुरुषसमूहस्यापि परमाश्रयं स्वयं भगवत्त्वात् तथापि नरो जीवस्तस्य सखायं नरमात्रानुग्रहायावतीर्णमित्यर्थः ॥ १८ ॥

उपदिष्टं तत्त्वं तदेवं पूर्वोक्तप्रकारेणासम्भावनाविपरीतभावनाभ्यामनवगाह्यमानमनिश्चिन्वन्तमुद्धवं प्रति तत्रोपदिष्टे त्यागे अशक्यत्वमसम्भावना सोऽहं ममाहमिति विपरीतभावना ताभ्यां तन्निवृत्तये असम्भावनादिनिरासाय हिते कर्मणि प्रवृत्तिरन्वयः अहितान्निवृत्तिर्व्यतिरेकस्ताभ्याम् एवकारस्य व्यावर्त्यमाह गुरूपदेशं विनापीति तत्त्वप्रतिपत्तिः अनुमानार्थापत्तिभ्यां शुद्धात्मज्ञानं प्रायेणेति तेषां विरलत्वं सूचयति लोकतत्त्वस्य जगद्याथार्थ्यस्य ॥ १९ ॥

नत । आत्मनैवोद्धरणम् उपपादयति । युक्त्या साधयति पुरुषस्य मनुष्यस्य तु आत्मा विशेषतो गुरुरिति गुर्वनुसरणप्रवर्तक इत्यर्थः । श्रेयस्तत्त्वज्ञानम् ॥ २० ॥

तत्र । प्रत्यक्षानुमानयोर्मध्ये पुरुषत्वे मनुष्यदेहे आत्मानमाविस्तरामतिप्रकटं पश्यन्ति तत्र च धीराः शास्त्रविचक्षणाः सन्तो मामपि पश्यन्तीत्यर्थः । तथाच मनुष्यदेहे ज्ञानाभिव्यक्ते प्रमाणं श्रुतिः पुरुषत्वे मनुष्यदेहे आत्माविस्तरामतिप्रकटो वर्तते स हि मनुष्यदेहावच्छिन्न आत्मा प्रज्ञानेन प्रकृष्टज्ञानेन सम्पन्नतमः विज्ञातम् अर्थविशिष्टतया विज्ञातं शब्दं वदति विज्ञातं विचारितम् उपादेयतया पश्यति श्वस्तनं श्व इदमेवं कर्तव्यमिति वेद लोकाऽलोकौ प्रकाशाप्रकाशौ स्वर्गनरकौ वेद मर्त्येन मरणधर्मवता देहेन साधनं कृत्वाऽमृतं मोक्षमीप्सतीत्येवं सम्पन्नः ज्ञानेनाढ्यतमः अथेत्यर्थान्तरे इतरेषां तद्व्यतिरिक्तानां पशूनामश्वादीनामशनापिपासे एव तयोरेव ज्ञानं नतु शब्दार्थादिज्ञानमित्यर्थः ॥ २१—२२ ॥

अतो ज्ञानसाधनत्वात् साक्षान्मां मृगयन्ति नतु जीवम् अनुपपत्तिमुखेन अर्थापत्तिप्रमाणेन अनुपपद्यमानार्थदर्शनेन तदुपपादकमर्थान्तरकल्पनमर्थापत्तिः यथा पीनो देवदत्तो दिवा न भुङ्क्ते अत्र यथा दिवाऽभुञ्जानस्य रात्रिभोजनमन्तरा पीनत्वानुपपत्त्या तदुपपादकं रात्रिभोजनं कल्प्यते रात्रौ भुङ्क्ते इति तथा जडानां बुद्ध्यादीनां स्वप्रकाशमेकमात्मानमन्तरा प्रकाशानुपपत्त्या तदुपपादकः स्वप्रकाश आत्मा कल्प्यते बुद्ध्यादीनां प्रकाशकः परमात्मास्तीति लक्षकैः प्रमाणान्तरं दर्शयति । तथेति तैर्बुद्ध्यादिभिरेव करणत्वेन लिङ्गैर्लीनस्य परमात्मनो गमकैर्हेतुभिरित्यर्थः । व्याप्तिमुखेन व्याप्तिव्यापारद्वारा तत्र हेतुसमानाधिकरणात्यन्ताभावाऽप्रतियोगिसाध्यसामानाधिकरण्यं व्याप्तिः करणत्वं हि हेतुस्तत्समानाधिकरणस्तदधिकरणवृत्तिर्हि घटाद्यभावस्तत्प्रतियोगी घटादिरप्रतियोगि तु कर्तृप्रयोज्यत्वलक्षणं साध्यं तेन सहैकाधिकरणवृत्तित्वं करणत्वस्येति लक्षणसमन्वयः अनुमानतः परामर्शात् कर्तृप्रयोज्यत्वव्याप्यकरणत्ववत्ताज्ञानादित्यर्थः । बुद्ध्यादिकरणानीति पक्षः कर्तृप्रयोज्यत्वं साध्यो धर्मः करणत्वादिति हेतुः वास्यादिवदिति दृष्टान्तः यत्र यत्र करणत्वं तत्र तत्र कर्तृप्रयोज्यत्वं यथा वास्यादिरित्यन्वयव्याप्तिः यत्र कर्तृप्रयोज्यत्वं नास्ति न तत्र करणत्वं यथात्मेति व्यतिरेकव्याप्तिस्तथाच स्वतन्त्रः कर्ता परमेश्वर इति सिद्धम् एतावता अनुमानेनान्वेषणमात्रेण वैशेषिकादिसम्मतः केवलानुमानगम्य आत्मेति न मन्तव्यं मन्तव्य इति श्रुत्या देहादिभ्यो व्यतिरिक्तस्य त्वंपदवाच्यस्येश्वराभेदेन या शुद्धिस्तत्साक्षित्वं तावन्मात्रस्यैवानुमानेन विवक्षितत्वादित्यर्थः।उपलक्षणञ्चैतत् शास्त्रानुसारिलिङ्गस्यापि ईश्वरसाधने विहितत्वादिति ॥ २३ ॥

भूयः पुनरप्यन्वयव्यतिरेकाभ्यां विधिनिषेधाभ्यां मूलेऽत्रापीति अन्वयव्यतिरेकाभ्यामसम्भावनादिनिवृत्तावपि ॥ २४ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

बहिरर्थे अनात्मनि भावो भावना प्रतिपत्तिर्येषां ते बहिरर्थभावाः ॥ १७ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

या युक्तिभिरिति । ये त्वत्पदाब्जगुणानुभवरसिकैः न सङ्गताः तेषां युक्तिभिः उपदेशमनपेक्ष्य केवलयुक्तिभिः स्वातन्त्र्येण तन्निरसनोपायप्रतिपादकैः विमृशतामपि या माया नापयाति मुनिनामया तया विमोहितधिय इत्यन्वयः ॥ ० ॥

अकुण्ठेति सर्वाद्धः ॥ १८—१९ ॥

प्रत्यक्षानुमानाभ्यां श्रुतिस्मृतिभ्याम् इह प्रत्यक्षेणानित्यत्वादिदर्शनात् परत्र च तत्र एवानित्यत्वानुमानादित्यर्थः ॥ २० ॥

पुरुषत्वे चेति । मनुष्यजन्मन्येव मामाविस्तरामतीव स्फुटतरं जानन्ति ॥ २१ ॥

मनुष्याणामेव शास्त्राधिकारः अतः पौरुषी तनुः प्रियेत्यर्थः ॥ २२—३४ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ननु मया संग्रहेणोक्तं विस्तरतस्त्वन्येभ्यो जानीहीत्यत आह । सत्यस्येति । हे ईश ! सत्यस्य नित्यमसंकुचितस्वभावस्य तत्र हेतुः स्वदृशः स्वेनैव दृश्यस्य नैव निर्यं प्रत्यक्षितस्वयाथात्म्यस्येत्यर्थः । अनेन बद्धमुक्तजीववैलक्षण्यमुक्तं बद्धो हि सङ्कुचितस्वभावः मुक्तस्तु बद्धदशायामप्रत्यक्षितस्वयाथात्म्यः आत्मनः जीवस्याप्यात्मनः अन्तरात्मनः ते त्वत्तः अन्यं वक्तारमुपदेष्टारं विबुधेष्वपि नानुचक्षे न पश्यामि ते इत्यात्मत्वात्षष्ठी व्यत्ययेन कुत इत्यत आह । सर्व इति । सर्वेऽपीमे ब्रह्मादयो विबुधाः तव मायया मोहितबुद्धयः तनुभृतः कर्माधीनदेहभाजः बाह्यर्थे ऽनात्मनि भावः भावना अहमिति प्रतिपत्तिः येषां ते अज्ञा इत्यर्थः ॥ १७ ॥

मायां विशिनष्टि । येति । ये त्वत्पदाब्जगुणानुभवरसिकैर्भागवतैर्न सङ्गतास्तेषां युक्तिभिरुपदेशमनपेक्ष्य केवलयुक्तिभिर्निरसनोपायैर्विमृशतामपि या माया नापयाति न निवर्तते तया विमोहितधिय इति पूर्वश्लोकेन सम्बन्धः । तर्हि सद्भिः सङ्गमनमित्यत आह । सत्सङ्गम इति । दम्पतीनां मिथुनीभूय वर्तमानानामपीत्यर्थः । गृहजुषां गृहान्सेवमानानां गृहस्थानामपीत्यर्थः । तप्तात्मनां तापत्रयाभितप्तानां हृतरंहसां हृतं रंहो वेगः विषयप्रावण्यरूपो येषान्ते नृणां खलु सत्सङ्गमः स्यात् ननु विषयलालसानामिति भावः ॥ ० ॥

यतो विबुधेष्वपि त्वत्तोऽन्यं वक्तारं नानुचक्षे तस्माद्भवन्तमेवाहं शरणं सदुपदेशेन रक्षितारं प्रपद्येऽध्यवस्यामीत्यर्थः । कथंभूतः वृजिनेन सांसारिकदुःखेनाभितप्तः अत एव निर्विण्णधीः परितप्तबुद्धिः अहो इति निपातो निर्वेदसूचकः कथंभूतमनवद्यं मोहादिरूपदोषरहितमनन्तमपारमनन्तावधिमपरिच्छेद्यस्वरूपस्वभावमित्यर्थः । सर्वज्ञं सर्ववस्तुविषयसाक्षात्कारवन्तमीश्वरं सर्वनियन्तारमकुण्ठाविकुण्ठधिष्ण्यमकुण्ठं वैकुण्ठं धिष्ण्यं स्थानं यस्य तं नारायणं नराणां प्राप्यप्रापकमाधारं च नरस्य सखायम् इमान्यचार्थसूचकानि विशेषणानि तत्राद्येन भ्रमविप्रलम्भमोहादिभ्यस्त्रासः द्वितीयेन ज्ञानादिपरत्वस्य तृतीयेन कल्पान्त्यविषयत्वस्य तुरीयेण तृतीयस्य कर्ममूलत्वस्य पञ्चमेन तुरीयस्य प्रच्युतत्वस्य नारायणं नरसखमित्यनेनाखिलाध्यात्मतत्त्वोपदेशार्थं बदरीं नारायणा-

धारस्त्वमर्जुनादिमुखेन तदुपदेष्टृत्वं च व्यज्यते ततश्च वात्सल्यं फलितम् ॥ १८ ॥

इत्थमापृष्टः प्राह भगवान् । प्रायेणेत्यादिना । यत्तावदुक्तं त्यागोऽयं दुष्कर इत्यादिना भक्तियोगात्पूर्वं विषयत्यागो दुष्कर इति तत्र शनैः शनैर्मनःशिक्षया स सुकर एवेति वक्तुं तत्र निदर्शनतया अवधूतयदुसंवादात्मकमितिहासं प्रस्तोष्यंस्तावल्लोकाः स्वमनसः शिक्षयैव स्वात्मानं तारयन्तीत्याह । प्रायेणेति । लोकतत्त्वविचक्षणाः तत्तद्वस्तुप्रतिनियतगुणविमर्शनकुशलाः आत्मनैव सम्यक्शिक्षितेन मनसैवाशुभाशयाद्विषयवासनातः स्वात्मानं तारयन्ति ॥ १९ ॥

यत एवमतः पुरुषस्यात्मनः स्वस्य विशेषतः गुरुर्हितप्रवर्तकः आत्मैव सम्यक् शिक्षितं मन एव पुरुषस्य विशेषत इत्यनेन मनुष्यजन्मनि मनःशिक्षा विवेकः श्रेयः सम्पत्तिश्च सुलभेति सूचितं तदेवोपपादयति । यदिति । यस्मिन्मनुष्यजन्मनि प्रत्यक्षानुमानाभ्यामिह प्रत्यक्षेणानित्यत्वदर्शनात्परत्र दृष्टान्तेनानित्यत्वानुमानाच्च तत्र वैराग्येण श्रेयोऽनुविन्दते भगवदुपासनया मोक्षाख्यं श्रेयः प्राप्नोतीत्यर्थः । यद्वा प्रत्यक्षानुमानाभ्यां श्रुतिस्मृतिभ्यां श्रेयोऽनुविन्दते पुरुषस्यैव शास्त्राधिकारात् शास्त्रत एव श्रेयस्तत्साधनादीनामवगम्यत्वादिति भावः ॥ २० ॥

एतदेवोपपादयति । पुरुषत्व इति । पुरुषत्वे च मनुष्यजन्मन्येव सांख्ययोगविशारदाः साङ्ख्यं चिदचिदीश्वरतत्त्वत्रयविवेकः योगः परमात्मोपासनात्मकः तयोर्विशारदाः कुशलाः धीराः जितेन्द्रियाः सन्तो मामाविस्तरामतीव स्फुटतरं जानन्ति कथम्भूतं सर्वशक्तिभिः प्रकृतिपुरुषसम्भावितविविधविचित्रसृष्ट्याद्युपयुक्तसर्वज्ञत्वसत्यसंकल्पत्वादिभिरुपबृंहितं पुष्कलितम् ॥ २१ ॥

यतो मां पुरुषत्व एवाविस्तरां प्रपश्यन्त्यत एव मनुष्यशरीरं मम प्रियतममित्याह । एकेति ॥ पादचतुष्कस्य द्व्यन्ते श्रुत्येकादिभिः प्रत्येकं सम्बन्धः पुर इत्यनेन स्वनिवासस्थानमुक्तं सृष्टा इत्यनेन स्वस्य तत्स्रष्टृत्वमनेन कारणत्वं फलितं तासामेकपादादिपुरां मध्ये पौरुषी पुरुषाकारा पूर्मम प्रिया अत्र हेतुराविस्तरां प्रपश्यन्तीत्युक्तम् ॥ २२ ॥

एवं तर्हि लब्धमनुष्यजन्मानः सर्वेऽपि किमप्रपश्यतीत्याशङ्कायां न सर्वे प्रपश्यन्ति प्रत्यक्षादिप्रमाणानैपुण्यादित्याह । अत्रेति । अत्र पौरुष्यां पुरि युक्ताः अप्रमत्ताः केचिदेवेश्वरं सर्वनियन्तारं मामद्धा साक्षाद्धेतुभिर्जगत्कारणत्वादिहेतुभिर्मार्गयन्ति मृगयन्ति विमृश्य पश्यन्तीत्यर्थः । तत्र हेतुत्वेनात्मानं विशिनष्टि । गृह्यमाणैरिति । प्रत्यक्षेण गृह्यमाणैर्गुणैः रूपादिभिर्लिङ्गैरग्राह्यं प्रत्यक्षमूलैर्व्याप्त्यादिभिर्लिङ्गैरग्राह्यमित्येतदेव स्पष्टीकरोति अनुमानत इति । अनुमानेनाग्राह्यमित्यर्थः । रूपादीनां पृथिव्यादौ चाक्षुषत्वादिजनकत्वदर्शनेन तेषां स्वाश्रये चाक्षुषत्वादिजनकत्वस्वाभाव्यनिश्चयात् गुणैरिति अग्रहणसाधनत्वनिर्देशः ॥ २३ ॥

अथेतिहासं प्रस्तौति । अत्रेति । अत्र लोकतत्त्वविचक्षणाः समुद्धरन्ति ह्यात्मानमात्मनैवाशुभाशयादित्यस्मिन्नर्थे पुरातनमितिहासमुदाहरन्ति निदर्शनतया कथयन्तीत्यर्थः । इतिहासं विशिनष्टि । अवधूतस्येति । संवादं तयोः प्रश्नप्रतिवचनात्मकमित्यर्थः ॥ २४ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तव मत्स्वरूपोपदेष्टा भक्तोऽन्यः किं न स्यादत्राह । सत्यस्येति । ते तव स्वरूपस्य वक्तारमात्मनस्त्वत्तोऽन्यं पुरुषं नानुचक्षे न पश्यामि कीदृशस्य सत्यस्य साधुज्ञानादिगुणस्य स्वदृशः स्वयंप्रकाशमानस्य आत्मनः सर्वव्यापिनः मनुष्येष्वभावेऽपि देवेषु स्यादत उक्तं विबुधेष्विति उक्तं विशिनष्टि । सर्वे इति । ब्रह्मा आदिः कारणं येषां रुद्रादीनां ते तथोक्ताः ते विमोहितधियः परोक्षज्ञानवन्तः कुतस्तत्राह । तनुभृत इति । शरीराभिमानित्वादत एव बहिरर्थभावाः भोक्षतदुपयोगिभ्योऽन्यत्रापि कामयुक्ताः अस्य श्लोकस्यार्थः—

अशरीरः सदा विष्णुः पूर्णानन्दस्वतः सदा ॥
इच्छा च क्रीडयैवास्य न फलाय यतो विभोः ।
अतो बाह्यार्थकामोऽपि निष्काम इति कथ्यते ॥
ब्रह्मा निरभिमानित्वाच्छरीर्यप्यशरीरवान् ।
नित्यानन्दोपयोग्यन्यकामस्याभिव्यक्तितः सदा ॥
बहिरर्थविनिर्मुक्तस्तथापि तनुधारणात् ।
अमूढा मूढ इति वदुच्यते च सरस्वती ॥
रुद्राद्यास्तन्वभीमानाद्बहिरर्थयुजस्तथा ।
सर्वेषां ब्रह्मपदवीयोग्यानां पूर्वमेव तु ॥
अभावस्त्वपरोक्षस्य मोहो ज्ञानस्य भण्यते ।
ब्रह्मणस्त्वंशरूपेषु भारत्या ज्ञानवर्जनम् ॥
ब्रह्मांगायाश्रिभावे तु नांशावतरणं क्वचित् ।
शतजन्मसु पूर्वं तु ज्ञानोदय उदीर्यते ॥
अपरोक्षेण पारोक्ष्यात्पूर्णज्ञानं सदैव तु ।
शतजन्मगतायाश्च आपरोक्ष्योऽभिव्यक्तिमेव तु ॥
क्वचित्क्वचित्सरस्वत्या अंशावतरणेष्विति ।

शाकिविवेकग्रन्थाद्धवगत इति अशरीरी "वायुरभ्रं विद्युत्स्तनयित्नुरशरीराणि वा एतानी"ति श्रुतिरत्रमानम्—

श्रुतिभिस्तनितत्वात्तु स्तनयित्नुर्हरिः स्मृतः ॥
अभ्रं भूताभिभरणाच्छ्रीर्वायुर्भरतः स्मृतः ।
विद्युत्तु भारती प्रोक्ता एत एवाशरीरिणः ॥
व्यत्यासेनापि नाम स्यादेतेषां महतां सदा ।
इत्यनेन ब्रह्मयुक्ता एत एवेति ज्ञायते ॥ १७ ॥

यस्माद्भगवतोऽन्यो वक्ता नास्ति तस्मादहं नारायणं शरणं प्रपद्ये मम ज्ञानोपदेशायेति शेषः । भवन्तं पूज्यम् अनवद्यत्वं पूज्यत्वे हेतुः अनवद्यत्वे हेतुः अनन्तपारत्वं तर्हि स्वस्याज्ञानं प्राप्तम् अत उक्तं सर्वज्ञमिति परपरप्रतिबन्धकेन ज्ञानं कांचिदखण्डं स्यादत उक्तम् ईश्वरमिति देशप्रभुवदीश्वरस्यापि स्थानच्युतिः स्यादत्राह अखण्डेति अखण्डमपरिच्छिन्नम् अविकुण्ठं अविनाशि च धिष्ण्यं यस्य स तथा तत्र उभयत्र संबध्यते शरणप्राप्तौ हेतुमाह निर्वेदेति कुतो निर्वेद इत्यत्राह वृजिनेति एवंविशिष्टोऽपि नारायणोऽन्यः किं न स्यादत्राह नरसखमिति एतद्विशेषणं हरेरिति कुत इतीयमाशङ्का—

विष्णोर्वीर्यैरनन्तस्य श्रिभिर्धर्मैरः स्मृतः ।
सेन्द्रैश्चतुर्भिः पार्थस्तु द्वाभ्यां तु बललक्ष्मणाविति
अनेन परिहर्तव्या ॥ १८ ॥

लोकतत्त्वविचक्षणस्योपदेष्टृत्व पुनस्तत्त्वज्ञानप्रश्नः किमर्थं इत्याशङ्क्य परोक्षलोकतत्त्वज्ञानस्य सत्स्नेहमहत्त्वोत्पन्नस्य पुरुषार्थसाधनत्वं न स्यात् प्रत्युतानर्थहेतुत्वं च अपरोक्षज्ञानानुत्पादादित्याशयेनाह । प्रायेणेति । अस्ययमनुयोजना प्रायेण बहुलं लोके ये मनुजा लोकं तत्त्वे च विचक्षणाः सत्स्नेहानिर्मुक्तपरोक्षज्ञाननिपुणास्ते आत्मनैव प्रयत्नेनैवाशुभाशयात् स्वयमपि पश्यन्ती पापफलदुःखबहुलं तमः प्राप्यात्मानं समुद्धरन्ति निर्मूलयन्ति हि यस्मात्तस्मात्स्नेहयुक्ता लोकतत्त्वपरोक्षज्ञानविशारदाः आत्मनैव सात्त्विकमनसैवाविर्भूतापरोक्षज्ञानेनैवाशुभाशयात्पापकारणात्संसारादात्मानं समुद्धरन्त्युन्नयन्ति पन्नगं कूपादिवेति अनेन भगवद्भक्त्युत्पन्नं ज्ञानं पुरुषार्थोपयोगीति ज्ञानसमुद्रमग्नस्यापि मम भगवदपरोक्षज्ञानोत्पत्तिप्रकारो वक्तव्य इति तत्प्रश्नः सार्थक इति यत्नऽर्केऽग्नौ मनस्यात्मा इत्यभिधानादात्मशब्दो यत्नादौ वर्तते इति सिद्धम्—

पारोक्ष्येणैव तत्त्वन्तु लोकं चापि वदन्ति ये ।
तेऽपि सत्स्नेहनिर्मुक्तास्तमो यान्ति विनिश्चयात् ॥
आपरोक्ष्य नच ज्ञानं तेषामुत्पद्यते क्वचित् ।

इति वचनादुक्तोऽर्थभेदः सिद्ध इति सन्तोष्टव्यम् ॥ १९ ॥

आत्मनैवेत्येवकारेण श्रेयःसम्पत्तौ सात्त्विकमनसः प्राधान्यमुक्तं तदेव प्रतिपादयति । आत्मन इति । आत्मनो जीवराशेः श्रेयःसम्पादने गुरुरुपदेष्टात्मैव मन एव "मनसा वा अग्रे सङ्कल्पयत्यथ वाचा व्याहरती"ति श्रुतेः "अत" सातत्यगमन इति धातोः निष्पन्नात्मशब्देन शरीरेव लक्ष्यते तस्यैव गमनसमर्थत्वाच्चापि विशेषतः पुरुषार्थलक्षणश्रेयः सम्पत्तौ पुरुषस्य मनुष्यशरीरं प्राप्तस्य आत्मनः आत्मैव गुरुरिति सम्बध्यते कुत एतदत्राह । यदिति । असौ पुरुषः मानुषशरीरं प्राप्तो जीवः प्रत्यक्षानुमानाभ्यां श्रेयः पुरुषार्थं विन्दते इति यस्मात् इति मनःपूर्वकं चक्षुषा कर्णादिना श्रीशाखिलस्पल्लवणाश्रेयः प्राप्तिदर्शनेन यागादिसाधनसामग्र्या स्वर्गादिश्रेयः प्राप्यत इत्यनुमीयत इति ॥ २० ॥

एतदेव विशदयति । पुरुषत्व इति । पुरुषत्वे मनुष्यशरीरप्राप्तौ तस्यां च सांख्ययोगविशारदा धीराः सर्वशक्त्युपबृंहितं मामाविस्तारं यथायोग्यं विश्वरूपपर्यन्तं प्रपश्यन्ति यद्वा आ सन्तापः आसंसारसन्तापं विविधं तारयतीत्याविस्तारस्तम् आस्तु सन्तापकोपयोरिति यादवः निखाविर्भूतनैर्मल्यं वा ॥ २१ ॥

बहुविधास्तु पूर्षु का पूरत्र श्रेष्ठेति तत्राह । तासामिति ॥ २२ ॥

तत्र कारणमाह । अत्र मामिति । अत्र पुरुषशरीरे मनोयोगयुक्ता योगिनः अतो ग्राह्यमीश्वरं मामद्य प्रत्यक्षीकर्तुं मार्गयन्ति विचार्यज्ञातुं यतन्ते कैर्हेतुभिः सद्युक्तिभिः अनुमानतः त्रिनिर्दोषपञ्चावयवलक्षणवाक्यात्मकैः किंप्रमाणकैश्चक्षुरादिना गृह्यमाणैः रूपादिभिरात्मनः परमात्मनो लिङ्गैर्गमकैर्ज्ञापकैर्जीवस्य दर्शनादिज्ञातत्त्वाभावेन सत्कर्तान्य ईश्वरोऽस्तीत्यनुमीयत इति ॥ २३ ॥

यथाहं सम्भावयामि तथा मां श्रावयेत्युद्धववाक्यमवधारयन्नुक्तमर्थमितिहासेन सम्वेदयति । अत्रेति । अत्र पुरुषशरीरे अहर्निमार्गेण सुलभ इत्येतदिममर्थं अवधूतयदुसम्वादरूपमितिहासं पुरावृत्तमुदाहरन्ति अस्यैव विवरणं पुरातनमिति अमिततेजसः अनन्तबलस्य तेजो बलं प्रभावोऽस्य ज्योतिष्यपि तेजसीति च २४ ॥ २५ ॥

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

नारायणं नरस्य मह्त्तस्रष्टादिपुरुषसमूहस्यापि परमाश्रयं तथापि नरसखं नरमावानुग्रहायावतीर्णम् ॥ १८ ॥

यथा चैवमुद्धवेन प्रार्थितं तथैव श्रीभगवानुवाच। प्रायेणेति ॥ १९ ॥

आत्मनो गुरुरिति। गुर्वनुसरणे प्रवर्त्तक इत्यर्थः ॥२०॥

पुरुषत्वे मानुषप्रायो सत्यामाविस्तरां प्रकटतरस्थानाः सन्तः तत्र च धीराः शास्त्रविचक्षणाः सन्तो मामपि पश्यन्तीत्यर्थः॥२१॥२२

ईश्वरमिति जीवस्यापि तच्च तत्र स्वातन्त्र्याभावात् नचैतावतानुमानिक ईश्वर इति मन्तव्यम् अनुमानस्यास्य शास्त्रानुगतत्वेन विवक्षितत्वात् ॥ २३—२६ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

सख्यस्येति षष्ठी आर्षी सख्याव सर्वकालदेशसत्ताकात् सञ्योहितात्मा ते, स्वसः स्वस्य मम एकत्वात् यतस्तस्मात् आत्मनो मम आत्मनः परमात्मनस्तवसः सकाशादव्ययम् ॥ १७ ॥

तस्मात्त्वन्तमेवाहं प्रपद्ये तत्र कश्चित् सर्वगुणमण्डितोऽपि कुत्रापि भवतीति तद्व्यावृत्त्यर्थमाह। अनवद्यं कश्चित् सेवितः फलकाले विनश्यतीति तद्व्यावृत्त्यर्थमाह अनन्तपारं न विद्यते अन्तः कालतो न च पारं देशतश्च यस्य तं कश्चिदकृतज्ञो भवति नच त्वमित्याह। सर्वज्ञं कश्चिदसमर्थो रक्षणे न च त्वमित्याह। ईश्वरं कश्चिदस्मद्वारसपदो न च त्वमित्याह कालादिभिरकुण्ठो विकुण्ठलोको धिष्ण्यं स्थानं यस्य तम् उ हे भगवन्! निर्वेदे हेतुः वृजिनैर्दुःखैरभितप्तः अत्र इकारगौरवाच्च वृकारो गुरु इव पठनीयः परमसर्वोत्कर्षमाह। नारायणं नारस्य महत्स्रष्ट्रादिपुरुषसमूहस्यापि परमाश्रयं परमं कृपालुत्वमाह। नरसखं नरमात्रानुग्रहायावतीर्णमित्यर्थः ॥ १८ ॥

मो उद्धव! त्वमात्मानं मूढमति मन्यसे अहं त्वादृशं सुधियं विबुधेष्वपि नावलोके लोकेऽप्यत्र त्वत्तो निकृष्टा अपि गुरूपदेशं विनापि स्वीयबुद्धिबलादेव तत्त्वं जानन्तो दृश्यन्ते किं पुनस्त्वं सर्वज्ञशिरोमुकुटमणिर्मादृशगुरूपदिष्टनिखिलतत्त्व इत्याह। प्रायेणेति। लोकतत्त्वविचक्षणाः दृश्यमानलोकभङ्गाभङ्गहेतुविचारप्रवीणाः अशुभाशयात् विषयवासनातः ॥ १९ ॥

एष आत्मा किञ्चित् श्रेयः प्रत्यक्षेण विन्दते किञ्चित् परामृश्यानुमानेनापि ॥ २० ॥

तत्रापि मनुष्यदेहगता एव जीवाः प्रायो मां ज्ञातुं प्रभवन्तीत्याह। पुरुषत्वे चेति। तत्रापि धीराः निर्मत्सरास्तत्रापि सांख्यं ज्ञानं योगो भक्तियोगस्तयोर्विचक्षणाः तथा च श्रुतिः "पुरुषत्वे चाविस्तरामात्मा स हि प्रज्ञानेन सम्पन्नतमो विज्ञातं वदति विज्ञातं पश्यति वेद श्वस्तनं वेद लोकालोकौ मर्त्येनामृतमीप्सत्येवं सम्पन्नोऽथेतरेषां पशूनामशनापिपासे एवाभिज्ञान"मिति ॥ २१ ॥

अतः पुरुषत्वे स्तौति। एकेति ॥ २२ ॥

अत्र पौरुष्यां पुरि स्थिता अत्रा साक्षान्मां कृष्णरूपिणमीश्वरं मार्गयन्ति युक्ता भक्तियोगवन्तः हेतुभिः अवणकीर्त्तनाद्यैः भक्त्याद्येकया ग्राह्य इति मदुक्तेः। ननु बुद्ध्यादिप्रवर्त्तकं त्वामनुमानेन मार्गयन्तो दृश्यन्ते इत्यत आह। गृह्यमाणैर्बुद्ध्यादिभिर्गुणैर्लिङ्गैर्यो मिमुखेन यदनुमानं तस्मादग्राह्यं बुद्ध्यादिकरणानि कर्तृप्रयोज्यानि करणत्वाद्वास्यादिवदित्यनुमानेन स्वतन्त्रः कर्त्ता जीवोऽनुमीयते तथा प्रयोजकः स्वतन्त्रोऽन्तर्यामी च कथंचिदनुमीयते नतु कृष्णः स्वयं भगवानहं मम तर्कातीतत्वान्मद्रूपगुणादीनैश्वर्याणामप्यतर्क्यत्वादिति ॥ २३ ॥

अत्रापि अनुमानगम्यत्वेऽन्तर्यामिस्वरूपस्य मम प्राप्तावपि ॥२४॥ ॥ २५ ॥ २६ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

संक्षेपतो मया त्वं गाढमुपदिष्टं विस्तरतो ज्ञातुमिच्छसि चेत्तर्ह्यन्ये प्रष्टव्याः तत्राह। सख्यस्येति। सख्यस्य अविनाशिनः देहादिविनाशिपदार्थभिन्नस्य आत्मनः जीवात्मनः जातावेकवचनम् सर्वेषामात्मनामात्मनोऽन्तरात्मनः स्वरूपतः अनुपमात् अतः सिद्धज्ञानात् ते त्वत्तः अन्यं त्रिबुधेष्वपि वक्तारं मां प्रत्युपदेष्टारम् नानुचक्षे न पश्यामि तत्र हेतुमाह। सर्वे इति। तव मायया त्रिगुणमय्या शक्त्या मोहितबुद्धयः अतो बहिरर्थाः सपरिकरमोक्षव्यतिरिक्ताः साध्यसाधनरूपाः धनविद्यादयः तेषु भावो वस्तुप्रीतिर्येषां ते तथा, ननु मोक्षोपायकथने ब्रह्मादीनां प्रावण्यं प्रीतिरिति भावः ॥१७॥

यस्मात्त्वत्तोऽन्यं विबुधेष्वपि वक्तारं नानुचक्षे तस्मादेनोः हे भगवन्! भवन्तं शरणं प्रपद्ये कथम्भूतः इ स्फुटं वृजिनैर्दुःखैरभितप्तः अतो निर्विण्णधीः कथंभूतम् अनवद्यं स्वभावनोपास्तसमस्तदोषम् अनन्तपारम् नास्ति कालतः अन्तः देशतः पारं च यस्य तम् सर्वज्ञं सर्वदा सर्वद्रष्टारम् ईश्वरं सर्वनियन्तारम् अकुण्ठः मनावरणः विकुण्ठो धिष्ण्यं स्थानं यस्य तम् नारायणम् "त्वत्तः पुमान्समधिगम्य ययास्य वीर्यं धत्ते महान्त"मिति ब्रह्मणुक्तात् पुरुषावतारादपि पूर्वो मुख्यो नारायणो मिति ब्रह्मणुक्तात् पुरुषावतारादपि पूर्वो मुख्यो नारायणो यस्तम नरसखमिति येनार्जुनं प्रत्युक्तं मत्तः परतरं नान्यत्किंचिदस्ति धनञ्जयेति तेनार्जुनस्य सखायं स्वयं भगवन्तं ब्रह्मनारायणादिभिर्नामभिः प्रसिद्धं परतत्त्वं श्रीकृष्णमित्यर्थः ॥ १८ ॥

आत्मानं स्वात्मानं जीवम् आत्मनैव "सर्वस्य चाहं हृदि सन्निविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च एष ते आत्मान्तर्यामी" त्यादिश्रुतिस्मृतिप्रसिद्धेनान्तर्यामिणैव अनुग्राहकेण अशुभाशयोपलक्षितात्संसारात्समुद्धरन्ति कथं भूताः लोकतत्त्वविचक्षणाः लोकेषु यत्तत्त्वम् "अन्तः प्रविष्टः शास्ता जनाना"मिति श्रुत्युक्तं तत्त्वं तद्विचक्षणाः अन्तरात्मप्रेरित एव जीवः यतस्ततः सात्मावन्ते इत्येवं परीक्षकाः प्रायग्रहणेन शास्त्राचार्योक्ततत्त्वविचक्षणानां ग्रहणं बोध्यम् ॥ १९ ॥

आत्मनो जीवात्मनः स्थिरचरदेहगतस्य आत्मैवान्तरात्मैव गुरुर्हिताहितसूचकः पुरुषस्य तु विशेषतो गुरुः यत् येनान्तरात्मना असौ पुरुषः प्रत्यक्षानुमानाभ्यां देवदत्तः श्रेयस्काम सत्कर्मपरः ममापि सत्कर्मानुष्ठानेन श्रेयो भविष्यति सूर्यः कृतसत्कर्मानुष्ठानः लब्धदेवभावत्वात् न यः कृतसत्कर्मानुष्ठानः न स देवभावं प्राप्तः मनुष्यादिवत् इत्येवं प्रकाराभ्याम् यद्वा निरपेक्षं प्रमाणं प्रत्यक्षं

अवधूतं द्विजं कञ्चिच्चरन्तमकुतोभयम् ।
कविं निरीक्ष्य तरुणं यदुः पप्रच्छ धर्मवित् ॥ २५ ॥
यदुरुवाच ।
कुतो बुद्धिरियं ब्रह्मन्नकर्तुः सुविशारदा ।
यामासाद्य भवाँल्लोकं विद्वांश्चरति बालवत् ॥ २६ ॥
प्रायो धर्मार्थकामेषु विवित्सायां च मानवाः ।
हेतुनैव समीहन्ते आयुषो यशसः श्रियः ॥ २७ ॥
त्वन्तु कल्पः कविर्दक्षः सुभगोऽमृतभाषणः ।
न कर्ता नेहसे किञ्चिज्जडोन्मत्तपिशाचवत् ॥ २८ ॥
जनेषु दह्यमानेषु कामलोभदवाग्निना ।
न तप्यसेऽग्निना मुक्तो गङ्गाऽम्भस्थ इव द्विपः ॥ २९ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

श्रुतिस्तत्सापेक्षं प्रमाणमनुमानं स्मृतिस्ताभ्याम् अयोऽनुविन्दते यथेष्टं भुक्तिलक्षणं मुक्तिलक्षणं वा कल्याणं प्राप्नोति ॥ २० ॥

सांख्ययोगे चिदचिद्ब्रह्मविवेकलक्षणे योगे वेदान्तशास्त्रोक्तः तत्त्वत्रयचिन्तने धीराः सर्वशक्त्युपबृंहितम् आविस्तरां स्फुटतरं मां प्रपश्यन्ति ॥ २१ ॥

अतएव पौरुषी पुः मे प्रिया ॥ २२ ॥

अत्र अस्यां पौरुष्यां तानुमानमिति श्रुतेः अनुमानतः अग्राह्यरूपाम्, "आत्मशब्दात्"इत्यादिसूत्रैः "स आत्मा"इत्यादिश्रुतिभिश्च गृह्यमाणैः हेतुभिः जगत्कारणभूतब्रह्मनिर्णायकगुणैः "यतो वा इमानि भूतानि जायन्ते" इत्यादिश्रुतिप्रोक्तैः जगत्कर्तृत्वादिभिः "सत्यं ज्ञानमनन्त"मित्यादिश्रुतिप्रोक्तैः सत्यत्वादिभिश्च लिङ्गैश्च "हिरण्यश्मश्रु"रित्यादिश्रुतिप्रोक्तैः मृगयन्ति अन्वेषयन्ति ॥ २३ ॥

अत्र मयाऽन्तर्यामिणा अनुगृहीता एव अशुभाशयादात्मानं समुद्धरन्तीत्यादिमर्थे ॥ २४ ॥

---

भाषा टीका ।

आप सत्य स्वरूप हो स्वयं प्रकाश सर्वज्ञ हो सब के आत्मा अन्तर्यामी हो हे ईश्वर! आप को छोड़ कर दूसरे किसी को भी मैं ज्ञान का वक्ता देवतों में भी नहीं देखता हूं ये सब ब्रह्मादिक देहधारी आप की माया से विमोहित बुद्धि वाले होकर बाहिर के विषयों को ही जानने वाले हैं न की ज्ञान के भी वक्ता हैं ॥ १७ ॥

वह माया कैसी है कि जो लोग आप के चरण कमल के भक्तों के सङ्ग नहीं करते हैं उनके बड़े विचारों के करने से भी जो माया नहीं छूटती है उन पुरुषों का सङ्ग करना तो हम सरीके घर के विषयों को सेवन करने वालों को नहीं होसक्ता है ॥ ० ॥

जिस से निर्दोष अनन्त पार वाले सर्वज्ञ ईश्वर सर्वदा अव्याहत वैकुण्ठ धाम वाले नर के सखा नारायण आप के शरण में मैं संसार तापों से तपा हुआ वैराग्यवान् होकर प्राप्त हुआ हूं ॥ १८ ॥

श्रीभगवानुवाच ।

प्रायः कर के लोक में तत्त्व के जानने वाले मनुष्य इस अशुभ संसार में से अपने आपही से आत्मा का उद्धार करते हैं ॥ १९ ॥

विशेष करके अपना गुरु आपही विचार से होता है जिस से कि प्रत्यक्ष और अनुमान से यह पुरुष कल्याण को प्राप्त होजाता है ॥ २० ॥

सांख्ययोग में चतुर जो लोग हैं सो मेरे को मनुष्य रूपही में सब शक्तियों के सहित प्रकाश मान देखते हैं ॥ २१ ॥

एक पाद दो पाद तीन पाद चार पाद बहुत पाद और बिना पाद वाले बहुत से शरीर बनाये हैं परन्तु उन में पुरुष शरीरही मेरे को अत्यन्त प्रिय है ॥ २२ ॥

उत्तम बुद्धि वाले पुरुष युक्तियों से ईश्वर को ढूंढ लेते हैं दृश्य इन्द्रियों से ग्रहण करने योग्य नहीं हैं तो भी अनुमान से जान लेते हैं ॥ २३ ॥

इस विषय में यदु महाराज तथा बड़े तेजस्वी अवधूत दत्तात्रेय जी का जिस में सम्वाद है ऐसी एक पुरातन इतिहास को प्राचीन लोग कहते हैं ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

सुविशारदा अतिनिपुणा सर्वलोकविलक्षणा ॥ २६ ॥

सर्वलोकवैलक्षण्यमेवाऽऽह । प्राय इति । धर्मादिषु विवित्सायाम् आत्मविचारे च मानवाः समीहन्ते प्रवर्तन्ते तत्रापि आयुरादेर्हेतुना कामनयैव ॥ २७ ॥

त्वं तु न कस्यचित्कर्मणः कर्ता भवसि न किञ्चिदीहसे इच्छसि तस्मात्त्वाऽज्ञानेन वाऽनैपुण्येन वा विरूपत्वेन वाऽशा-

त्वं हि नः पृच्छतां ब्रह्मन्नात्मन्यानन्दकारणम् ।
ब्रूहि स्पर्शविहीनस्य भवतः केवलात्मनः ॥ ३० ॥

श्रीभगवानुवाच ।

यदुनैवं महाभागो ब्रह्मण्येन सुमेधसा ।
पृष्टः सभाजितः प्राह प्रश्रयावनतं द्विजः ॥ ३१ ॥

ब्राह्मण उवाच ।

सन्ति मे गुरवो राजन्! बहवो बुद्ध्युपाश्रिताः ।
यतो बुद्धिमुपादाय मुक्तोऽटामीह तान् शृणु ॥ ३२ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

ग्मितया वा औदासीन्यं घटत एव नेत्याह । कल्प इत्यादिना ॥ २८ ॥

महानानन्दश्च तव कुत इति पृच्छति । जनेष्विति ॥ २९ ॥

स्पर्शविहीनस्य विषयभोगरहितस्य अत्र हेतुः केवलात्मनः कलत्रादिशून्यस्य ॥ ३०—३१ ॥

बुद्ध्यैवोपाश्रिताः स्वीकृता न तूपदेशेन अटामि पर्यटामि ॥ ३२ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

द्विजं दृष्ट्वाप्येवं "योगर्द्धिमापुरुमयीं यदुर्देहमाद्या" इति द्वितीयश्लोके: समाधित परमहंसधर्मेषः ॥ २५ ॥

इयं बुद्धिः कुत उपलब्धेति शेषः । यां बुद्धिमासाद्य प्राप्य ॥ २६ ॥

सर्वलोकस्थो बुद्धेर्वैलक्षण्यं वैशिष्ट्यं प्राय इति निष्काम-प्रवृत्तेर्वैरल्यं सूचयति तथापि आत्मविचारप्रवृत्तावपि अत्र विविदिषापदस्य स्वाश्रयसमवायसम्बन्धेन विचारे लक्षणा ॥ २७ ॥

नन्वशक्त्येति कर्मणि पङ्ग्वादीनामशक्त्या सामर्थ्याभावेन तत औदासीन्यं घटते त्वन्तु कल्पः समर्थः एवमन्येऽपि कल्यादि-शब्दा अज्ञानादिप्रतियोगितया व्याख्येयाः ॥ २८—२९ ॥

स्पर्शो विषयेन्द्रियसम्पर्कः तत्र भोगरहितत्वे ॥ ३० ॥

बुद्ध्यैव स्वीकृताः गुरुत्वेन सम्भाविता यतो येभ्यो गुरुभ्यः ॥ ३१ ॥

पृथिवीति युग्मकम् । सुपेथकादित्यत्र सकारलोप आर्षः ॥ ३२-३४ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तं कीदृशं चरन्तमनुपश्यति । अवधूतमिति । अवधूतमज्ञा-नादिभिरसंस्कृतदेहं ननु वर्णाश्रमधर्मत्यागिनं न विद्यते कुत-श्चिद्भयं तापत्रयमेवं यस्य तं तरुणं युवानं कविं विद्वांसम् ॥ २५ ॥

प्रश्नमेवाह । कुत इति पञ्चभिः । हे ब्रह्मन् अकर्तुरिन्द्रियप्रीतये कर्माण्यकुर्वतस्तवेयं सुविशारदाऽतिनिपुणा सर्वलोकविलक्षणा मतिः कुतः कस्माद्धेतोरागता तां विशिनष्टि । यामिति । यां बुद्धि-मासाद्य प्राप्य सम्पाद्येति यावत् विद्वानपि बालवच्चरसि ॥ २६ ॥

बुद्धेः सुविशारदत्वमेवाह । प्राय इति । प्रायशो मानवा धर्मा-दिषु विविदिषायां तत्साधनवेदनेच्छायां निमित्तभूतायां धर्मादि-साधनादिज्ञानार्थं चेत्यर्थः । तथा आयुरादेर्हेतुना आयुराद्यर्थं च समीहन्ते प्रवर्तन्त एव त्वं तु जडादिवत्किञ्चिदपि कर्तुं नेहसे नेच्छसि ॥ २७ ॥

नन्वहमज्ञानानैपुण्यवैरूप्यावाग्मित्वादिभ्यो न कर्तुमीहे इत्यतस्तं विशिनष्टि । कल्प इत्यादिना ॥ २८ ॥

कुतस्तव महानानन्द इत्याह । जनेष्विति । दह्यमानेषु सत्सु त्वं तु न तप्यसे यथा दवाग्निना मुक्तो गङ्गाम्भःस्थो द्विपो गज-स्तद्वत्सुखमवतिष्ठस इत्यर्थः ॥ २९ ॥

पृष्टमपि तूष्णीमवस्थितं प्रतिवक्तुं चोदयति । त्वं हीति । हे ब्रह्मन्! भवतः आत्मनि मनस्यानन्दकारणं कथम्भूतस्य स्पर्शवि-हीनस्य शब्दादिविषयस्पर्शविहीनस्य केवलात्मनः अनुबन्ध-रहितदेहस्यापीति ॥ ३० ॥

इत्थमापृष्टः प्राहावधूत इत्याह भगवान् । यदुनेति । ब्रह्मण्येन ब्रह्मकुलोपकर्त्रा सुमेधसा बुद्धिमता सभाजितः सम्पूजितः पृष्टश्च प्रश्रयेण प्रकृष्टसेवयाऽवनतं नम्रं यदुं प्राह ॥ ३१ ॥

तदेवाह । सन्तीत्यादिना अध्यायसमाप्ति । तावत्कुतो बुद्धिरित्यस्योत्तरमाह । सन्तीति । बुद्ध्युपाश्रिताः शिक्षणीयया बुद्ध्योपाश्रिता उपासिताः मद्बुद्धिशिक्षिता इत्यर्थः । यतः येभ्यो बुद्धिं शिक्षितामिति शेषः । उपादाय स्थिरीकृत्य मुक्तः तापत्रयादिति शेषः । अटामि पर्यटामि तान् बुद्ध्युपाश्रितान् गुरून् शृणु ॥ ३२ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अकर्तुर्निषिद्धाचरणरहितस्य अज्ञानादिप्रवृत्तिशून्यस्य च ॥ २६ ॥

बालवत्संचरणं ज्ञानस्वरूपादनाय । किं न स्यादित्याशङ्क्य सर्व

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

नायं मनुष्यधर्मः किंतु तेषां धर्मादिष्वेव प्रवर्तनम् आत्मतत्त्वविविदिषायां सत्यां चेत्याह । प्राय इति । प्रायो मानवाः परमात्मतत्त्वविविदिषायां सत्यां चेह धर्मादिष्वेव समीहन्ते प्रवर्तन्ते आयुरादिप्राप्तये च हेतुना तत्प्राप्तिसाधनसामग्र्येण ॥ २७ ॥

शक्त्यादिसाधनसामग्र्यभावादेवमवस्थानमिति तत्राह । त्वं त्विति ॥ २८—२९ ॥

स्पर्शविहीनस्य विषयभोगविहीनस्य केवलात्मनः शरीरमात्रपरिग्रहस्य ॥ ३०—३१ ॥

बुद्ध्युपाश्रिताः बुद्ध्या संगृहीताः यतो येभ्यः शिक्षावृत्तिमुपादाय शरीराभिमानयुक्तः तान् गुरून् ॥ ३२—३४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

विविदिषा जिज्ञासामात्रम् ॥ २७—४९ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

धर्मार्थकामेषु विविदिषायां विविदिषायामात्मविचारे आयुरादिहेतुना कामनयैव समीहन्ते प्रवर्तन्ते ॥ २७ ॥

त्वन्तु न कस्यचित्कर्मणः कर्त्ता न च किमपीहसे तत्र कल्प इति न त्वसामर्थ्येनेत्यर्थः । कविरिति नाज्ञानेन । दक्ष इति नरनैपुण्येन सुभग इति ननु कौरूप्येण हेतुना वनितादिकमिच्छसीत्यर्थः । मितभाषणा इति नत्वप्रगल्भतया केनापि सह संभाषमिच्छसीत्यर्थः । किन्त्वेतादृशोऽपि जडादिवत्त्वसि ॥ २८ ॥

किञ्च तरुणस्यापि तव कामादिसन्तापो न कुत इति पृच्छति । जनेष्विति ॥ २९ ॥

मुखमेव वार्त्तां कथयतीति न्यायेन दृश्यमान एतावानानन्दश्च तव कुतः इति पृच्छति । त्वं हीति । स्पर्शो विषयभोगः केवलात्मनः एकाकिनः ॥ ३० ॥

अब्राह्मणेनेति । तत्परिचर्ययैव तद्वशीकरिष्णुनेत्यर्थः । सुमेधसेति स्वबुद्धिप्रीणितस्मनस्केनेति तत्प्रतिवचने हेतुः ॥३१॥

बुद्ध्यैवोपाश्रिताः ननूपदेशेन सांसारिकसन्तापान्मुक्तः ॥ ३२—३३—३४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सुविशारदः सुष्ठु निपुणः बालवत् अभिमानशून्यः योगिनो बाह्यमभिमानशून्यत्वं न तु सदसद्नवेक्षित्वमित्याकरे स्थितम् ॥ २६ ॥

प्रायः बहुधा मानवा धर्मादिषु विविदिषायां धर्मादिबोधेच्छायां सत्यमीहन्ते प्रवर्तन्ते तत्रापि आयुरादिहेतुना निमित्तेन सकाशात्कोचित्तु धर्मादिबोधेच्छायामपि न प्रवर्तन्ते ॥ २७ ॥

कुतस्त्वं त्रिवर्गत्यागीति पृच्छति। त्वमिति। तुशब्दः पूर्वोक्तेभ्यो द्विविधेभ्यो मानवेभ्यो वैलक्षण्यं सूचयति कल्पः समर्थः कविः क्रान्तदर्शी दक्षः निपुणः सुभगः प्रियदर्शनः अमृतभाषणः सत्यहितवक्ता अकर्मण्यैः अशक्यकर्मबोधनैपुण्यबुद्धीनत्वदुर्भाषित्वादिमी रहितोऽपि त्वं जडादिवद्वक्ता पूर्वोक्तत्रिवर्गानुष्ठाता न भवसि न च किंचित्प्रपञ्चैपयिकं व्यापारादीचादिकमीहसे ॥ २८ ॥

कुतस्त्वं कामाद्यस्पृष्ट इति पृच्छति । जनेष्विति ॥ २९ ॥

बाह्यसुखोपकरणत्यागित्वेन त्यक्तबाह्यसुखस्यान्तरानन्दवतो भवतस्तदानन्दकारणं ब्रूहीति पृच्छति । त्वमिति । केवलस्य सङ्कर्माद्येक्यस्य अत एव स्पर्शविहीनस्य ग्राम्यसुखरहितस्यापि आत्मनि हृदि आनन्दकारणं ब्रूहि ॥ ३० ॥

सुमेधसा महत्संगतन्द्धक्तितद्धृदानन्दालोचनादिबुद्धिमता ॥३१॥

बुद्ध्युपाश्रिताः बुद्ध्यैव गुरुत्वेन गृहीताः यतो येभ्यः बुद्धिं विवेकवतीं धिषणामुपादाय प्राप्य मुक्तः अहंममाभिमानविमुक्तः पर्यटामि ॥ ३२—३४ ॥

---

भाषा टीका ।

निर्भय होकर विचरते हुये कोई अवधूत बड़े पंडित दयावान् ऐसे एक ब्राह्मण को देखकर धर्मात्मा यदु महाराजने प्रश्न किया ॥ २५ ॥

यदुरुवाच ।

हे ब्रह्मन् ! कुछ काम नहीं करने वाले आप को यह निपुण बुद्धि कहां से आई है जिस बुद्धि का आश्रय करके आप विद्वान् हो करभी बालक सरीके विचरते हो ॥ २६ ॥

सब मनुष्य तो प्रायः करके धर्म अर्थ काम मोक्ष इनकी जानने कि इच्छा से आयु यश धन इनके निमित्तही से काम करते हैं ॥ २७ ॥

आप तो पंडितहो समर्थहो वक्ता हो चतुर हो सुंदर हो मधुर भाषी हो फिरभी न कुछ करते हो न कुछ चाहते हो विकल पागल पिशाच सरीके रहते हो ॥ २८ ॥

सब मनुष्य तो काम लोभरूपी दावानल से जलते हैं आपको तो कोई ताप नहीं है जैसे कि गंगाजी के बीच में खड़ा हाथी जंगली आग से दुखी नहीं होता है ॥ २९ ॥

हे ब्रह्मन् ! मेरे पूछने से आप अपने आत्मा में आनंदके कारण को कहिये आपतो विषय भोग से रहित एकले हो तब आप को आनंद कैसे होता है ॥ ३० ॥

श्री भगवानुवाच ।

ब्राह्मण सुंदर बुद्धिवाले यदु महाराजने जब बड़े सत्कार पूर्वक पूजन करके ऐसे पूछा और नम्रहो कर आगे खड़े रहे तब महाभागी ब्राह्मण दत्तात्रेयजी कहने लगे ॥ ३१ ॥

ब्राह्मण उवाच ।

हे राजन् ! अपनी बुद्धिसे आश्रय किये हुये हमारे गुरु बहुत हैं जिनसे जिस बुद्धिको लेकर संसार से मुक्तहोकर हम फिरते हैं तिनको श्रवण करो ॥ ३२ ॥

पृथिवी वायुराकाशमापोऽग्निश्चन्द्रमा रविः ।
कपोतोऽजगरः सिन्धुः पतङ्गो मधुकृद्गजः ॥ ३३ ॥
मधुहा हरिणो मीनः पिङ्गला कुररोऽर्भकः ।
कुमारी शरकृत् सर्प ऊर्णनाभिः सुपेशकृत् ॥ ३४ ॥
एते मे गुरवो राजंश्चतुर्विंशतिराश्रिताः ।
शिक्षावृत्तिभिरेतेषामन्वशिक्षमिहात्मनः ॥ ३५ ॥
यतो यदनुशिक्षामि यथा वा नाहुषात्मज ! ।
तत्तथा पुरुषव्याघ्र ! निबोध कथयामि ते ॥ ३६ ॥
भूतैराक्रम्यमाणोऽपि धीरो दैववशानुगैः ।
तद्विद्वान्न चलेन्मार्गादन्वशिक्षं क्षितेर्व्रतम् ॥ ३७ ॥
शश्वत्परार्थसर्वेहः परार्थैकान्तसम्भवः ।
साधुः शिक्षेत भूभृत्तो नगशिष्यः परात्मताम् ॥ ३८ ॥
प्राणवृत्त्यैव सन्तुष्येन्मुनिर्नैवेन्द्रियप्रियैः ।
ज्ञानं यथा न नश्येत नावकीर्येत वाङ्मनः ॥ ३९ ॥
विषयेष्वाविशन् योगी नानाधर्मेषु सर्वतः ।
गुणदोषव्यपेतात्मा न विषज्जेत वायुवत् ॥ ४० ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

गुरूनाह । पृथिवीति ॥ ३३ ॥

शोभनं रूपं कीटस्य करोतीति सुपेशकृत् ॥ ३४ ॥

मे मया श्रिताः तानाह । एतेषां वृत्तिभिरात्मनः शिक्षाः शिक्षणीयानर्थान्हेयोपादेयादीनन्वशिक्षमनुशिक्षितवानस्मि ॥ ३५ ॥

नाहुषो ययातिः ॥ ३६ ॥

क्षितेः क्षमां शिक्षितवानित्याह । भूतैरिति । आक्रम्यमाणः पीड्यमानः तानि भूतानां दैववशवर्तित्वं विद्वान् व्रतं नियमम् ॥ ३७ ॥

पर्वतरूपा वृक्षरूपा च या पृथिवी तस्याः शिक्षितमाह । शश्वदिति । सर्वदा परार्थाः परोपकारार्थाः सर्वा ईहा यस्य सः परार्थ एव एकान्ततः सम्भवो यस्य सः भूभृत्तः पर्वतात् तस्य हि तृणतृणानिर्झरप्रसवक्रियाः परार्था एव यथा तद्वत् तथा नगशिष्यो वृक्षशिष्यः सन् परात्मतां पराधीनात्मताम् वृक्षो यथा परैश्छेदखण्डनपाट्यमानो नयनमप्यनुमन्यते तद्वत् ॥ ३८ ॥

वायुरपि द्विविधः प्राणो बाह्यश्च तत्र प्राणस्य गुरुत्वमाह । प्राणवृत्त्येति । प्राणो ह्याहारादिमात्रेण प्रवर्तते रूपरसादीनिन्द्रियविषयांस्तु नापेक्षते तथा मुनिरपि सन्तुष्येदित्यर्थः । प्राणवृत्तेरकरणे मनोवैकल्येन ज्ञाननाशः स्यादतो देहनिर्वाहः कर्तव्यः गुणाभिप्सायां तु वाङ्मनश्च विक्षिप्येताऽतो नाधिकं लिप्सेदित्याह । ज्ञानमिति । नावकीर्येत न विक्षिप्येत ॥ ३९ ॥

विषयान् सेवमानोऽपि तेष्वनासक्तिं बाह्याद्वायोः शिक्षेदित्याह । विषयेष्विति । नानाधर्मेषु शीतोष्णादिधर्मकेषु नहि वायुर्वने दहने वा सज्जते तद्वत् ॥ ४० ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

एतेषां पृथिव्यादीनां वृत्तिभिर्धर्मैः ॥ ३५ ॥

यतो यस्माद्गुरोः यद्यं हेयमुपादेयं चार्थम् ॥ ३६ ॥

नियमं क्षमारूपं मार्गात् ज्ञानमार्गात् ॥ ३७ ॥

पृथिव्या अवान्तरभेदं गुरुत्वेन स्फुटीकरोति पर्वतरूपेति साधुः यथा शश्वत् परार्थसर्वेहः परार्थैकान्तसम्भवः स्यात्तथा भूभृत्तः शिक्षेत इत्यन्वयः । तस्य भूभृतः वृक्षादिप्रसवक्रियाः परार्था एवेत्युपलक्षणं तस्य सम्भवोऽपि एकान्ततः सर्वथा प्राणिगणवसिद्ध्यादिवासार्थेति ॥ ३८ ॥

वायोरप्यवान्तरभेदमाह । वायुरपीति । तत्र तयोर्द्वयोर्वाय्वोर्मध्ये प्राणस्य वृत्तिराहारमात्रं सैव इन्द्रियप्रियैः रूपादिना चक्षुरादीनां लालनैः प्राणवृत्तेराहारमात्रस्य अतः प्राणवृत्त्यकरणस्य ज्ञाननाशकत्वात् रसासक्तिं विहायौषधिवद्भुक्ता देहनिर्वाहः कर्तव्यः गुणाभिप्सायां मधुरतिक्तादिरसापेक्षायाम् अतो गुणाभिप्साया विक्षेपकत्वात् नाधिकं प्राणवृत्तेरतिरिक्तम् ॥ ३९ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

विषयेषु रसादिषु आवसन् तान् सेवमानोऽपीत्यर्थः । वने पुष्पिते दहनेऽग्नौ ॥ ४० ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

एतेषां शिक्षावृत्तिभिः शिक्षा । अशिक्षं शिक्षां कृतवान् ३५॥३८ इन्द्रियप्रियैः शब्दादिभिः ॥ ३९—४१ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ताभिर्दिशति द्वाभ्याम् । पृथिवीति । मधु करोत्याहारत्वेनेति मधुकृद्भृङ्गः सच मधुकृन्तति आच्छिद्य गृह्णातीति व्युत्पत्तेः मधुमक्षिका च ॥ ३३ ॥

मधुहा मध्वाहर्ता व्याधः कुररः पक्षिविशेषः उत्क्रोशाख्यः चन्द्रिकायनः शरकृदयस्कारः शुपेशमात्मिणोऽसनं रूपं कीटस्य करोतीति तथा भ्रमरविशेषः ॥ ३४ ॥

एते चतुर्विंशतिर्गुरवो मेमया आश्रिताः तदाह एतदिति । शिक्षा इति एतेषां वृत्तिभिरहमात्मनः शिक्षा अनः प्रतिशिक्षा मत्वाशिक्षं पाक पचतीति वन्निर्देशः शिक्षां कृतवानस्मीत्यर्थः ॥ ३५ ॥

तत्र यतो वृत्तेः यच्छिक्षयामनुशिक्षामि अनुशिक्षितवानस्मि पूर्ववन्निर्देशः न चलेत अन्वशिक्षामित्यादिपरोक्षापरोक्षनिर्देशः स्वस्यान्तेतात्वैरयेवं वर्तितव्यमित्यभिप्रायकः हे नाहुषात्मज नाहुषो ययातिः हे पुरुषव्याघ्र ! तच्छिक्षयां तथा ते तुभ्यं कथयामि निबोधावधारय ॥ ३६ ॥

तत्र क्षितिः पर्वतवृक्षादिरूपा समरूपा चेति द्विधा तत्र समरूपायाः क्षितेः क्षमां शिक्षितवानस्मीत्याह । भूतैरिति । दैववशानुगैर्दैवप्रेरितैः भूतैराक्रम्यमाणः पीड्यमानोऽपि धीरः तदाक्रमणप्रयुक्तदुःखसहिष्णुः तद्विद्वान् भूतानां दैववशानुगत्वं जानन् मार्गाच्चलेदित्येव क्षितेर्व्रतं नियतं धर्ममन्वशिक्षं मार्गः क्षितिपक्षे धारणात्मकः पक्षान्तरे ज्ञानमार्गः ॥ ३७ ॥

पर्वतवृक्षरूपायाः क्षितेः शिक्षितमाह । शश्वदिति । शश्वत् सर्वदा परोपकारार्था परार्था ईहा चेष्टा यस्य सः परार्थे एवैकान्ततःसम्भवो यस्य सः भूभृतः पर्वतात्साधु यथा तथा एवं शिक्षितं तस्य हि तृणनिर्झरप्रसवणादिक्रियाः परार्था एव तद्वदित्यर्थः । तथा तरोः शिष्यः सन् परात्मतां पराधीनतां शिक्षेत वृक्षो यथा परैरुत्खाय उत्पाट्य वा नीयमानो न निवारयति नानुमन्यते वा तद्वत् ॥ ३८ ॥

वायुरपि द्विविधः प्राणो बाह्यश्च तत्र प्राणाच्छिक्षणीयमाह । प्राणवृत्त्येति । प्राणो ह्याहारादिमात्रेण वर्तते शब्दादिविषयांस्तु नापेक्षते तथा मुनिरपि प्राणधारणमात्रप्रयुक्तया वृत्त्या आजीविकया वर्तेत नत्विन्द्रियप्रियैः शब्दादिविषयैः तानुभवन्नित्यर्थः । प्राणवृत्त्या वर्तनमपि किमर्थमित्यत आह । ज्ञानमिति । प्राणवृत्त्यकरणे मनोवैक्लव्येन ज्ञाननाशः स्यादतो यथा ज्ञानं न नश्येत मनो वा न विक्षिप्येत तदुपयुक्तया देहनिर्वाहोपयुक्तया वृत्त्या वर्तेतेत्यर्थः ॥ ३९ ॥

विषयान् सेवमानोऽपि तेष्वनासक्तिं बाह्याद्वायोः शिक्षितमित्याह । विषयेष्विति । नानाधर्मेषु प्रियाप्रियतदुभयानुभयात्मकेषु विषयेष्वाविशन्नपि तानिन्द्रियैः स्पृशन्नपीत्यर्थः । गुणदोषाभ्यां प्रियाप्रियाभ्यां व्यपेतः विमुक्तः आत्मा मनो यस्य सः सर्वतः सर्वेषु विषयेषु न विषज्जेत नासक्तो भवेत् न तु वायुश्चन्दने दहने वा विषज्जते तद्वदित्यर्थः । अनासक्तावत्र दृष्टान्तो न तु गुणदोषव्यपेतात्मत्वे चेतनत्वाभावात् तस्य तद्गुणवत्तासत्त्वात् ॥ ४० ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

एतेषां पृथिव्यादीनां शिक्षाकरणवृत्तिभिः ॥ ३५ ॥

यतो यस्मात् पृथिव्यादेर्वृत्तं शिक्षामि शिक्षे तत्तथा निबोध ययातिः पतत्त्रिपदी ॥ ३६ ॥

क्षितेः शिक्षितां वृत्तिमाह । भूतैरिति । तद्वेवं विदन्तीति तद्विदः तेषां वेदज्ञानां मार्गात् तद्विद्वानिति पाठे तस्य दैवस्य वशानुगत्वं जानन् मार्गात् सतामिति शेषः क्षितेर्व्रतमचलत्वम् अत एवाचलेति पृथिव्या नामान्तरम् ॥ ३७ ॥

भूमेः शिक्षितं व्रतान्तरं बुद्धिं चाह । शश्वदिति । सर्वदा परेषां गुरुदेवादिसज्जनानामर्थे आत्मनः सर्वेहां सकलचेष्टा संभवं वृद्धिं च "सज्जनार्थेषु मन्येत ऐहिकीं वृद्धिमात्मनः" इत्यादेरयमेवार्थ इति शिक्षेत नियमेनेति शेषः ॥ ३८ ॥

एवं विज्ञानानि शिक्षमाणस्य मुनेर्वृत्तिप्रकारमाह । प्राणवृत्त्येति ॥ क्षुत्तिरोधकप्राणवृत्त्या शरीरधारणया संतुष्येत् तावत्यैव निर्वहेत् एवकारव्यावर्त्यमाह । नेवेति । तत्रापि ज्ञाननाशकारणानि मनोविक्षेपनिमित्तानि च द्रव्याणि न सेवेतेत्याशयेनाह । ज्ञानमिति ॥ ३९ ॥

वायोः शिक्षिता का बुद्धिरिति तत्राह । विषयेष्विति । विषयेष्वाविशन् विषयाननुभवन् योगधात्मा योगी जीवः गुणदोषव्यपेतः न विषज्जेत संसक्तो न भवेत् गानादिनानाधर्मेषु ॥ ४० ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

एतेषां वृत्तिभिरेवात्मनः शिक्षाः शिक्षणीयानर्थान् अन्वशिक्षम् ॥ ३५ ॥ ३६ ॥

क्षितेः क्षमां शिक्षितवानित्याह । भूतैरिति । दैववशाः पित्रादयस्तेषामनुगैः तद्विद्वान् भूतानां दैववशवर्तित्वं जानन् ॥ ३७ ॥

पर्वतरूपा वृक्षरूपा च या पृथिवी तस्याः शिक्षितं क्रमेणाह । शश्वदिति । परार्था सर्वा ईहा भूधारणनिर्झरोत्क्रमणस्वोत्पन्नरत्नादिप्रदानरूपा चेष्टा यस्य सः भूभृतः शिक्षेत शिक्षया च एवं भूतो भवेदित्यन्वयः । नगस्य वृक्षस्य शिष्यः सन् परात्मतां शिक्षेत परेष्वेवार्पित आत्मा येन तस्य भावस्तत्त्वां तां वृक्षं खलु स्थानात् स्थानान्तरं नीत्वा यदा रोपयति छेदनादिकं च करोति तत्र सोऽनुमन्यत एव ननु

पार्थिवेष्विह देहेषु प्रविष्टस्तद्गुणाश्रयः ।
गुणैर्न युज्यते योगी गन्धैर्वायुरिवाऽऽत्मदृक् ॥ ४१ ॥
अन्तर्हितश्च स्थिरजङ्गमेषु ब्रह्मात्मभावेन समन्वयेन ।
व्याप्त्याऽव्यवच्छेदमसङ्गमात्मनो मुनिर्नभस्त्वं विततस्य भावयेत् ॥ ४२ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

विप्रतिपद्यत इति तथा योगी भवेदिति पर्वतादत्र विशेषो द्रष्टव्यः ॥ ३८ ॥

वायुरपि द्विविधः प्राणो बाह्यश्च तत्र प्राणाच्छिक्षितमाह । प्राणवृत्त्येति । प्राणो ह्याहारादिमात्रेण प्रवर्तते रूपरसादीनिन्द्रियविषयांस्तु नोपदत्त इत्याह । इन्द्रियप्रियैर्विषयैः तथा मुनिरपि भवेदित्यर्थः । प्राणवृत्तेरकरणे मनोवैकल्येन ज्ञाननाशः स्यादतो देहनिर्वाहः कार्यः । किञ्च वाङ्मनो यथा नापकीर्येत न विक्षिप्येतः अनिरुद्धेनासंस्कृतेनाहारेण वाङ्मनः निःसरेत् मनोऽपि विक्षिप्तं स्यादेवमतिक्लिन्नेनान्नेनाप्युभयक्षयः वाङ्मनसयोर्विक्षोभ इति तथा न कुर्यात् ॥ ३९ ॥

विषयान् सेवमानोऽपि तेष्वनासक्तिं बाह्याद्वायोः शिक्षेदित्याह । विषयेष्विति । नानाधर्मेषु लघुत्वगुरुत्वोत्कर्षनिकर्षादिमत्सु न हि वायुर्गहने दहने वा सज्जते तद्वत् ॥ ४० ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

मे मया एते गुरवः आश्रिताः एतेषां वृत्तिभिः आत्मनः शिक्षाः शिक्षणीयाः हेयोपादेयपदार्थविषयाः वृत्तीः अन्वशिक्षमनुशिक्षितवानस्मि ॥ ३५—३६ ॥

पृथिव्याः सकाशात् शिक्षितमुपदिशति धीर इति द्वाभ्याम् । दैवस्य तत्तत्कर्मफलप्रदस्य वशवर्तिभिः यथानुगैर्भूतैर्मनुष्यपश्वादिभिः आक्रम्यमाणः पीड्यमानोऽपि तद्विद्वान् तेषां दैववशवर्तित्वं विद्वान् धीरः सुतरां कृतोपद्रवस्सहनशीलः मुमुक्षुः मार्गात् क्षमारूपात् श्रेयः पथाच्च चलेदिति क्षितेर्भूमेरेतं क्षमारूपं नियमम् अन्वशिक्षमनुशिक्षितवानस्मि ॥ ३७ ॥

साधुः शश्वत्सर्वदा परार्था ईहा यस्य सः परार्थ एव एकान्ततः संभवो यस्य सः एवंभूतः भवेत् तत्रोपायमाह । नगस्य द्रुमस्य शिष्यः अर्थान्नगात् भूभृतः पर्वताच्च परात्मतां पराधीनतां परोपकारित्वमित्यर्थः शिक्षेत ॥ ३८ ॥

वायोः सकाशात् शिक्षितमुपदिशति । प्राणेति त्रिभिः । मुनिर्विषयान्तार्थसननादिशीलः इन्द्रियप्रियैः नैव प्रवर्तेत तु प्राणवृत्त्या रसादिनिरपेक्षाहारादिमात्रेण कालक्षेपकरणेनैव संतुष्येत् यथा वेदान्तश्रवणादिजन्यं ज्ञानं न नश्येत् ज्ञानोपकारकत्वं वाङ्मनसयोः विक्षिप्तं न भवेदित्याह । ज्ञानमित्यादिना ॥ ३९ ॥

प्राणवृत्त्यापि स्वीकृतेषु विषयेषु भोजनाच्छादनेषु नानाधर्मेषु शीतोष्णादिधर्मवत्सु न विषज्जेत आसक्तिं न नैव कुर्यात् ॥ ४० ॥

---

### भाषा टीका ।

पृथिवी वायु आकाश जल अग्नि चन्द्रमा सूर्य कबूतर अजगर समुद्र पतंग भौंरा हाथी मधुहरने वाला हरिण मछली पिंगला वेश्या कुरकु पक्षी बालक कुमारी बाण कर्ता सर्प मकरी कीट ॥ ३३—३४ ॥

हे राजन् ! इतने मेरे आश्रय किये हुये चौवीस गुरु हैं इनकी शिक्षा की वृत्ति से मैंने अपनी आत्मा को शिक्षा दी है ॥ ३५ ॥

हे नहुष पुत्र ! जिनसे जिस प्रकार जो सीखा है हे पुरुष श्रेष्ठ ! तिसको मैं तैसाही कहूंगा आप श्रवण करो ॥ ३६ ॥

प्रारब्ध के वशमे भये मनुष्यों से दुखित किया जाय तो भी धीर पुरुष इस बात को जानता हुआ अपने मार्ग में से नहीं हटे स्थिर रहे इस बात को मैंने पृथिवी से सीखा है ॥ ३७ ॥

साधुको चाहिये कि सदा काल पराये हित की सब चेष्टा करै पर के वास्ते जीवन समझै इस बात को पर्वत रूपी या वृक्ष रूपी पृथिवी का शिष्य होकर साधू सीखै ॥ ३८ ॥

मुनि को प्राण वृत्तिसे संतोष करना चाहिये इंद्रियों की प्रीति नहीं चाहै जैसे की ज्ञान नष्ट न होवै जैसे मन वचन का नाश न होवै तैसा मात्र आहार करै ॥ ३९ ॥

योगी नाना धर्म वाले विषयों मे प्रवृत्त होभी जावे तो भी उनके गुण दोषों से रहित होकर अलग रहै किसी से लिप्त न हो यह बात वायु से सीखी है ॥ ४० ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

यथा वायुर्गन्धादिधर्मयोगेन प्रतीयमानोऽपि वस्तुतो न तद्योगी एवं देहादिधर्मयोगेनाहंप्रत्ययेन प्रतीयमानोऽप्यात्मा न तद्धर्मवानिति संभावितमिति वायोरेव शिक्षितमित्याह । पार्थिवेष्विति । तद्गुणाश्रयो देहधर्मान् बाल्यादीनाश्रित्य वर्तमानो गुणैस्तैरेव ॥ ४१ ॥

आकाशाच्छिक्षितं स्वसंभावनाद्वयमाह । अन्तर्हितश्चेति द्वयेन । अन्तर्हितश्च देहान्तर्गतोऽपि मुनिरात्मनो देहाद्यसंगमत एवाव्यवच्छेदं च भावयेत् कुतः स्थिरजङ्गमेषु समन्वयेन या व्याप्तिस्तया किमन्यासु सूत्रस्येव व्याप्तिः न विततस्य सर्वगतस्य तत्कुतः ब्रह्मात्मभावेन ब्रह्मस्वरूपभावनया "तत्त्वमसी"तिश्रुतेः नन्वेतत्सर्वं कथं

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

न कर्तुमीहसे किञ्चिदिति यदुराजप्रश्नं परिहरन्नेतत्संसारसुखं यथा दुःखशिरस्कत्वेन नाकाङ्क्ष्यं न साध्यं च तथा स्वर्गसुखमित्याह । सुखमिमि । यथैन्द्रियकं सुखं पतनानिश्चयात्स्वर्गे नरके चास्ति तथा श्रोत्रादीन्द्रियविषयशब्दादिसुखमस्त्येवेति यस्तस्माद्बुधो दुःखशिरस्कं सुखं नेच्छेत कुत एव तत्साधने प्रवर्तेत इत्यन्वयः । अनेनैहिकसुखाय न प्रवर्तनीयमिति किं वक्तव्यमित्युक्तं भवति ॥ १ ॥

तर्हि देहयात्रा कथङ्कारं वर्तेत इत्यतोऽजगरादुपात्तबुद्धिमाह । ग्रासमिति । दिष्टेन दैवेन "दैवं दिष्टं भागधेय"मित्यभिधानं "ग्रासस्तु कवलार्थक" इति च विसृष्टं दत्तं यदृच्छयैवापातितम् अतर्कितत्वेनोपपन्नम् अक्रियः यत्नरहितः अजगरो यथा अस्ति तथा मुनिरिति शेषः ॥ २ ॥

ननु यदृच्छयापि ग्रासालाभे किंकुर्यात्तत्राह । शयीतेति । अनुपक्रमः क्रियारम्भरहितः यदि यदृच्छयापि ग्रासो नोपनमेत् तर्हि महाहिरिव बहून्यहानि शयीत तत्र निमित्तं दिष्टभुगिति यदृच्छाप्राप्तभोगत्वादित्यर्थः ॥ ३ ॥

ननु तर्ह्यन्नबलस्य देहस्यान्नाभावे पतनं स्यादित्याशङ्क्य सत्यं बहिर्मुखस्यैतन्न योगारूढस्य तस्य भगवद्गुणगणामृतध्यानलक्षणपानपूर्णबलवद्देहत्वादिति भावेनाह । ओज इति । करचरणादीन्द्रियशक्तिमानपि योगारूढः शरीरयात्रार्थं नेहेत न चेष्टेत कीदृशः शयानः सर्वव्यापारशून्यः तर्हि निद्रालुः स्यादत्राह । वीतनिद्र इति । निद्रानिरासव्यापारसद्भावादित्याह । बिभ्रदिति । अत्र भरणेन ध्यानं लक्षयति ओजः सहोबलात्मना अक्षयं युक्तं देहं बिभ्रत् ध्यायन् अन्यत्र तादृशादृष्टनिर्मितम् ईशशक्तेरचिन्त्यत्वादित्यर्थः । अत एवाकर्मकं निश्चेष्टम् उद्देश्यरहितं वा ॥ ४ ॥

समुद्राच्छिक्षितां मतिमाह । मुनिरिति । अनन्तपारः अन्तपाररहितबुद्धिः अनन्तेन पारः पूर्तिस्तृप्तिलक्षणा यस्य स तथेति वा "पारं तीरान्तरं प्रोक्तं पारः पूर्तिस्तथा पुमा" नित्यभिधानम् अन्यत्रानिश्चिततीरान्तरः स्तिमितोदो निश्चलजलः निर्विकल्पकर्मा वा ॥ ५ ॥

समृद्धकामः समृद्धाभीष्टार्थः नोत्सर्पेत उत्सिक्तो न भवेत् हीनो वा द्रव्यैरिति शेषः न शुष्येत् यथा प्रावृषि समुद्रः समृद्धजलाभिः ग्रीष्मे शुष्कजलाभिः सरिद्भिः ॥ ६ ॥

शलभाच्छिक्षितां बुद्धिमाह । दृष्ट्वेति । देवस्य मायां मोहकशक्तिं भावैः शृङ्गारचेष्टाभिः अत्र—

> महतां वनिताकामः पतत्यन्धे तमस्यलम् ।
> अन्यत्र निरयं याति दुःखवान्स्याद्विपर्यय

इति वचनात् अधः पाते विशेषोऽस्तीति ज्ञातव्यं मायाशब्दस्येन्द्रजालार्थमन्तरेण मोहकारणत्वार्थः कथमित्यतस्त्वाह—

> मोहकारणभूता तु मायेत्याहुर्मनीषिणः ॥
> अविद्यमानं मेत्युक्तं तज्ज्ञापयति यत्स्वयम् ।

"कुत्र चिज्ज्ञानरूपं सल्लाभरूपं च भण्यते। मयं प्राचुर्यमुद्दिष्टं मायाख्यात्प्रचुरत्वपी" त्यनेन परिहर्तव्यं तस्माद्या विवक्षिता तामनुसृत्यार्थो वक्तव्य इति ज्ञायते ननु तर्हि मायाशब्दस्यानेकार्थत्वाच्चित्स्वात्कुत्र मुख्यार्थ इतीयं शङ्का—

> स्वतन्त्रं परमार्थाख्यं स्वतन्त्रैका हरेर्मतिः ॥
> सैव माया समुद्दिष्टा मुख्यतस्तत्स्वरूपिका ।

इत्यनेन परिहर्तव्या । परमार्थनिष्ठस्य स्वतन्त्रशब्दस्य गुणनिष्ठत्वं कथमित्येतत् "मतिमन्मतिभेदोऽपि न विष्णोः क्वचिदिष्यते" इत्यनेन परिहृतम् मायायाः ईशेच्छावाचित्वे जगतस्तन्मयत्वं कथमिति इदमपि—

> पारमार्थ्येन नास्त्येव तदन्यत्तद्वशं यतः ॥
> अनाद्यनन्तकालेऽपि विद्यमानमपि ध्रुवम् ।
> अतो मायामयं प्राहुः सर्वं तद्वशगं यतः ॥

इति अमुना परिहृतं किं च विश्वस्य पराधीनत्वादसदादिशब्दवाच्यत्वं न त्वविद्यमानत्वात् तर्हि जगन्नाश्यत्वेनेति कथम् अस्वतन्त्रत्वादित्युत्तरं प्रवाहरूपेण नित्यत्वात्सदातनत्वं युक्तं श्रौतत्वाद्विश्वस्य मिथ्यात्वं किं न स्यादिति चेन्न हरेरिच्छाधीनत्वान्मायामात्रत्वात् तर्हि श्रुतेः का गतिरिति चेन्न एकस्यैव परमार्थत्वादिति सर्वं प्रमाणसिद्धम्—

> स्वाधीनं सदिति प्रोक्तं पराधीनमसत्स्मृतम् ॥
> अविद्यमानमेतस्माज्जगदाहुर्विपश्चितः ।
> अनाद्यनन्तकालेषु विद्यमानमपि ध्रुवम् ॥
> अस्वातन्त्र्यात्तु नास्त्येवेत्येवं वाच्यं जगत्सदा ।
> सदा वृत्तेर्विद्यमानमिति ब्रूयाद्यदि क्वचित् ॥
> तथापि नाशवत्त्वीदं प्रवाहाख्यस्य नित्यता ॥
> अतो नित्यमित्याहुः प्रपञ्चो ह्यस्ति यद्यपि ।
> विष्णोरिच्छावशत्वाच्च मायामात्रमिति स्फुटम् ॥
> परमार्थं चैकमेव स्वातन्त्र्याद्विष्णुमव्ययम् ।
> यद्विकल्पयतीदं यः स एव विनिवर्तयेत् ॥
> विष्णुस्तस्मात्तद्वशत्वान्नास्तीति द्वैतमुच्यते ।
> स्वातन्त्र्येण हरौ ज्ञाते पराधीनत्वनिश्चयात् ॥
> इत्याहुरुपदेष्टार आचार्यास्तत्त्ववेदिनः ।
> यथैव राजनि ज्ञाते नान्योऽस्तीति स्फुटं वचः ॥
> स्वातन्त्र्यात्पारतन्त्र्याच्च तद्भृत्यादिषु सत्स्वपि ।
> यथैकच्छत्रयांश्चैव एकवीर इतीव वा ॥
> तथैव सर्वप्राधान्यादद्वितीयो हरिः स्मृतः ।
> एवं मुक्ता विजानन्ति सायुज्ये प्रापिता विभोः ॥
> अनन्तकालं पश्यन्तो जगदेतच्चराचरम् ।
> तस्यैकस्य ह्यविज्ञानात्केवलभ्रान्तिरूपकम् ॥
> जगदुक्त्वा तमो यान्ति त्वीशितव्येशयापतः ॥

इत्यनेन प्रपञ्चो यदि विद्येतेत्यादिश्रुतिरपि विवृता सत्यत्वार्थे—

> पुत्रा मे यदि विद्यन्ते मरिष्यन्त्येव ते ध्रुवम् ।
> यदि राज्यं करोत्येष नश्यत्येतदसंशयमिति ॥

धृतराष्ट्रस्य वचनाद्यदिशब्दस्य विपर्ययपर्यवसाने वस्तुत्वार्थः प्रतीयते तथापि—

> यदिशब्दस्त्ववस्तुत्वे अज्ञातत्वे च संशये ।
> अवस्तुशब्दश्चाशक्ये ह्यल्पशक्तौ च कीर्त्यते

इत्यनेन यदिशब्दस्यावस्तुत्वार्थोऽपि ज्ञायते ॥ ७ ॥

प्रागुक्तश्लोकार्थमेव विवृणोति । योषिदिति । मायारचितेषु भगवदिच्छारचितेषु भोगसाधनेषु तल्पादिषु योषिज्जनेषूपभोगबुद्ध्या

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

विषयभोगसाधनबुद्ध्या प्रलोभितात्मा विवशमनाः शलभवन्नश्यतीत्यन्वयः ॥ ८ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

॥ १—४ ॥

प्रसन्नगम्भीरः अर्णवपक्षे जलप्रसन्नतावपि सत्यां दृष्ट्याद्यप्रवेश्यः मुनिपक्षे सर्वत्र चित्तप्रसन्नतावपि निजरहस्योपास्याप्रकाशकः अतएवोभयोरपि दुर्विगाह्यः अनिर्णेयान्तस्तत्त्वः एवं क्रमेण तत्तत्पक्षे दुरत्ययः आक्रान्तुमशक्यः जलादिमयत्वात् अभिभवितुमशक्यः तेजस्वित्वात् अनन्तपारः उभयथापरिच्छेद्यस्वरूपाविर्भावात् अक्षोभ्यः निश्चलमहाजलत्वात्साधारणोऽप्यालयितुमशक्यः तथा रागाद्यभावाद्विषयलाभालाभादिभिरिति ॥ ५—६ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अष्टमेऽजगराद्याश्च गुरवो नव वर्णिताः ।
पिङ्गलायाः कथा यत्र नैराश्यसुखदोदिता ॥

स्वदेहनिर्वाहार्थं वृथा नातिचेष्टितव्यमित्यत्राजगर एव गुरुरित्याह । सुखमिति चतुर्भिः । यथा दुःखमवाञ्छितमपि स्यात् तथा सुखमपि भवेदेवेति किं तदिच्छयेत्यर्थः ॥ १ ॥

आजगरः अजगरवृत्तिः अक्रियः अल्पचेष्टः ॥ २—३ ॥

वीतनिद्र इति स्वार्थे भगवच्चिन्तनादौ तु सर्वदा सावधानः भवेत् यस्मात् देहनिर्वाहार्थोद्यमेन समयो मा वृथा यात्वित्येतदर्थमेवाजगरी वृत्तिराश्रिता न पुनः सैव स्वार्थो श्रेय इति भावः ॥ ४ ॥

समुद्राच्छिक्षितमाह । मुनिरिति द्वाभ्याम् । गम्भीरोऽपि पुरुषः सुखमर्थज्ञिया केनाप्यवगताभिप्रायो भवेत्तस्मात् योगी दुर्विगाह्यः सर्वैर्वाप्यज्ञेयमनोऽन्तस्तत्त्वः स्यात् दुरत्ययः तेजस्वित्वादनतिक्रम्यः अनन्तपारः कदाप्यन्यस्यास्पदसमयेऽपि कोप्यलिङ्गदेशेऽपि वैवश्यराहित्यादेवानुद्दीर्णात्तस्तत्त्वः स्यादित्यर्थः । विजितकामादित्वादक्षोभ्यः ॥ ५ ॥

किञ्च वर्षासु सरिद्भिः समृद्धोऽपि सागरो यथा नोत्सर्पेत् ग्रीष्मे तद्विहीनोऽपि न शुष्येत् तथा समृद्धकामः सम्पूर्णभोगोऽपि मुनिर्न कामेन हृष्येत् हीनोऽपि न दैन्येन शोचेत् यतो नारायणपरस्तेनमाधुर्यानुभवलाभालाभाभ्यामेवास्य हर्षशोकौ स्याताम् ॥ ६ ॥

रूपासक्तिर्नाशहेतुरिति पतङ्गाच्छिक्षितमाह । दृष्ट्वेति द्वाभ्याम् ॥ ७ ॥

यद्यपि स्त्रीहिरण्यादिषु मध्ये स्त्रियां पञ्चापि विषयाः सन्ति तदपि योषिदादिषु प्रथमं दृष्टिरेव पततीति रूपस्यैव प्राधान्यम् ॥ ८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अष्टमेऽध्याये नवभ्योऽजगरादिभ्यः शिक्षितमाहावधूतः तत्र तावदजगराच्छिक्षितमाह । सुखमिति चतुर्भिः । यथा दुःखमनिच्छितमेव भवति तथा सर्वेन्द्रियकं सुखं तत्स्वर्गे नरके च भवत्येव तस्मात्तु यत्नमेच्छेत् ॥ १ ॥

आजगरः अजगरवृत्तिः ॥ २ ॥

अनुपक्रमः जीविकारम्भरहितः दिष्टभुक् दैवविपाकभुक् ॥ ३ ॥

ओज इन्द्रियाणां सहो मनसो बलं देहस्य सामर्थ्यम् तद्युक्तमपि देहमकर्मकं जीविकार्थयत्नरहितं बिभ्रत् भोगापेक्षया शयान एव भवेत् मोक्षापेक्षया तु वीतनिद्र एव भवेत् किंबहुना इन्द्रियवानपि नेहेत इन्द्रियार्थेष्विति शेषः ॥ ४ ॥

समुद्राच्छिक्षितमाह । मुनिरिति द्वाभ्याम् । प्रसन्नश्चासौ गम्भीरश्च दुर्विगाह्यः दुरूहाभिप्रायः दुरत्ययः अनतिक्रमणीयः अनन्तपारः अनन्तं कालमसंख्यं सोमादिकं वा यस्तेषु विश्वं वा प्रलये पिबतीत्यनन्तपाः विष्णुस्तं रातीत्यनन्तपारः अक्षोभ्यः अविकार्यः स्तिमितोदः निश्चलजलः अर्णव इव मुनिर्भवेत् ॥ ५ ॥

यथा सागरः वर्षासु सरिद्भिः नोत्सर्पेत् अन्यत्र तद्विहीनोऽपि न शुष्येत् तथा मुनिरपि समृद्धकामस्तद्विहीनो वा न हृष्येच्च शोचेत् हेतुगर्भं विशेषणं नारायणपर इति ॥ ६ ॥

पतङ्गाच्छिक्षितमाह । दृष्ट्वेति द्वाभ्याम् । तद्भावैः स्त्रीभावैः ॥ ७ ॥ ८ ॥

भाषा टीका ।

ब्राह्मण उवाच ।

हे राजन् ! इन्द्रियों का सुख तो स्वर्ग में तथा नरक में बरोबर है जैसे कि प्राणियों को विना चाहते दुःख आजाता है तैसे ही सुख भी आपही आजावैगा तिससे ज्ञानवान् पुरुष उस की चाहना से यत्न न करै ॥ १ ॥

विरक्त पुरुष अजगर की क्रिया को धारण करै भोजन ग्रास चाहै मीठा मिलै चाहै फीका मिल चाहै बहुत मिलै चाहै थोडा मिलै दैव इच्छा से जो मिल जाय तिसी को भोजन कर लेवै ॥ २ ॥

यदि कभी ग्रास न मिलै तौ भी विना आहारसे रहकर भी कोई उद्यम न करै प्रारब्ध का भोग समझकर अजगर सरीका बहुत दिन तक भूखाही सोया रहै ॥ ३ ॥

उसकी सब इंद्रिय समर्थ होवैं तो भी मन इंद्रिय शरीर के बल के सहित देह को धारण करके भी निद्रा से रहित होकर सोया रहै ॥ ४ ॥

मुनि को चाहिये कि प्रसन्न चित्त रहै गंभीर रहै अथाह बुद्धि रखै निर्भय रहै कोई उसके बुद्धि का पार न पावै किसी बात से क्षुभित न होवै निश्चल होकर रहै जैसे कि समुद्र होता है ये सब गुण समुद्र में भी होते हैं ॥ ५ ॥

मुनि को चाहै सब मनोरथ मिलजावै चाहे नहीं कुछ मिलै तौ भी नारायण में तत्पर रहने से थिर रहै जैसे कि समुद्र चौमासे में नदियों के मिलने से तथा अन्य दिनमें न मिलने से न उछलता है न सूखता है तैसा समान बना रहै ॥ ६ ॥

देवकी माया रूपी स्त्रि को देखकर अजितेंद्रिय पुरुष उसके भावों से लोभित होकर अंधेरे में गिर पडता है जैसे कि पतंगा अग्नि में गिर पडता है ॥ ७ ॥

स्तोकं स्तोकं ग्रसेद्ग्रासं देहो वर्तेत यावता ।
गृहानहिंसन्नातिष्ठेद्वृत्तिं माधुकरीं मुनिः ॥ ९ ॥
अणुभ्यश्च महद्भ्यश्च शास्त्रेभ्यः कुशलो नरः ।
सर्वतः सारमादद्यात्पुष्पेभ्य इव षट्पदः ॥ १० ॥
सायन्तनं श्वस्तनं वा न संगृह्णीत भिक्षितम् ।
पाणिपात्रोदरामत्रो मक्षिकेव न सङ्ग्रही ॥ ११ ॥
सायन्तनं श्वस्तनं वा न सङ्गृह्णीत भिक्षुकः ।
मक्षिका इव सङ्गृह्णन् सह तेन विनश्यति ॥ १२ ॥
पदापि युवतीं भिक्षुर्न स्पृशेद्दारवीमपि ।
स्पृशन् करीव बध्येत करिण्या अङ्गसङ्गतः ॥ १३ ॥
नाधिगच्छेत्स्त्रियं प्राज्ञः कर्हिचिन्मृत्युमात्मनः ।
बलाधिकैः स हन्येत गजैरन्यैर्गजो यथा ॥ १४ ॥
न देयं नोपभोग्यं च लुब्धैर्यद्दुःखसञ्चितम् ।
भुङ्क्ते तदपि तच्चान्यो मधुहेवार्थविन्मधु ॥ १५ ॥
सुदुःखोपार्जितैर्वित्तैराशासानां गृहाशिषः ।
मधु हेवाग्रतो भुङ्क्ते यतिर्वै गृहमेधिनाम् ॥ १६ ॥

भाषा टीका ।

मूढ पुरुष ? स्त्रिजन सुवर्ण सुंदर वस्त्रादि द्रव्यों जोकि दैव की माया से रचित हैं तिन को देखने से उपभोग की बुद्धि से ज्ञान नष्ट होजाते से पतंग सरीका फसकर नष्ट होजाता है ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

मधुकराच्छिक्षितमाह । स्तोकमिति । गृहान्गृहस्थानहिंसन्नपीडयन् भ्रमरभावः यथा मधुकरो विशिष्टगन्धलोभेनैकस्मिन्नेव पद्मे अस्तमयसमये मुकुलिते तस्मिन्बध्यते एवं मुनिरपि गुणलोभेनैकमेव गृहमाश्रितस्तन्मोहेन बध्यत इति ॥ ९ ॥

किञ्च अणुभ्यश्चेति ॥ १० ॥

द्विविधो मधुकृत् मधु कृन्तति पुष्पाच्छित्त्वा गृह्णातीति मधुकृद्भ्रमरः मधुकरोत्याहारत्वेन स्वरूपेण चेति मधुमक्षिका च तत्र प्रथमाच्छिक्षितमुक्तं द्वितीयाच्छिक्षितमाह । सायमिदं भोक्ष्यामि श्व इदं भोक्ष्यामीति भिक्षितमन्नादि न संगृह्णीत किन्तु पाणिपात्रस्तन्मात्रग्राही यद्वा उदरमेवामत्रं पात्रं यस्य सः एकभिक्षायामुदरमात्रग्राही भवेत् संग्रही तु मक्षिकेव न भवति न जीवतीत्यर्थः ॥ ११ ॥

एतद्विवृणोति पुनः । सायन्तनमिति ॥ १२ ॥

स्पर्शासक्तिर्नाशहेतुरिति गजाच्छिक्षितमित्याह । पदाऽपीति । पादेनापि दारवीं दारुमयीमपि गजो हि करिणीं प्रदर्श्य निखाततृणापिहितगर्ते निपात्य बध्यते ॥ १३ ॥

किञ्च नाधिगच्छेदिति नोपगच्छेत् ॥ १४ ॥

त्यागभोगविहीनो धनसञ्चयः परगामी भवतीत्यत्र मधुहा गुरुरित्याह । न देयमिति । तदन्यो यथा भुङ्क्ते तदप्यन्यस्तथाऽन्यः मधुहा मक्षिकाभिः सञ्चितं मधु यथा भुङ्क्ते तद्वत् ननु सुगुप्तं धनं कथमन्यो ज्ञास्यति हरिष्यति चेति तत्राऽऽह । अर्थवित् । लिङ्गैरर्थं तदुपायं च वेत्तीत्यर्थवित् यथा मधुहा तरुकोटरादिगतं मधु वेत्ति हरति च ॥ १५ ॥

श्रमं विनाऽपि भोगः सम्भवतीत्यत्रापि स एव गुरुरित्याह । सुदुःखेति । आशासानानामिति वक्तव्ये वर्णलोप आर्षः—

" यतिश्च ब्रह्मचारी च पक्वान्नस्वामिनावुभौ ।
तयोरन्नमदत्त्वा तु भुक्त्वा चान्द्रायणं चरेदि"ति ॥
गृहिणामावश्यकत्वेन दानविधानात् ॥ १६ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

यावता ग्रासेन ननु यद्यकत्रैव विशिष्टग्रासोपलब्धिः शक्या तर्हि स्तोकग्रासे को नियम इत्याशङ्क्य भावार्थमाह । अयमिति । तस्मिन् पद्मे मुकुलिते मुद्रिते सति तत्मोहेन गृहासक्त्या ॥ ९ ॥

किञ्च तस्मादेव मधुकरात् सारग्रहणं शिक्षितमित्याहेत्यर्थः ॥ १० ॥

तत्र द्विविधमधुकृतोर्मध्ये प्रथमाद्भ्रमरात् द्वितीयात् मक्षिकाविशेषात् यथा सङ्ग्रहकर्त्री मक्षिका न जीवति तद्वत् जीवति किन्तु भवतीत्यध्याहारादित्यर्थ इत्युक्तम् ॥ ११ ॥

एतत् सङ्ग्रहवाक्यं विवृणोति स्पष्टयति तथाच न पौनरुक्त्यं वस्तुतस्तु सङ्ग्राहित्वासङ्ग्राहित्वभेदेन मक्षिकाजातेरपि द्वैविध्यात् प्रथमपक्षे यथा मक्षिकाजातिविशेष आहारमात्रं करोति सङ्ग्रही तु न भवति तथा यतिरपि सङ्ग्रही न स्यादित्यर्थः । द्वितीये तु संग्राहिमक्षिकाजात्यन्तरवद्यदि सङ्गृह्णन् भवति तदा तद्वदेव नश्यतीत्यर्थः ॥ १२ ॥

करिणीं दारुमयीम् ॥ १३ ॥

आत्मनः स्वस्य मृत्युं मृत्युहेतुं स कामुकः कर्मभूतः बलाधिकैः कामुकान्तरैः कर्तृभिः ॥ १४ ॥

न देयमिति । लुब्धैर्धनादि न दीयते नच स्वयं भुज्यत इत्यर्थः । किन्तु तत् सञ्चितम् अन्यो बलवान् भुङ्क्ते चिह्नैस्तत्स्थानमार्जनोपवेशनमुद्रारचनादि चिह्नैः अर्थं धनं तदुपायं तद्ग्रहणोपायं च वेत्तीति ॥ १५ ॥

स एव मधुहेव आशासानानां कामयमानानां गृहमेधिनां गृहस्थानां सुदुःखोपार्जितैर्विस्तैर्हेतुभिः सिद्धाः गृहाशिषः अन्नादीन् यतिरग्रतो भुङ्क्ते अतस्तदर्थं यतिनोद्यमो न कार्य इत्यर्थः ॥ १६ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

न देयमिति । सञ्चितमन्यैर्ह्रियते ततः सञ्चयो न कार्य इत्यर्थः ॥१५॥
दुःखनान्यैरुपार्जितं तेभ्यो भिक्षित्वा भोक्तव्यमित्यर्थः ॥ १६–३१ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

मधुकराच्छिक्षणीयमाह स्तोकं स्तोकमिति द्वाभ्याम् । यावता ग्रासेन देहो वर्तेत जीवेत तावन्तमेव ग्रासं नत्वधिकमित्यर्थः । तत्रापि स्तोकं स्तोकमल्पमेव ग्रसेत् गृहान् गृहस्थाश्रमास्थितान् जनानहिंसन्नपीडयन् माधुकरीं वृत्तिमातिष्ठन् आश्रयेत यथा मधुकरः सुमनसः अपीडयन् तत्र तत्र किञ्चिदेव गृह्णन् कालमसज्जमानो वर्तते तद्वन्मुनिरित्यर्थः ॥ अन्यथा तस्मिन् पद्मे मधुलोभेन सक्तो मधुकरः तस्मिन् मुकुलिते निबद्धो भवत्येवं मुनिरपि गृहलोभेनैकमेव गृहमाश्रितस्तन्मोहेन बध्यत इत्यर्थः ॥ ९ ॥

किञ्च अणुभ्य इति अणुभ्योऽल्पसारेभ्यः महद्भ्यो विपुलसारेभ्यः शास्त्रेभ्यः सारमाददीत यथा षट्पदोऽणुभ्यो महद्भ्यश्च पुष्पेभ्यः सारमादत्ते तद्वदित्यर्थः ॥ १० ॥

द्विविधो हि मधुकृत् मधु कृन्तति पुष्पादाच्छिद्य गृह्णातीति मधुकृत् भ्रमरः मधु करोति आहारत्वेन स्वेन रूपेणैवेति मधुकृत् मधुमक्षिका च तत्र प्रथमाच्छिक्षितमुक्तम् अथ मधुमक्षिकायाः शिक्षणीयमाह । सायन्तनमिति द्वाभ्याम् । सायन्तनश्वस्तनशब्दौ तत्तत्कालभोजनार्थपरौ इदं सायन्तनभोजनार्थमिदं श्व इत्येवं भिक्षितमन्नादि न संगृह्णीत किन्तु पाणी एवाञ्जलिरूपतामापन्नौ पात्रं भोजनपात्रं यस्य सः उदरमेवामत्रमन्ननिधानपात्रं यस्य सः मक्षिकेव न संग्रही यथा मक्षिका सङ्ग्राहिणी भवति तद्वत्संग्रही न भवेदित्यर्थः । संग्रही चेन्मधुमक्षिकावन्नश्यतीति भावः ॥ ११ ॥

एतद्विवृणोति पुनः । सायन्तनमिति । सहतेन संगृहीतेन सह विनश्यति ॥ १२ ॥

स्पर्शासक्तिर्नाशहेतुरिति गजाच्छिक्षणीयमित्याह । पदापीति । दारवीं दारुमयीमपि युवतीं स्त्रियं पदापि न स्पृशेत्स्पृशंस्तु बध्येत यथा करी गजः जिघृक्षुभिर्दारुमय्याः काष्ठतृणमृदाद्याच्छादितगर्तोपरिस्थापितायाः करिण्याः सङ्गात्तया गर्ते पतितो बध्यते तद्वत् ॥ १३ ॥

किञ्च नाधिगच्छेदिति । प्राज्ञो विवेकवानात्मनः स्वस्य मृत्युं तत्तुल्यां स्त्रियं नाधिगच्छेत्सोपगच्छंस्तु सः अभिगच्छन् बलाधिकैर्हन्येत यथा गजो गजीमुपगच्छन् बलाधिकैर्हन्यते तद्वत् ॥ १४ ॥

दानभोगानुपयोज्यं धनमन्यगामीति मधुहः शिक्षणीयमत स्तन्नार्जयेदित्याह । न देयमिति । लुब्धैर्दुःखेन सञ्चितमर्जितं यद्धनं न देयं नोपभोग्यं च तद्धनमन्योऽर्थवित्तद्धनग्रहणोपायाभिज्ञः भुङ्क्ते तदपि तथान्यः तस्यापि लोभाद्दानभोगानुपयुक्तः स्यात्तर्हि तस्मादन्यो बलवांस्तदाकृष्य भुङ्क्ते इत्यर्थः । मधुहेव स यथा मधुमक्षिकाभिः सञ्चितं मधु भुङ्क्ते तद्वत् ॥ १५ ॥

स्वोद्यमं विनैव भोजनलाभस्तस्मादेव शिक्षणीय इत्याह । सुदुःखेन बहुदुःखेनोपार्जितैर्वित्तैर्गृहस्थाशिषः पानभोजनादिकामानाशासानानां कामयमानानाम् आशासानानामिति वक्तव्येनावर्णलोप आर्षः—

यतिश्च ब्रह्मचारी च पक्वान्नस्वामिनावुभौ ।
तयोरन्नमदत्त्वा तु भुक्त्वा चान्द्रायणं चरेदिति ॥

शास्त्रार्थविदां गृहमेधिनामग्रतो यतिर्भुङ्क्ते मधुहेव स यथा मक्षिकाणां स्वोपार्जितमप्यभिलाषिणीनामग्रत एव मधु भुङ्क्ते तद्वत् ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मधुकरशिक्षितमतिमुपदिशति स्तोकमिति । मधुकरस्य विद्यमानां वृत्तिं समातिष्ठन् मुनिर्गृहात् व्रजेदित्यन्वयः ॥ ९ ॥

अणुगुरुत्वमहत्त्वे संशयोच्येते नत्वर्थतः सारं भगवज्ज्ञानजननीं भक्तिम् ॥ १० ॥

भिक्षितं भिक्षया लब्धमन्नं सायन्तनं सायन्तनार्थं श्वस्तनं श्वस्तनार्थं च न संगृह्णीत कथं तर्हि भोजनमत्राह । पाणीति । पाणिपात्रत्वेनोदरामत्रत्वेन वा भुञ्जान इति शेषः । संग्रहे को दोष इत्यत्राह । मक्षिका इति । तेन धनेन सह विनश्यति चोरादिनेति शेषः ॥ ११ ॥ १२ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

गजाख्यिकमुपासमत्राह । पदेति । करिण्या सङ्गसक्तः स्पृशन् करीव बध्यते ॥ १३ ॥

एतदेव विवृणोति । नाधिगच्छेदिति ॥ १४ ॥

मधुघ्नोऽपि का बुद्धिरर्जितेति तत्राह । न देयमिति । लुब्धैर्दुःखेन संचितं न देयं दानयोग्यं नोपभोग्यं स्वस्योपयोग्यं च न तत् एवं वित्तमर्थविदन्यो भुङ्क्ते कथमिव मधुहा मकरन्दसंग्रही मधुवत् ॥ १५ ॥

किमनेनात्मनो बन्धमत्राह । सुदुःखेति । यतिर्निर्जितेन्द्रियग्रामः ॥ १६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अणुभ्यश्चेति । त्रिविधो मधुकृत् एको भ्रमरजातिः असङ्ग्रहित्वसंग्रहित्वभेदेन द्वौ च मक्षिकाजातिरिति पद्यत्रयेण क्रमादुदाहरणानि ज्ञेयानि ॥ १०-१५ ॥

सुदुःखेति । अन्नादिदेयगृह्यमधुमक्षिकासंग्रहीतृविषयकं वाक्यं कामयमानानां गृहमेधिनां विस्रहेतुभिः सिद्धा गृहाशिषोऽन्नादीनर्थान् यतिरग्रतो भुङ्क्ते ॥ १६-२० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

मधुकराच्छिक्षितमाह द्वाभ्याम् । मधुकरो यथा विशिष्टगन्धलोभेनैकस्मिन्नेव पद्मे वसन्नस्तसमये तस्मिन्मुकुलिते सति बध्यते एवं मुनिरपि गुणालोभेनैकमेव गृहमाश्रितस्तन्मोहेन बध्यते तस्मात् स्तोकं स्तोकमल्पमल्पं ग्रासं गृह्णन् भ्रमेत् यावता देहो वर्त्तेतेति ग्रासानामाधिक्यन्यूनत्वे निषिद्धे गृहात् गृहस्थान् अहिंसन् अपीडयन् ॥ ९ ॥

मधुकरात् सारग्राहित्वमपि धर्मं शिक्षेदित्याह । अणुभ्यश्चेति ॥ १० ॥

मधुकरोतीति मधुकरशब्देन मधुमक्षिकाप्युच्यते इति ततः शिक्षितमाह । सायमिदमोक्ष्ये श्व इदं भोक्ष्ये इति भिक्षितमन्नादि न सङ्गृह्णीतेति किं पुनर्द्यस्तनं पौर्णमासिकं पौर्ववार्षिकं वेति भावः । अत्र सायं श्वो वा भविष्यति यद्वस्तु उदयमन्नादि तस्याप्यसंग्रहो न सम्भवेदतः सायन्तनं श्वस्तनं वा निमन्त्रणं न संगृह्णीयादिति केचिदाहुः केन पात्रेण गृहे गृहे भिक्षां कुर्यादित्यत आह । पाणिपात्र इति । सर्वतो भिक्षितमन्नसानानीय कुत्र स्थापयेदित्यत आह । उदरामत्र इति । उदरमेवामत्रं भिक्षानिधानभाण्डं यस्य स च सः ॥ ११ ॥

संग्रहे कृते सति किं भवेदित्याह । सायन्तनमिति ॥ १२ ॥

स्पर्शासक्तिर्नाशहेतुरिति गजाच्छिक्षितमित्याह द्वाभ्याम् । पदा पादेनापि क्षरवीं दारुमयीमपि गजो हि करिणीं प्रदश्य तृणादिपिहितगर्ते निपात्य बध्यते ॥ १३ ॥

इयं ममैव भोग्येति स्त्रियं नाधिगच्छेत् न विश्वसेत् यस्मात् बलवत्तमानीतैर्बलाधिकैर्जारैः स किल हन्येत ॥ १४ ॥

त्यागभोगहीनो धनसञ्चयः परगामी भवतीत्यत्र मधुहा मे गुरुरित्याह । न देयमिति । तदन्यो बली भुङ्क्ते तेनापि सञ्चितमन्यः तदन्यन्यः मधुहा मक्षिकाभिः सञ्चितं मधु यथा भुङ्क्ते तद्वत् ननु गुप्तं धनं कथमन्यो ज्ञात्वा हरेदित्यत आह अर्थविदिति । लिङ्गैः स्थं तदुपायं च वेत्तीत्यर्थविदिति यथा मधुहा तरुकोटरादिगतमपि मधुमक्षिकानुगमनेन वेत्ति ॥ १५ ॥

स्त्रीधर्मं विनापि भोगः सम्भवेदित्यत्रापि स एव गुरुरित्याह । सुदुःखेति । आशानामामिति वक्तव्ये वर्णालोप आर्षः—

यतिश्च ब्रह्मचारी च पक्वान्नस्वामिनावुभौ ।
तयोरन्नमदत्त्वा तु भुक्त्वा चान्द्रायणं चरेदिति ॥ १६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

मधुकृन्तति पुष्पादाच्छिद्य गृह्णातीति मधुकृत्स द्विविधः भ्रमरः मधुमक्षिकाख्यश्च तत्राद्याच्छिक्षितमाह । स्तोकमिति द्वाभ्याम् ॥ ९—१० ॥

द्वितीयाच्छिक्षितमाह । सायन्तनमिति द्वाभ्याम् । इदं सायं भोक्ष्यामीदं श्वः भोक्ष्यामीति भिक्षितमन्नादि न संगृह्णीत किन्तु पाणिपात्रोदरामत्रो भवेत् पाणिरेव भिक्षितान्नादिग्रहणपात्रं यस्य स चासौ उदरमेवामत्रं निधानपात्रं यस्य न भाण्डादि स तथा मक्षिकेव संग्रही तु न भवेत् ॥ ११ ॥

अन्यथात्वे दोषमाह । सायमिति ॥ १२ ॥

गजाच्छिक्षितमाह । पदापीति द्वाभ्याम् ॥ १३—१४ ॥

मधुघ्नः शिक्षितमाह । न देयमिति द्वाभ्याम् । लुब्धैर्दुःखेन सञ्चितमुपार्जितं धनं न पात्रे देयं भवति नच काले भोग्यं भवति अपितु अर्थवित् परधनतत्स्थानप्रकारविदन्यो भुङ्क्ते तद्यथान्यः मधुहा व्याधः मक्षिकाभिः सञ्चितं मधु यथा भुङ्क्ते तद्वत् ॥ १५ ॥

किञ्च आशासानानाम् कामयमानानां गृहाशिषः—

यतिश्च ब्रह्मचारी च पक्वान्नस्वामिनावुभौ ।
तयोरन्नमदत्त्वा तु भुक्त्वा चान्द्रायणं चरेदिति ॥

स्मृत्युक्तया बन्धान् अन्नादीन् यतिः ब्रह्मचारी च भुङ्क्ते अग्रतः प्रथमतः परोपार्जितान्नादिना यतिः कालक्षेपं करोतीति भावः ॥ १६ ॥

---

भाषा टीका ।

भ्रमर की वृत्ति को धारण करने वाला मुनि जितनने से देहका निर्वाह होवै उतनाही थोडा ग्रास ग्रहण करे किसी घरों मे जावे तो भी किसी का मन दुखाकर भिक्षा न लेवै वह माधुकरी वृत्ति कही है ॥ ९ ॥

कुशल पुरुषों को चाहिये कि छोटे बडे सब शास्त्रों से सार को ग्रहण करे जैसे कि भौंरा पुष्पों से रसमात्र को लेता है पुष्पों को नहीं तोडता है ॥ १० ॥

भिक्षु पुरुष सवेरे से संध्या के वास्ते संध्या से सवेरे के वास्ते भिक्षा को नहीं रखे भिक्षा भोजन मांगने को हाथही को पात्र

ग्राम्यगीतं न शृणुयाद्यतिर्वनचरः क्वचित् ।
शिक्षेत हरिणाद्बद्धान् मृगयोर्गीतमोहितात् ॥ १७ ॥
नृत्यवादित्रगीतानि जुषन् ग्राम्याणि योषिताम् ।
आसां क्रीडनको वश्य ऋष्यशृङ्गो मृगीसुतः ॥ १८ ॥
जिह्वयाऽतिप्रमाथिन्या जनो रसविमोहितः ।
मृत्युमृच्छत्यसद्बुद्धिर्मीनस्तु बडिशैर्यथा ॥ १९ ॥
इन्द्रियाणि जयन्त्याशु निराहारा मनीषिणः ।
वर्जयित्वा तु रसनं तन्निरन्नस्य वर्धते ॥ २० ॥
तावज्जितेन्द्रियो न स्याद्विजितान्येन्द्रियः पुमान् ।
न जयेद्रसनं यावज्जितं सर्वं जिते रसे ॥ २१ ॥
पिङ्गला नाम वेश्याऽऽसीद्विदेहनगरे पुरा ।
तस्या मे शिक्षितं किञ्चिन्निबोध नृपनन्दन ! ॥ २२ ॥
सा स्वैरिण्येकदा कान्तं सङ्केत उपनेष्यती ।
अभूत्काले बहिर्द्वारि बिभ्रती रूपमुत्तमम् ॥ २३ ॥
मार्गे आगच्छतो वीक्ष्य पुरुषान् पुरुषर्षभ ! ।
तान् शुल्कदान् वित्तवतः कान्तान् मेनेऽर्थकामुका ॥ २४ ॥

---

भाषा टीका।

बनावै रखने का बरतन उदर को बनावै जैसी मक्षिका करती है तैसा रहै संग्रह नहीं करै ॥ ११ ॥

सवेरे के या सांझ के भोजन को भिक्षु संग्रह करके न रखे यदि रखैगा तो मधु माखियों की नांई उस के साथही नष्ट हो जावेगा ॥ १२ ॥

त्यागी होकर लकडी की स्त्री की मूर्ति को पैरसे भी नहीं छूवै यदि छुवैगा तो जैसे जंगल मे हथिनी के संगसे हाथि बंध जाता है तैसे बंध जावैगा ॥ १३ ॥

ज्ञानी पुरुष अपने आत्मा के मृत्यु रूप स्त्री को कभी भी प्राप्त न होवै यदि ग्रहण करेगा तो बिलिष्ठ पुरुष उसको मारलेंगे जैसे एक हाथि को हथिनी के वास्ते बहुत हाथी मारते हैं तैसे ॥ १४ ॥

लोभी पुरुषों का दुःख से पैदा किया जो धन सो न देने को होता है न भोगने को होता है उस धनको कोइ दूसरा ही भोगता है जो कि उस के छिपाये हुवे धनको भी जानने वाला है जैसे कि मधु माखियों के छाता को टोडने वाला लेजाता है यह मधुहा का कार्य देखा है ॥ १५ ॥

बडे दुःखों से संसारी अपने घरके भोग के लिये जिस अन्नादि पदार्थ को रखते हैं गृहस्थों के पहिले ही उस पदार्थ को सन्यासी यति पहिले ही भोगलेता है जैसे कि मधुहा मधु हरण करता है तैसे यह बात भी मधुहा से सीखी है ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

हरिणाच्छिक्षितमाह। ग्राम्येति। भगवद्गीतं तु शृणुयादेव मुमोक्षुभिक्षुकस्य ॥ १७ ॥

हरिणशब्दादेव हरिणीसुत ऋष्यशृङ्गोऽपि गुरुत्वेनोक्त इत्याह। नृत्येति। वश्यो बभूवेति शेषः ॥ १८ ॥

रसासक्तिर्नाशहेतुरिति मीनाच्छिक्षितमित्याह। जिह्वयेति। अतिप्रमाथिन्या अतिक्षोभिकया दुर्जयया ऋच्छति प्राप्नोति बडिशैरामिषलिप्तैर्लोहकण्टकैः ॥ १९ ॥

दुर्जयत्वमुपपादयति। इन्द्रियाणीति द्वाभ्याम्। अयं भावः यथाहारस्त्यज्यते तथान्येन्द्रियजयः केवलं भवति रसनेन्द्रियन्तु वर्धते यदि तु भुज्यते तर्हि पुनश्च रसासक्त्या सर्वेन्द्रियक्षोभः स्यात् अतो रसासक्तिं परित्यज्यौषधवद्भुञ्जीतेति प्राणवृत्त्यैव सन्तुष्येदित्यश्लोकमपि रसनस्यातिदुर्जयत्वज्ञापनायोच्यत इति विशेषः ॥ २०-२१ ॥

पिङ्गलाया नैराश्यं शिक्षितमिति वक्तुं तदाख्यानमाह। पिङ्गलेत्यादिना। मे मया शिक्षितम् ॥ २२ ॥

स्वैरिणी कामचारिणी सङ्केते रतिस्थाने ॥ २३ ॥

तान्वित्तवतः सधनानतएव शुल्कदान्मूल्यदान् कान्तान् सुरतार्हान् ॥ २४ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

विषयग्रामं सेवन्ते इति ग्राम्या विषयिणस्तेषां गीतं न शृणुयादिति विशेषणस्य व्यावर्त्तकत्वाद्भगवद्गीतं तु शृणुयादेवेति व्याख्यातं तदुक्तं पाद्मे "ब्राह्मणो वासुदेवाख्यं गायमानोऽनिशं परम् । हरेः सालोक्यमाप्नोति रुद्रगानाधिकं भवे"दिति ॥ १७ ॥

ग्राम्याणि इन्द्रियग्रामाहाणि ॥ १८ ॥

मृत्युं संसारम् प्रसती वहिर्मुखा बुद्धिर्यस्य स तथा ॥ १९ ॥

आश्विति उद्यमं विनैवेत्यर्थः । रसनन्तु वर्जयित्वेत्यन्वयः । ननु रसनेन्द्रियजयः कथं स्यादित्यपेक्षायां पद्यस्यार्थं भाव इति ॥ २० ॥

रसे जिते सति सर्वं जितमिति रसनेन्द्रियजयेन सर्वेन्द्रियजये योग्यत्वात् भूतवन्निर्देशः ॥ २१ ॥

तदाख्यानं पिङ्गलाख्यानं ज्ञानप्रकरणेऽप्यस्मिन् प्रसङ्गात् परमभक्तिमपि दर्शयति । पिङ्गलेति ॥ २२ ॥

उत्तमं रूपं बिभ्रती सती काले सन्ध्यायां बहिर्द्वारि स्थिताभूत् ॥ २३ ॥

हे पुरुषर्षभेति तस्याः दुराशाया आश्चर्यफलत्वाभिप्रायेण ॥ २४ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

हरिणाच्छिक्षणीयमाह ग्राम्यगीतमिति । कदाचित्कदाचिदपि ग्राम्यगीतं न शृणुयात् मृगयोर्लुब्धकस्य गीतेन मोहिताद्धरिणाद् ग्राम्यगीतं न शृणुयादितीमां वृत्तिं शिक्षेत हरिणो हि मृगयोर्गीतमोहितस्तेन गृहीतो नश्यति तद्वद्यतिर्ग्राम्यगीतं शृण्वन्नश्येदतस्तन्न शृणुयादित्यर्थः । ग्राम्येत्युक्तेर्भगवद्गीतं तु शृणुयादेवेत्यभिप्रायः ॥ १७ ॥

हरिणशब्देन हरिणीसुतऋष्यशृङ्गोऽपि विवक्षितः अत एव सोऽपि गुरुरित्यभिप्रेत्याह नृत्येति । मृगीसुतः ऋष्यशृङ्गः ग्रामे भवानि ग्राम्याणि योषितां नृत्यानि वादित्राणि मृदङ्गादिध्वनयस्तान् गीतानि च जुषन् सेवमानः पश्यन् शृण्वंश्चेति यावत् आसां योषितां क्रीडनकः क्रीडासाधनं वश्यश्चाभवदिति शेषः अतस्तानि न जुषेतेति भावः ॥ १८ ॥

रसनासक्तिर्नाशहेतुरिति मीनाच्छिक्षणीयमित्याह । जिह्वयेति । अतिप्रमाथिन्या दुर्जयया जिह्वया करणभूतया रसे तद्विषये विमोहितः अत एवासद्बुद्धिर्दुर्बुद्धिर्मृत्युमृच्छति प्राप्नोति यथामिषबुद्धिविमोहितो मीनो बडिशैरामिषावलम्बितैर्लोहकण्टकैः विनश्यति तद्वत् ॥ १९ ॥

जिह्वायाः प्रमाथित्वमुपपादयति द्वाभ्याम् । इन्द्रियाणीति । मनीषिणः बुद्धिमन्तः इन्द्रियजयेच्छवः तावज्जिह्वारा इन्द्रियाणि वर्जयित्वा तु रसनं रसनेन्द्रियव्यतिरिक्तानीत्यर्थः । आशु जयन्ति रसनव्यतिरिक्तानीन्द्रियाणि निराहारमात्रेणैव जेतुं शक्यानि तेन तत्पाटवाद्रसनन्तु न तेन जेतुं शक्यं प्रत्युत निराहारेण रसनेन्द्रियवृद्धेरेवापादनादिति भावः । तदाह तन्निरन्नस्य वर्द्धत इति तद्रसनं निरन्नस्य निराहारस्य वर्द्धत इति ॥ २० ॥

ग्राम्यत्वं रसनमजितमितराणि तु जितान्येवेत्यत आह । तावदिति । विजितान्यपानि रसनव्यतिरिक्तानीन्द्रियाणि येन तथाभूतोऽपि यावद्रसनं न जयत्तावज्जितेन्द्रियो न स्यादेव रसे रसनेन्द्रिये जिते सति तु सर्वमिन्द्रियं जितप्रायमेवेत्यर्थः ॥ २१ ॥

पिङ्गलाया नैराश्यं शिक्षितमिति वक्तुं तदाख्यानमाचष्टे पिङ्गलेत्यादिना यावदध्यायसमाप्ति विदेहनगरे मिथिलापुरे तस्याः पिङ्गलातः मे मया शिक्षितं किञ्चिदस्ति तन्निबोध शृणु हे नृपनन्दन ! यदो ॥ २२ ॥

सेति । सा पिङ्गला स्वैरिणी संकेत इति कामचारिणी सङ्केते रतिस्थाने सङ्केतमिति पाठे प्रशं प्राद्यजन्तः सङ्केतितमिति यावत् उपनेष्यती 'लक्षणहेत्वोः' इति शत्रन्तादुगिल्लक्षणो ङीप् उपनेतुमित्यर्थः । यद्वा एतावद्धनं यो दास्यति तेनैव संगमिष्यामीत्येवं विधं संकेतमुपनेष्यती प्रापयतीति यावत् उत्तमं स्वलङ्कृतं रूपं बिभ्राणा काले स्वसंकेतकाले गृहद्वारि स्वगृहद्वारे अभूत्स्थिता ॥ २३ ॥

मार्ग इति । हे पुरुषर्षभ ! तान् पुरुषान् वित्तवतः सधनानपि शुल्कदान् मूल्यदानपि न मेने नामन्यत तैः सह न रेम इत्यर्थः । कुतः यतः सार्थकामुका तैः प्रतिज्ञातार्थादप्यधिकवित्तकामुका ॥ २४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

हरिणाच्छिक्षेन्द्रियजयो लभ्य इत्याह । ग्राम्येति । यदि वनचरो यतिर्ग्राम्याणां गीतं वचनं न शृणुयादितीममर्थं हरिणाद् शिक्षेत् कीदृशात् मृगयोर्गीतमोहित्वेन बद्धात् ॥ १७ ॥

ग्राम्यगीतश्रवणे का हानिरिति तत्राह । नृत्येति । क्रीडनकाख्यः क्रीडासाधनवदन्यः ॥ १८ ॥

मत्स्याज्जिह्वेन्द्रियजयप्रकारं कथयति । जिह्वयेति । असद्बुद्धिरसद्वस्तः ॥ १९ ॥

रसजयो दुष्परिहर इत्युपपादयति । इन्द्रियाणीति । रसनं रसनेन्द्रियम् असौ रसना रस्ये स्वविषये वर्द्धते ॥ २० ॥

जिह्वेन्द्रियजय एवेन्द्रियजयो नान्य इत्याह । तावदिति । रसो रागः "रसो रागे विषे वीर्ये" इति यादवः ॥ २१ ॥

पिङ्गलाया वैराग्यमुपशिक्षितमिति वक्तुमुपक्रमते । पिङ्गलेति ॥ २२ ॥

सैकदा सङ्केते वित्तसमये कान्तमुपेनेष्यती आत्मसमीपं प्रापयन्ती गृहद्वार्यभूदित्यन्वयः ॥ २३ ॥

मार्गे आगच्छतः पुरुषान्वीक्ष्य तान् पुरुषान् वित्तवतः शुल्कदान् कान्तान् मेने ॥ २४ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

रसे जिते सति सर्वं जितमिति तादृशस्य तस्य योग्यत्वात् भूतवन्निर्देशः ॥ २१ ॥

ज्ञानप्रकरणेऽप्यस्मिन् प्रसङ्गात्परमभक्तिमपि दर्शयति । पिङ्गलानामेति ॥ २२–३० ॥

---

आगतेष्वपयातेषु सा सङ्केतोपजीविनी ।
अप्यन्यो वित्तवान् कोऽपि मामुपैष्यति भूरिदः ॥ २५ ॥
एवं दुराशया ध्वस्तनिद्रा द्वार्यवलम्बती ।
निर्गच्छन्ती प्रविशती निशीथं समपद्यत ॥ २६ ॥
तस्या वित्ताशया शुष्यद्वक्त्राया दीनचेतसः ।
निर्वेदः परमो जज्ञे चिन्ताहेतुः सुखावहः ॥ २७ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

प्राकृतगानमाधुर्यासक्तिरनर्थहेतुरिति हरिणाच्छिक्षितमाह । ग्राम्यगीतमिति । तेन भगवद्गीतं शृणुयादेव ॥ १७ ॥

ग्राम्यगीतासक्तेरुदाहरणमाह । नृत्येति ॥ १८ ॥

प्राकृतरसासक्तिरनर्थहेतुरिति मीनाच्छिक्षितमाह । जिह्वयेति । बडिशेनामिषच्छिन्नः ॥ १९ ॥

तदेवं रूपगन्धस्पर्शशब्दरसैः पञ्चभिर्विषयैः पतङ्गमधुकरगजहरिणमीनाः पञ्च मोहिताः हताः तदुक्तम्—

पतङ्गमातङ्गकुरङ्गभृङ्गमीना हताः पञ्चभिरेव पञ्च ।

एकः प्रमादी स कथं न हन्यते यः सेवते पञ्चभिरेव पञ्चेति ॥ किञ्चान्येन्द्रियाणां वृत्तिप्रदं रसनेन्द्रियमेवानर्थकारीत्यतस्तस्य जये प्रयत्नं कुर्वीतेत्याह । इन्द्रियाणीति द्वाभ्याम् । अयमभावः यथाहारस्त्यज्यते तथान्येन्द्रियजयः केवलं भवति रसनेन्द्रियन्तु वर्धते यदि तु भुज्यते तर्हि पुनश्च रसासक्त्या सर्वेन्द्रियक्षोभः स्यादस्मात्तथा रसनेन्द्रियं जेतव्यं यथा तदनुवर्तीन्यन्यान्यपीन्द्रियाणि जितानि स्युरन्तरशो रसनेन्द्रियस्य जयस्तु रसनयैव परिमितमहाप्रसादमात्रभोजनेन वा रसनायर्सिवागिन्द्रियेण भगवद्गुणनामकीर्तनरसास्वादाद्वा भवेद् यदुक्तम्—

रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तत इति ॥ २० ॥ २१ ॥

पिङ्गला नैराश्यं शिक्षितमिति तदुपाख्यानमाह । पिङ्गलेति ॥२२॥

सङ्केते रतिस्थाने उपनेष्यती स्वसमीपमानेष्यन्ती आनेतुमिच्छन्ती ॥ २३ ॥

शुल्कवान् मूल्यं वरवा सुरतप्रा्हिणः ॥ २४ ॥ २५ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

हरिणाच्छिक्षितमाह । ग्राम्येति । मृगवल्लुब्धकस्य ॥ १७ ॥

ग्राम्यगीतश्रवणेऽनर्थं दर्शयति । नृत्येति । वश्यः सन् क्रीडनको बभूवेति शेषः ॥ १८ ॥

मीनाच्छिक्षितमाह । जिह्वयेति । अतिप्रमाथिन्या अत्यन्तं मनःक्षोभिकया बडिशैः आमिषादिलिप्तैर्लोहकण्टकैः ॥ १९ ॥

जिह्वायाः मनःक्षोभकत्वमुपपादयतीन्द्रियाणीति द्वाभ्याम् ।

॥ २०—२१ ॥

पिङ्गलातः शिक्षितं वक्तुं तदाख्यानमाह । पिङ्गलेत्यादिना ॥२२॥

॥ २३—२४—२५ ॥

भाषा टीका ।

वनमें रहने वाले यति को कामियों के भाषा के गीतों को नहीं सुनना चाहिये भगवान् के गीतों को तो सुनना चाहिये इस बात को व्याध के गीत सुनके मोहित हुवे बंधन में पडे हरिण से सीखना चाहिये ॥ १७ ॥

ग्रामीण स्त्रियों के गीत बाजा नृत्य इनको सेवन नहीं करै इनके सेवन से मृगी सुत ऋष्य शृंग मुनि भी इन स्त्रियों के बस होगये ॥ १८ ॥

मनको बडे मंथन करने वाली जीभके मारे मनुष्य रसों से मोहित होजाता है सो दुर्बुद्धि मृत्यु को प्राप्त होता है जैसे कि बंसी में खाने को मुख लगाने से मछली मरजाती है यह बात मछली से सिखी है ॥ १९ ॥

जो बुद्धिमान् पुरुष विषयों को भोग नहीं देते हैं सो इंद्रियों को जीत लेते हैं एक रसना जीभ इंद्रिय तो नहीं बस होती है वह तो आहार नहीं मिलने से और बढती है ॥ २० ॥

जिस पुरुष ने सब इंद्रिय जीत भी लिये हों तो भी जब तक रसना इंद्रिय को नहीं जीतता है तब तक जितेंद्रिय नहीं होसकेगा रसके जीतने से जानों सब ही जीत लिया ॥ २१ ॥

पूर्व काल में विदेह नगर मिथिला में एक पिंगलानाम की वेश्या थी हे नृपनंदन यदुजी । उससे मैने कुछ सीखा है तिस को आपश्रवण करो ॥ २२ ॥

वह व्यभिचारिणी एक दिन अपने मैथुन स्थान में कोई पुरुषों को लेजाने के वास्ते सुन्दर रूप बनाकर रात के वखत दरवाजे में खडी होरही थी ॥ २३ ॥

हे पुरुषश्रेष्ठ । मार्ग में आते हुवे पुरुषों को जिसको देखे तिसको धन देने वाला होगा धनी होगा इस प्रकार से धन की कामना से वह मेरा पति होजावे ऐसे आशा करती रही ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अपिः सम्भावनायाम् अन्योऽपि मामुपैष्यत्येवं दुराशयेत्युत्तरेणान्वयः ॥ २५ ॥

द्वार्यवलम्बमाना पुनः प्रविशती पुनर्निर्गच्छन्ती एवं कुर्वती निशीथमर्धरात्रं प्राप ॥ २६ ॥

तस्या निर्विण्णचित्ताया गीतं शृणु यथा मम ।
निर्वेद आशापाशानां पुरुषस्य यथा ह्यसिः ॥ २८ ॥
नह्यङ्गाजातनिर्वेदो देहबन्धं जिहासति ।
यथा विज्ञानरहितो मनुजो ममतां नृप ! ॥ २९ ॥

पिङ्गलोवाच ॥

अहो मे मोहविततिं पश्यताविजितात्मनः ।
या कान्तादसतः कामं कामये येन बालिशा ॥ ३० ॥
सन्तं समीपे रमणं रतिप्रदं वित्तप्रदं नित्यमिमं विहाय ।
अकामदं दुःखभयाधिशोकमोहप्रदं तुच्छमहं भजेऽज्ञा ॥ ३१ ॥
अहो मयाऽऽत्मा परितापितो वृथा साङ्केत्यवृत्त्याऽतिविगर्ह्यवार्तया ।
स्त्रैणान्नराद्यार्थतृषोऽनुशोच्यात् क्रीतेन वित्तं रतिमात्मनेच्छती ॥ ३२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

निर्वेदोऽलम्बुद्धिः चित्तचिन्तैव हेतुर्यस्य सः ॥ २७ ॥

यथा यथावत् मम मत्तः शृणु ननु किंनिर्विण्णाया गीतश्रवणेन तत्राऽऽह हि यस्मात्पुरुषस्याऽऽशापाशानां निर्वेदोऽसिर्यथा तथा छेत्ता ॥ २८ ॥

तत्र हेतुः । नहीति । अङ्ग हेराजन् ! ॥ २९ ॥

अविजितात्मत्वे हेतुः याऽहं बालिशा विवेकशून्या कुतः येन कारणेनासतस्तुच्छान्नरात्कामं कामये ॥ ३० ॥

बालिशत्वं प्रपञ्चयति । सन्तमिति चतुर्भिः । समीपे सन्तमन्तर्यामित्वात् इममपरोक्षमीश्वरम् ॥ ३१ ॥

अतिविगर्ह्याऽतिनिन्द्या या वार्ता जीविका तया कुतः सांकेत्येन या वृत्तिस्तया बहुव्रीहिणा स्वविशेषणं वा परितापं प्रपञ्चयति । स्त्रैणादिति । स्त्रीवश्यात्तथा चार्थतृषो लुब्धादत एवानुशोच्यान्नराद्याऽहं वित्तं रतिं चेच्छती मया वृथाऽऽत्मा परितापितः केन वित्तमिच्छती तेन नरेण क्रीतेन स्वयं विक्रीतेनाऽऽत्मना देहेन ॥ ३२ ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

आगतेष्विति युग्मकम् एवं कुर्वतीति व्याख्यानात्निर्गच्छन्ती प्रविशतीति शत्रन्त एव पाठः ॥ २५ ॥ २६ ॥

अलं बुद्धिः स्वावश्यया विषयेषु हेयत्वबुद्धिः परम इति लौकिकनिर्वेदव्यावृत्तिः तत्र हेतुः सुखावह इति सुखं श्रीकृष्णविषयकानुरागजानन्दम् आवहति प्रापयतीति तथा चित्तचिन्तैव हेतुर्वैदेष्यापातबोधार्थमेव तस्य पूर्वसंस्कारहेतुकत्वात् ॥ २७ ॥

तस्या इत्यत्रकं तस्या इति सम्बन्धसामान्यविवक्षया षष्ठी तयेत्यर्थः आशापाशानामिति 'अविद्याऽस्मितारागद्वेषाभिनिवेशाः' इत्यत्र रागशब्दोक्ता या आशास्ता एव पाशाः पाशवद्बन्धकास्तेषां निर्वेदोऽसिरिति धर्मलुप्ता तत्र हेतुरये ॥ २८ ॥ २९ ॥

याहं बालिशा तस्या अविजितात्मनो मे मोहविततिं यूयं पश्यत येन बालिशत्वेन हेतुनाऽसतः कान्तादहं कामं कामये इत्यन्वयः ॥ ३० ॥

श्रीदत्तात्रेयकृपादृष्टिप्रभावेण झटिति पूर्वसंस्कारोद्बुद्धेतादृशं तद्वाक्यं सन्तमित्यादि । अन्तर्यामित्वात् समीप एव सन्तं न तु दूरगं तत्रापि परमसुन्दरत्वेन रमणं श्रेष्ठं तत्रापि रतिसुखदं सैरिन्ध्र्यादिभ्य इव भूषणादिवित्तप्रदञ्च तत्रापि नित्यमकालकलितं तत्रापि मम परोक्षं स्वयं प्रकाशत्वान्न तु परोक्षं तथाभूतमीश्वरं विहाय अकामदं यथार्थसुखाप्रदं प्रत्युत दुःखादिप्रदं तत्र हेतुस्तुच्छं तादृशमप्यहं भज इति बालिशत्वप्रपञ्चः ॥३१॥

साङ्केत्येन सङ्केतीकृतेन रतिसुखेन या वृत्तिर्वर्तनं तया हेतुना या विनिन्द्या जीविका तयेति व्यधिकरणे तृतीयेति बहुव्रीहियोति अतिविगर्ह्या वार्ता जीविका यस्यास्तया मयेति सामानाधिकरण्यभूतेन नरेण मूल्यं नीतेन स्वयं विक्रीतेन मूल्यं वित्तादिकं गृहीत्वा दत्तेन ॥ ३२ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अर्थतृषः अर्थतृष्णायुक्तात् वित्तं रतिसुखहेतुं वित्तम् ॥ ३२ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इत्थमागतेषु सर्वेषु पुरुषेष्वपयातेषु प्रत्याख्यनागतेषु तत्सु सा पिङ्गला सङ्केतोपजीविका सङ्केतेनैव उपजीवतीति तथा दैवगतिं संविद्गतः अपि सम्भावनायां भूरिददातीति तथा स्वतङ्क-

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तानुरूपवित्तदः कोऽपि पूर्वं सङ्केतितः तदन्यो वा कश्चिन्मामुपैष्यति ॥ २५ ॥

इत्येवं विधः दुष्ट आशयोऽभिप्रायः तेन व्यस्ता निद्रा यस्याः सा द्वार्यवलम्बमाना पुनः पुनः प्रविशती निर्गच्छन्ती च निशीथमर्धरात्रं प्राप ॥ २६ ॥

तस्या इति । शुष्यद्वक्त्रं वदनं यस्या दीनममास्वरं चेतो यस्याः तस्याः पिङ्गलायाः परमः सुखावहश्चिन्ताहेतुर्वक्ष्यमाणविचारहेतुश्च निर्वेदः परितापो जज्ञे जातः यद्वा चिन्ताऽर्थचिन्ता हेतुर्यस्य सः ॥२७॥

तदेतितदा निर्वेददशायां निर्विषयाचित्तायास्तस्या गीतं यथावत् मम मत्तः शृणु ननु निर्विषयाचित्तायाः किंगीतश्रवणेनेत्यत आह। निर्वेदं इति । हि यस्मात्पुरुषस्याशापाशानां निर्वेदो यथासिः खड्गस्तथा खड्गवच्छेदनसाधनमित्यर्थः ॥ २८ ॥

एतदेव हि व्यतिरेकमुखेनोपपादयति । नहीति । अङ्ग हे यदो ! न जातो निर्वेदो यस्य सः देहबन्धकृतदनुबन्धिना-मप्युपलक्षणार्थः देहबन्धं देहतदनुबन्धिष्वनुवर्तमानाम ॥ २९ ॥

तर्हि तद्गीतं भावयेत्यत आह । अहो इति । अविजित आत्मा मनो यया तस्याः हेतुगर्भमिदं मे मम मोहविततिं मोहविस्तारं तामेव दर्शयितुमात्मानं विशिनष्टियेति ।याहं येन मोहेनासत्तत्तुच्छात्कामं कामयेऽ तोऽहं बालिशा विवेकशून्या ॥ ३० ॥

बालिशत्वं प्रपञ्चयति । सन्तमिति चतुर्भिः । समीपे हृदय एव सन्तं वसन्तं तथाप्यपुरुषार्थतां व्युदस्यति रमणमिति।रमणं कान्तं निरतिशयप्रीतिविषयमित्यर्थः । तस्यैवेच्छाविषयत्वात् ननूक्तितायां हि तद्विषयप्रीतौ तस्य तद्विषयत्वं सैव तु कुत इत्यतो विशिनष्टि रतिप्रदमिति । रतिरनुरागः प्रीतिरिति यावत्तं प्रयच्छतीति तथा तं स्वविषयप्रीत्यावहमित्यर्थः । नन्वर्थकामाद्यभिलाषिण्याः किं तद्विषयप्रीत्येत्याशङ्क्य विशिनष्टि । वित्तप्रदमिति । वित्तशब्दः कामादेरप्युपलक्षकः अर्थिनां धर्मादिपुरुषार्थचतुष्टयप्रदमित्यर्थः । नित्यमुक्तविषयत्वेन यावदात्मानुबन्धिनममुं भगवन्तं विहाय तद्विपरीतं तुच्छं नरमहं भजे भजामि वैपरीत्यं व्यञ्जयितुं विशिनष्टि । अकामदमिति । कामशब्दो धर्मादीनामुपलक्षकः प्रत्युत दुःखभयाधिप्रदम् आधिर्मानसिकं दुःखम् इममिति पाठे भित्ति-लिखितभगवत्प्रतिमादर्शनकृतसन्निहितनिर्देशः ॥ ३१ ॥

अहो इतिअतिनिगर्ह्या वार्ता देहधारणात्मिका यतः तया सांकेत्यने वा वृत्तिस्तया वृथा बृथा व्यर्थमात्मा मनः देहो वा परितापितः परितापं प्रापितः परितापं प्रपञ्चयति।स्त्रैणादिति।स्त्रीलम्पटादर्थतृषः अर्थतृष्णायुक्तादतएवानुशोच्याज्जराद्दाहं रतिं वित्तं च क्रीतेन तेन नरेण क्रीतेनात्मना देहेनेच्छती कामयमाना आसमिति शेषः ॥ ३२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अस्मादन्यो भूरिदो बहुद्रव्यप्रदः स्यादिति मत्वा ॥२५—२६॥

वित्ताशया वित्ततृष्णया चिन्ताया व्याच्छेदने हेतिः शस्त्रम् ॥२७॥

यथा गीतं तथा मम सकाशाच्छृणु श्रोतव्यत्वे हेतुमाह । निर्वेद इति । यथा निशितोऽसिः पाशानां छेदने हेतुर्विहितः तथा निर्वेदस्तृष्णाख्यतृषापाशानां हि यस्मात्तस्मात् ॥ २८ ॥

अत्रापि हेत्वन्तरमाह । नहीति ॥ २९ ॥

विगतनिर्विस्तारः बालिशा येन तस्मात् ॥ ३० ॥

कथं बालिशेत्यत्राह । सन्तमिति । नित्यमविनाशिनम् ॥३१॥

आत्मा मनः अतिगर्ह्या वार्ता किंवदन्ती यस्याः सा तथा तया सकेतस्य भावः सांकेत्यं द्रव्यं तेन वृत्तिराजीविका तया यथाहं वित्तमुद्दिश्य आत्मना देहेन अर्थतृषा विषयतृष्णया मनुशोच्यान् स्त्रैणाज्जरान् क्रीत्वा रतिमिच्छन्त्यासं तथेति शेषः ॥ ३२॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

निर्वेदेन झटिति पूर्वोक्तसंस्कारोदयाच्छ्रीदत्तात्रेयकृपाप्रभावेण तादृशस्फूर्त्या सन्तं समीप इत्यादिचोक्तं रतिप्रदं प्रीतिविशेषस्य च दातारं सैरिन्ध्र्याद्विभ्य इव वित्तप्रदं सर्वकामप्रदं च ॥ ३१—३४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

निशीथमर्द्धरात्रं प्राप ॥ २६ ॥

वित्तचिन्तैव हेतुर्यस्य सः ॥ २७ ॥

यथा मम यथावन्मत्तः आशा एव संसारबन्धस्य पाशाः च्युतस्तासां छेदने निर्वेद एव असिर्भवेत् ॥ २८ ॥

तस्यावश्योपादेयत्वमाह । नहीति ॥ २९ ॥

कामं कन्दर्पं कामये येन कामेन हेतुना अहं बालिशा मूढा ॥ ३० ॥

समीपे ममान्तर्हृदये एव सन्तं रमणमिति इममेव कथमहं न रमयामीति भावः । रतिप्रदमिति अयमेव कथं मां न रमयतु किमन्येन पापिष्ठपुरुषेणेति भावः । वित्तप्रदमिति मद्-परतितुष्टोऽयं विष्णुमपि प्रचुरं दास्यत्येवेति भावः । अकामदं कामपूर्त्तिं दातुमसमर्थं भगवत्येतादृशी मतिरस्यास्तदा तस्यां रजन्यां तदङ्गणे यदृच्छयागतशयितस्य श्रीदत्तात्रेयस्य कृपाभराद्भूतेति प्राञ्चः ॥ ३१ ॥

या अहं क्रीतेन विक्रीतेनात्मना स्वदेहेन स्त्रैणात् स्त्रीलम्पटा-ज्जरात् वित्तं रतिञ्च इच्छन्ती अभूवं यद्वा नरेण क्रीतो य आत्मा मद्देहस्तेन ॥ ३२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

निशीथमर्धरात्रं प्राप ॥ २६ ॥ २७ ॥

यथा पुरुषस्य बन्धनानां भेदकोऽसिस्तथाशापाशानां भेदकं निर्वेदकारणं तस्याः गीतं यथावत् मत्तः शृणु ॥ २८ ॥ २९ ॥

बालिशा विवेकशून्या ॥ ३० ॥

बालिशत्वमेवाह । सन्तमिति चतुर्भिः । समीपे सन्तमन्तर्यामिणम् इमं बुद्धिभेरकत्वादिना प्रतम ॥ ३१ ॥

यदस्थिभिर्निर्मितवंशवंश्यस्थूणं त्वचा रोमनखैः पिनद्धम् ।
क्षरन्नवद्वारमगारमेतद्विण्मूत्रपूर्णं मदुपैति काऽन्या ॥ ३३ ॥
विदेहानां पुरे ह्यस्मिन्नहमेकैव मूढधीः ।
याऽन्यमिच्छन्त्यसत्यस्मादात्मदात्काममच्युतात् ॥ ३४ ॥
सुहृत्प्रेष्ठतमो नाथ आत्मा चायं शरीरिणाम् ।
तं विक्रीयाऽऽत्मनैवाहं रमेऽनेन यथा रमा ॥ ३५ ॥
कियत्प्रियन्ते व्यभजन् कामा ये कामदा नराः ।
आद्यन्तवन्तो भार्याया देवा वा कालविद्रुताः ॥ ३६ ॥
नूनं मे भगवान् प्रीतो विष्णुः केनापि कर्मणा ।
निर्वेदोऽयं दुराशाया यन्मे जातः सुखावहः ॥ ३७ ॥
मैवं स्युर्मन्दभाग्यायाः क्लेशा निर्वेदहेतवः ।
येनानुबन्धं निर्हृत्य पुरुषः शममृच्छति ॥ ३८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अहो मया वृथैवात्मा देहः परितापितः कथं भूतया सङ्केते वासिस्थाने मया साङ्केत्या वृत्तिर्वेसनं यस्यास्तया अत एवातिविगर्ह्या वार्ता वृत्तिर्यस्यास्तया याऽहमर्थतृषः कामलुब्धात् स्वात्मप्रदात् अत एवानुशोच्यात् निन्द्यतयानुचिन्त्यात् वित्तं रतिमिन्द्रियप्रीतिं च तेन स्त्रैणेन क्रीतेन स्वयं विक्रीतेनात्मना देहेनेच्छती ॥ ३२ ॥

---

भाषा टीका ।

पुरुषों के संकेत से जीविका करने वाली वह पिंगला जाने आने वाले पुरुषों को देखकर इससे दूसरा कोई हम को बहुत धन देने वाला आवैगा सो भला होगा ऐसे विचार ती थी ॥ २५ ॥

ऐसी खोटी आशा में उसकी निद्रा मारी गई दरवाजे में ही रह गई कभी भीतर जावे कभी बाहिर आवे ऐसी ही आधीरात उसको बीत गई ॥ २६ ॥

उसके धन की आशा से मुख सूख गया मन उसका दुखी होगया तब चिन्ता के होने से पीछे को सुख देने वाला परम वैराग्य उत्पन्न हुआ ॥ २७ ॥

वैराग्य चित्त होने वाली उस वेश्या का जैसा गीत है सो मेरे से आप सुनो क्योंकि निर्वेद जो है सो पुरुषों के आशा रूपी पाशों के काटने को तरवार सरीका होता है ॥ २८ ॥

हे नृप ! जो विज्ञान रहित पुरुष है सो ममता को नहीं छोड़ता है इसी से विना निर्वेद के भये देह बंधन को छोड़ना नहीं चाहता है ॥ २९ ॥

पिङ्गला उवाच ।

अहो मैं बडी अजितेन्द्रिय हूं मेरे मोहके विस्तार को देखो जिस में मूर्खों ने वसी मोहके वश होकर असत्कांत से धन तथा सुख की कामना करी है ॥ ३० ॥

जो सदा काम पास में रहने वाले रति के देने वाले धन देने वाले इन नित्य रमण परमात्मा को छोड़कर किसी कामना को नहीं देने वाले दुःख भय शोक आधि मनकी चिन्ता मोह इनके देने वाले तुच्छ संसारी मनुष्य को मैं सेवती हूं सो मैं बडी अज्ञानिनी हूं ॥ ३१ ॥

अहो मैंने आज तक अपने शरीर मन को व्यर्थ ही संतापित किया संकेत वृत्ति से अति खोटी मैथुन की बात से रही अर्थ की तृष्णा वाला शोचने योग्य स्त्री लंपट ऐसे पुरुष को अपने शरीर को बेचकर मैंने रति की इच्छा करी है और धन की चाहना करी, है सो मैं बडी मंद भागिनी हूं ॥ ३२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अहो विङ्गलां वाहमतिविभ्रमलिनं भजामीत्याह । यदिति । वंशो नाम स्थूणासु निहितस्तिर्यक् वेणुः वंश्यास्तदिमन्तु भवतो निहिता वेणवः अस्थिभिरेव निर्मिता वंशादयो यस्मिन् तत् तत्र पृष्ठे दीर्घमस्थि यत् स वंशः पार्श्वास्थीनि वंश्यानि स्थूणा हस्तपादास्थीनि तथा त्वचा रोमभिर्नखैश्च पिनद्धं छादितं तथापि क्षरन्ति नव द्वाराणि यस्मिन् तत् एवम्भूतागाररूपं नरशरीरमेतत् मन्मत्तोऽन्या का वा कान्तबुद्ध्या उपैति सेवते ॥ ३३ ॥

सखेदमाह अहो मम मोह इत्याह । विदेहानामिति । याऽहमसती अच्युतादन्यं कामं भोगमिच्छती सा ॥ ३४ ॥

तेनोपकृतमादाय शिरसा ग्राम्यसङ्गताः ।
त्यक्त्वा दुराशाः शरणं व्रजामि तमधीश्वरम् ॥ ३९ ॥
सन्तुष्टा श्रद्दधत्येतद्यथा लाभेन जीवती ।
विहराम्यमुनैवाहमात्मना रमणेन वै ॥ ४० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

सा एवं निर्विण्णा सती अतःपरमेवं करिष्यामीत्याह । सुहृदिति । अयमीश्वरः आत्मनैव आत्मानमेव निवेद्य तं विक्रीय विशेषेण क्रीत्वा अनेनैव सह रमे रमा लक्ष्मीर्यथा ॥ ३५ ॥

अन्यस्यासेव्यत्वं दर्शयति । कियदिति । आद्यन्तवन्तो ये कामा विषयाः कामदा नरा वा देवा वा कालकलिता भार्यायाः कियत् प्रियं कृतवन्तो न किञ्चित् अतो नेहामुत्र च तद्व्यतिरिक्तः कोऽपि सेव्योऽस्तीत्यर्थः ॥ ३६ ॥

एवं निश्चित्य स्वभाग्यमभिनन्दति । नूनमिति । दुष्टा आशा यस्यास्तस्या मे ॥ ३७ ॥

ननु अनाप्तलाभेन क्लिष्टाऽसि कथं विष्णुः प्रीतस्तत्राह । मैवमिति । मन्दभाग्या चेदहं स्यां तर्हीव निर्वेदहेतवः क्लेशा न स्युरित्यर्थः । येन निर्वेदेनानुबन्धं गृहादिकं निहत्य परित्यज्य ॥ ३८ ॥

अतस्तेन श्रीविष्णुनोपकृतं कृतमुपकारं निर्वेदलक्षणम् ग्राम्येषु नरेषु विषयेषु वा सङ्गताः ॥ ३९ ॥

कथं भजसि तदाह । सन्तुष्टेति ॥ ४० ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

मतिवीमसितमतिकुत्सितं यत कुत्सायामिवस्य रूपं तत्र देहपक्षे त्वगादिविवरणादिस्थानीयैः ॥ ३३ ॥

अस्मादिति स्फुरत्या साक्षादिव निर्दिशन्ति अच्युतात् स्वभक्तस्यापि कालभयनिवारकात् तदुक्तं पाद्मे "न च्यवन्ते तु यद्भक्ता महत्यां प्रलयापदि । अतोऽच्युतोऽखिले लोके विष्णुरेव न संशय इति ॥ ३४ ॥

आत्मनैव मूल्यभूतेन तथा चात्मानमेव निवेद्येति व्याख्यातं तमीश्वरं विक्रीय विशेषतः क्रीत्वा मूल्यं नीत्वेत्यर्थः । "अहं भक्तपराधीनः वशे कुर्वन्ति मां भक्त्या सत्स्त्रियः सत्पुरुष" इत्यादि स्मृतिश्रुतेः ॥ ३५ ॥

अनेनैवेत्यवधारणात्कमन्यस्याऽसेव्यत्वमभजनीयत्वम् अतो देवादीनां कालग्रस्तत्वेन प्रियं कर्तुमशक्यत्वात् ॥ ३६ ॥

एवमनन्यस्यासेव्यत्वकथनेनेश्वरस्यैव सेव्यत्वं निश्चित्य केनापि सत्यसङ्कल्पेन तत्र हेतुः यद्यस्मात् ॥ ३७ ॥

मन्दभाग्या चेदहं स्यामित्याशङ्कार्थत्वाद्विरुद्धं इत्युक्तं यथा बुद्धेर्भगवच्छिद्राम ॥ ३८ ॥

अतो विष्णोः प्रीतत्वात् तं कृतोपकारम् ॥ ३९ ॥

एतदुपकरणं श्रद्दधती विश्वसती आत्मना परमप्रेष्ठेन रमयेन कान्तेन ॥ ४० ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

मत मत्तोऽन्या अगारमिति पुरुषशरीरं विवक्षितम् अत्र वंशधारणक्षमं वंशवंश्ये स्थूणा च अस्थिभिर्निर्मितं यस्य तत् अस्थिनिर्मितवंशवंश्यस्थूणम् अस्थीन्येव वंश्ये स्थूणा चेत्यर्थः ॥ ३३—३४ ॥

अस्मात् स्वकान्तात् विक्रीय विशेषाद् क्रीत्वा ॥ ३५ ॥

भार्याया इतिपञ्चमी ॥ ३६—३८ ॥

उपकृतमुपकारः उपकृतं निर्वेदः ग्राम्यसङ्गताः ग्राम्यविषयगोचरा दुराशाः ॥ ३९—४४ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अहो पिङ्गला यतोऽतिजुगुप्सितं भजामीत्याह । यदिति । स्थूणाः स्तम्भा वंशो नाम स्थूणासु निहितस्तिर्यग्वेणुः वंश्यास्तस्मिन्नुभयतो निहिता वेणवः अस्थिभिरेव निर्मिता वंशादयो यस्मिन् तत्र यत्पृष्ठे दीर्घमस्थि स वंशः पार्श्वास्थीनि वंश्याः स्थूणाः पाणिपादास्थीनि इति विवेकः त्वचा चर्मणा लोमभिर्नखैश्च पिनद्धं छादितं तथा स्रवन्ति नव द्वाराणि यस्मिन्स्तदेवं भूतागाररूपं विण्मूत्रपूर्णमेतच्छरीरं मन्मत्तोऽन्या का वा स्त्री कान्तबुद्ध्या उपैति प्राप्नोति भजते इति ॥ ३३ ॥

यत एवमतोऽहमेवास्मिन्पुरे ऽस्मीत्याह । विदेहानामिति । मैथिलानां पुरेऽहमेकैव मूढधीरस्मि व्यक्तं नूनं तत्र हेतुत्वेनात्मानं विशिनष्टि । आत्मारमदादात्मपर्यन्तवदान्यादच्युतादन्यं कान्तमिच्छती अत एवासती दुष्टा ॥ ३४ ॥

इत्थं निर्विद्यात्महितं निश्चिनोति सुहृदित्यादिभिरष्टभिः अयमच्युतः शरीरिणामात्मातएव प्रेष्ठतमः अतिप्रियतमः आत्मा हि निरतिशयप्रियः सुहृद्धितैषी हितकृदित्यर्थः । नाथो नायकश्च अतस्तमेवात्मानमच्युतमात्मना विक्रीयात्मसमर्पणेन स्ववशीकृत्य तेनाच्युतेन रमे यथा रमा लक्ष्मीस्तद्वत् ॥ ३५ ॥

अन्येषामसेव्यत्वं दर्शयति । कियदिति । आद्यन्तवन्तो ये कामाः काम्यन्त इति कामा विषयाः कामदाः नराः देवा वा कालविप्लुताः कालेनोपप्लुतास्ते भजिष्यमाणा भार्यायाः कियत्प्रियं व्यभजन् कृतवन्तो न किञ्चिदतः इहामुत्र च तद्व्यतिरिक्तः कोऽपि सेव्यो नास्तीत्यर्थः ॥ ३६ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

आत्मनस्तदनुग्रहविषयतां सम्भावयति । नूनमिति । केनापि कर्मणाऽज्ञातसुकृतविशेषेण मे मह्यं भगवान् विष्णुर्नून प्रीतः कुतः यद्यस्मात् दुराशाया मे ममायं सुखावहो निर्वेदो जातः तत्प्रसादमन्तरेणेदृशो निर्वेदो दुर्लभ इति भावः ॥ ३७ ॥

तदेवाह । मैवामिति । एवमेवं सति भगवति प्रीते सतीत्यर्थः मन्दभाग्याया मम निर्वेदस्य हेतवः क्लेशाः मास्युर्न स्युरित्यर्थः किं निर्वेदमात्रेणेत्यतस्तं विशिनष्टि । येन निर्वेदेनानुबन्धं देहगेहादिष्वहंममाभिमानरूपं पाशं निर्हृत्य परिहृत्य पुरुषः शमं शान्ति मनःप्रसादमृच्छति प्राप्नोति ॥ ३८ ॥

यत एवमतस्तेन भगवतोपकृतं निर्वेदमिति शेषः तत्कृतोपकाररूपं निर्वेदमित्यर्थः । शिरसादाय धृत्वा ग्राम्यैः सह सङ्गता दुराशाश्च त्यक्त्वा ग्राम्यसङ्गता इति पाठे ग्राम्यविषयगोचराः दुराशास्त्यक्त्वा तमेवाधीश्वरं भगवन्तं प्रजामि सेवे इत्यर्थः ॥ ३९ ॥

किञ्चैवं वर्तिष्ये इत्यभिसन्धत्ते । सन्तुष्टेति । श्रद्दधती श्रद्धां कुर्वती चिकीर्षितविषयत्वरायुक्ता सन्तुष्टा वित्ताद्यलाभप्रयुक्तासन्तोषरहिता यथालाभेन दैवाल्लब्धेन जीवन्त्यहमात्मना तेन रमणेन निरतिशयप्रियेणामुना भगवता सह विहरामि वै नूनम् ॥ ४० ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

यदर्थं ग्राम्यमाकाङ्क्षन्ते तदिदं हीत्याह । यदिति । त्वचा रोमनखैरित्येकं पदं स्थूणाः स्तम्भाः मदन्या कीदृशी एतद्दुःखमगारं गृहमुपैतीत्यन्वयः वंशाः दीर्घदारुविशेषाः वंश्या वंशप्रोतास्तिरश्चीनवेणवः क्षरन्ति स्रवन्ति नव द्वाराणि यस्य तत्तथा अनेनान्यकान्तानां हेयत्वमुक्तं भवति ॥ ३३ ॥

इतोऽपि हेया इति भावेनाह । विदेहानामिति । स्वस्मात्स्वकीयात् स्वस्वामिन इत्यर्थः । अतो जगतः अतोऽन्यस्माद्भिन्नादित्यर्थः । अ निषेधे पुमान् विष्णावपि वादव: यद्वाऽतोऽस्मात्सर्वमनोवृत्तिप्रेरकत्वेन प्रसिद्धात् ॥ ३४ ॥

योऽयं सुहृत्प्रेष्ठानां प्रेष्ठः नाथते ऐश्वर्येण वर्तत इति नाथः शरीरिणामात्मा नियन्ता च तमात्मना मनसैव विक्रीयानेनाच्युतेन सह इयं पिङ्गला सामान्या वेश्या न भवति किन्तु विशिष्टाप्सरःस्वेका अन्यथा मह्या नैतादृशी बुद्धिरुत्पद्येत तदुक्तम्—

> भगवद्भार्यतायोग्याः काश्चिदप्सरसः स्त्रियः ॥
> रमावेशात्कदाचित्स्युस्तास्वेका पिङ्गला भवेत् ।
> तदन्यासां महादोषो भगवद्भर्तृतास्मृताविति ॥

॥ ३५ ॥

लोकसिद्धकान्तत्यागे लोकविलक्षणकान्तस्वीकारे अल्पबुद्धिगोचरकामाभावात्त्वमनवद्यत्वं च निमित्तमित्याह । कियदिति । ते नरा भार्याया मे कियत्प्रियं व्यभजन् विभजेयुरित्यन्वयः तर्हि देवाः कान्ताः सन्तीत्यत आह । देवा इति ॥ ३६ ॥

विश्वबन्धाविध्वंसिनीति भगवति प्रसन्ने किमसुलभमिति भावेनाह । नूनामिति । नूनमिदानीम् ॥ ३७ ॥

समङ्कृतप्रभूतभगवद्भक्तिसुधा पिङ्गला पुनः शब्दादिविषयनिमित्तक्लेशा माभूवन्निति प्रार्थयते । मैवामिति । येन निर्वेदेन संसारबन्धं निर्हृत्य परिहृत्य शमं भगवन्निष्ठालक्षणं सच्चिदानन्दलक्षणं सर्वविलक्षणं ब्रह्म प्राप्नोतीत्यन्वयः । कुतो माभूवन्निति अतो वाह । येनेति । पुरुषोऽनुबन्धं भगवद्भक्तिं निर्हृत्य भस्म कृत्वा शमं शमलं सुखोपरमं नरकमृच्छतीति एतस्मादिति शेषः ॥ ३८ ॥

तन्निष्ठामाह । तेनेति । तेन हरिणा उपकृतमनुगृहीतं निर्वेदं शिरसादाय ग्राम्यसङ्गता दुराशाः त्यक्त्वा ॥ ३९ ॥

एतदत्यन्तं श्रद्दधती श्रद्दधाना ॥ ४० ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

आत्मना मूल्यभूतेन विशेषतः क्रीत्वा ॥ ३५—४० ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अहो अतिबीभत्सं विष्ठागृहमेवाहं शृङ्गाररसं सम्भोग्यमविदमित्याह । यदगारम् अस्थिभिरेव निर्मितो वंशो वंश्याः स्थूणाश्च यस्मिंस्तत् तत्र पृष्ठे दीर्घमस्थि यत् स वंशः पार्श्वास्थीनि वंश्यानि हस्तपादास्थीनि स्थूणाः मत् मत्तोऽन्या का उपैति ॥ ३३ ॥

या अहमसती अच्युतादस्मात् सतृष्णा आत्मप्रदात्वल्पं पुरुषं कामं भोगमिच्छन्ती याचमाना ॥ ३४ ॥

तर्हि किमतः परं चिकिर्षसीति चेदेवं करोमीत्याह । सुहृदिति । आत्मना स्वदेहेनानेन दत्तेन तं विशेषेण क्रीत्वा अहं प्राप्तेन तेन प्रेष्ठतमेन सह रमे ॥ ३५ ॥

ये कामा विषयाः ये कामदा वा नराः देवाः ते सर्वे आद्यन्तवन्तः कालेनैव विद्रुताः अतो भार्यायाः कियत् प्रियं व्यदजन् कृतवन्तः न किञ्चित् अत इहामुत्र च तद्व्यतिरिक्तः कोऽपि मया न सेव्य इति भावः ॥ ३६ ॥

एवं निश्चित्य स्वभाग्यमभिनन्दति । नूनमिति । केनापि । कर्मणेति भो विरक्तवर्द्द ! कृपया मद्य मद्भक्त्यामेव सफलीकुरु मत्रे- वाक्स्व शेख किञ्चिद्दुग्धं पिब चेति यदृच्छयैवागतं भिक्षाप्रियमुक्त्वा तत्स्थानसंस्कारमार्जनलेपादिकं सायं काले तया कृतमिति प्राञ्चः ॥ ३७ ॥

ननु धनाप्राप्त्या क्लिश्यसि कथन्ते विष्णुः प्रीतस्तत्राह । मैवामिति । म यदि मे विष्णुर्न प्रीतस्तदा मन्दभाग्याया वेश्यायाः क्लेशा निर्वेदहेतवो न स्युः येन निर्वेदेन अनुबन्धं गृहादिकं निर्हृत्य परित्यज्य ॥ ३८ ॥

अतस्तेन विष्णुना उपकृतं कृतमुपकारमिमं निर्वेदमत्यां शिरसा गृहीत्वा ग्राम्येषु विषयेषु सङ्गताप्यहम् ॥ ३९ ॥

शरणं गता सती कीदृशी शुश्रूषसीत्यत आह । सन्तुष्टेति । एतत् श्रद्दधती विश्वसती एतदेव किं तत्राह । विहरामीति ॥ ४० ॥

---

संसारकूपे पतितं विषयैर्मुषितेक्षणम् ।
ग्रस्तं कालाहिनाऽऽत्मानं कोऽन्यस्त्रातुमधीश्वरः ॥ ४१ ॥
आत्मैव ह्यात्मनो गोप्ता निर्विद्येत यदाऽखिलात् ।
अप्रमत्त इदं पश्येद्ग्रस्तं कालाहिना जगत् ॥ ४२ ॥

ब्राह्मण उवाच ।

एवं व्यवसितमतिर्दुराशां कान्ततर्षजाम् ।
छित्त्वोपशममास्थाय शय्यामुपविवेश सा ॥ ४३ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

मत्तोऽन्या यदेतत्पुरुषाकारमगारं कर्मफलभोगायतनं कान्तबुद्ध्या का उपैति सेवते कथंभूतम् वंशः स्थूणास्वर्पितस्तिर्यग्वेणुः वंशा उभयतस्तस्मिन्नर्पिता वेणवः स्थूणाः स्तम्भापरपर्यायाः शरीरे हस्तपादाख्या अस्थिभिर्निर्मिताः वंशादयो यस्मिंस्तत् त्वचा रोमनखैः पिनद्धमाच्छादितम् स्रवन्ति नव द्वाराणि यस्मिन् तत् विण्मूत्रपूर्णमिति भावः ॥ ३३ ॥

अच्युतात् अन्यं कामभोगमिच्छती याहं सा विमूढधीरेकैव॥३४॥

एवं संसाराद्विरक्ता भगवत्यनुरक्तात: परम्भगवानेवाराधनीय इत्याह । सुहृदिति । अयं बुद्धिप्रेरकत्वादिना अपरोक्षीकृतः शरीरिणां जीवानामात्मा सत्ताप्रदः नाथः ऐश्वर्यप्रदः सुहृत्सर्वदानुकूलः अतएव प्रेष्ठतमः निरतिशयसुखप्रदः ममापि शरीरित्वाविशेषेणायं ध्यात्मत्वादिना प्रेष्ठतमत्वयाराधनीय इति भावः आराधनप्रकारमाह । आत्मना स्वात्मनार्पितेन तं भगवन्तं विक्रीय वशीकृत्य रमा यथा तद्वदनेन रमे ॥ ३५ ॥

स्वाभवतः प्राप्तापत्यादयोऽपि तद्व्यतिरिक्ताः सर्वे हेया इत्याशयेनाह । कियदिति । कालविद्रुता देवाः तदनुग्रहलब्धा आद्यन्तवन्तो नराः पत्याद्याश्च तत्सङ्गलब्धाः कामा विषयाश्च भार्याया: कियत्प्रियं व्यभजन् दत्तवन्तः न किमपीत्यर्थः । अतस्ते न सेव्या इति फलितोऽर्थः ॥ ३६ ॥

आकस्मिकविवेकोत्पत्तौ हेतुमाह । नूनमिति । केनापि कर्मणा निमित्तभूतेन भगवान् प्रीतः यत् येन बुद्धिप्रेरकेण भगवता हेतुभूतेन दुष्टा आशा यस्यास्तस्या अपमत्यकृतः सर्वक्लेशहरः सुखावहो निर्वेदो जातः ॥ ३७ ॥

केनापि कर्मणा प्रीत इत्यत्र गमकमाह । मैवमिति । मन्दभाग्यायाः तादृशकर्मवर्जितायाः क्लेशाः भवन्त्येव एवं निर्वेदहेतवस्तु मा स्युः न भवन्ति येन निर्वेदेनानुबन्धं गृहादिकम् निहत्य समं भगवन्तमृच्छति किञ्चिन्मम साधु कर्मास्ति येन भगवान् प्रसन्नो निर्वेदं दत्तवान् इति भावः ॥ ३८ ॥

तेन भगवता उपकृतमुपकारं निर्वेदलक्षणं शिरसा आदाय ग्राम्यसङ्गताः ग्राम्येषु विषयेषु प्रविष्टाः दुराशाः त्यक्त्वा तमेव शरणं व्रजामि ॥ ३९ ॥

तदनन्तरकृत्यमाह । सन्तुष्टेति । अधीश्वरशरणागतिरेव परमपुरुषार्थः इत्येतत् श्रद्दधती सती आत्मना सर्वसत्ताप्रदेनामुनोपकर्त्री ॥ ४० ॥

भाषा टीका ।

बड़े छोटे बांसों से बना हुआ खंभों वाला घर जैसे होता है तैसे एक बडी बीच की पीठ में सीधी हड्डी और बगल में बहुत छोटी हड्डीयां हाथ पैर इनों से रचित यह शरीररूप फूंस का घर है चमडी रोम नख इन्हों से बधा है इंद्रिय रूपी नौ दरवाजे इसमें बह रहे हैं विष्ठा मूत्र से भरा है ऐसे इस शरीर को मेरे बिना दूसरी कौन भजैगी तिससे मैं बडी अधम हूं ॥ ३३ ॥

इन विदेहों के पुर मे मैंहीं एक मूर्ख बुद्धि वाली हूं जो कि मैं सब कामनाओं के देने वाले इन अच्युत भगवान् को छोड कर दूसरे पुरुष से काम सुख चाहती हूं सो असती हूं ॥ ३४ ॥

यह भगवान् तो मेरे सुहृत् हैं प्रियहैं सब प्राणियों के अन्तर्यामी हैं उन ही को मैं अपने आत्मा को बेच कर जैसे लक्ष्मी जी तैसे इन के साथ रमण करूंगी ॥ ३५ ॥

जिन को कि मैंने कामना देने वाले मान रखा है वे कामना देने वाले भार्या के क्या काम दे सकते हैं अथवा काल के मारे जो देवता सो भी क्या दे सकते हैं ॥ ३६ ॥

यह बात निश्चित है कि मेरे ऊपर विष्णु भगवान् किसी पुण्य कर्मसे प्रसन्न भये हैं जिससे कि खोटी आशा वाली मेरे को भी ऐसा सुख देने वाला वैराग्य भया है ॥ ३७ ॥

जो मन्द भागिनी होगी उसको तो ऐसे वैराग्य के हेतु क्लेश कभी नहीं होंगे जिस से सब संसार संबंधों को छोड कर पुरुष शांति को प्राप्त हो जाता है ॥ ३८ ॥

अब मैं उन परमात्मा के उपकार को मस्तक से ग्रहण कर के ग्रामीण भोगों की दुराशाओं को छोड कर उन्ही अधीश्वर के शरण जाऊंगी ॥ ३९ ॥

इसी बात से सन्तुष्ट हो कर जो कुछ मिल जाय तिसी से जीती हुई अपने आत्मा रमण इन्ही भगवान् के साथ रमण करूंगी ॥ ४० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

ननु ब्रह्मादीन् हित्वा अमुनैवेति कोऽयं नियमस्तत्राऽऽह । संसारेति । मुषितेक्षणमपहृतविवेकम् ॥ ४१ ॥

आशा हि परमं दुःखं नैराश्यं परमं सुखम् ।
यथा सञ्छिद्य कान्ताशां सुखं सुष्वाप पिङ्गला ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
वैयासिक्याम् एकादशस्कन्धे
अष्टमोऽध्यायः ॥ ८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

तर्हि किमात्मत्राणोपाधिना त्वं भजिष्यसि न तत्र सर्वतो निर्विद्य भगवद्भजने प्रवृत्तस्याऽऽत्मन एव समर्थत्वादित्याह । आत्मैवेति । यदा एवं जगत्पश्येत्ततश्चाप्रमत्तः सन्निखिलाद्विहामुत्र च भोगान्निर्विद्येत तदा ह्यात्मनैवाऽऽत्मनो गोप्तेत्यन्वयः अतः केवलं प्रेम्णैव भजामीति भावः ॥ ४२ ॥

कान्तस्य तर्षोऽभिलाषस्ततो जातम् ॥ ४३ ॥

फलितमाह । आशाहीति ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
अष्टमोऽध्यायः ॥ ८ ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

कोऽन्यस्त्रातुमधीश्वरः न कोऽपि तस्माद्ब्रह्मादीनां त्रातुमनीश्वरत्वात् पतित्वं न सङ्गच्छते इत्यमुनैवेत्युक्तम् ॥ ४१ ॥

तर्हीत्यादि । शङ्कासमाधानाभासः तत्र आत्मत्राणे एवं कालाहिग्रस्तं ततश्च तादृशज्ञानानन्तरम् अतः आत्मत्राणानपेक्षत्वात् ॥ ४२ ॥

उपशमं सुखेः श्रीकृष्णकान्तैकनिष्ठारूपं रागं तथा चास्या रागरूपा भक्तिर्न तु वैधीति सूचितं साधनानुष्ठानमन्तरैव रमेऽनेन यथा रमेणि प्रेममयतृष्णाया एव दर्शितत्वात् रागरूपाभक्तेर्लक्षणं "इष्टे स्वारसिकी रागः परमाविष्टता भवेत् तन्मयी या भवेद्भक्तिः सात्र रागात्मिकोदिता" इति इष्टे स्वानुकूलविषये स्वारसिकी स्वाभाविकी या परमाविष्टता तद्धेतुः प्रेममयी तृष्णा स रागो भवेत् तन्मयी तदेकप्रेरिता वा श्रवणमननादिरूपा भक्तिः सा रागरूपेत्युच्यत इत्यर्थः ॥ ४३ ॥

सुष्वाप भगवदेकाश्रयणेन निर्वृता बभूवेत्यर्थः ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीराधारमणदासगोस्वामिकृतदीपिकादीपने टिप्पणी
अष्टमोऽध्यायः ॥ ८ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

इति श्रीमद्भागवतव्याख्याने एकादशस्कन्धीये
श्रीसुदर्शनसूरिकृतशुकपक्षीये
अष्टमोऽध्यायः ॥ ८ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ननु सन्तु ब्रह्मादयस्त्वमुनैवेति किमर्थं विचारणेत्याशङ्क्याह । संसारेति । मुषितेक्षणमुपहृतविवेकं काल एवाहिस्तेन ग्रस्तं चात्मानं मां त्रातुमन्यः परमपुरुषादितरः को वाऽधीश्वरः समर्थः न कोऽपीत्यर्थः ॥ ४१ ॥

तदेवाह । आत्मेति । यदाऽखिलाद्विषयान्निर्विद्यताऽप्रमत्तोऽवहितः कृत्स्नमिदं जगत्कालाहिना ग्रस्तं च पश्येत्तदा तस्य तथा द्रष्टुर्निर्विद्यमानस्यात्मनः पुंसः गोप्ता आत्मैव परमात्मैव नान्य इत्यर्थः ॥ ४२ ॥

एवमिति । एवमित्थं व्यवसिता निश्चिता मतिर्यया सा कान्ते तर्षोऽभिलाषः तत्प्रभवां दुराशां परित्यज्येत्यध्याहारः चित्तोपशमं चित्तशान्तिमाश्रित्य सम्पाद्येति यावत् शय्यामुपविवेश ॥ ४३ ॥

फलितमाह । आशाहीति । यथाशब्दो नैराश्याशयोः सुखदुःखावहत्वे दृष्टान्तप्रदर्शनपरः ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
अष्टमोऽध्यायः ॥ ८ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अस्मादन्यः कः आत्मानं त्रातुं मुषितेक्षणं नष्टज्ञानम् ॥ ४१ ॥

आत्मनः स्वस्य गोप्ता आत्मा परमात्मैव यदाखिलान्निर्विद्येत तदेतज्जगत्कालाहिना ग्रस्तं पश्येत् ॥ ४२ ॥

कान्ततर्षजाः कान्ततृष्णाजाताः ॥ ४३ ॥

इममितिहासं श्लाघयति । आशेति ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
अष्टमोऽध्यायः ॥ ८ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तमेव शरणं यामीत्यत्र हेतुः संसारेति ॥ ४१ ॥

आत्मा परमात्मा आत्मनो जीवस्य अखिलात् परमात्मव्यतिरिक्तात् निर्वेदे हेतुः अप्रमत्त इति ॥ ४२—४३ ॥

सुष्वाप भगवदेकाश्रयेण निर्वृत्ता बभूवेत्यर्थः ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
अष्टमोऽध्यायः ॥ ८ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ननु ब्रह्मादीन् हित्वा अमुनैवेति कोऽयमाग्रहस्तत्राह । संसारेति ॥ ४१ ॥

तर्हि किमात्मत्राणोपायं विना अजिरुयसीति तत्र नेत्याह । आत्मैवेति । यदा ह्यात्मा अखिलाद्भोगाभिनिर्विद्येत तत्र हेतुः इदं जगत् कालाहिना ग्रस्तं पश्येत् तदा आत्मैव आत्मनः स्वस्य गोप्ता रक्षिता भवेत् ममात्मा च सम्प्रत्येतादृश एवाभूत्ताऽहं स्वत एव निस्तीर्णसंसारा अभूमैव तेनातः परं केवलं प्रेम्णैव तं भजिष्ये इति भावः ॥ ४२ ॥ ४३ ॥ ४४ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
एकादशे ऽष्टमोऽध्यायः सङ्गतः सङ्गतः सताम् ॥ ८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तद्गत्यो रहिता नास्तीत्याह । संसारेति । मुषितेक्षणं मायावृतचक्षुषम् ॥ ४१ ॥

यदा अखिलात् ऐहिकामुष्मिकाद्विषयान्निर्विद्येत अप्रमत्तः सावधानः भगवदाराधने इति शेषः । कालाहिना इदं सर्वं जगत् ग्रस्तं च पश्येत् तदा आत्मनः एवं प्रवृत्तस्य जीवस्य आत्मा परमात्मैव गोप्ता नान्य इत्यर्थः ॥ ४२ ॥

कान्ततर्षजां प्रियजनाभिलाषोद्भवाम् ॥ ४३ ॥

निष्कर्षमाह । आशाहीति ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
अष्टमाध्यायार्थप्रकाशः ॥ ८ ॥

---

भाषा टीका ।

बिना इन नारायण के दूसरा कोई ऐसा नहीं है जो की संसार कूप मे पडे हुवे विषयों से नष्ट ज्ञानवाले काल रूप सर्प से ग्रसित आत्मा को छुटा सके ॥ ४१ ॥

जब सब बात से विरक्त होजावे तब अपने आत्मा का आप ही रक्षा करने वाला होजाता है तिससे सावधान होकर काल रूप सर्प से ग्रसित इस जगत्को देखे ॥ ४२ ॥

ब्राह्मण उवाच ।

पिंगला इस प्रकार से निश्चय करके पतियों की तृष्णा की दुराशा को छेदन करके शांति को प्राप्त होकर सो गई ॥ ४३ ॥

आशा परम दुख दायक है वैराग्य ही परमसुख दायक है जैसे कि कांत की आशा को छोडकर पिंगला वेश्या सुख पूर्वक सो गई ॥ ४४ ॥

इति श्रीमद्भागवत एकादशस्कन्ध में अष्टमाध्याय
श्रीवृन्दावनस्थ पं० भागवताचार्यकृत
भाषा टीका समाप्त ॥ ८ ॥

---

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे अष्टमोऽध्यायः ॥ ८ ॥

—:*:—

## अथ नवमोऽध्यायः ।

——:*:——

ब्राह्मण उवाच ।

परिग्रहो हि दुःखाय यद्यत्प्रियतमं नृणाम् ।
अनन्तं सुखमाप्नोति तद्विद्वान् यस्त्वकिञ्चनः ॥ १ ॥
सामिषं कुररं जघ्नुर्बलिनो ये निरामिषाः ।
तदामिषं परित्यज्य स सुखं समविन्दत ॥ २ ॥
न मे मानावमानौ स्तो न चिन्ता गेहपुत्रिणाम् ।
आत्मक्रीड आत्मरतिर्विचरामीह बालवत् ॥ ३ ॥
द्वावेव चिन्तया मुक्तौ परमानन्द आप्लुतौ ।
यो विमुग्धो जडो बालो यो गुणेभ्यः परङ्गतः ॥ ४ ॥
क्वचित्कुमारी त्वात्मानं वृणानान् गृहमागतान् ।
स्वयं तानर्हयामास क्वापि यातेषु बन्धुषु ॥ ५ ॥
तेषामभ्यवहारार्थं शालीन् रहसि *पार्थिव ! ।
अवघ्नन्त्याः प्रकोष्ठस्थाश्चक्रुः शङ्खाः स्वनं महत् ॥ ६ ॥
सा तज्जुगुप्सितं मत्वा महती व्रीडिता ततः ।
बभञ्जैकैकशः शङ्खान् द्वौ द्वौ पाण्योरशेषयत् ॥ ७ ॥
उभयोरप्यभूद्घोषो ह्यवघ्नन्त्याः स्म शङ्खयोः ।
तत्राप्येकं निरभिददेकस्मान्नाभवद्ध्वनिः ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

नवमे कुररादिभ्यो देहतश्चोपशिक्षितम् ॥
श्रुत्वा यदुः कृतार्थोऽभूदिति कृष्णेन वर्णितम् ।

कुरराच्छिक्षितमाह । परिग्रहो हीति । यद्यत्प्रियतमं तस्य तस्य परिग्रहः तद्विद्वान् परिग्रहो दुःखमिति विद्वान् सन् यस्त्वकिञ्चनस्त्यक्तपरिग्रहो न तु दरिद्रः ॥ १ ॥

तदाह । सामिषमिति ॥ २ ॥

अर्भकशिक्षामाह । नेति । गेहपुत्रिणां तद्वतां या भवति चिन्ता सा च मे नास्ति आत्मनैव क्रीडा यस्य आत्मनि रतिः प्रीतिर्यस्य सः ॥ ३ ॥

ननु बालसर्वज्ञयोः किं सादृश्यं नैश्चिन्त्यं परमसुखमित्याह । द्वाविति । विमुग्धोऽज्ञः जडोऽनुद्यमः एवं भूतो यो बालो यश्च प्रकृतेः परमीश्वरं प्राप्तस्तौ द्वौ ॥ ४ ॥

कुमार्याः शिक्षितं वक्तुमाख्यायिकामाह । क्वचिदित्यादिना वृणानान्स्ववरणायाऽऽगतान् बन्धुषु पित्रादिषु ॥ ५ ॥

शङ्खाः शङ्खवलयाः महद्यथा भवति तथा स्वनं चक्रुः ॥ ६ ॥

सा महती बुद्धिमती तत्स्वयं शाल्यवहननम् जुगुप्सितं दरिद्रताद्योतकम् एकैकशः क्रमेणैकैकमकरोत्भङ्गं स्वकरादपसारितवती ॥ ७ ॥

निरभिदत्पृथक्कृतवती ॥ ८ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

प्रियतमं धनवस्त्रादिकं तस्य सङ्ग्रहो दुःखाय भवति ॥ १ ॥

तदाह सङ्ग्रहतत्त्यागयोः दुःखसुखहेतुत्वमाह बलिनो यदा जघ्नुस्तदा स कुररः ॥ २ ॥

* हयदीति विजय० पाठः ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी।

आत्मनैव क्रीडासाधनेन द्वादशलक्षणविचारात्मिका क्रीडा यस्य सः आत्मनि स्वस्वरूपे रतिस्तुष्टिर्यस्य स तथा इह जगति ॥३॥

गुणानां प्रकृतिरूपत्वात् प्रकृतेरिति व्याख्यातम् ॥ ४ ॥

स्ववरणाय स्वस्या कन्याया वरणं कर्तुम् ॥ ५

अर्हणमेवाह। तेषामिति। समग्रशङ्खानां प्रकोष्ठस्थत्वायोगात् मुख्यार्थबाधः कार्यकारणलक्षणो योगस्तथा रूढिश्चेति शङ्खशब्दस्य वलये लक्षणा स्वनशब्दस्य पुंस्त्वेन महदिति न तद्विशेषणमतः क्रियाविशेषणतया व्याख्यातम् ॥ ६ ॥

मत्वेति। पाण्यर्पणादौ तद्धस्तस्थवलयानां तैर्हृष्टत्वात् तच्छब्दं विना विघातमात्रशब्दस्यान्यकर्तृकत्वेनापि सम्भाव्यत्वादेकैकशो बभञ्ज। भञ्जने सौभाग्यच्युतः अपसारितवतीति व्याख्यातं धातूनामनेकार्थत्वात् ॥ ७ ॥

तत्रापि शङ्खद्वयमध्येऽपि एकस्माच्छङ्खवलयात् ॥ ८ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

॥ १—३ ॥

गुणेभ्यः परङ्गतः त्रिगुणातीतः ॥ ४—१५ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथ कुररात्परिग्रहापरिग्रहयोर्दुःखसुखहेतुत्वं शिक्षणीयमित्याह। परिग्रह इति। नृणां यदतिप्रियतमं वस्तु तस्य परिग्रहः अतिदुःखाय भवति यस्तु तत्परिग्रहस्यातिदुःखहेतुत्वं विद्वान् जानन्नकिञ्चनो निष्परिग्रहः स्यात्सोऽनन्तं सुखमाप्नोति ॥ १ ॥

तथाहि। सामिषमिति। सामिषं परिगृहीतामिषमुखं कुररमुत्क्रोशाख्यं पक्षिविशेषमन्ये निरामिषा बलिनः बलीयांसः श्येनगृध्रादयः जघ्नुः सः कुररः सुखं समविन्दत प्राप ॥ २ ॥

अथार्भकाच्छिक्षितमाह। नम इति। मे मम मानापमानौ न स्तः गेहपुत्रिणां तद्वतां या चिन्ता भवति सा च मे नास्ति किन्त्वात्मनैव सह क्रीडा यस्य सः आत्मन्येव रतिः प्रीतिर्यस्य सः इह लोके विचरामि बालवत् यथा बालो मानापमानचिन्तारहितश्चरति तद्वदित्यर्थः। आत्मशब्दः परमात्मपरः ॥ ३ ॥

मानाद्यभावे बालदृष्टान्तः नत्वात्मक्रीडत्वात्मरतित्वयोरपीत्यभिप्रेत्य दृष्टान्तदार्ष्टान्तिकयोर्विवक्षितं साधर्म्यमाह। द्वावेवेति। चिन्ताशब्दो मानापमानयोरप्युपलक्षकः परमानन्दे आप्लुतौ मग्नौ कौ च तावित्यत आह। य इति। विमुग्धो जड इति च बालस्य विशेषणं विमुग्धो मूढः मानावमानानभिज्ञः जडः अनुद्यमः देहादिपोषणचिन्ताप्रयुक्तोद्यमरहित इत्यर्थः। यश्च गुणेभ्यः परं गतः। त्रिगुणातीतः परमात्मसाक्षात्कर्ता ॥ ४ ॥

अथ कुमार्याः शिक्षितं वक्तुमाख्यायिकामाह। कचिदित्यादिना इव कङ्कण इत्यन्तेन। वृणानान्। "लक्षणहेत्वोरि"ति शानच् वरितुमित्यर्थः। गृहं प्रत्यागतान्वीक्ष्येत्यध्याहारः तान्स्वयमेवार्हयामासातिथ्येन सत्कारयामास। स्वयमेवेत्यत्र हेतुः बन्धुषु क्वापि यातेषु सत्सु इति बन्धवोऽत्र मात्रादयः ॥ ५ ॥

तेषामागतानामभ्यवहारार्थं भोजनार्थं हे पार्थिव! रहसि एकान्ते शालीन् तण्डुलान् अवघ्नन्त्याः प्रकोष्ठस्थाः शङ्खाः शङ्खवलयाः सुमहद्यथा भवति तथा स्वनं ध्वनिं चक्रुः ॥ ६ ॥

सेति। कुमारी महती बुद्धिमती तच्छालयवहननं जुगुप्सितं मत्वाऽहो इयं स्वयमेवावहन्ति किमस्याः बन्धवो न सन्ति नूनमियं दरिद्रेति मन्येरन्निति बुद्ध्या तदवहननमननुरूपं मत्वा इत्यर्थः। अत एव ततो व्रीडिता च एकैकशः क्रमेणैकैकशङ्खं बभञ्ज कराद्व्यपसारितवती द्वौ द्वौ तु शङ्खौ पाण्योरशेषयत् ॥ ७ ॥

ततः पुनरवघ्नन्त्याः शङ्खयोर्द्वयोरपि घोषोऽभवत्ततः तत्रापि उभयोरप्येकमेकं निरभिदत्पृथक् कृतवती तदैकैकस्माच्छङ्खात् ध्वनिर्नाभवत् ॥ ८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तिरश्चीनात्कुररारूयखगात्किंविशिष्टं ज्ञानं शिक्षितमत्राह। परिग्रह इति। नृणां प्रियतमं यद्वित्तं तस्य परिग्रहः तस्य वित्तस्यान्ततो नाशाद्दुःखाय भवति ॥ १ ॥

ततः किं फलितमत्राह। तदिति। तत्तस्मात् यो विद्वान् सोऽकिंचनो भवेदिममर्थं चिन्हीकरोति। सामिषमिति ॥ २ ॥

तज्ज्ञानफलमाह। नम इति। इह पुत्रवतां या विशेषणादिचिन्ता सापि नास्ति ॥ ३ ॥

ननु तर्हि कीदृशस्य चिन्ता नास्तीत्यत्राह। द्वाविति। गुणेभ्यः सत्त्वादिभ्यः परं विलक्षणमीश्वरं मतो ज्ञाता परमात्मगुणामृतमनुभवन्नित्यर्थः ॥ ४ ॥

कुमार्याः शिक्षितज्ञानमाह। कचिदिति। वृण्वानान्वरणेच्छून् अर्हणमभ्यागतपूजनम् ॥ ५ ॥

शालीन् कलमान् इषादि व्रीहिकुट्टणपाषाणे "शालयः कलमाद्याश्च षष्टिकाद्याश्च पुंस्यमी"त्यमरः यथा महत्परिमाणं भवति तथा स्वनं चक्रुरिति क्रियाविशेषणम् ॥ ६ ॥

महती विवाहोत्सवे वर्तमाना तद्योग्येत्यर्थः। अभ्यागतसमये व्रीहिताडनं दारिद्र्यसूचकमिति व्रीडिता लज्जिता ॥ ७ ॥

घोषो अवघ्नन्त्या इत्यत्राधिकार्यैणाभ्यासगतैः शङ्खस्वनो न श्रुत इति सूच्यते सन्धिश्च विवक्षावशात् क्रियत इति वैयाकरणैरुक्तत्वाच्च। निरभिनत् निरभिदत् ॥ ८ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

॥ १—६ ॥

सा तज्जुगुप्सितमिति पाण्यर्पणादौ तद्धस्तस्थितशङ्खवलयानां तैर्दृष्टत्वात् तच्छब्दं विना विघातमात्रशब्दस्यान्यकर्तृकत्वेन सम्भाव्यत्वाच्च ॥ ७—१३ ॥

---

अन्वशिक्षमिमं तस्या उपदेशमरिन्दम ! ।
लोकाननुचरन्नेताँल्लोकतत्त्वविवित्सया ॥ ९ ॥
वासे बहूनां कलहो भवेद्वार्ता द्वयोरपि ।
एक एव चरेत्तस्मात्कुमार्या इव कङ्कणः ॥ १०

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

नवमे सप्त गुरवः कुरराद्याः प्रकीर्तिताः ।
देहोऽष्टमस्तदेवं स्युर्गुरवः पञ्चविंशतिः ॥

कुरराच्छिक्षितमाह । परिग्रह इति द्वाभ्याम् । यत् यत्प्रियतमं वस्तु तस्य तस्य परिग्रहः तत्तस्मात् यस्त्वकिञ्चनो निस्पृहः स एव विद्वान् अनन्तं सुखमाप्नोति ॥ १ ॥

तदाह । सामिषं मांसग्राहिणं स कुररः ॥ २ ॥

बालकाच्छिक्षितमाह । नेति ॥ ३ ॥ ४ ॥

कुमार्याः शिक्षितमाह तदाख्यानेन । क्वचिदिति । अर्हयामास आगतसर्वांश्चैव गृहागिष्कुश्च दर्भासनजलादिभिरातिथ्यं चक्रे बन्धुषु पितृमात्रादिषु ॥ ५ ॥

कदा ते आयास्यन्ति कदा तण्डुलान् करिष्यन्तीति मनसि कुर्वत्यास्तस्याश्चेष्टितमाह । तेषामिति । शङ्खाः शङ्खवलयाः ॥ ६ ॥

तत् शाल्यवहननं दारिद्र्यद्योतकत्वात् जुगुप्सितम् महती बुद्धिमती ॥ ७ ॥ ८ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

नवमेऽध्याये सप्तभ्यः कुररादिभ्यः स्वदेहतश्च शिक्षितमवधूतेनोक्तं तच्छ्रुत्वा श्रीयदुः कृतार्थो जात इति निरूप्यते । तत्रादौ कुराच्छिक्षितमाह । परिग्रह इति द्वाभ्याम् । यद्यत्प्रियतमं तस्य तस्य परिग्रहः संग्रहः दुःखाय भवति तद्विद्वान् परिग्रहो दुःखायेति विद्वान् सन् योऽकिञ्चनः विद्वानकिञ्चनो द्विविधः त्यक्तपरिग्रहो दरिद्रश्च स द्विविधोऽपि अनन्तं मोक्षाख्यं सुखमाप्नोति तुशब्दादविदुषो ऽकिञ्चनस्य व्यावृत्तिः ॥ १ ॥

तदेवाह । सामिषमिति । परिग्रहत्यागेन लब्धलौकिकसुखात्कुररात्परिग्रहत्यागेन मोक्षलक्षणं सुखं भवतीति शिक्षितमिति फलितोऽर्थः ॥ २ ॥

अर्भकाच्छिक्षितमाह । न म इति द्वाभ्याम् । गेहपुत्रिणां मानापमानौ स्तः चिन्ता चास्ति बालवन्निरभिमानिनो मे न अतः आत्मनि परमात्मनि क्रीडा यस्य आत्मनि तस्मिन्नेव रतिरनुरक्तिर्यस्य सोऽहमिह भूतले विचरामि ॥ ३ ॥

विमुग्धः विशेषतोऽप्रगल्भः जडः अनुद्भूतबोधः एवं विधो यो बालः यश्च गुणेभ्यः प्राकृतेभ्यः परं परमेश्वरं प्राप्तस्तौ द्वौ चिन्तया मुक्तौ अत एव परमानन्दे आप्लुतौ भवतः बालः स्वात्मवशत्वात् परंगतः परस्वरूपाभिमानी आनन्दे निमग्नः इति विवेकः ॥ ४ ॥

कुमार्याः शिक्षितं वक्तुं तद्वृत्तमाह । क्वचिदित्यादिना । बन्धुषु पित्रादिषु क्वापि आवश्यककार्यवशाद्गतेषु सत्सु आत्मानं वृणानान् स्वयं वरणायागतान् स्वयमर्हयामास पूजयामास ॥ ५ ॥

तदेवाह । तेषामिति । शङ्खाः वलयरूपाः महत् यथा स्यात्तथा स्वनं शब्दं चक्रुः ॥ ६ ॥

सा महती वाद्यादिभिर्निन्द्यं परिचर्यमाणाऽऽत्मतत्स्वयं शाल्यवहननं जुगुप्सितं मत्वा व्रीडिता सती एकैकशः क्रमेणैकमेकं वभञ्ज पाणिभ्यामपसारितवती ॥ ७ ॥

तत्र तयोर्मध्ये एकं निरभिदत् अपसारितवती ॥ ८—९ ॥

---

### भाषा टीका ।

जो जो पदार्थ प्रिय हैं तिन का संग्रह करना मनुष्यों को बडा दुखदाई है जो इस बात को जानकर अकिंचन होकर रहता है सो अनन्त सुख को प्राप्त होता है ॥ १ ॥

एक कुरर पक्षी मांस को ले जाता था उस के पीछे बहुत पक्षी पडके उसको मारने लगे जब उसने उस मांस को छोड दिया तब वह उस आफत से छूट गया ॥ २ ॥

मेरे कोई मान अपमान का विचार नहीं है और घर वाले पुत्रों वालों की चिंता भी नहीं है तब आत्मा ही मे क्रीडा करके आत्मा ही में रति को करके मैं विचरता हूं यह गुण बालक को देखकर सीखा है ॥ ३ ॥

दो ही पुरुष चिंता से अलग रहते हैं औ परम आनन्द में मग्न रहते हैं जो विशेष अज्ञानी है जड है बाल है और जो बुद्धि के पार परमात्मा को प्राप्त होगया है ॥ ४ ॥

कोई कुमारी स्त्री थी उसके घर के सब किसी जगे चले गये थे उसी वखत कोई उसके वरण करने के प्रसंग में आये थे तब उस कुमारी ने उनका सत्कार किया ॥ ५ ॥

हे राजन् ! उनके भोजन के वास्ते एकांत में उसने धान कूटने चाहे तब उसके दोनों हाथों के शंख के कंकण बजने लगे ॥ ६ ॥

उसने उस बाजने को बुरा समुझ कर बुद्धिमती होने से लज्जा किया तब एक एक कंकण को उसने निकाल दिये दोनों हाथों में दो दो बाकी छोड़ दिये ॥ ७ ॥

दो दो के रहने से भी कूटते समय मे फिर दोनों का शब्द होने लगा तब तिन मैं भी एक एक निकाले फिर जब एकही एक रह गये तब शब्द नहीं भया ॥ ८ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

ननु कुमार्यास्त्वया वा कथं सङ्गस्त्यक्तस्तत्राऽऽह । लोकानिति ॥ ९ ॥

मन एकत्र संयुञ्ज्याज्जितश्वासो जितासनः ।
वैराग्याभ्यासयोगेन ध्रियमाणमतन्द्रितः ॥ ११ ॥
यस्मिन्मनो लब्धपदं यदेतच्छनैः शनैर्मुञ्चति कर्मरेणून् ।
सत्त्वेन वृद्धेन रजस्तमश्च विधूय निर्वाणमुपैत्यनिन्धनम् ॥ १२ ॥
तदैवमात्मन्यवरुद्धचित्तो न वेद किञ्चिद्बहिरन्तरं वा ।
यथेषुकारो नृपतिं व्रजन्तमिषौ गतात्मा न ददर्श पार्श्वे ॥ १३ ॥
एकचार्यनिकेतः स्यादप्रमत्तो गुहाशयः ।
अलक्ष्यमाण आचारैर्मुनिरेकोऽल्पभाषणः ॥ १४ ॥
गृहारम्भोऽतिदुःखाय विफलश्चाध्रुवात्मनः ।
सर्पः परकृतं वेश्म प्रविश्य सुखमेधते ॥ १५ ॥
एको नारायणो देवः पूर्वसृष्टं स्वमायया ।
संहृत्य कालकलया कल्पान्त इदमीश्वरः ॥ १६ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

वास इति प्रथमान्तपाठे कलहहेतुः वार्ता गोष्ठी हेतुर्भवेदित्यर्थः ॥ १० ॥

चित्तैकाग्र्यता द्वैतास्फूर्तिलक्षणसमाधिहेतुरिति शरकाराच्छिक्षितमित्याह । मन इति । तत्रोपायमाह । जितेति । आसनजये श्वासजयस्तस्य च जये श्वासाधीनं मनो निश्चलं भवति । ननु क्षणं निश्चलं सदपि मनो विषयवासनया बहिः विक्षिप्यते सुषुप्ताविव सर्वथा लीयेत वा तदा किं तत्राऽऽह । वैराग्येति । वैराग्येणाविक्षिप्यमाणमभ्यासयोगेन लक्ष्ये ध्रियमाणं स्थिरीक्रियमाणम् ॥ ११ ॥

एकत्रेति कुत्र तदाह । यस्मिन्निति । यल्लयविक्षेपात्मकं मन एतद्यस्मिन्परमानन्दरूपे भगवति लब्धास्पदं सत्कर्मरेणून् कर्मवासनाः मुञ्चति तस्मिन् । ननु कर्मवासनात्यागेऽपि सुषुप्तिवल्लयो दुर्वारः न सत्त्वेनेति वृद्धेनोपशमात्मकेन रजस्तमसोरभावे विक्षेपलयाभावान्निर्वाणमवृत्तिकं ध्येयाकारेणावस्थानमुपैति कुतः अनिन्धनम् इन्धनं गुणास्तत्कार्यं च तद्रहितम् तदुक्तं योगशास्त्रे —

मनसो वृत्तिशून्यस्य ब्रह्माकारतया स्थितिः ॥
याऽसम्प्रज्ञातनामासौ समाधिरभिधीयत इति ॥ १२ ॥

ततश्च न द्वैतस्फूर्तिरित्याह । तदेति । बहिर्दर्शनादिना अन्तरं स्मृत्या इषौ गतात्मा तस्य ऋजुकरणे दत्तचित्तो भेरीघोषैरान्तिके व्रजन्तं नृपतिं न वेद तद्वत् ॥ १३ ॥

सर्पाच्छिक्षितमाह । एकचारीति । योगिनस्सर्वस्यापि त्यागे कुमारी गुरुर्जनसङ्गत्यागे सर्पः स यथा जनाच्छङ्कमान एकाकी विचरति निकेतरहितश्च सदाऽप्रमत्तश्चैकान्तवासी च आचारैर्गतिभिः सविषो निर्विषो वेति न लक्ष्यते च असहायश्च मितभाषी च तद्वन्मुनिर्वर्तेतेत्यर्थः ॥ १४ ॥

किं च गृहारम्भ इति । अध्रुवात्मनो नश्वरदेहस्य सुखं यथा भवति तथा वर्धते ॥ १५ ॥

कारकसामग्रीनिरपेक्षात्केवलादीश्वराद्विश्वसृष्टिसंहारावूर्णनाभिदृष्टान्तेन मया सम्भावितावितिवक्तुं प्रथमं संहारप्रकारमाह । एक इति सार्धत्रयेण । एकः कारकनिरपेक्षः पूर्वसृष्टमिदं जगत्कालकलया कालशक्त्या संहृत्य ॥ १६ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

इमं योगिभिरप्यसङ्गीयत्वलक्षणमुपदेशं कर्तव्यार्थे हे अरिन्दम । त्वमपि आत्मनिष्ठाध्वंसकजनसंसर्गलक्षणमरिं नाशयेति भावः । लोकेषु जनेषु यद्धेयोपादेयवस्तुनस्तत्त्वं स्वरूपं तस्य विवित्सया जिज्ञासया "तत्त्वं वाद्यप्रभेदे स्यात् स्वरूपे परमात्मनी"ति विश्वः ॥ ९ ॥

फलितमाह । वास इति । सप्तम्यन्तपाठे कलहस्य वार्तायाश्च मुख्यार्थ एव प्रथमान्ते पाठे तु वासस्य तद्द्वयरूपत्वं नास्ति किन्तु तद्धेतुत्वमिति लाक्षणिकार्थत्वादित्यर्थं इत्युक्तम् । कङ्कणाः कङ्कणमिति पाठद्वयं कौमुद्यां द्वयोरपि साधुत्वात् ॥ १० ॥

द्वैतस्य प्रपञ्चस्यास्फूर्तिरपरिज्ञानमेव लक्षणं स्वरूपं यस्य एवम्भूतो यः समाधिस्तस्य हेतुश्चित्तैकाग्र्यतैव तत्र चित्तैकाग्र्यतायास्तस्य श्वासस्य जये ध्रियमाणमित्यस्यैवाविक्षिप्यमाणमित्यर्थस्तत्र वैराग्येण विक्षेपसम्भावना निरस्ता अभ्यासयोगेन लयोऽपि निरस्तः ॥ ११ ॥

तल्लक्षणमाह तत्कार्यं च रागादि तद्रहितं ध्येयाकारेणावस्थानं वृत्तिशून्यस्य वितर्कादिचतुर्भेदरहितस्य मनसो ध्येयब्रह्माकारतया या स्थितिरेकाग्रतावस्थाऽसावसम्प्रज्ञातनामा समाधिरुच्यते

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

यथाह भगवान् "पतञ्जलिः तस्यापि निरोधे सर्ववृत्तिनिरोधान्निर्बीजः समाधि"रिति अस्यार्थः तस्य सम्प्रज्ञानस्य प्रविलये सति सर्वचित्तवृत्तीनां प्रशमात् विलयात् निर्बीजोऽसम्प्रज्ञातसमाधिरिति ॥ १२ ॥

ततश्च ध्येयाकारेणावस्थानानन्तरं यदाऽसम्प्रज्ञातसमाधिर्भवति तदा आत्मनि परमात्मनि एवमेकाग्रतयाऽवरुद्धं निरुद्धं चित्तं येन सः बहिर्दर्शनादिना घटादि अन्तरं स्मृत्या सुखादि किञ्चिदपि न वेद ॥ १३ ॥

सङ्ख्यागतत्वेनाभेदात् पौनरुक्त्यमाशङ्क्य विशेषं व्याचष्टे योगीति । गुहाशय एकान्तवासी गतिभिः सङ्कोचदंशनादिचेष्टाभिः एकचारित्वादिविशेषणानां सर्पसाधारणत्वात् क्रमप्राप्तत्वाच्च सर्पोऽत्र गुरुत्वेनोक्तः । मुनिपक्षे आचारा जडवद्योगचर्यारूपा इतरैर्विद्वानविद्वान् वेति न ज्ञायमानः ॥ १४ ॥

विफलः प्रत्युतातिदुःखायैव भवति तर्हि कुत्र वसेदित्यपेक्षायामाह । सर्प इति ॥ १५ ॥

एक इति सार्द्धकम् । कारकनिरपेक्षः स्वशक्तिव्यतिरिक्तकारकशून्यः नारायणः सर्वब्रह्माण्डान्तर्यामी महत्स्रष्टाख्यः पुरुषः अखिलानामाश्रयः लयस्थानं सन् एकः सजातीयचिद्रूपजीवभेदरहितः अद्वितीयो विजातीयप्रधानादिभेदरहितोऽभूत् तदा सर्वस्य तत्र लयेन पृथग् व्यपदेशाभावादित्यर्थः ॥ १६ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

साक्षात्कर्त्रात्मानुभावेन स्वशक्तिभूतेन शक्तिषु गुणेषु त्रिषु साम्यं नीतासु सत्त्वादिभिर्युक्तत्वात् केवलानुभवानन्देति केवलशब्दो जाग्रद्दुःखस्पर्शव्यावर्त्तकः ॥ १६—१७ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततः किमत आह । अन्वशिक्षमिति । हे अरिन्दम ! तस्याः कुमार्याः इममुपदेशमन्वशिक्षं ननु कुमार्यास्तव कथं सङ्गतिस्तत्राह । लोकानिति ॥ ९ ॥

को वा उपदेश इत्यत आह । वास इति । बहूनां वासे कलहो भवेत् द्वयोरपि वासे वार्ता मिथः संलापो भवेत् तस्मात्कलहवार्त्तयोरुभयोरपि योगविरोधित्वादेक एव चरेदिति तन्वयमर्थः किं कुमार्योपदिष्टं इत्यत आह । कुमार्या इवेति कङ्कणदृष्टान्तेनायमर्थो निर्णीत इति भावः ॥ १० ॥

बाह्याभ्यन्तरविजातीयप्रत्ययाव्यवहितसमाधिनिष्ठेन भवितव्यमितीयुक्तः शिक्षितमिति वक्तुं तावत्समाधिं विदधत् तदुपायांश्चाह । मन इति । एकत्र शुभाश्रये मनः संयुञ्ज्यादिति समाधिविधिः युज समाधौ इति हि धातुः कथं मनः समाहितं स्यादित्यपेक्षायां वदन् विशिनष्टि । जितः श्वासः प्राणो येन सः "प्राणबन्धनं हि सौम्य मन" इति श्रुतेरिति भावः । तर्हि श्वासजयः कथमित्यतो विशिनष्टि । जितमासनं येन सः सत्यासनजये श्वासजयो भवतीति भावः । तथापि चञ्चलं मनः कथं स्थिरं स्यादित्यतस्तद्विशिनष्टि । वैराग्याभ्यासयोगेन प्रियमाणां युज्यते इति योगो यद्वा वैराग्याभ्यासबलेन स्थिरीक्रियमाणां मन एकाग्रतान्द्रितः युञ्ज्यादिति सम्बन्धः अतन्द्रितः अवहितः ॥ ११ ॥

विषयवैलक्षण्यात्प्रतिबन्धककर्मवासनारूपरजस्तमोनिवर्हणसात्त्विकाहारादिप्रवृद्धसत्त्वगुणाच्च स्थिरं स्यादित्याह । यस्मिन्निति । यस्मिन् शुभाश्रये लब्धपदं लब्धास्पदं सदेतन्मनः कर्मरेणून् कर्मवासनाः मुञ्चति त्यजति तेन रजस्तमश्च निर्धूय प्रवृद्धेन सत्त्वेन च अनिन्धनं गुणास्तत्कार्यं च तद्रहितम् इध्यते दीप्यते प्रकाश्यते इतीन्धनं कर्मणि ल्युट् "विषयान्तरागोचरमित्यर्थः । अत एव निर्वाणं लयं ध्येयाकारैकप्रावण्यात्मकमुपैति ॥ १२ ॥

एवमित्थमात्मनि परमपुरुषे ऽवरुद्धं नियमितचित्तं येन सः तदा बहिरन्तरशब्दौ तद्भावपरौ बाह्यमान्तरं च न वेद नानुसन्धत्ते अनेन समाधेर्विजातीयप्रत्ययाव्यवहितरूपत्वमुक्तम् अनिन्धनमित्यनेन प्रत्याहारः लब्धपदमित्यनेन धारणा जितासनजितश्वासशब्दाभ्यामासनप्राणायामौ कर्मरेणून्मुञ्चतीत्यादिना "यमैश्च पापमपनुदत्याहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृति"रित्यादिश्रुत्युक्तौ यमनियमौ विवक्षितौ निर्वाणशब्देन ध्यानमवरुद्धचित्तो न वेदेत्यत्र दृष्टान्तः यथेति । इषौ निर्मीयमाणे बाणशल्ये गतोऽवरुद्ध आत्मा मतो यस्य सः इषुकारः पार्श्वे व्रजन्तं भेर्यादिघोषैर्गच्छन्तं नृपतिं यथा न ददर्श तद्वत् ॥ १३ ॥

अथ सर्पाच्छिक्षितमाह । एकचारीति । योगिनस्सम्बन्धत्यागे कुमारी गुरुजनसंमर्दत्यागे सर्पः स यथाशङ्कमानः एकाकी चरति निकेतरहितश्च सदा अप्रमत्तश्च एकान्तवासी चारैर्निभिरलक्ष्यमाणश्च तद्वन्मुनिरप्येकोऽसहायः अप्रमत्तत्वादीनामुपलक्षणमिदं किञ्चाल्पं मितं यथा तथा भाषते इति तथा ॥ १४ ॥

किञ्च गृहारम्भ इति । अध्रुवस्यात्मनो देहस्यातिदुःखाय भवति निर्माणरक्षणाभावासोपलब्धेरिति भावः । विफलश्च यावदपेक्षभोगाभावादिति भावः । अत एव सर्पः परकृतं न तु स्वनिर्मितं वेश्म वल्मीकादिकं प्रविश्य सुखं यथा भवति तथा वर्त्तते ॥ १५ ॥

"यथोर्णनाभिः सृजते गृह्णते चे"ति श्रुतिप्रसिद्धोर्णनाभिदृष्टान्तेनैकस्यैव भगवतो निमित्तोपादानकारणत्वेऽवधृते तदुक्तं "सदेव सोम्येदमग्र आसी"दित्यादिषु सृष्टेरेवपूर्वकत्वश्रवणात्तावत्संहृत्य माह । एक इति सार्द्धैस्त्रिभिः । स्वमायया स्वसङ्कल्पेन तदैक्षत बहुस्याम्" इत्युक्तविधेन स्वशरीरभूतप्रकृत्या वा पूर्वसृष्टमिदं जगदेकः प्रलयं प्रति कारणान्तरसामग्र्यन्तररहितः कल्पान्ते कालकलया स्वापृथक्सिद्धविशेषणभूतेन कालेन संहृत्य एकोऽद्वितीयश्चाभूदिति सम्बन्धः ॥ १६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

इदं कथं समभावयत इत्यत्राह । लोकानिति ॥ ९ ॥

एकाकित्वस्य विपक्षे बाधकमाह । वास इति । अत्र दुर्जनैः सह वासो निषिध्यते न तु सद्भिः तस्य विहितत्वात्—

असज्जनैस्तु संवासो न कर्तव्यः कथञ्चन ।
यावद्यावच्च बहुभिः सज्जनैः स तु मुक्तिदः ।

इतिवचनात् ॥ १० ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

इषुकारात् शिक्षितबुद्धिप्रकारमाह । मन इत्यादिना । एकत्र परमात्मनि ब्रह्मणि ॥ ११ ॥

मनोयोजनेन किम्फलं येनावश्यकर्तव्यं स्यादत्राह । यस्मिन्निति । यन्मनो दुष्कर्मरेणून् मुञ्चति । तद्बाह्यमचिन्मनो निर्वाणं नाशमुपैति कथमिव अनिन्धनज्योतिरिवेति लुप्तोपमम्—

बाह्यं मनो विलीनं स्यान्मुक्तौ चिन्मात्रकं मनः ॥
तेनैवानुभवत्सर्वं स्वात्माभिन्नेन मुक्तिगमिति

वचनात् बाह्यमेव नश्यति न चिन्मात्रं तन्नाशे विषयानुभावोक्तिर्विरुध्येतेति ॥ १२ ॥

अचिन्मनोनाशानन्तरं चिन्मनसा ध्यानप्रकारमाह । तदेवमिति ॥ १३ ॥

अनिकेतनत्वेन एकत्वेन च मन्त्ररणां दुःखहेतुकर्मानारम्भश्च सर्पाच्छिक्षितमित्याह । एकचारीति । अत्र एकचारित्वादिकं विधेयं न तु विशेषणं गुहायां हृत्कमलमध्ये गूढायां परदेवतायाम् आशयोऽन्तःकरणं यस्य स तथा निरन्तरं भगवदुपासनापर इत्यर्थः । अल्पेनाशनादिना तोषणं तृप्तिर्यस्य स तथा ॥ १४ ॥

अध्रुवात्मनः अनित्यदेहस्य जीवस्य अत्र लुप्तोपमामाह । सर्प इति । अनेन निवासोपायोऽपि दर्शित इति ॥ १५ ॥

ऊर्णनाभेरुपशिक्षितमाह । एक इति । एकः केवलः निरपेक्षः नारायणो देवः स्वमायया स्वेच्छया कल्पान्ते कालकलया संहारकांशेन पूर्वसृष्टमिदं जगत्संहृत्य एकत्वसङ्ख्याविशिष्टोऽभूत ॥ १६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अप्रमत्तः सावधानः आचारैश्चेष्टाभिरलक्ष्यमाणः किं कर्तुमिच्छतीति ॥ १४—१५ ॥

एक इति सार्द्धकम् । नारायणो महत्स्रष्टाख्यः सर्वब्रह्माण्डान्तर्यामी पुरुषः एकः स्वशक्तिव्यतिरिक्तकारकशून्यः कालोऽपि कलाचय्यात्मा स्वशक्तिरूपया कल्पादौ पूर्वं सृष्टमिदं तथैव कल्पान्ते संहृत्य अखिलानां तेषामाश्रयो लयस्थानं सन् अतएवैकः सजातीयस्वरूपजीवभेदरहितः अद्वितीयो विजातीयप्रधानादिभेदरहितश्च सन् आत्माधारः अंशिरूपमहावैकुण्ठनाथाधारोऽभूत् तस्मिन्नेव प्रविष्ट आसीदित्यर्थः ॥ १६ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

शोकानुसरणमिति । तद्दिने मया तत्रैव स्थितमिति सर्वेऽप्येते गुरवो मया स्वचक्षुषैव दृष्टा न तु सर्वज्ञत्वाज्ज्ञाता इति भावः ॥ ९ ॥

वासो वासे इति च द्वौ पाठौ अत्र दरिद्रकुमारी अप्राप्तपतिका क्रयात्कारामावार्थं यथा कङ्कणान् दूरीकरोति तथैव ज्ञानयोगः स्वाश्रितान् मुनीन् निःसङ्गानेव करोति यथा च राजकुमारी प्राप्तिमती पतिमभिस्मरन्ती झणत्काराद्यर्थं कङ्कणान् परिधत्ते तथैव श्रीमती भक्तिदेवी स्वाश्रितान् वैष्णवान् मधुरनामकीर्तनध्वनिरसार्थं तान् परस्परसङ्गिन एव विधत्ते नत्वसङ्गिन इति ज्ञेयं यदुक्तम्भगवता—

नैकात्मतां मे स्पृहयन्ति केचिन्मत्पादसेवाभिरता मदीहाः ।
येऽन्योन्यतो भागवताः प्रसज्य सभाजयन्ते मम पौरुषाणीति ॥१०॥

चित्तैकाग्र्यं शरकाराच्छिक्षितमित्याह । मन इति त्रिभिः।रागबलादेव मन इतस्ततश्चलतीत्यत आह । वैराग्येति । ध्रियमाणं भक्तिमिश्राष्टाङ्गयोगोक्तधारणाभ्यासेन ॥ ११ ॥

यस्मिन् यन्मनो लब्धपदं भवति तत्रस्थम एतन्मनः कर्मरेणून् कर्मवासना मुञ्चति ततश्च सत्त्वेन वृद्धेन सत्त्वरजस्तमश्च विधूयेति रजस्तमसोरभावे विक्षेपलयशून्यं मनो निर्वाणसत्त्वस्यापि क्षीणीभूतत्वात् समस्तक्षीयवृत्तिशून्यं निर्वाणं परमानन्दमुपैति इन्धनं गुणास्तत्कार्यं च तद्रहितम् ॥ १२ ॥

आत्मनि भगवति इषौ गतात्मा तस्य ऋजुकरणार्थं तदेकाग्रचित्तत्वात्तन्मयीभवन्मनाः भेरीझङ्कारघोषैरन्तिके व्रजन्तमपि नृपतिं न वेद ॥ १३ ॥

सर्पाच्छिक्षितमाह । एकचारीति । योगिसंसर्गस्यापि त्यागे कुमारी गुरुः जनसङ्गत्यागे सर्पः स यथा जनाच्छङ्कमान एकाकी चरति नियतनिकेतरहितश्च सदा अप्रमत्तश्च एकान्तवासी च आचारैर्गत्यादिभिः सविषो निर्विषो वेति जनालक्ष्यश्च असहायश्च मितभाषी च तद्वन्मुनिर्वसेतेत्यर्थः ॥ १४ १५ ॥

ईश्वरः केन प्रकारेण विश्वसृष्ट्यादिकं करोतीत्येतन्मया ऊर्णनाभेः सकाशाज्ज्ञातमित्याह षड्भिः । एकः स्वशक्तिव्यतिरिक्तकारकान्तरशून्यः नारायणः कारणार्णवशायी कालकलया कालशक्त्या संहृत्य एक एवेति ईश्वरान्तराभावादेकः सर्वेषः तदानीं तु महासमष्टिव्यष्टीनां नाशाद्वितीयोऽभूत् आत्मैव आधारो यस्य सः अखिलानां शक्तीनामाश्रयः ॥ १६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

कलहः कलहहेतुः ॥ १० ॥

इषुकृतः शिक्षितमाह । मन इत्यादिना । अतन्द्रितः तन्द्राजयं जितासनः आसनजयं जितश्वासः सन् वैराग्ययोगेन विषयेभ्यो वार्यमाणामभ्यासयोगेन ध्रियमाणां स्थिरीक्रियमाणाम् मन एकत्र सर्वप्रधाने भगवति संयुञ्ज्यात् ॥ ११

आश्रयस्य सर्वप्रधानत्वं जगदाधारतया दर्शयन् वैराग्याभ्यासयोगेनेति पदं विवृणोति । एतस्मिन्नेव । "द्यावापृथिव्यौ विधृतौ तिष्ठत" इत्यादिश्रुतिप्रसिद्धे पुरुषोत्तमे यदेतद्विश्वं यस्मिन्नस्तस्मिन्नेव परमानन्दरूपे मनः लब्धपदं प्राप्तास्पदं सत् वृद्धेन सत्त्वेन रजस्तमश्च शनैः शनैर्विधूय कर्मरेणून् कर्मसु रेणुवत्स्थितानि काम्यानि निषिद्धानि च कर्माणीत्यर्थः । मुञ्चति अत एवानिन्धनमुभयलोकभोगसङ्कल्पवर्जितं सत् निर्वाणं ध्येयाकारैकप्रावण्यमुपैति ॥ १२ ॥

एवमुक्तप्रकारेणात्मनि परमात्मन्युपरुद्धचित्तो नियमितचित्तो यदा भवति तदा बहिरन्तरं वा किञ्चिदपि न वेद परमानन्दसम्प्लवे लीनत्वात् यथा इषौ गतात्मा तदृजुकरणे निवे-

एक एवाद्वितीयोऽभूदात्माधारोऽखिलाश्रयः ।
कालेनाऽऽत्मानुभावेन साम्यं नीतासु शक्तिषु ।
सत्त्वादिष्वादिपुरुषः प्रधानपुरुषेश्वरः ॥ १७ ॥
परावराणां परम आस्ते कैवल्यसंज्ञितः ।
केवलानुभवानन्दसन्दोहो निरुपाधिकः ॥ १८ ॥
केवलात्मानुभावेन स्वमायां त्रिगुणात्मिकाम् ।
सङ्क्षोभयन् सृजत्यादौ तया सूत्रमरिन्दम ! ॥ १९ ॥
तामाहुस्त्रिगुणव्यक्तिं सृजन्तीं विश्वतोमुखम् ।
यस्मिन् प्रोतमिदम्विश्वं येन संसरते पुमान् ॥ २० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

शितचित्तः इषुकारः पार्श्वे समीपे व्रजन्तं नृपतिं न वेद तद्वत् ॥ १३ ॥

सर्पाच्छिक्षितमाह । एकचारीति द्वाभ्याम् । एक एव चरेद्भिक्षुरित्येकचारित्वं भिक्ष्वन्तरापेक्षयोक्तम् अत्र तु जनापेक्षया एकचारीति अनिकेतश्च सदाऽप्रमत्तश्च गुहाशयश्च गुहोपलक्षितपरकृतस्थानवासी चेत्यर्थः । आचारैः स्वासाधारणैः सदाचारैरलक्ष्यमाणः गुप्ताचार इत्यर्थः । एको मुख्यः ध्यानादावनुपम इत्यर्थः । स्वरतो वचनलक्षणाल्पभाषणश्च मुनिः स्यात् सर्पवदिति शेषः ॥ १४ ॥

विपक्षे दोषमाह । गृहारम्भ इति । अध्रुवात्मनः अनित्यशरीरिणः गृहारम्भोऽतिदुःखाय भवति एवं बहुजनसङ्क्रमणस्ताश्चाचारख्यापनानि दुःखायैव भवन्तीत्यूह्यम् । परेणाश्वरादिना कृतगृहाबिरूपं प्रविश्य सुखं यथा भवति तथा वर्त्तते ॥ १५ ॥

प्रकृतिपुरुषकालाद्यनन्तशक्तिधराभिःसमानातिशयात् कारकसामग्रीनिरपेक्षाद्भगवतो मया विश्वसृष्टिसंहारादूर्णनाभिदृष्टान्तेन सम्भावितमिति वक्तुमादौ संहारप्रकारमाहैक इति सार्द्धैस्त्रिभिः । एकः निःसमातिशयः स्वशक्तिभूतया मायया प्रकृत्याख्यया पूर्वसृष्टमिदं विश्वं कालकलया कालाख्यया तया संहृत्य एक एवाभूदित्युत्तरेणान्वयः ॥ १६ ॥

भाषा टीका ।

हे अरिंदम यदु महाराज ! इस उपदेश को मैने उस से सीखा है जब कि मैं लोक के तत्त्व की जानने की इच्छा से लोकों में घूमता रहा ॥ ९ ॥

इस से यह निश्चय हुआ कि बहुतों के साथ वास होने से कलह होता है दो के साथ में भी बातें होती हैं तिस से कुमारी के कङ्कण की नाईं विरक्त एकचारी विचरा करै ॥ १० ॥

योगी को चाहिये कि स्थिर होकर रहै वैराग्य रखै आसन स्थिर करने का अभ्यास करै प्राणायाम करै तिस से स्थिर किये हुये मन को एक ठिकाने परमात्मा में युक्त करै ॥ ११ ॥

जिस भगवत् स्वरूप में यह मन लगजाता है तब धीरे धीरे कर्मों की वासनाओं को छोड़ देता है फिर सत्त्वगुण के बढ़ने से रजोगुण तमोगुणको दबा कर कोई बाह्य अवलम्बन नहीं रहने से मन शान्ति को प्राप्त हो जाता है ॥ १२ ॥

तबही परमात्मा के विषे चित्त के रुक जाने से बाहर भीतर कुछ भी नहीं जानता है जैसे कि तीर के बनाने वाला वसी में मन के लगे रहने से सामने ही राजा की फौज गई तो भी नहीं जानता हुआ यह बात शरकार से सीखी है ॥ १३ ॥

एकला घूमै घर का नियम नहीं रखै सावधान से रहै गुफाओं में सोवै थोड़ा बोलै अपने आचारों से अलक्षित रहै ऐसा मुनी होवै ॥ १४ ॥

क्षणभंगुर शरीर के वास्ते घर का आरम्भ करना दुःख दायक है और व्यर्थ है तिस से सर्पतो परके बनाये हुये घर में रहकर सुख से बढ़ता है यह बात सर्प से सीखी है ॥ १५ ॥

एक नारायण देव अपनी माया से पहिले सृजे हुये इस जगत को काल की कला से कल्पांत मे संहार करते हैं ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

एक एवाद्वितीयः सजातीयविजातीयभेदशून्योऽभूत् कारणभूतासु सत्त्वादिषु शक्तिष्वपि साम्यं नीतासु सतीषु गुणसाम्यं प्रधानं तदुपाधिः पुरुषश्च तयोरीश्वरः ॥ १७ ॥

परावराणामपरे ब्रह्मादयः अवरेऽन्ये च मुक्ता जीवास्तेषां परमः प्राप्य आस्ते कुतः कैवल्यसंज्ञितो मोक्षाख्याभिधेयः तत्र हेतुः केवलो निर्विषयः स्वप्रकाशः आनन्दानां सन्दोहः समूहः परमानन्द इत्यर्थः । कुतः निरुपाधिकः ॥ १८ ॥

यथोर्णनाभिर्हृदयादूर्णां सन्तत्य वक्त्रतः ।
तया विहृत्य भूयस्तां ग्रसत्येवं महेश्वरः ॥ २१ ॥
यत्र यत्र मनो देही धारयेत्सकलं धिया ।
स्नेहाद्द्वेषाद्भयाद्वापि याति तत्तत्स्वरूपताम् ॥ २२ ॥
कीटः पेशस्कृतं ध्यायन् कुड्यां तेन प्रवेशितः ।
याति तत्सात्मतां राजन् ! पूर्वरूपमसन्त्यजन् ॥ २३ ॥
एवं गुरुभ्य एतेभ्य एषा मे शिक्षिता मतिः ।
स्वात्मोपशिक्षितां बुद्धिं शृणु मे वदतः प्रभो ! ॥ २४ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

अतः केवलादेव सृष्टिं दर्शयति । केवलेनाऽऽत्मानुभावेन कालेन सूत्रं क्रियाशक्तिप्रधानं महत्तत्त्वं सृजति जीवसंसारहेतुभूते सूत्रे सृष्टेऽपि त्वं मा भैरिति सम्बोधयति । अरिन्दम ! अरीन् रागादीन् दमयितुं समर्थ ॥ १९ ॥

सूत्रस्यैव व्यक्तिशब्देनोच्यमानस्य तामिति स्त्रीलिङ्गेन परामर्शः त्रिगुणव्यक्तिं गुणत्रयकार्यम् अत एव विश्वतोमुखं नानाविधं त्रिगुणात्मकं विश्वमहङ्कारद्वारेण सृजन्तीम् त्रिगुणकार्यस्य सूत्रसंज्ञायां कारणमाह । यस्मिन्निति । कारणभूते समष्टिरूपे यस्मिन्निदं विश्वं प्रोतं ग्रथितम् "वायुर्वै गौतम! सूत्रं वायुना वै गौतम सूत्रेणायञ्च लोकः परश्च लोकः सर्वाणि च भूतानि संदृब्धानी"ति श्रुतेः येन वाय्वात्मना प्राणरूपेण जीवः संसरति ॥ २० ॥

तदेवं शिक्षितमर्थमुक्त्वा दृष्टान्तमाह । यथेति । हृदयादुद्गताम् वक्त्रतो वक्त्रेण सन्तत्य प्रसार्य विहृत्य क्रीडित्वा ॥ २१ ॥

भगवद्ध्यानपराणां तत्सारूप्यं न चित्रमिति पेशस्कृतो भ्रमरविशेषाज्ज्ञातमित्याह । यत्र यत्रेति । सकलमेकाग्रम् ॥ २२ ॥

कुड्यां प्रवेशितो निरुद्धो भयेन ध्यायन् स्वात्मतां तत्सारूप्यम् स्वास्यतामिति पाठे स्वार्थता पूर्वरूपमसंत्यजन्नित्यस्यायमभिप्रायः यदा तेनैव देहेनान्यसारूप्यं दृश्यते तदा किं वक्तव्यं देहान्तरेण सारूप्यं घटत इति ॥ २३ ॥

स्वदेहादेव शिक्षितमाह । स्वात्मेति । स्वात्मनो देहाच्छिक्षिताम् ॥ २४ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

आत्मानुभावेन स्वप्रभावरूपेण कालेन "स्वभावं पौरुषं प्राहुः कालमेके यतो भय"मिति कापिलेयोक्तेः सात्त्वं प्रधानस्य आत्मस्थानां समूह इति व्याख्यानेन स्वरूपशक्तिवैचित्र्यादप्राकृतानन्तविशेषशालित्वमभिव्यञ्जितम् ॥ १७ ॥

केवलात् सजातीयविजातीयभेदशून्यात् ॥ १८ ॥

केवलेनाखण्डेन त्रिगुणात्मिकां प्रधानैकरूपां सङ्क्षोभयन् विषमगुणां कुर्वन् ॥ १९ ॥

तामिति स्त्रीलिङ्गेन परामर्श इति । तच्छब्देन कश्चिद्विधेयपरामर्शकत्वस्यापि सिद्धान्तितत्वात् नित्यं यत् कर्म स धर्मः इतिवत् अतएव गुणत्रयस्यादिकार्यत्वादेव हे गौतम ! वायुः समष्टिप्राणः सूत्रं सूत्रशब्दवाच्यः संसृष्टानि सङ्ग्रथितानि वाय्वात्मरूपेण वायोः स्वरूपभूतेव ॥ २० ॥

ऊर्णनाभिरत्र दीर्घसूक्ष्मः कीटविशेषः तस्यैव वक्त्रेणोद्गिरणानिगरणादृष्टेः उद्गतामुत्पन्नां वक्त्रेण द्वारेण तयोर्यथा दार्ष्टान्तिके अतिदेशेनानुवदति । एवमिति ॥ २१ ॥

तत्सारूप्यं भगवत्समानरूपतां भ्रमरविशेषात् भृङ्गीति ख्यातात् यत्र यत्रेति स्नेहादिना भरतादौ मृगसारूप्यादेर्दृष्टत्वात् अन्ते या मतिः सा गतिरिति न्यायाच्चेति भावः ॥ २२ ॥

जीवतोऽपि सारूप्ये दृष्टान्तविशेषमुदाहरति । कीट इति । तेन पेशस्कृता स्वास्यतामिति पाठे स्वार्थतेति स्वास्यस्य समत्वरूपत्वात् समत्वेऽपि स्वमत्वत्वस्य सत्त्वेऽनवस्थापातात् ॥ २३ ॥

एषा मतिरिति आत्मार्थकवचनम् ॥ २४ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

ज्ञानानन्दयोः कर्मकृतत्वेन संसारित्वानुवृत्तिमाह । निरुपाधिक इति ॥ १८ ॥

केवलात्मानुभावेनेति केवलशब्दः परिकरान्तरव्यावर्तकः सूत्रशब्दः महत्तत्त्वपरः सूत्रं हि बहुतन्तुकार्यं स्वस्मिन् प्रोतानां मणीनामाधारश्च एवमहङ्कारादितत्त्वाधारत्वात् त्रिगुणप्रकृतिकार्यत्वाच्च सूत्रत्वं महत्तत्त्वस्य ॥ १९—२१ ॥

तत्स्वरूपतां स्वरूपमसाधारणधर्मः तत्तुल्यतां यातीत्यर्थः ॥ २२ ॥

कीटस्य पेशान्तरेण स्वरूपैक्याभावात् याति तत्सात्म्यतामित्यनन्तरोक्तेश्च कुड्यात्पदं छिद्रं तत्सात्म्यशब्दो व्यधिकरणो ॥ २३—२४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एकः पुनः सृज्यमानजगदेकोपादानकारणभूतः "एकमेवाद्वितीयं तदैक्षत बहुस्या"मित्यत्रेवात्रैकशब्दः अविभक्तनामरूपसूक्ष्मचिदचिद्विशिष्टकारणावस्थब्रह्मपरः एकत्वं चात्र यत्सृष्टिदशायां नामरूपविभागनिबन्धनं बहुत्वं तत्प्रतिसम्बन्धि विवक्षितं वैशेषिकादिभिर्नित्यतयोक्तानामाकाशादीनामपि संहाराभिप्राय एवकारः अद्वितीयः निमित्तकारणान्तररहितः, एक एवेत्युपादानस्य प्रस्तुतत्वेन निमित्तस्य बुद्धिस्थत्वात्परतन्त्ररूपचिदचिदात्मकविशेषणानां विहितत्वान्निषेधस्य विहितव्यतिरिक्तविषयत्वात् । स्वमायां त्रिगुणात्मिकां सङ्क्षोभयन् येन संसरते पुमानिति प्रकृतिपुरुषनित्यरूपत्वसूचकोत्तरवाक्यसङ्गत्यापेक्षितत्वादेक एवेत्यस्याविभक्तनामरूपत्वावगतेश्च सृजत्यादौ तथा सूत्रमित्यतेनाद्वितीयपदस्य निमित्तान्तराभावत्वमवगम्यते अत्रैकमेवाद्वितीय इत्यस्य सजातीयविजातीयभेदशून्य इति व्याख्यानमनुचितं कालकलया संहृत्येति विजातीयकालस्य सत्तावगमात् स्वमायां त्रिगुणात्मिकां सङ्क्षोभयन्निति सत्त्वादिशक्तिषु साम्यं नीतासु इति गुणसाम्यावस्थाचिद्द्रव्यसद्भावावगमाच्च प्रधानपुरुषेश्वर इति सूक्ष्मावस्थयोस्तयोस्तन्नियाम्यत्वेन तच्छरीरतयावस्थानावगमाच्च अतो यथोक्त एवार्थः । कस्तर्हि सूक्ष्मावस्थचिदचित्काधार इत्यतो विशिनष्टि । अखिलाश्रय इति । अखिलानां चिदचिदादीनां सार्वज्ञ्यसर्वशक्तित्वादिगुणानां चाश्रयः कस्तर्हि तस्याश्रय इत्यतो विशिनष्टि । आत्माधार इति आत्मा स्वयमेवाधारो यस्य सः अनन्याधारः "स्वे महिम्नि प्रतिष्ठित" इति श्रुतेरिति भावः । कालकलयेदं संहृत्यैक एवाद्वितीयोऽभूदित्युक्तमेवोपपादयति कालेनात्मानुभावेनेति स्वशक्तिभूतेन कालेन निमित्तभूतेन सत्त्वादिषु शक्तिषु साम्यं नीतासु सतीषु कार्योपयोग्यपृथक्सिद्धविशेषणभूतेषु सत्त्वरजस्तमःसु सृष्टिदशायां वैषम्येणावस्थितेषु तामवस्थां विहाय साम्यं प्राप्य स्वस्मिन् लीनेषु सत्स्वित्यर्थः । प्रधानपुरुषेश्वरः स्वस्मिन्नविभाज्यतया सूक्ष्मावस्थावस्थितयोः प्रधानपुरुषयोर्नियन्तृत्वेनावस्थितः आदिपुरुषः कृत्स्नजगत्कारणपुरुषः ॥ १७ ॥

अत एव परावराणां परमः कार्यकारणावस्थचिद्द्रव्याणामधिभूतः केवलसंज्ञितः आस्ते तिष्ठति केवलं हि नामरूपविभागरहितत्वरूपाव्याकृतत्वं तत्संज्ञितः सदेव सोम्येदं तद्धाव्याकृतमासीदिति सदव्याकृतादिशब्दवाच्य इत्यर्थः। केवलशब्दो जाड्यदुःखसम्भेदव्यावर्तकः सङ्कोचो विततिस्तेन तयोः परिमितत्वव्यावृत्तिः जाड्यदुःखासम्भिन्नविकस्वज्ञानानन्दस्वरूप इत्यर्थः । निरुपाधिक इत्यनेन ज्ञानानन्दयोः कर्मकृतत्वव्युदासः अनेन सांसारिकजीवव्यावृत्तिः ॥ १८ ॥

अथ सृष्टिप्रकारमाह । केवलात्मानुभावेनेति । केवलशब्दः परिकरान्तरव्यावर्तकः आत्मनः स्वस्यानुभावः तदैक्षत बहुस्यामित्युक्तविधः सङ्कल्पः तन्मात्रेणैवेत्यर्थः। स्वमायां स्वशरीरभूतां निरतिशयसूक्ष्मदशापन्नां मायां सङ्क्षोभयन् ईषत् स्थूलदशापत्तिद्वारा परिणामोन्मुखीं कुर्वन् हे अरिन्दम ! आदौ तावत्तया मायया सूत्रं सृजति सूत्रशब्दो महत्तत्त्वपरः सूत्रं हि बहुतन्तुकार्यं स्वस्मिन्प्रोतानां मणीनामाधारश्च एवमहङ्कारादितत्त्वाधारत्वात्त्रिगुणप्रकृतिकार्यत्वाच्च सूत्रत्वव्यपदेशः ॥ १९ ॥

तदेवाह । तामिति । तं महान्तं महत्तत्त्वमिति यावत् त्रिगुणव्यक्तिं त्रिगुणप्रकृतिकार्यभूतं सृजन्तमहङ्कारादिपृथिव्यन्ततत्त्वपरम्परामिति शेषः । अत एव विश्वतोमुखं सर्वेषु कार्येषु मुखं प्राधान्यमाश्रयत्वेन यस्य तमाहुः मुखशब्दः प्राधान्यवाचकः यद्वा विश्वतोमुखं यथा तथेति क्रियाविशेषणम् अनेकधा सृजन्तं तामाहुस्त्रिगुणव्यक्तिं सृजन्तीमिति पाठे प्रकृतिसूत्रापृथक्स्थापकत्रिगुणव्यक्तिशब्दापेक्षया सृजन्तीमिति स्त्रीलिङ्गनिर्देश इति यस्मिन्नहमिदं विश्वं प्रोतम् अनेन त्रिगुणव्यक्तिमित्यनेन च सूत्रस्वरूपणे निमित्तमुक्तं भवति येन स्वद्वारकेन बुद्धीन्द्रियमनःप्राणात्मकसूक्ष्मशरीरेण युक्तः पुमान् जीवः संसरति देवमनुष्यादिस्थूलशरीरसंयोगवियोगात्मकजन्ममरणरूपसंसारतत्प्रयुक्तज्ञानविज्ञानविकाससङ्कोचौ च प्राप्नोतीत्यर्थः । अयमेव हि जीवस्य संसारो नाम यः प्रकृत्यारब्धदेहसम्बन्धतद्वियोगप्रयोगप्रयुक्तज्ञानसङ्कोचविकासरूपावस्थान्वयः अत्र प्रधानपुरुषेश्वरोऽखिलाश्रय इति चोक्त्वा येन संसरते पुमानित्युक्तेरिदमवगम्यते यत्परमात्मविशेषणीभूतजीवस्वभावस्य सङ्कोचविकासरूपावस्थाविशेष इति सृजन्तीं विश्वतोमुखमित्यनेन तदहङ्कारादिपृथिव्यन्तसमष्टिपरम्परा देवादिसृष्टिप्रपञ्चश्च प्रधानगत इति एवं च विशिष्टस्योपादानत्वं साक्षादवस्थाश्रयत्वं प्रधानपुरुषयोरेव द्वारा तु परमात्मनोऽपीति फलितं सङ्क्षोभयन् सृजतीति कर्तृत्वनिर्देशेन निमित्तकारणत्वं तस्य विशेष्यांशस्यैवेति फलितम् ॥ २० ॥

तदेव दृष्टान्तेनावधार्यमित्यभिप्रेत्याह । यथेति । ऊर्णा तन्तुः सङ्घातप्रकृतिर्नाभौ यस्य सः कीटविशेषः स्वशरीरैकदेशभूताद्धृदयादुद्धृतामूर्णां वक्त्रेण सन्तत्य प्रसार्य तयोर्णया विहृत्य विहारं कृत्वा क्रीडित्वेत्यर्थः । पुनस्तामूर्णां ग्रसति तथा महेश्वरोऽपि कार्यकारणयोरनन्यत्वाभिप्रायकस्तया तामिति स्त्रीलिङ्गनिर्देशः तथा विहृत्येत्यनेन दार्ष्टान्तिके कार्यस्य जगतो भगवत्क्रीडोपकरणत्वं प्रदर्शितम् ऊर्णनाभिरूर्णां सन्तत्येति दृष्टान्तोक्त्या निमित्तकारणत्वमूर्णां सन्तत्येत्यनेनोर्णाया एव तन्तुसन्तानात्मकावस्थाश्रयत्वावगमात्तद्विशिष्टांशतदनवगमात्तस्यानुपादानत्ववद्दार्ष्टान्तिकेऽपि परमात्मशरीरभूतयोश्चिदचितोरुपादानत्वसिद्धावपि विशेष्यभूतपरमात्मनस्तदसिद्धेः नैवं विशेषणांशस्यावस्थाश्रयत्वनिर्वाहकत्वमात्रेणैव विशेष्यांशस्यापि उपादानत्वसिद्धेः नास्माभिर्विशेष्यांशस्याद्वारकावस्थाश्रयत्वमभ्युपगतं किन्तु सद्वारकावस्थाश्रयत्वं न च सद्वारकावस्थाश्रयत्वमपि न दृष्टान्तेऽवगम्यत इति वाच्यं विशेष्यांशोपादानत्वस्य विशेषणगतावस्थाश्रयत्वनिर्वाहकत्वरूपत्वेन तस्य दृष्टान्तेऽप्यवगमात् नहि तत्र विशेष्यांशभूतजीवमन्तरेणोर्णाया अवस्थाश्रयत्वासिद्धेः किञ्चोर्णनाभेरसर्वज्ञस्यासर्वशक्तेः कार्यान्तरात्मतयानुप्रवेशनसामर्थ्याभावेऽपि दार्ष्टान्तिके ब्रह्मणः सर्वशक्तेः सर्वज्ञस्य "तत्सृष्ट्वा तदेवानुप्राविशत् तदनुप्रविश्य सच्च त्यच्चाभवदिति" तत्कार्यानुप्रवेशतद्रूपतापत्तिश्रवणात् श्रुतत्वादुपादानत्वं निर्व्यूढमेव किञ्च कारणावस्थप्रकृतिपुरुषशरीरकतया तन्नियन्तृत्वात् कार्यावस्थतच्छरीरकतया तन्नियन्तृत्वस्याप्यावश्यकत्वात् तन्नियन्तृत्वरूपावस्थाश्रयत्वमद्वारकमेव विशेष्यभूतब्रह्मनिष्ठमिति तन्निर्व्यूढमित्यलं बहुना निमित्तविस्तरेण ॥ २१ ॥

केनापि भावेन नित्ययुक्ताविधश्चिन्तारागो ध्यायन् तत्स्वरूपं यातीति सुपेशस्कृदारण्यात्भ्रमरविशेषादवधृतमित्याह यथेति । भिया

## श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

निश्चयात्मिकया बुद्ध्या यत्र यत्र विषये मनः सङ्कल्पविकल्पात्मकमन्तःकरणं सकलं निश्चलं यथा तथा यः स्नेहाद्यन्यतमेन भावेन धारयेत्स तत्सरूपतां तत्समानरूपतां तत्तत्साधर्म्यमिति यावत् याति प्राप्नोति तत्तत्स्वरूपतामिति पाठे स्वरूपस्य भावः स्वरूपता-मिदमित्थमिति प्रतीतावित्थमिति प्रतीतिविषयतां तत्तुल्यतामिति यावत् कीटस्य कीटान्तरेण स्वरूपैक्यासम्भवात् याति तत्साम्य-तामित्यनन्तरश्लोकस्थायमेवार्थः ॥ २२ ॥

उक्तेऽर्थे दृष्टान्तमाह । कीट इति । तेन पेशस्कृता स्वकुड्यां प्रवेशितः निरुद्धः अत एव भयेन पेशस्कृतं ध्यायन् पूर्वरूप-मसंत्यजन्नेव तत्समतां याति तेन पेशस्कृता समता तत्समता तां तत्साम्यतामिति पाठे तेन साम्यं यस्य तस्य भावस्तत्ता ता-मित्यर्थः । तत्सात्मतामिति च पाठः तत्रात्मशब्दो देहपरः तेन सम आत्मा यस्य तस्य भावस्तत्ता तां तत्समानदेहत्व-मित्यर्थः । तत्स्वात्मतामित्यपि पाठः तत्राप्यात्मशब्दः पूर्वदेहपरः तस्य स्वशब्देन षष्ठ्यन्तेन समासः तस्य तच्छब्देन कर्म-धारयः तच्छब्दो ध्येयाकारपरामर्शकः तत्स्वात्मतां तत्सारूप्यं पूर्वरूपमसंत्यजन्नित्यनेन कैमुत्यन्यायो विवक्षितः पूर्वरूपमसं-त्यजन्नेव याति किमुत संत्यजन्नित्यर्थः ॥ २३ ॥

तदेवमुक्तगुरुभ्यः शिक्षितानि प्रदर्श्य गुर्वन्तरात् शिक्षि-तस्योपलक्षणमित्यभिप्रेत्य स्वदेहाच्छिक्षितमाह । एवमिति । स्वात्मा स्वदेहः तस्माच्छिक्षितां बुद्धिं मे मत्तः शृणु ॥ २४ ॥

---

## श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कालादीनां तदा सत्त्वात् कथमिदमुपपद्यत इति तत्राह । शक्तिरिति इति । एतादृशोऽन्यो नास्तीत्येवोच्यते न तु सर्वा-त्मना सर्वनिषेधेन तथा सति सर्वस्य तेनैक्यमुपपन्नं स्यात्तच्च तद्युक्तं कुतोऽत्राह । अखिलाश्रय इति । नह्याधाराधेययोरैक्यं क्वापि दृष्टचरं नन्वेतद्दृष्टान्तेन तस्याधारान्तरकल्पनं स्यादत्राह । आत्माधार इति । नन्वेतद्युक्तिविरुद्धमत्राह । ईश्वर इति । एतदेव विवृणोति । कालेनेति । आत्मनः स्वरूपानुभवेन तत्तत्कालोचितसृष्ट्यादिभावसूचकेन कालेन तदन्तर्यामिणा सत्त्वा-दिगुणाख्यासु शक्तिष्वव्यक्तिषु साम्यं साम्यावस्थां नीतासु सतीषु प्रधानपुरुषयोर्ब्रह्मसत्त्वस्थावीश्वरः आस्ते तदा किन्नामे-त्यत्राह । कैवल्येति । समाधिकरहित इति सत्त्वादिगुणानां शक्ति-शब्दवाच्यत्वे किं प्रमाणमित्येतच्चोद्यम्—

प्रकृतिश्च गुणाश्चैव शक्त्यव्यक्तकाः स्मृताः ॥
विष्णोः स्वरूपभूता तु शक्तिश्चक्तिरुच्यते ।

इत्यनेन परिहृतमिति ज्ञातव्यं कालप्रकृत्यादिप्रवर्तनोदासीनत्वा-भिप्रायेणैक इति वा पुनरुक्तम्—

कालप्रकृतिजीवाद्यौ लये सत्यप्रवर्तनात् ॥
तन्निमित्तस्य कार्यस्य विष्णुरेक इतीर्यते ।
स हि कालादिकं सर्वं वर्तयत्यमितद्युतिः ॥

इति वचनात् ॥ १७—१८ ॥

संहारप्रकारमुक्त्वा तस्मात्सृष्टिप्रकारमाह । केवलेति । निरुपाधिको जडदेहरहितः कालेन कालान्तर्यामिणा आत्मनः स्वस्मात् अनुभावो जन्मव्यक्तिर्यस्य स तथा तेन स्वमायां स्वाधीनप्रकृतिं संक्षोभयन् सृष्ट्यभिमुखीं कुर्वन् तया प्रकृत्या सूत्रं प्राणं ब्रह्माणं च सृजति मायायाः स्वरूपमाह । तामिति विश्वतो मुखं सर्वदिक्षु यथा मुखं भवति तथा सृजन्तीं यस्मिन् प्रकृतिस्वरूपे येन प्रधानेन प्रकृतौ विलीनः संसार-मेतीति श्रुतिः कालेन सृष्ट्युपाहितेन नैतावता सापेक्षत्वमात्मानुभा-वेन स्वसामर्थ्येनेति च ॥ १९-२० ॥

अत्रोदाहरति । यथेति । ऊर्णां लालां वक्त्रतो मुखेन सन्तत्य विस्तृत्य यथा यथेच्छम् ॥ २१ ॥

पेशस्कृतः शिक्षितां बुद्धिमाह । यत्रेति । देही यत्र स्नेहसं-क्लिष्टधिया मनो धारयेत् तत्तत्सरूपतां तस्य तस्य सदृशरू-पतां याति अत्रेदं तात्पर्यं स्निग्धया धिया ध्यायति चेत् स्नि-ग्धरूपं सुखरूपं याति द्विष्टधिया चिन्तयति चेद्द्विष्टरूपं दुःखरूपं यातीत्यादि योज्यं तदुक्तम्—

भयादपि हरिं भक्त्या चिन्तयंस्तत्सरूपताम् ॥
पेशस्कारिवद्याति द्विषन् द्वेषस्वरूपतामिति ।

द्विष अप्रीताविति धातोः सुखरूपस्यापि हरेर्द्वेषस्य दुःखरूपत्वं तत्स्वरूपतां यातीत्युक्तम्—

सुखरूपस्य विद्वेषो दुःखरूप इतीर्यते ॥
तस्माद्दुःखं सदा याति द्वेषवान् पुरुषोत्तमे ।

इति च रावणादीनां रामविद्वेषाद्दुःखानन्दभगवत्स्वरूपप्राप्त्युक्त्या सुखावाप्तिरिति अतः कामादिरिति चेदुच्यते तत्र रक्षोरूपादीनां द्वेषाद्दुःखावाप्तिर्जयादीनामेव तत्स्वरूपप्रवेशेन सुखावगतिः—

नृसिंहद्वेषतो दुःखं रक्षोरूपेण रावणः ॥
अगाच्च रामविद्वेषाच्छिशुपालस्तथैव च ।
ततो भक्त्या परं यातो द्वेषरूपात्समागतादिति ॥
तस्मात्सर्वगुणोद्रिक्तविद्वेषात्सर्वदोषवान् ॥
भवेदिति स्वरूपत्वं द्वेषादेः पुरुषस्य इति

मानात् यथोपासनैः फलानयाप्तौ श्रुतिव्याकोपश्च स्यात् तं यथा यथोपासते तदेव भवतीति तं भूरिति देवा उपासाञ्चक्रिरे ते बभूवुस्तस्माद्धाप्येतर्हि सुप्तो भूर्भूरित्येव प्रश्वसित्यभूतिरि-त्यसुरास्तेह पराबभूवुरित्यादिश्रुतेः ॥ २२ ॥

अत्रोदाहरति । कीट इति । ननु भयद्विष्टार्थे विषममुदाहरणं द्वेषात्तत्समताप्राप्त्यवगमादुच्यते मह्यं भोजनं दास्यतीति स्ने-हस्य बाहुल्येन क्रमेणाल्पस्य द्वेषस्य सर्वात्मना निवर्तनेन स्नेहस्य प्रवर्धनेन च तत्समताप्राप्तिरिति—

सत्यल्पस्वल्पविद्वेषे भोजनं दास्यतीति तु ।
स्नेहबाहुल्यतः कीटः पेशस्कारिसमो भवेत् ॥
द्वेषे सर्वात्मना नष्टे स्नेहे चैव विवर्धिते ।
सरूपता तदैवस्यात्कीटस्यैवं हरेरपीति ॥

किञ्च हरेः फलदातृत्वविशेषात्पेशस्कृतस्तदभावादल्पद्वेषोऽपि हरेः प्रसादाजनक इत्यनयोर्न सर्वसाम्यं लोके च तथादर्श-नात्—

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अत्यल्पोऽपि हरेर्भेदः स्नेहक्यानुदयङ्कुरः ।
सोऽयं विशेषो नान्यस्य फलदाता च केशवः ॥
नहि पेशस्कृतः किञ्चित्फलदातृत्वमिष्यते ।
स्वातन्त्र्यात्त्रिविधं चैव केशवो न सुखप्रदः ॥

इतिवचनात् ॥ २३ ॥

उपसंहरति । एवामिति । स्वदेहाच्छिक्षितमतिमाह । स्वात्मेति । देहो मम गुरुरित्यवेहीत्यन्वयः ॥ २४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

कालेनेति युग्मकम् । आत्मानुभावेन स्वप्रभावरूपया शक्त्या आदिपुरुषः महत्स्रष्टाख्यः प्रथमः पुरुषः प्रधानपुरुषेश्वरः प्रकृतेर्जीवानाञ्च नियन्ता परेषां स्वीयांशानाम् अपरेषां विभिन्नांशानाञ्च परममाश्रयोऽसौ कैवल्यसञ्ज्ञितस्तदाख्ययाम्नातः सन्नास्ते तदानीमासीदित्यर्थः । केवल एव कैवल्यः स्वार्थे ष्यञ् चातुर्वर्ण्यवत् तत्र केवलत्वे इति स्वगतभेदं दर्शयति केवलेति स्वरूपशक्तिवैशिष्ट्यात् केवलानां शुद्धानां स्वरूपभूतानामनुभावानां यः सन्दोहस्तद्रूपः केवलत्वं दर्शयति। निरुपाधिक इति। तदुक्तं तृतीये सुप्तशक्तिरसुप्तदृगिति ॥ १७—१८ ॥

स्वरूपशक्तिमेव स्थापयन् सृष्टिं योजयति । केवलेति । सृष्टिकाले महावैकुण्ठनाथादाविर्भूय स एव शुद्धस्वरूपप्रभावरूपया शक्त्या त्रिगुणात्मिकां प्रधानैकरूपां स्वमायां सङ्क्षोभयन् सूत्रं सृजति ॥ १९ ॥ २० ॥

तदेतच्च यत्किञ्चिदंशेन कीटविशेषं गुरुं मत्वा अवगतमित्याह । यथेति । ऊर्णनाभिरत्र दीर्घसूक्ष्मः कीटविशेषस्तस्यैव वक्त्रेणोद्गिरणनिगरणादेः ॥ २१—२३ ॥

एषा मतिरिति जातावेकत्वम् ॥ २४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

आत्मानुभावेन स्वप्रभावरूपेण कालेन शक्तिषु सत्त्वादिषु साम्यं नीतासु सतीषु प्रधानस्य मायायाः पुरुषाणां जीवानां च नियन्ता परावरेषां मुक्तबद्धजीवानां परम आराध्यः केवल एव कैवल्यः स्वार्थे ष्यञ् कैवल्य इति संज्ञा जाता यस्य सः ॥ १७ ॥

जगत्पालनादिव्यापाराभावात् केवलश्चानुभवानन्दसन्दोहरूपश्च सः उपाधिर्माया तस्यास्तदानीं सुप्तत्वान्निरुपाधिकः तदुक्तं तृतीये सुप्तशक्तिरसुप्तदृगिति ॥ १८ ॥

संहारं दर्शयित्वा सृष्टिं दर्शयति । केवलेन आत्मानुभावेन चिच्छक्तिप्रभावेण स्वमायां प्रधानं प्रबोध्य स्वांशेन संक्षोभयन् सूत्रं क्रियाशक्तिं प्रधानं महत्तत्त्वं सृजति ॥ १९ ॥

तामिति श्लोकेन सूत्रस्यैव पर्यायाः तत् सूत्रमेव त्रिगुणात्मकं गुणत्रयकार्यमाहुरित्यर्थः । कीदृशीं विश्वतो मुखं नानाविधं त्रिगुणात्मकं विश्वमहंकारेण द्वारेण सृजन्तीं त्रिगुणकार्यैस्त्व महत्तत्त्वस्य तस्य सूत्रसंज्ञायां कारणमाह । यस्मिन् कारणभूते सूत्रे समष्टिरूपप्राणे विश्वमिदं प्रोतं तथाच श्रुतिःवायुर्वैगोतम । तत्सूत्रं वायुना गोतम सूत्रेणायं च लोकः परश्च लोकः सर्वाणि भूतानि संदृब्धानीति येन वाध्यात्मरूपेण प्राणेन जीवः संसरति ॥ २० ॥

ऊर्णनाभिर्माकडीति ख्यातः कीटविशेषः हृदयादुद्गतां वक्त्रतः वक्त्रेण सन्तत्य प्रसार्य्य विहृत्य क्रीडित्वा ॥ २१ ॥

भगवद्ध्यानपराणां तत्सारूप्यं न चित्रमिति पेशस्कृतो भ्रमरविशेषाज्ज्ञातमित्याह । यत्रेति द्वाभ्याम् । सकलमिति मनस एकस्यापि वृत्तेर्यदान्यगामित्वं न स्यात्तदैव देही ध्येयसारूप्यं लभते नान्यथेत्यर्थः ॥ २२ ॥

कीट इति । तेन पेशस्कृता तत्सात्मतां तत्समानरूपतां सात्मतामिति पाठे भावता पूर्वरूपं पूर्वदेहम् असन्त्यजन्निति ध्यातृदेह एव ध्येयतुल्याकारं स्यात् यथा ध्रुवादीनां कचित्तया ध्यातृणां भक्तानां दृश्यमानो देहत्यागस्तु भक्तियोगस्य रहस्यत्वरक्षार्थं मतान्तरोत्खाताभावार्थं च भगवतैव मायया दर्श्यते यथा कचित् सच्चिदानन्दमयस्वदेहत्यागोऽपि तथा च तत्प्रमाणवाक्यं च मुनिद्वारा तथैव मायया प्रकाश्यते यथा "प्रारब्धकर्मनिर्वाणो न्यपतत् पाञ्चभौतिक" इति देहत्यागश्च तस्यैवमिति च ॥ २३ ॥

स्वदेहादपि शिक्षितमाह । स्वात्मेति ॥ २४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एक एव सजातीयभेदशून्य एव अद्वितीयः विजातीयभेदशून्यः अतएवात्माश्रयः अखिलाधारः अखिलानामविभक्तनामरूपाणां चिदचिच्छक्तीनामाधारः स्वगतभेदवान् प्रभुत् सत्त्वादिषु शक्तिष्वपि आत्मानुभावेन स्वशक्तिरूपेण प्रधानावस्थारूपं साम्यं गतासु सतीषु अत्रैकत्वादिना स्वभावत एवाभेदः अखिलाश्रयत्वेन स्वभावत एव भेदश्च दर्शितः एवं सति चिदचिद्ब्रह्मपदार्थानां स्वाभाविको भेदाभेदः सम्बन्धः यत्तु एक एवाद्वितीयः सजातीयविजातीयस्वगतभेदशून्योऽभूदिति तन्न अखिलाश्रय इति मूलग्रन्थविरोधात् ॥ १७ ॥

प्रधानपुरुषयोः प्रकृतिजीवात्मनोः ईश्वरः नियन्ता प्रधानपुरुषरूपाभ्यां स्वशक्तिभ्यां विश्वसृष्ट्यादि करोतीति भावः किं बहुना पराणां कारणभूतानां प्रकृतिकालादीनामपराणां कार्यभूतानां महद्बुद्धिपराद्धादीनां परमोऽवधिभूतः अत एव कैवल्यसंज्ञितः केवलपरमकारणपरैः सदव्याकृतादिशब्दैरुच्यमानः आस्ते"सदेव सोम्य तर्ह्यव्याकृतमासी" दित्यादिश्रुतेः ॥ १८ ॥

केवलानां देहादिरहितानामनुशायिनां जीवानां सन्दोहः समूहो यस्मिन् सः निरुपाधिकः स्वगतानां जीवानामुपाधिभिः कर्मादिभिरसंस्पृष्टस्वरूपः आस्ते एवं भूतात्सजातीयभेदशून्यादनन्तशक्तेरेव सृष्टिं दर्शयति । केवलात्मेति । केवलः एकाद्वितीयादिशब्दवाच्यः निःसमानातिशयः विश्वहेतुस्तस्य य आत्मानुभावः एकोऽहं बहुस्यामित्येवं रूपोऽध्यवसायः तेन स्वशक्तिभूतां मायाम् ॥ १९ ॥

संक्षोभयन् सृष्ट्युन्मुखीं कुर्वन् तथा सूत्रं क्रिया शक्तिं प्रधान

देहो गुरुर्मम विरक्तिविवेकहेतुर्बिभ्रत्स्म[1] सत्त्वनिधनं सततार्त्युदर्कम् ।
तत्त्वान्यनेन विमृशामि यथा तथापि पारक्यमित्यवसितो विचराम्यसङ्गः ॥ २५ ॥
जायात्मजार्थपशुभृत्यगृहाप्तवर्गान् पुष्णाति यत्प्रियचिकीर्षया [2] वितन्वन् ।
स्वान्ते सकृच्छ्रमवरुद्धधनः स देहः सृष्ट्वाऽस्य बीजमवसीदति वृक्षधर्मा ॥ २६ ॥
जिह्वैकतोऽमुमपकर्षति कर्हि तर्षा शिश्नोऽन्यतस्त्वगुदरं श्रवणं कुतश्चित् ।
घ्राणोऽन्यतश्चपलदृक् क्व च कर्मशक्तिर्बह्व्यः सपत्न्य इव गेहपतिं लुनन्ति ॥ २७ ॥
सृष्ट्वा पुराणि विविधान्यजयाऽऽत्मशक्त्या वृक्षान् सरीसृपपशून् खगदंशमत्स्यान् ।
तैस्तैरतुष्टहृदयः पुरुषं विधाय ब्रह्माऽवलोकधिषणं मुदमाप देवः ॥ २८ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

महत्तत्त्वं सृजति कथम्भूतया माययेत्याकाङ्क्षायां मायां निरूपयति । त्रामिव्यर्थेन । अयाणां सत्त्वादिगुणानां व्यक्तिः समुदायभूतां विश्वतो मुखं सर्वतोमुखं विश्वं सृजन्तीमाहुः । "अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपा" इत्याद्याः श्रुतयः कथम्भूतं सूत्रमित्याकाङ्क्षायां तन्निरूपयति । यस्मिन्निस्यर्थेन यस्मिन्सूत्रे इदं विश्वं प्रोतं अवितम् येन सूत्रेण स्वकार्यरूपप्राणप्रधानसूक्ष्मशरीरद्वारा पुमान् जीवः संसरति जन्ममरणप्रवाहरूपं संसारं प्राप्नोति तथाच श्रुतिः वायुर्वै गौतम सूत्रं वायुना वै गौतम सूत्रेणायं च लोकः परश्च लोकः सर्वाणि च भूतानि संदृब्धानीति ॥ २० ॥

संक्षिप्तमर्थमुक्त्वा दृष्टान्तमाह । यथेति । ऊर्णनाभिर्यथोर्णां हृदयादुद्गतां वक्त्रतो वक्त्रेण सन्तत्य प्रसार्य तया विहृत्य भूयः पुनस्तां ग्रसति एवं महेश्वरः परमेश्वरो विश्वं वितत्य ग्रसति ॥ २१ ॥

यत्रेति स्नेहादिना मनोनियमनेन तत्सारूप्यं यातीति पेशस्कृतोऽवगतमित्याह । यत्र यत्रेति । तत्कथं सम्पूर्णम् ॥ २२ ॥

कुड्यां भित्तौ तत्कुपश्लिष्टे कुड्यादौ च प्रवेशितो निरुद्धः स तेन पेशस्कृता सार्द्धं सारूप्यं यस्य कीटस्य स तथा तद्भ्यभावयता तां यातिं प्राप्नोति पूर्वरूपसम्बन्धजन्मस्यस्य कीटः पूर्वशरीरेणैव पेशस्कृच्छरीरसारूप्यं प्राप्नोतीत्यर्थः । मुमुक्षुस्तु प्राकृतशरीरं हित्वा अप्राकृतपापस्पर्शादिगुणाष्टकेनाप्राकृतशरीरित्वेन च भगवत्सादृश्यं प्राप्नोतीति विवेकः ॥ २३ ॥

चतुर्विंशतिगुरुभ्यः शिक्षितमुपसंहरति । एवामिति । स्वदेहाच्छिक्षितमाह । स्वात्मेत्यादिना । स्वात्मोपशिक्षितां स्वदेहादुपशिक्षिताम् ॥ २४ ॥

---

### भाषा टीका ।

सकल जगत्के आश्रय सब आत्माओं के आधार परमात्मा एकही रहे उनके बरोबर दूसरा कोई नहीं रहा अपने प्रभाव रूप काल से सत्वादिगुणों की शक्ति सब जब समता को प्राप्त होगई तब प्रकृति पुरुष दोनों के ईश्वर परमात्मा आप ही रहे ॥ १७ ॥

बडे छोटे ब्रह्मादि मनुष्यादि सबके श्रेष्ठ कैवल्य नामक केवल आनंद अनुभव से परिपूर्ण रहे औ प्राकृत उपाधि से रहित रहे ॥ १८ ॥

हे यदुजी ! फिर केवल अपने आत्मा ही के प्रभाव से तीनों गुणवाली माया को चलायमान करके सृष्टि के आदि काल में उसी माया के द्वारा परमात्मा ने महत्तत्त्व को सृजा है॥१९॥

जिसमें यह सब जगत् पोहा हुआ है जिससे जीवको संसार होता है जो नाना प्रकार के तीनों गुणों वाली माया है उसीको तीनो गुणों के कार्य होने से सूत्र कहते हैं ॥२०॥

यह बात मकरी को देखकर जाना है जैसे कि मकरी अपने मुखमें से सूतको निकालती है फिर उससे विहार करके फिर ग्रस लेती है ऐसे परमेश्वर का सृष्टि औ संहार करना है ॥ २१ ॥

कोई प्राणि स्नेह से अथवा द्वेष से अथवा भय से अच्छी तरह मनको जहां लगावैगा तिसी २ के स्वरूप को प्राप्त होजावैगा ॥ २२ ॥

जैसे कि भृङ्गी एक कीडा दूसरे कीडे को लाकर अपने दीवाल में प्रवेश करदेता है तब वह कीडा उसके भय से उसके ध्यान करने से अपने पूर्व रूप को न छोडकर उस पेशकारी के स्वरूप को प्राप्त होजाता है ॥ २३ ॥

हे प्रभो यदुराजा ! इस प्रकार से मैंने इतने गुरुओं से इन बुद्धियों को सीखा है अब अपने शरीर से जो बुद्धि सीखी है तिसको मेरे कहने से आप श्रवण करो ॥ २४ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

गुरुत्वे हेतुः विरक्तिविवेकयोर्हेतुः विरक्तिहेतुत्वमाह । सत्त्वनिधनमुत्पत्तिविनाशौ बिभ्रत्स्म किञ्च सततं सन्ततमार्त्युदर्कं दुःखमेवोत्तरफलं बिभ्रद्यद्वा सततार्तिरेवोदर्क उत्तरफलं यस्य तत्सत्त्वनिधनं बिभ्रत् विवेकहेतुत्वमाह । तत्त्वानीति । यथा यथावत्

(१) बिभ्रत्स्म सत्त्वेति शुकपक्षीय पाठः ॥ (२) यत्प्रियचिकीर्षु इति विजयध्वज० वीरराघव० सिद्धान्तप्रदीपेषु पाठः ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

एवमत्युपकारित्वेऽपि देहे नैवाऽऽस्था कर्तव्येत्याह तथापीति । पारक्यं श्वसृगालादिभक्ष्यमिति निश्चितवान् ॥ २५ ॥

सततार्त्युदर्कतां प्रपञ्चयति । जायेति द्वाभ्याम् । यस्य देहस्य प्रियचिकीर्षया भोगसम्पादनेच्छया जायादिवर्गान्वितन्वन् पुष्णाति पुरुषः कथम्भूतः सकृच्छ्रं यथा भवति तथावरुद्धानि सञ्चितानि धनानि येन सः देहविशेषणं वा सदेहः स्वान्ते स्वस्यायुषोऽन्तेऽवसीदति नश्यति किञ्च देहनाशेऽपि न दुःखसमाप्तिरित्याह । अस्य पुरुषस्य देहान्तरबीजं कर्म सृष्ट्वेति । वृक्षस्येव धर्मो यस्य सः ॥ २६ ॥

किञ्च जिह्वेति । अमुं देहं तदभिमानिनं पुरुषं वा एकतो रसं प्रति जिह्वा अपकर्षन्त्याच्छिनत्ति कर्हि कदाचित्तर्षा पिपासा जलं प्रति शिश्नो व्यवायं प्रति त्वक् स्पर्शं प्रति उदरमन्नमात्रं प्रति श्रवणं शब्दं प्रति घ्राणो गन्धं प्रति चपलदृक् रूपं प्रति क्व कचित्स्वस्वविषयं प्रति कर्मशक्तिः अन्यदपि कर्मेन्द्रियम् लुनन्ति त्रोटयन्ति ॥ २७ ॥

तदेवं देहो गुरुरित्यादिभिस्त्रिभिर्विरक्तिविवेकहेतुत्वमुपपाद्येदानीमस्य देहस्यातिदुर्लभत्वं दर्शयन्नीश्वरनिष्ठां विधत्ते । सृष्ट्वेति द्वाभ्याम् । पुराणि शरीराणि पुरुषं पुरुषदेहम् ब्रह्मणोऽवलोकायाऽऽपरोक्ष्याय धिषणा बुद्धिर्यस्मिंस्तम् तदुक्तम्, तासां मे पौरुषी प्रियेति, श्रुतिश्च 'पुरुषत्वे चाविस्तरामात्मे' त्यादिः ईश्वरो हि करणाधिष्ठात्रीरग्न्यादिदेवता वागादिभिः सह सृष्टवान् ताश्च तं प्रति भोगार्थं शरीरमयाचन्त स च ताभ्यो गोशरीरमश्वशरीरं पुरुषशरीरं यथाक्रममानीतवान् ततस्ता देवताः सोऽग्निर्वाग्भूत्वा मुखं प्राविशदित्यादिश्रुत्या प्रविशतेति तदाह । ताभ्य इत्यादि । तथा ताभ्यो गामानयत्ता अब्रुवन्न वै नोऽयमलमिति ताभ्योऽश्वमानयत्ता अब्रुवन्न वै नोऽयमलमिति ताभ्यः पुरुषमानयत्ता अब्रुवन्सुकृतं बतेति च ॥ २८ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

देहो मानुषलक्षणोऽयं पूर्वार्थे विभ्रदित्यस्यावृत्तिर्गौरवमतो यद्वेति अनेन देहेनैव विमृशामि अन्यत्रैतादृशबुद्ध्यभावात आस्था विश्वासः ॥ २५ ॥

सकृच्छ्रं सपरिश्रमं स्वस्य देहस्य यदायुस्तस्यान्ते स देहोऽवसीदति नश्यति वृक्षधर्मेति वृक्षो यथा वृक्षान्तरबीजं सृष्ट्वा नश्यति तद्वत् ॥ २६ ॥

उदरं कर्तृ अन्नमात्रं स्वभक्षणार्थमाकर्षति स्वस्वविषयम् आदानगमनादिकं प्रति अन्यदपि कर्मेन्द्रियं हस्तपादादि एवं सर्वाणीन्द्रियाणि देहाभिमानिनं पुरुषं त्रोटयन्ति तत्रानुकूलो दृष्टान्तः बह्व्य इति ॥ २७ ॥

उपपाद्य हेतुरूपया युक्त्या संसाध्य तत्र सततार्त्युदर्कत्वाद्विरक्तिहेतुत्वं साधनीयं ज्ञानसामग्रीसद्भावात्तु विवेकहेतुत्वमिति ज्ञेयम् अयं प्रयोगः मनुष्यदेहो विरक्तिहेतुः सततार्त्युदर्कत्वात् रोगादिवत् यन्नैवं तन्नैवं यथा देवदेहः एवं मनुष्यदेहो विवेकहेतुः ज्ञानसामग्रीसद्भावात् देवदेहवत् यन्नैवं तन्नैवं यथा पश्वादिदेह इति अपरोक्षाय साक्षात्करणाय तन्मोक्षहेतुत्वं श्रुतिः पूर्वं व्याख्याता तदाह । निरुक्तकथायां श्रुतिप्रमाणमाह ताभ्यः करणाधिष्ठातृदेवताभ्यः गां गोशरीरमनयद्दौ नोऽस्माकमयं गोदेहो भोगाद्यर्थं नैवालं न समर्थः एवमग्रेऽपि पुरुषं पुरुषशरीरं सुकृतं सुष्ठु कृतं बत हर्षे ॥ २८ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

विड्भस्मसत्त्वानि यस्य निधनं विड्भस्मकृमिरूपावस्था वर्त्तते तत् विड्भस्मसत्त्वनिधनं विमृशामि अनेन तत्त्वानि च प्राकृतं हेयत्वेन विमृशामीत्यर्थः । पारक्यं क्रियाविशेषणम् परलोकानुगुणं विमृशामि विचारयामीत्यर्थः ॥ २५ ॥

यत्प्रियचिकीर्षुतया यस्य देहस्य प्रियचिकीर्षुतया सदेहः अस्य पुरुषस्य कर्मबीजं सृष्ट्वा वृक्षसमानधर्मा स्वान्तकालेऽवसीदतीत्यर्थः ॥ २६ ॥ २७ ॥

पुरुषं मनुष्यं विधाय देवः चतुर्मुखः ॥ २८ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तावद्देहस्य गुरुत्वमाह । देह इति । गुरुत्वं हेतुत्वेन विशिनष्टि विवेकविरक्तिहेतुरिति । विवेको हेयोपादेयविभागः विरक्तिर्हेयविषये विरागः तयोर्हेतुः प्रवर्तकः तत्र विरक्तिहेतुत्वं वदन् विशिनष्टि । सत्त्वनिधनमुत्पत्तिविनाशौ विभ्रद्विभ्राणः प्राप्नुवन्नित्यर्थः। सततार्त्युदर्कं सन्ततमार्तिर्दुःखमेवोदर्कमुत्तरोत्तरफलं बिभ्रत् यद्वा सततमार्तिरेव उदर्क उत्तरकालो यस्य तत्सत्त्वनिधनं बिभ्रत् विवेकहेतुत्वमाह । तत्त्वानीति । अनेन देहेन तत्त्वानि प्राकृतानि यथावद्विमृशामि एवमुपकारित्वेऽपि तस्मिन्नास्थां न करोमीत्याह । तथापीति । पारक्यमिति श्वसृगालादिभक्ष्यमिति व्यवसितः निश्चयवानसङ्गः तस्मिन्नभिमानरहितश्चरामि ॥ २५ ॥

सततार्त्युदर्कतां प्रपञ्चयति । जायेति द्वाभ्याम् । यत्प्रियचिकीर्षुतया यस्य देहस्य प्रियं कर्तुमिच्छाभावस्तया तथा जायादिवर्गान् वितन्वन् सम्पादयन् अर्थशब्दो वित्तपरः पुष्णाति पुष्णातु ततः किमत आह । स्वान्त इति यः पुमान् सकृच्छ्रं यथा तथाऽवरुद्धानि सञ्चितानि धनानि येन सः सदेहः देहसहितः देहीत्यर्थः। स्वान्ते स्वायुषोऽन्तेऽवसीदति क्लिश्यति नश्यति तेन देहेन वियुज्यते इत्यर्थः। देहापगमेऽपि न दुःखपरिसमाप्तिरित्याह । अस्य देहान्तरस्य बीजं निदानभूतं कर्मात्मकं बीजं सृष्ट्वावसीदतीति सम्बन्धः वृक्षस्येव धर्मो यस्य सः यथा विनङ्क्ष्यमाणो वृक्षो वृक्षान्तरबीजं सृष्ट्वा नश्यति तद्वदित्यर्थः ॥ २६ ॥

किञ्च एकतो रसं प्रति जिह्वाऽमुं देहिनमपकर्षति कर्हिचित्कदाचित्तर्षा पिपासा जलं प्रति शिश्नो व्यवायं प्रति त्वक् स्पर्शनं प्रति उदरमन्नं प्रति श्रवणं शब्दं प्रति घ्राणो गन्धं प्रति चपलाः दृग्दृष्टिः रूपं प्रति कर्मशक्तिर्वागादिकर्मेन्द्रियजातमपि क्व तत्तत्प्रति नियतवचनादानगतिविसर्गादावपकर्षति इत्थं बह्व्यः सपत्न्यो गेहपतिं गृहस्वामिनमिव लुनन्ति त्रोटयन्ति ॥ २७ ॥

इत्थं देहस्य विवेकविरक्तिहेतुत्वमुपपाद्येदानीमस्यैव देहस्यातिदुर्लभत्वं दर्शयन्मुक्तिसाधनानिष्ठां विधत्ते द्वाभ्याम् । सृष्ट्वेति । देवश्चतुर्मुखशरीरकः परमपुरुषः आत्मशक्त्या कार्योपयुक्तस्वापृथक्सिद्ध

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

त्रिगुणभूतयाऽजया प्रकृत्या विविधानि पुराणि शरीराणि तेषां स्वावस्थानत्वसाम्यात्पुरशब्देन निर्देशः वैविध्यमेव दर्शयति द्विती-यान्तैः तत्र सरीसृपाः सर्पादयः पशवः दंशा दंशनस्वभावाः जन्त-वस्तानेतावत्सृष्टेति सम्बन्धः तैस्तैः सृष्टैरतुष्टहृदयं यस्य सः स्व-स्यानिव्यक्ततनोर्ज्ञजीविषया प्रवृत्तत्वात्तृक्षादीनां मुक्तिसाधनानुष्ठानान-र्हत्वाच्चातुष्टहृदय इति भावः । पुरुषं मनुष्यं विधाय सृष्ट्वा मुदं हर्ष-माप लेभे तत्र हेतुत्वेन पुरुषं विशिनष्टि । ब्रह्मावलोकधिषणं ब्रह्म-दर्शनसमानाकारा धीरुपासनात्मिका मतिर्यस्मिन् ब्रह्मदर्शनस-मानाकारोपासनात्मकयोगानुष्ठानयोग्यमित्यर्थः । ब्रह्मणोऽव-लोकाय अपरोक्षाय धिषणा प्रीतियुक्ता मतिर्यस्मिन्निति वा ॥ २८ ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कुतोऽत्राह । विरक्तीति । सत्त्वं सर्वज्ञानसमाहारो निधीयतेऽस्मिन् परमेश्वरे इति सत्त्वनिधनः तं सततमतिशयेनोत्कर्षैरर्क-रूपः ज्ञानसुखरूपः इति सततात्सुहृदो भगवांस्तं बिभ्रत् देहः विरक्तिविवेकहेतुत्वात्सत्त्वनिधनस्य सततात्सुहृत्कस्य हरेरभिष्ट-त्वाच्च यथावत्तत्त्वविचारसाधनत्वाच्च गुरुत्वमित्यर्थः । तर्हि दयत्वं कुत इति तत्राह तथापीति । पारक्यं परकीयं मातृपित्रादेरधी-नमित्यवसितो निश्चितः ॥ २५ ॥

यो हरिणा करुणया मनुष्यजन्मप्रापितेनानेन देहेन सर्व-कर्मारम्भं विना क्षपते तस्यायं वृक्षबीजमिव संसारपरम्परार-म्भकबीजमित्यनर्थहेतुरित्याह । जायेत्यादिना । जायादीनां प्रेय-श्चिकीर्षया कर्माणि वितन्वन्यो जायादीन् पुष्णाति स वृक्षधर्मा वृक्षसमानोऽन्ते सुकृच्छ्रेज्जायादिपोषणा एवावरुद्धमनाः स्वस्य बीजमिव स्थितं स्वदेहं सृष्ट्वावसीदति नित्यक्लेशवान् भवतीत्यन्वयः यथैको वृक्षो बीजेन बीजान्तरपरम्परारम्भणहेतुस्तथायं देहोऽपि असज्जायादिपोषणलक्षणबीजैर्देहान्तरपरंपरारम्भकारण-मित्यर्थः ॥ २६ ॥

अवसीदतीत्युक्तं विवृणोति । जिह्वेति । अमुं संसारिणं कर्मशक्तिः पापपाकलक्षणा पूर्वोक्तशक्तिर्वा ॥ २७ ॥

अनेन सर्वभोगायतनेभ्यो विशिष्टज्ञानेन्द्रियादिमत्तया पुरुषा-र्थोपयोगित्वेनास्य श्रेष्ठत्वादनेन रसादिविषयान् विजित्य पुरुषा-र्थाय साधनानुष्ठानं विधेयमन्यथानर्थपरम्परा तदवस्थैवेत्युक्तं तत्र सर्वस्मादस्य शरीरस्य श्रैष्ठ्यं कथमवसीयत इति तत्राह । सृष्ट्वेति । अजया प्रकृत्या आत्मशक्त्या स्वाधीनसामर्थ्योपेतया पुराणि शरीराणि पुरुषं पुरुषशरीरमवबोधधिषणं ज्ञाना-श्रयम् ॥ २८ ॥

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

देहो मानुषलक्षणोऽयम् अनेनैव देहेनैव विमृशामि अन्यत्रे-तादृशबुद्ध्याद्यभावात् ॥ २५—३० ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

गुरुत्वे हेतुः विरक्तिविवेकयोर्हेतुः तत्र विरक्तिहेतुत्वमाह । सत्त्वनिधनम् उत्पत्तिविनाशौ बिभ्रत् तत् कीदृशं सततार्तिरेव उदर्कं उत्तरफलं यस्य तत् देहैकदेशः कुक्षिरपि छिन्नादिवसी-वमक्ष्यमसंगृह्णन् विरक्त इवेति तस्मादन्यसंग्रहं शिक्षेत् विवेकहेतु-त्वमाह । तत्त्वानीति । यथेति यथा तत्त्वानि विमृशामि तथैव श्रोत्रादीन्द्रियवता अनेनैव श्रीभगवत्प्रापकश्रवणकीर्त्तनादिमयं भक्तियोगमपि प्राप्नोमीत्यर्थः । यथा कश्चिद्रसिको महाभक्तः सर्व-रसास्वाद्यपि रसालिप्तः किन्तु हरिरसासक्तोऽनुरागी स्यात् एवं जिह्वापि घृतादिसर्वरसास्वादिन्यपि न तत्तत्सम्पर्कवती किन्तु ताम्बूलरससम्पर्कवत्येव दृष्टा यत इयमरुणा स्यात् एवमत्युपका-रिणि गुरावप्यस्मिन् देहे स्थीय इति स्थिर इति बुद्धिर्न कर्त-व्येत्याह । पारक्यमग्ने श्वो वा श्वसृगालादिभक्ष्यमित्यवसितं निश्चयो यस्मिन् सः पारक्यमिति क्लीवत्वमार्षम् अतएवासङ्गः अत्रास-क्तिरहितश्चरामि ॥ २५ ॥

ननु विरक्तिविवेकभक्तियोगप्रदातुः सर्वेष्वपि गुरुषु श्रेष्ठस्य देहस्यास्य नश्वरस्यापि सेवा परमासक्त्यैव कर्त्तुं युज्यते अन्यथा कृतघ्नत्वलक्षणो दोषः स्यादित्यतः कथमसङ्ग इति ब्रूषे सोऽयं विचित्रचरितोऽयं गुरुर्यतः परमासक्त्या सेव्यमानोऽप्ययं विवे-कवैराग्यादिकं किमपि नोपदिशति प्रत्युत संसारमहान्धकूप एव निःक्षिपतीत्याह । जायेतिद्वाभ्याम् । यस्य देहस्य प्रियचिकीर्षया जायादीन् वितन्वन् विस्तारयन् सन् पुष्णाति यस्य देहस्य प्रीतिचिकीर्षा चेदुत्पद्यते तर्हि जायादीन् सम्पाद्य तानेव पुष्णा-तीत्यर्थः । सदेहः अवरुद्धधनः लुप्तविवेकादिवित्तः सन् स्वान्ते स्वक्षयायुषोऽन्ते सकृच्छ्रं यथा स्यात्तथा अवसीदति नश्यति किञ्चास्य पुरुषस्य बीजं देहान्तरबीजं कर्म सृष्ट्वा येन पुनर्भवप्रवाहः स्यात् वृक्षस्यौषधिरूपस्येव धर्मो यस्य सः ॥ २६ ॥

तस्मादस्मै गुरवे देहाय केवलं प्राणधारणमात्रं भोजनं देयं तदुत्पन्नासक्त्यैव एवैवास्य गुणो गुरुशुश्रूषा भक्त्यास्मै भोगाश्चेद्दी-यन्ते तर्हि शृणु तत्त्वमित्याह । जिह्वेतिअमुं देहासक्तं पुरुषमेकतः रसं प्रति जिह्वा अपकर्षति अधः पातनार्थमाकर्षति आच्छिनत्ति कर्हि कदाचित्तर्षो पिपासा जलं प्रति शिश्नो व्यवायं प्रति एवं त्वगादयः स्पर्शादीन् प्रति कर्मशक्तिः कर्मेन्द्रियाणि च लुनन्ति त्रोटयन्ति ॥ २७ ॥

यस्मादयमपवर्गसाधक एक एव मनुष्यदेहः सृष्टस्तस्मा-देनं नरकसाधनं न कुर्यादित्याह । सृष्ट्वेति । पुराणि शरीराणि पुरुषं मनुष्यदेहं ब्रह्मणः परमेश्वरस्यावलोके साक्षात्कारे धिषणा बुद्धिर्यस्य तं तथाच श्रुतिः पुरुषत्वे चाविस्तरामात्मेति तथा ताभ्यो गामानयत् ता अब्रुवन् नवै नोऽयमलमिति ताभ्यो ऽश्वमानयत् ता अब्रुवन् नवै नोऽयमलमिति ताभ्यः पुरुषमानयत् ता अब्रुवन् सुकृतं बतेति ॥ २८ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तामेवाह । देहो गुरुरित्यादिना । देहस्य गुरुत्वं दर्शयितुं तं विशिनष्टि । विरक्तिविवेकहेतुरिति । विरक्तिहेतुत्वं दर्शयति । सत-

लब्ध्वा सुदुर्लभमिदं बहुसम्भवान्ते मानुष्यमर्थदमनित्यमपीह धीरः ।
तूर्णं यतेत न पतेदनुमृत्यु यावन्निःश्रेयसाय विषयः खलु सर्वतः स्यात् ॥ २९ ॥

एवं सञ्जातवैराग्यो विज्ञानालोक आत्मनि ।
विचरामि महीमेतां मुक्तसङ्गोऽनहङ्कृतिः ॥ ३० ॥

नह्येकस्माद्गुरोर्ज्ञानं सुस्थिरं स्यात्सुपुष्कलम् ।
ब्रह्मैतदद्वितीयं वै गीयते बहुधर्षिभिः ॥ ३१ ॥

श्रीभगवानुवाच ॥

इत्युक्त्वा स यदुं विप्रस्तमामन्त्र्य गभीरधीः ।
वन्दितोऽभ्यर्थितो राज्ञा ययौ प्रीतो यथागतम् ॥ ३२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सार्व्यहर्कं निरन्तरं दुःखमेवोत्तरोत्तरफलं यस्य तत्तत्त्वविमर्शनमुत्पत्तिमरणं बिभ्रत्स्म विवेकहेतुत्वं दर्शयति । तत्त्वानीति । यथा यथावत् तत्त्वानि चिदचिद्ब्रह्माख्यानि विमृशामि चिन्तयामि एवं यद्यपि शरीरमुपकारि तथापि पारक्यं श्वसृगालादिभक्षणीयमिति अवसितः कृतनिश्चयः असङ्गः देहादौ निःसङ्गो विचरामि ॥ २५ ॥

किञ्च संसृतिहेतुश्चायं देह इत्याह । जायेति । यस्य देहस्य प्रियचिकीर्षुतया सङ्कल्पं यथा भवति तथा असकृच्छ्रमः अथ कष्टं पित्रादिभ्यः संगृह्य स्वालये स्थापितं धनं येन स जनः जायादिकं वितन्वन् विस्तारयन् पुष्णाति स देहः वृक्षधर्मा वृक्षवद्धर्मो यस्य सः अस्य संसारस्य पुनः पुनर्जन्ममरणरूपबीजं कर्म सृष्ट्वाऽवसीदति नश्यति ॥ २६ ॥

किञ्चेन्द्रियद्वारापि देहः संसृतिहेतुरित्याह । जिह्वैकत इति । अमुं जनं जिह्वा एकतो रसं प्रति अपकर्षति परमेश्वरभजनाद्वारयित्वा रसासक्तं करोति कर्हि कचित् तर्षा पिपासा एकतः पानं प्रति शिश्नोऽन्यतो व्यवायं प्रति त्वक् स्पर्शं प्रति उदरं भोजनं प्रति श्रवणं शब्दं प्रति घ्राणो गन्धं प्रति चपलदृक् रूपं प्रति कच कचित् स्वविषयं प्रति कर्मशक्तिः कर्मेन्द्रियम् एकस्य बहुभिरपकर्षणे दृष्टान्तः यथा बह्वयः सपत्न्यो गेहपतिं गृहकार्यासक्तं भर्तारं लुनन्ति स्वस्वकार्याभिमुखीकरणेन इष्टकार्याद्विमुखं कुर्वन्तीत्यर्थस्तद्वत् ॥ २७ ॥

एवं देहस्य संसृतिहेतुत्वं द्वाभ्यां प्रदर्श्य मोक्षहेतुत्वं दर्शयति । सृष्ट्वेति द्वाभ्याम् । पुराणि शरीराणि पुरुषं पुरुषदेहम् ब्रह्मावलोकाय वृक्षद्रुमसरस्यादिभृङ्गमक्षिपक्षकानाय धिषणां बुद्धियांहिसमन् तत ॥ २८ ॥

भाषा टीका ।

वैराग्य तथा विवेक का हेतु यह शरीर है सदा काल दुःख युक्त है उत्पत्ति नाश दोनों इस के होते हैं इस को मैं आदरा करता हूं यह भी मेरा गुरु है इस देह से जैसे तैसे रहकर मैं तत्त्वों का विचार करता हूं फिरभी पराया है ऐसा निश्चय करके सङ्ग छोडकर विचरता हूं ॥ २५ ॥

भार्या पुत्र धन पशु भृत्य घर कुटुम्बी इन सबों को इसी देह के प्रीति करने की इच्छा से पोषण करता है इतना विस्तार करता हुआ भी अन्त में धनादिक सबों को छोड कर फिर दूसरे देह का बीज बो कर वृक्षसरी का किया वाला देह नष्ट होजाता है ॥ २६ ॥

इस देह को एक तरफ से रस के लिये जीभ खींचती है कभी प्यास खैंचती है कभी लिङ्ग इन्द्रिय मैथुन को खैंचता है त्वचा सुन्दर स्पर्श को खैंचता है उदर अन्न को खैंचता है श्रवण गीतादि सुनने को खैंचता है नाक सूंघने को खैंचता है कहीं चपलदृष्टि रूप को कहीं कर्मादि कों को इस्त पादादिक ऐसे बहुतसी सौतिन जैसी एक पती को खैंचे तैसे सब इन्द्रिय इस देह को हैरान करती हैं ॥ २७ ॥

परमात्मा ने सृष्टि के समय में अपनी शक्ति माया से वृक्ष सर्प पशु पक्षी डांस मच्छी आदि नाना प्रकार के शरीर बनाये परन्तु उन शरीरों से सन्तुष्ट नहीं भये फिर ब्रह्म के ज्ञान वाले इस मनुष्यशरीर को बनाया तब परमेश्वर सन्तुष्ट भये ॥ २८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

तस्माद्बहूनां सम्भवानां जन्मनामन्ते मानुष्यमनित्यमप्यर्थदं पुरुषार्थप्रापकं दैवाल्लब्ध्वाऽनुमृत्यु अनु निरन्तरं मृत्युर्यस्य तद्यावन्न पतेत्तावदेव तूर्णं शीघ्रं निःश्रेयसाय यतेत विषयः पुनः सर्वतः पश्वादियोनिष्वपि स्यादेव ॥ २९ ॥

तदेवं हेयोपादेयविवेकं बहुधा निरूप्येदानीं यदुक्तं त्वं तु कल्पः कविर्दक्ष इत्यादि तत्रोत्तरमाह । एवमिति । एवं बहुभ्यो गुरुभ्यः शिक्षितेन विशिष्टं ज्ञानमेवालोकः प्रदीपो यस्य सः

अवधूतवचः श्रुत्वा पूर्वेषां नः स पूर्वजः ।
सर्वसङ्गविनिर्मुक्तः समचित्तो बभूव ह ॥ ३३ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां
संहितायां वैयासिक्यामेकादशस्कन्धे
नवमोऽध्यायः ॥ ९ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

स्वस्वरूपं वा आत्मविशेषणम् आत्मनि स्थित एव महीं विचरामि ॥ ॥ ३० ॥

ननु किं बहुभिर्गुरुभिर्न हि श्वेतकेतुभृगुप्रमुखैर्बहवो गुरव आश्रिताः तत्राह । न ह्येकस्मादिति । बहुधा सप्रपञ्चनिष्प्रपञ्चभेदादिभिः ब्रह्मस्वभावः नैते परमार्थोपदेशगुरवः किन्त्वन्वयव्यतिरेकाभ्यामात्मन्यसद्भावनादिमात्रनिवर्तकास्तेषां बहुत्वं युक्तमेवेति ज्ञानप्रदं गुरुमेकमेव वक्ष्यति मत्तामिश्रं गुरुं शान्तमुपासीतेति उक्तञ्च "तस्माद्गुरुं प्रपद्येत जिज्ञासुः श्रेय उत्तमम्" इति ॥ ३१ ॥

विप्रो दत्तात्रेयः योगेश्वरमापृच्छ्य यदुः पूजितो इत्युक्तत्वात् यथागतं तथैव यदृच्छया ययावित्यर्थः ॥ ३२ ॥

भगवान् स्वीयं ब्रह्मविरक्तमिति श्लाघते नः पूर्वेषां पूर्वज इति अत्र संग्रहश्लोकाः ।

कपोतमीनहरिणीकुमारीगजपन्नगाः ।
पतङ्गः कुररश्चाष्टौ हेयार्थे गुरवो मताः ॥ १ ॥
मधुकृन्मधुहर्ता च पिङ्गला च द्वयोस्त्रयः ।
उपादेयार्थविज्ञाने शेषाः पृथ्व्यादयो मताः ॥ २ ॥
तदवान्तरभेदश्च तत्र तत्र स्फुटीकृतः ।
अध्यायत्रितये चाष्ट नवाष्टावीरिताः क्रमात् ॥ ३ ॥ ३३ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
नवमोऽध्यायः ॥ ९ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

तस्मात् मनुष्यदेहस्य दुर्लभत्वात् मानुष्यं मनुष्यदेहं दैवात् पूर्वसुकृतात् ॥ २९ ॥

तदेवं पञ्चविंशतिगुरुभ्यः शिक्षितार्थकथनप्रकारेण तत्र यदुप्रश्ने शिक्षितेन विज्ञाविद्भ्यः क्षमादिना आत्मनि स्वरूपे ब्रह्मणि स्थित एवेति न बाह्यविषये ममेच्छेति भावः ॥ ३० ॥

एते व्यावहारिकपदार्थाः अन्वयव्यतिरेकाभ्यां तत्तद्धर्माणां हेयोपादेयत्वाद्विधिनिषेधाभ्यामित्यर्थः । असद्भावना गुरूपदिष्ट सन्देहः आदिना विपरीतभावनाग्रहः ॥ ३१ ॥

यदृच्छयेति । साधुसङ्गस्य कर्मजत्वं पराहतम् ॥ ३२ ॥

समचित्तोऽभिन्नात्मनिष्ठो बभूव यद्वा स्वर्गापवर्गनिरयेषु समचित्तः एकान्तभक्तो बभूवेति कपोतादयोऽष्टौ हेयार्थे गुरव इति कपोतवत् सङ्गो हेयः मीनवद्रसासक्तिर्हेया हरिणवच्छब्दासक्तिर्हेया कुमारीकङ्कणवत् सजातीययोगिसङ्गोऽपि हेयः गजवत् स्पर्शासक्तिर्हेया सर्पवज्जनसङ्गनियतनिकेतादिकं हेयं पतङ्गवद्रूपासक्तिर्हेया कुररेण यथामिषं त्यक्तं तथा धनादिपरिग्रहो हेय इत्यर्थः । मधुकरादयस्त्रयो द्वयोर्हेयोपादेययोर्गुरवः तत्र मधुकृन्माधुकरीवृत्तिसारसङ्ग्रहावुपादेयौ तत्सजातीयमधुमक्षिकावत् सङ्ग्रहो हेयः मधुहर्ता परदुःखदानेन सञ्चितग्रहणं हेयम् उद्यममन्तरैव देहनिर्वाहकर्म उपादेयः पिङ्गलाया आशामयी पूर्वावस्था हेया नैराश्यमुपादेयं पृथ्व्यादीनान्तु अष्टानाम् सर्व एव धर्मा उपादेया इति विवेचनीयं तेषां पृथ्व्यादीनामवान्तरभेद इति यथा पर्वतवृक्षभेदेन पृथ्व्या द्वैविध्यं यथा हरिण्यावान्तरभेदः ऋष्यशृङ्ग इत्यादि यथास्माभिस्तत्र तत्र प्रकरणे स्फुटीकृतः व्याख्यानेन व्यक्तीकृत एव एवं प्रथमतः षडध्यायान् विहाय क्रमात् अध्यायानां यत्त्रितयं तस्मिन् तत्र सप्तमेऽष्ट गुरवः अष्टमे नव नवमे चाष्टौ गुरवः ईरिताः कथिताः ॥ ३३ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीराधारमणदासगोस्वामिकृतदीपिकादीपने टिप्पणे
नवमोऽध्यायः ॥ ९ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

बहुसम्भवान्ते अनेकजन्मावसाने अनु मृत्यु यावन्नपतेत् तावद्यतेत विषयः खलु सर्वतः स्यात् निःश्रेयसयत्नस्य देशनियमो नास्तीत्यर्थः ॥ २९ ॥

आत्मनि विज्ञानमेव प्रकाशकं यस्य स विज्ञानालोकः ॥ ३० ॥

एतद्ब्रह्मेति ब्रह्मशब्दोऽत्र ज्ञानवाची इदं ज्ञानमद्वयं सजातीयद्वितीयरहितम् एतत्तुल्यं ज्ञानान्तरं नास्तीत्यर्थः ॥ ३१—३३ ॥

इति श्रीमद्भागवतव्याख्याने एकादशस्कन्धीये
श्रीसुदर्शनसूरिकृतशुकपक्षीये
नवमोऽध्यायः ॥ ९ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यत एवमतो बहूनां सम्भवानां जन्मनामन्तेऽतिदुर्लभमनित्यमप्यर्थदं समीहितपुरुषार्थप्रापकम् इदं समीहितमानुषं जन्म तुल्यसुखदुःखः सन्ननुमृत्यु अनुपृष्ठतो मृत्युर्यस्य तदिदं शरीरं यावन्न पतेन्न विपद्येत तावदेव तूर्णं झटिति निःश्रेयसाय मुक्तये यतेत यत्नं कुर्यान्नतु कामार्थमित्यर्थः । तस्य कामस्य सुलभत्वादिति भावः । तदाह । विषयः खलु सर्वतः स्यात्सर्वतः सर्वत्र श्वशूकरादिजन्मस्वपि विषयः स्यात्सुलभः स्यादित्यर्थः ॥२९॥

प्रश्नोत्तरमुपसंहरति । एवमिति । एवमित्थं मति शिक्षणम् जातं वैराग्यं यस्य सः आत्मनि विषयभूते विज्ञानमेवालोकः तत्स्वरूपस्वभावप्रकाशकं यस्य सः अत एवानहंकृतिर्देहात्माभिमानरहितः मुक्तः सङ्गो देहतत्सम्बन्धिषु येन तथाभूतोऽहमेतां महीं विचरामि पर्यटामीत्यर्थः ॥ ३० ॥

नन्वेकस्मादेव गुरोः किमेते सर्वेऽर्था न शिक्षिता इत्यत आह । नहीति । सुस्थिरं सुपुष्कलं च ज्ञानं नह्येकस्माद्गुरोः सकाशात्स्यात्किन्तु बहुभ्य एवेति भावः । तर्हि काप्यविश्वासादस्थिरमेव स्यादत आह । ब्रह्मैतदिति । ब्रह्मशब्दोऽत्र ज्ञानपरः इदं ज्ञानमद्वितीयं समानाधिकरणरहितम् एतस्य तुल्यं ज्ञानान्तरं नास्तीत्यर्थः ऋषिभिर्बहुधा गीयते वर्ण्यते पृथिवीवाय्वादिदृष्टान्तेन शिक्ष्यत इत्यर्थः । पृथिव्यादयः शिक्षागुरवो नतु ब्रह्मविद्योपदेष्टारः अतस्तद्बाहुल्यं न दोषायेति यद्वैतत् सर्वं गुरुमण्डलमिदमपि ब्रह्मैव परमपुरुष एव पृथिव्यादिगुरुमण्डलरूपेणावस्थितः स चैक एवेति भावः । अनेनाचार्यदेवो भव आचार्यं मां विजानीयादिति विहिता देवताचार्ययोरैकात्म्यबुद्धिः कर्त्तव्येति । सूचितम् ॥ ३१ ॥

अवधूतयदुसंवादमुपसंहरति श्रीभगवान् । इतीति । स विप्रो दत्तात्रेयः योगक्षेमापुरुमधी यदुर्हस्वाद्या इत्युक्तत्वात् यदुश्च हैहयाद्यश्चेति द्वन्द्वः गम्भीरधीरपारज्ञानः आमन्त्र्य पृष्ट्वा राज्ञा यदुना वन्दितोऽर्चितोऽत एव प्रीतः सन् यथागतं ययौ इति सम्बन्धः ॥३२॥

तदुपदिष्टस्यानुष्ठितत्वं दर्शयति । अवधूतवच इति । सर्वेषां नोऽस्माकं पूर्वजः वृद्धः स यदुः सर्वस्मिन् देहे तदनुबन्धिनि च सङ्गाद्विनिर्मुक्तः समचित्तः शीतोष्णसुखदुःखादिषु तुल्यचित्तः यद्वा सर्वस्य ब्रह्मात्मकत्वदर्शनः मुक्तश्चेति शेषः बभूवेति निश्चितम् ॥ ३३ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
नवमोऽध्यायः ॥ ९ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

इदानीं परमपुरुषार्थाय प्रयतनीयमित्यर्थतः सूचितं स्पष्टमाह । लब्ध्वेति । बहुसंभवान्ते बहुजन्मावसाने अनुमृत्यु पृष्ठतोऽनुगतान्तकं शरीरमाप्रयत्नोऽपि नानुष्ठेय इत्याह । विषय इति । धीरः क्षणिकमर्थदमिदं शरीरं यावन्न पतेत्ततः पूर्वमेव निःश्रेयसाय यतेतेत्यन्वयः ॥ २९ ॥

निश्चितार्थमाह । एवमिति । आत्मनि विज्ञानालोकः परमात्मविषयविज्ञानलक्षणप्रदीपः प्रकाशः ॥ ३० ॥

एकस्माद्गुरोः स्वार्थे सिद्धे बाहुल्यात्किमप्रयोजनं सर्वस्मादेसंगत्वादिकं एव तात्पर्यार्थं इत्यत्राह । नहीति । सुष्ठु पुष्कलं पूर्णं तत्र हेतुमाह । ब्रह्मेति । बहुधा गीयमानत्वादल्पबुद्धेर्निश्चयो न स्यादित्यर्थः हीत्यनेन—

> एकस्मात्तु गुरोर्ज्ञानं जायते नैव कस्यचित् ॥
> एकस्मादेव जायेत योग्यो ब्रह्मपदस्य तु ।
> स्वयं तु पारिशेज्ज्ञानं वैरिञ्चिपदयोगिनः ॥
> अनुप्रदानेन चापि ज्ञानं दत्वा विमुक्तिदः ।
> ज्ञानं प्राप्य बहुभ्योऽपि न ते मुक्तिश्चतुर्मुखात् ॥
> ज्ञानमप्राप्य तेषां तु ज्ञानदो विष्णुरेव हीति ।

वाक्योक्तविशेषं सिंहावलोकनन्यायेन सूचयति ॥ ३१—३२ ॥

समे ब्रह्मणि चित्तं यस्य स तथा ॥ ३३ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
नवमोऽध्यायः ॥ ९ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

नन्वेक एव योग्यो गुरुः कर्तव्यः तस्मादेव सपरिकरं ज्ञानं सेत्स्यति किम्वा मतान्तरज्ञा एवान्ये प्रष्टव्याः किं गुर्वाभासैर्व्यावहारिकपदार्थैरित्याशङ्क्याह । न हीति । एकस्मान्मुख्याद्गुरोर्यच्च सुपुष्कलं सुस्थिरं यज्ज्ञानं तदपि न स्यात् न सम्पद्यते कुतस्तत्राह । ब्रह्मेति । तत्तन्मतेन मतिभङ्गादित्यर्थः । तस्मान्महागुरूपदिष्टमतपोषाय तद्विरुद्धमतनिरसनाय च स्वबुद्ध्या मननार्थं व्यावहारिकपदार्था एव गुरुत्वेन सम्भाविताः नतु कापिलादिमतान्तरस्थापका इति भावः ॥ ३१—३३

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
नवमोऽध्यायः ॥ ९ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अनित्यमपि अर्थदं नित्यस्यापि वस्तुनः प्रापकं तस्मादिदं यावन्न पतेत् तावदेव निःश्रेयसाय यतेत यत इदम् अनुमृत्यु अन्वनु आसन्नावस्थ पश्चात् पश्चादेव वर्त्तमानो मृत्युर्यस्य तत् क्षणभङ्गुरत्वेनैव विश्वस्तमित्यर्थः । विषयः पुनः सर्वतः श्वादियोनिष्वपि प्राप्तः स्यादेव ॥ २९ ॥

यदुक्तं त्वन्तु कल्पः कविर्दक्ष इत्यादि तत्रोत्तरमाह । एवमिति । आत्मनि यद्विज्ञानमपरोक्षानुभवस्तत्रैवालोको दृष्टितात्पर्यं यस्य सः ॥ ३० ॥

ननु मदभिज्ञं गुरुं शान्तमुपासीतेति तस्माद्गुरुं प्रपद्येत जिज्ञासुः श्रेय उत्तममित्याद्युक्तिभ्य एक एव गुरुराश्रयणीयोऽवगम्यते । नापि श्वेतकेतुभृगुप्रमुखैर्बहवो गुरव आश्रिताः सत्यं ममापि मन्त्रोपदेष्टा गुरुरेक एव उपास्यो वर्त्तते । किन्तूपासनायामानुकूल्यप्रातिकूल्यदृष्टान्तभूता एते पदार्थाः परामृश्य गुरुकृता इत्यन्वयव्यतिरेकाभ्यां मे शिक्षागुरव एवैते ज्ञेयाः । तथाहि स्वामिचरणैरुपनिबद्धौ श्लोकौ । "कपोतमीनहरिणाः कुमारीगजपन्नगाः । पतङ्गः कुररश्चाष्टौ हेयार्थे गुरवो मताः मधुकृन्मधुहर्त्ता च पिङ्गला चेषुकृत्त्रयः । उपादेयार्थविज्ञाने शेषाः

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

पृथग्भावो मता" इति । शिक्षागुरूणान्तु बाहुल्यमेव प्रायो ज्ञानदार्ढ्यप्रयोजकमित्याह । नहीति । ननु शिक्षागुरवोऽप्यभिज्ञजना एव मत्वैराश्रीयन्ते सत्यम् अभिज्ञजनानां हि गोतमादिनानामतानुसारित्वाच्चया स्वसजातीयान्ते कुत्र कुत्र कत्यन्वेष्टव्या इत्याह । ब्रह्मेति । अद्वितीयं यद्ब्रह्म एतत् खलु सविशेषनिर्विशेषभेदाविभेदैर्बहुधैव ऋषिभिर्गीयते इति "नासावृषिर्यस्य मतं न भिन्न" मित्यभियुक्तवाक्यात्र मया व्यावहारिका एव पदार्थाः शिक्षागुरवः कृता इति भावः ॥ ३१ ॥

विप्रो दत्तात्रेयः स्वोमर्द्धिमापुरुगर्वी यदुद्दिष्टयाद्याः इत्युक्तेः । यथैवागतं तथैव यहच्छ । ययौ ॥ ३२—३३ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
एकादशस्य नवमः सङ्गतः सङ्गतः सताम् ॥ ९ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यतः इह मनुष्यलोके धीरः बहुसम्भवान्ते विविधवृक्षादिसम्भवान्ते जन्मकुत्तुहृदय यतोऽनित्यं तथापि मनुमृत्यु यन्वनु निरन्तरं मृत्यो मावदेतयो यस्य तदेवं भूतमपि अर्थदं पुरुषार्थदमिदं मानुष्यं देवाल्लब्ध्वा यावत् पतेत् न म्रियेत तावदेव तूर्णं शीघ्रं निःश्रेयसाय मोक्षाय यतेत श्रोत्रादीनीन्द्रियाणि परब्रह्मगुणादिश्रवणप्रवणानि कुर्यादित्यर्थः । विषयः शब्दादिरूप इन्द्रियार्थस्तु खलु सर्वतः सर्वेषु देहेषु स्यादेव ॥ २९ ॥

इत्थं चतुर्विंशति गुरुभ्यो लब्धं ज्ञानं देहस्य विरक्तिविवेकहेतुत्वेन गुरुत्वं चोक्त्वा स्वं तु कस्त्वं कविरेष इत्यादेरुत्तरमाह । एवमिति । विज्ञानं गुरुप्रसादलब्धं विशिष्टं ज्ञानमेवालोकः प्रदीपो यस्मिन् तस्मिन् आत्मनि स्थितः महीं विचरामि ॥ ३० ॥

ननु एकस्मादेव सहायभूतान्मुख्यगुरुमुखाच्छ्रुतं ज्ञानं स्थिरीस्यात् किं बहुभिः सहायभूतैर्गुरुभिरतः आह । नेति । एतल्लोकवेदप्रसिद्धं ब्रह्म ऋषिभिर्वेदैः एकोऽहं बहुस्यामित्यादिभिः अद्वितीयमेकधा कारणरूपेण बहुधा कार्यरूपेणैवं द्वैताद्वैतं गीयते किञ्च निःसमानातिशयत्वेन चिदचिच्छक्तिमद्ब्रह्मैकं पदार्थस्वरूपविवक्षयानेकमित्येवमेकमेवाद्वितीयं "द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते" इत्यादिभिर्वेदैर्गीयते यद्वा ऋषिभिः "अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके" इत्येवं वादिभिर्वेदाचार्यादिभिर्गीयते अत इत्थं भूतब्रह्मविषयकज्ञानं मुख्यगुरुमुखात्सुगृहीतमपि सहायभूतादेकस्माद्गुरोः सुपुष्कलं सुस्थिरं नहि स्यात् "स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठमितिश्रुतेः महदभिज्ञं गुरुं शान्तमुपासीतेति वक्ष्यमाणाच्च मुख्यो गुरुरेकस्तत्प्रोक्तज्ञानदार्ढ्यार्थं बहवो महात्मानो गुरुत्वेनादरणीया इति भावः ॥ ३१ ॥

विप्रो दत्तात्रेयः यथा गतं तथैव स्वेच्छया ययौ ॥ ३२-३३ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
नवमाध्यायार्थप्रकाशः ॥ ९ ॥

---

भाषा टीका ।

तिससे मनुष्य बहुत जन्मों के पीछे अनित्य भी इस मनुष्य शरीर को प्राप्त हो कर सुन्दर अर्थ का देने वाला है ऐसा समझ कर जब तक मरना नजीक नहीं आया है तबही मोक्ष के लिये यतन करै वह धीर पुरुष है विषय भोगों का यत्न न करै क्योंकि वे सब ठिकाने ही होते हैं ॥ २९ ॥

इस प्रकार विज्ञान के देखने वाला होकर देहादिक मे वैराग्य को प्राप्त होकर अहंकार को तथा सब के सङ्ग को छोड़ कर इस पृथ्वी में विचरताहूं ॥ ३० ॥

एक गुरू से ज्ञान अति दृढ नहीं होता है क्योंकि इस अद्वितीय ब्रह्म को भी ऋषियों ने बहुत प्रकार से गान किया है ॥ ३१ ॥

श्रीभगवानुवाच ॥

वे गम्भीर बुद्धि वाले ब्राह्मण दत्तात्रेय जी इस प्रकार से यदुमहाराज को कह कर उनसे विदा मांग कर यदुमहाराज से नमस्कृत पूजित हो कर अति प्रसन्न चित्त से जैसे आये हे तैसे ही चले गये ॥ ३२ ॥

हमारे बड़ों के बड़े यदुमहाराज अवधूत जी के वचनों को श्रवण कर के सब के सङ्गों से छूट कर सम दृष्टि वाले होगये ॥ ३३ ॥

इति श्रीमद्भागवत एकादशस्कन्ध में नवमाध्याय
श्रीवृन्दावनस्थ पं० भागवताचार्यकृत
भाषा टीका समाप्ता ॥ ९ ॥

---

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे नवमोऽध्यायः ॥ ९ ॥

## अथ दशमोऽध्यायः ।

———:*:———

श्रीभगवानुवाच ॥

मयोदितेष्ववहितः स्वधर्मेषु मदाश्रयः ।
वर्णाश्रमकुलाचारमकामात्मा समाचरेत् ॥ १ ॥
अन्वीक्षेत विशुद्धात्मा देहिनां विषयात्मनाम् ।
गुणेषु तत्त्वध्यानेन सर्वारम्भविपर्ययम् ॥ २ ॥
सुप्तस्य विषयालोको ध्यायतो वा मनोरथः ।
नानात्मकत्वाद्विफलस्तथा भेदात्मधीर्गुणैः ॥ ३ ॥
निवृत्तं कर्म सेवेत प्रवृत्तं मत्परस्त्यजेत् ।
जिज्ञासायां सम्प्रवृत्तो नाद्रियेत् कर्मचोदनाम् ॥ ४ ॥
यमानभीक्ष्णं सेवेत नियमान् मत्परः क्वचित् ।
मदभिज्ञं गुरुं शान्तमुपासीत मदात्मकम् ॥ ५ ॥
अमान्यमत्सरो दक्षो निर्ममो दृढसौहृदः ।
असत्वरोऽर्थजिज्ञासुरनसूयुरमोघवाक् ॥ ६ ॥
जायापत्यगृहक्षेत्रस्वजनद्रविणादिषु ।
उदासीनः समं पश्यन् सर्वेष्वर्थमिवाऽऽत्मनः ॥ ७ ॥
विलक्षणः स्थूलसूक्ष्माद्देहादात्मेक्षिता स्वदृक् ।
यथाऽग्निर्दारुणो दाह्याद्दाहकोऽन्यः प्रकाशकः ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

चतुर्विंशतिगुर्वाद्युपाख्यसम्भावनाभुवः ॥
उद्धवस्याऽऽत्मतत्त्वाप्त्यै साधनोक्तिरतः परैः ।
दशमे देहसम्बन्धात्संसृतिर्नाऽऽत्मनः स्वतः ॥
इत्येतद्वर्णयामास मतान्तरनिरासतः ।

तदेवमन्वयव्यतिरेकाभ्यामुत्पन्नविवेकज्ञानस्य तत्त्वज्ञानाया-दित आरभ्य साधनान्युपदिशति भगवान् मयेति । मया पञ्चरा-त्राद्युक्तेष्वस्मद्धर्मेष्ववहितोऽप्रमत्तः संस्तदविरोधेन वर्णाश्रमा-चारमनुतिष्ठेत् ॥ १ ॥

कथमकामात्मता सम्भवति तत्राऽऽह । अन्वीक्षेतेति । स्वधर्मै-र्विशुद्धचित्तः सन् देहिनां विषयेषु सत्यत्वाभिमानवशेन ये सर्वे आरम्भास्तेषां फलवैपरीत्यं पश्येत् एवं फलवैपरीत्यादकामः स्यात् ॥ २ ॥

किञ्च काम्यविषयाणां मिथ्यात्वमुपपाद्याह । सुप्तस्येति । विफलोऽर्थशून्यः तथैव प्रयोगः इन्द्रियैर्या बहिर्नाना बुद्धिः सा विफला नानात्मकत्वात् ऐन्द्रियकत्वाच्च मनोजन्यस्वप्नमनोरथ-वदिति ॥ ३ ॥

मोक्षार्थी न प्रवर्तेत तत्र काम्यनिषिद्धयोः ॥
नित्यनैमित्तिके कुर्यात् प्रत्यवायजिहासयेति ।

स्मृतिरतः प्रवृत्तं काम्यं कर्म त्यजेत्तदपि नित्यनैमित्ति-कमेव कुर्यात् आत्मविचारे तु सम्यक् प्रवृत्तो निवृत्तकर्मचो-दनामपि नाद्रियेत ॥ ४ ॥

किञ्च यमानहिंसादीनभीक्ष्णमादरेण सेवेत । शौचादींस्तु नियमान् कदाचिद्यदा शक्तिस्तदा आत्मज्ञानाविरोधेन यमान् शौच नियमांश्चैकोनविंशेऽध्याये वक्ष्यति । किञ्च यमेष्वप्यादर

श्रीधरस्वामिकृतभावार्थदीपिका ।

परित्यज्य गुरुमुपासीतेत्याह । मदभिज्ञमिति । मदात्मकं मद्रूपम् ॥ ५ ॥

गुरुसेवकस्य धर्मानाह । अमानीति । दक्षोऽनलसः निर्ममो जायादिषु ममताशून्यः गुरौ तु दृढसौहृदः असत्वरोऽव्यग्रः अमोघवाक् व्यर्थालापरहितः एतान्येव शिष्यस्य लक्षणानि ज्ञेयानि ॥ ६ ॥

ननु स्वजायादिषु कथं निर्ममः स्यात्तत्राऽऽह । जायेति । औदासीन्यहेतुं विवेकं दर्शयति । आत्मनोऽर्थं प्रयोजनं सर्वत्र सममिव पश्यन्निति अयम्भावः सर्वदेहेष्वात्मन एकत्वाज्जायादिदेहेऽस्मिंश्च स्वदेहे आत्मनोऽर्थः सुखादिः सम एव केन विशेषेणैतस्मिन्नेव ममत्वाभिनिवेशः इत्येवमुदासीनः सन् गुरुं प्रपद्येतेति ॥ ७ ॥

अहो कोऽसौ देहादिव्यतिरिक्त आत्मा यस्यैक्यादर्थः सर्वेषु समः स्यात्तमाह । विलक्षण इति । स्थूलसूक्ष्मदेहद्वयादात्माऽन्यो यतो विलक्षणः तत्र वैलक्षण्यं दर्शयति । ईक्षितेति द्रष्टा हि दृश्याद्विलक्षणः स्वप्रकाशश्च जडाद्विलक्षणः तयोरन्यत्वे दृष्टान्तः यथाग्निर्दाहकः प्रकाशकश्च दाह्यात्प्रकाश्याच्च दारुणः काष्ठादन्यस्तद्वदिति ॥ ८ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

चतुर्विंशतिगुरूणां वार्त्ता कथनं तेन स्वस्य वा सम्माप्ता आत्मानुभवे स्वयोग्यताध्यवसायस्तस्या भुवः स्थानस्योद्धवस्यात्मप्राप्त्यै अतो नवमाध्यायात् परेऽध्याये श्रीकृष्णकर्तृका साधनोक्तिः संदर्शते अतः स्वरूपतो न इत्येतत् जीवसंसृतेर्वास्तवत्वं मतान्तरनिरासः मीमांसकमतनिराकरणेन तदेवं चतुर्विंशतिगुरुवर्णनप्रकारेण अन्वयव्यतिरेकाभ्यां हेयोपादेयत्वेन विधिनिषेधाभ्यां तदविरोधेन वैष्णवधर्माविरोधेन अकामात्मा निष्कामः ॥ १ ॥

स्वीकृतस्य पुनस्त्यागासहिष्णुत्वमभिनिवेशकत्वेन ॥ २ ॥

मिथ्यात्वादुपसंहामः स्यादित्यनुषङ्गः अर्थशून्यः मिथ्याभूतः अत्र अर्थशून्यत्वे वाहिनीत्वाद्युक्तिरिति भक्तिरूपाऽभेदात्मभक्तिस्तु नात्मात्मिका न भवति भगवद्रूपावस्थैकात्मकत्वात् ॥ ३ ॥

तत्र काम्यादिचतुर्विधकर्ममध्ये मत्पर इति क्रियाश्रयेऽपि योऽयं महाश्रयं विना सर्वमपि तत्तदव्यर्थमित्यभिप्रायात् सम्यक् प्रवृत्त इति प्रवृत्तेः परमवैराग्यपूर्वकत्वं सूचयति यथोक्तं श्रीगीतासु "आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते । योगारूढस्य तस्यैव शमः कारणमुच्यते । यदा हि नेन्द्रियार्थेषु न कर्मस्वनुषज्जते । सर्वसङ्कल्पसन्न्यासी योगारूढस्तदोच्यते" इति ॥ ४ ॥

यमानित्यर्थकं मत्पर इति महाश्रयं विना यमादीनामपि वैफल्यमिति सूचयति क्वचिद्राघवकमलसूत्रोत्सर्गादौ यथावाक्येव पाठः ॥ ५ ॥

मदभिज्ञमिति युग्मकम् आदरं कर्तव्यताभिनिवेशं मद्रूपमिति गुरावीश्वरदृष्टिं विधत्ते येऽमानित्वादयो गुरुसेवकस्यावश्यकर्तव्यस्वरूपा धर्मा एतान्येव शिष्यस्य द्योतकानि लक्षणान्यपि ज्ञेयानीत्यर्थः ॥ ६ ॥

जायादिषु उदासीनः ममताविशेषमभावयन् सुखादिरित्यत्रादिना दुःखहान्यादिकं ज्ञेयम् ॥ ७ ॥

ईक्षिता द्रष्टा स्वदृक् स्वप्रकाशः विलक्षणयोर्विरुद्धलक्षणयोर्देहात्मनोः अन्यत्वे भिन्नत्वे ॥ ८ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

॥ १ ॥ २ ॥

भेदार्थधीः भेदविषयधीः आत्मनि देहभेदारोपः विफलः नानात्मकत्वात् आत्मन्यविद्यमानः मनुष्यत्वादिगोचरत्वात् ॥ ३ ॥

कर्मचोदनां काम्यकर्मचोदनाम् ॥ ४—६ ॥

सर्वेषु जायापत्यादिषु उदासीनः सर्वेषु समं साधारणं पश्येत् ममैवेदमिति न जानीयात् आत्मनोऽर्थमिव स्वकीयत्वाभिमतोऽर्थोऽहि पुत्रादिभिर्भुज्यते एवं पुत्रादयोऽपि न ममैवेति पश्येदित्यर्थः ॥ ७—८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तदेवमवधूतयदुसंवादमुखेन स्वबुद्धिः स्वयमेव शिक्षणीयेत्यभिधायाथ साक्षान्मुक्तिसाधनभूतब्रह्मोपासनात्मकं भक्तियोगं तदङ्गभूतौ कर्मज्ञानयोगावन्यानि च साधनानि उपदिशति श्रीभगवान् । मयेत्यादिना । मया सर्वज्ञेन परमकारुणिकेनोदितेषु पञ्चरात्रगीतादिमुखेनोपदिष्टेषु स्वधर्मेषु स्वरूपानुरूपधर्मेष्वर्चनवन्दनादिष्ववहितः प्रमादरहितः अप्रमादेनताननुतिष्ठन्नित्यर्थः महाश्रयः अहमेव सर्वान्तरात्मा आश्रयो यस्य सः महाश्रयः सत्त्वाहितमतिप्रवृत्तिज्ञानवान् अकामात्मा न कामेष्वात्मा यस्य सः फलाभिसन्धिरहितः स यावद्देहं वर्णाश्रमकुलोचितमाचारं समाचरेदनुतिष्ठेत ॥ १ ॥

कथमकामात्मता सम्भवेदित्यत आह । अन्वीक्षेतेति । शुद्धधर्मविशुद्ध आत्मा मनो यस्य सः तत्त्वज्ञानेन तत्त्वमनारोपिताकारः स्वात्मपरमात्मयाथात्म्यानुचिन्तनेन विषयात्मनां विषयप्रवणचित्तानां देहिनां गुणेषु गुणपरिणामात्मकेषु शब्दादिविषयेषु निमित्तेषु तदर्थमित्यर्थः । ये सर्वे आरम्भा उद्योगास्तेषां विपर्ययं फलव्यत्यासं सुखार्थारम्भाणामन्ततो दुःखफलकत्वमित्यर्थः । अन्वीक्षेत पश्येत् सर्वारम्भविपर्ययान्वीक्षणयाऽकामात्मता सम्भवतीति भावः ॥ २ ॥

तत्त्वज्ञानेनेत्यनेनाऽतत्त्वज्ञानस्य कामात्मतापादकत्वाऽन्ततो दुःखहेतुत्वान्निष्फलत्वमिति सूचितं तदेव दृष्टान्तमुखेन विवृणोति । सुप्तस्येति । यथा सुप्तस्य पुंसः विषयालोकः प्रियाप्रियविषयानुभवः यथा वा ध्यायतो मनोरथश्च विफलः नहि स्वाप्नार्थकामादिमात्रेण फलित्वं तथा विषयध्यानात्मकमनोरथमात्रेण प्रत्युत तौ नानात्मकत्वात् विफलौ प्रियाप्रियरूपेण विषयाणां नानात्मकत्वात्तयोर्नानात्मकत्वमवगन्तव्यं विफलत्वं च पुरुषार्थशून्यत्वं तथा गुणैर्यो भेदः आत्मनि देवमनुष्यादिभेदः अर्थः शब्दादिविषयश्च तद्विषया धीर्नानात्मकत्वाद्विफला नानात्मकत्वा-

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

दिवेतत् कार्यत्वानित्यत्वादीनामप्युपलक्षणं नानात्मकत्वात् कार्यत्वादनित्यत्वाद्विफल इत्यर्थः । भेदात्मधीरिति पाठे भेदेन देवमनुष्यादिभेदेनात्मनि धीरित्यर्थः । आत्मनि देवादिदेहभेदारोपो विफलः नानात्मकत्वादात्मन्यविद्यमानतत्तद्देवमनुष्यादिगोचरत्वादर्थानामन्ततो दुःखहेतुत्वाच्चेत्यर्थः ॥ ३ ॥

यत एवमतो मत्परः अहमेव परं उत्कृष्टः पुरुषार्थो यस्य सः निवृत्तं फलाभिवृत्तं निष्काममनन्यप्रयोजनमिति यावत्तत्कर्म सेवताचरेत् प्रवृत्तं फलकामाय प्रवृत्तमैश्वर्यादिसाधनं काम्यमितियावत्तत्कर्म त्यजेत् नन्विष्टसाधनतावबोधके सति प्रवर्तके कथं तत्त्याग इत्यत आह सूत्रेण । जिज्ञासायामिति । जिज्ञासायां ब्रह्मविचारे संप्रवृत्तः पुमान् कर्मचोदनां काम्यकर्मचोदनां तत्फलेऽल्पास्थिरत्वबुद्ध्या नाद्रियेत ॥ ४ ॥

किन्तु यमान् बाह्यान्तःकरणनिग्रहोपायानभीक्ष्णं पौनःपुन्येनादरेण सेवेत नियमान् शौचादींस्तु क्वचिद्यथाशक्ति सेवेतानुतिष्ठेत् मत्परोऽनन्यप्रयोजनः किञ्च मदभिज्ञमिति । मदभिज्ञं मामीश्वरमभिजानातीति तथा ब्रह्मनिष्ठमित्यर्थः।मदात्मकं मत्प्रसादात्मदृष्टिविषयं शान्तं जितेन्द्रियं गुरुमुपासीत ॥ ५ ॥

गुरूपासनस्य धर्मानाह । अमायीति । अमायी निष्कपटः अमत्सरः तस्मिन् तदनुबन्धिनि चार्थकामादिप्रयुक्तमात्सर्यरहितः दक्षस्तत्सेवायामुत्साही निर्ममः देहानुबन्धिषु ममाभिमानरहितः तद्ममाभिमानस्य तत्सेवापादनद्वारा गुरूपासनविरोधित्वादिति भावः। गुर्वादिषु सौहृदं यस्य सः दृढसौहृद इति पाठे दृढसौहृदवानित्यर्थः । असत्वरो न त्वरया सहितः अव्यग्रः अवहितमना इत्यर्थः । अर्थान् हेयोपादेयान् ज्ञातुमिच्छुः अनसूयुर्दोषाविष्काररहितः अमोघवाङ्मृषा प्रलापरहितः ॥ ६ ॥

कथं निर्ममता सम्भवेदत आह । जायेति । आदिशब्देन पश्वादिसंग्रहः उदासीनः आसक्तिरहितः तेष्वौदासीन्येन निर्ममो भवतीति भावः । कथमौदासीन्यं सम्भवेदत आह । समं साधारण्यं पश्येत् ममैवेते जायादय इति न विजानीयात् आत्मनोऽर्थमिव अन्यस्याप्यभिमतोऽर्थो हि पुत्रादिभिर्भुज्यते एवं पुत्रादयोऽपि न ममैवेति पश्येदित्यर्थः ॥ ७ ॥

भेदात्मधीरित्यनेन नात्मा देवमनुष्यादिशरीराकारः किन्तु ततोऽन्य इति सूचितं तदेव सदृष्टान्तं विवृणोति । विलक्षण इति । आत्मा स्थूलसूक्ष्मदेहाद्विलक्षणः अन्यः भूतसूक्ष्मेन्द्रियमनः प्राणसङ्घातात्मको देहः सूक्ष्मः तत्परिणामात्मकस्तु स्थूलः वैलक्षण्यापादकाभ्यां धर्माभ्यामात्मानं विशिनष्टि । द्रष्टा द्रष्टा स्वयं ज्योतिः सततं देवमनुष्यमिति तं विदुरिति मनुकोरिति भावः । देहस्त्वचित्त्वाज्जडो नेदृश इति भावः । स्वदृक् स्वमात्मानं पश्यतीति स्वप्रकाशः प्रत्यगित्यर्थः । देहस्तु पराग्गिति भावः यथा दाह्यात् प्रकाश्याद् दारुणः काष्ठादग्निर्दाहकः प्रकाशकश्चान्यस्तद्वत् ॥ ८ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मुमुक्षुणा ईश्वरप्रसादज्ञानमापाद्यमिति इतिहाससुखेनोक्तं तत्साधनानि निरूपयत्यस्मिन्नध्याये । तत्रादौ वर्णाश्रमाचारप्रकारमाह । मयोदितेष्विति । अकामात्मा फलाभिसन्धिरहितमनाः भूत्वा ॥ १ ॥

सर्वसाधनेषु वैराग्यं प्रथममापाद्यमित्याह । अन्वीक्षेतेति अन्तःकरणशुद्धिहेतुना वर्णाश्रमादिविहिताचारेण विशुद्धात्मा पुमान् गुणेषु शब्दादिषु तत्त्वज्ञानेन पुरुषार्थसाधनतानिश्चयज्ञानेन विषयात्मनां विषयेष्वासक्तचित्तानां देहिनां सर्वेषां कर्मारम्भाणां विपर्ययं फलवैपरीत्यम् अन्वीक्षेत अन्वीक्षणं नाम यथावस्तु दर्शनं तदेव पुरुषार्थसाधनं नान्यत् ॥ २ ॥

शुक्तिरजतादिज्ञानवन्मुमुक्षुणा हेयमिदं ज्ञानमितिभावेनेत्युपपादयति।सुप्तस्येति।यथा सुप्तस्य जागृतस्येव विषयाणामालोकोऽयथार्थः स्वाप्नो मनोरथश्च नानात्मकत्वाद्वस्तुस्थितेरन्यथात्वाद्विफलः अत एव अविद्यमानः तथान्यथागुणैः स्वप्नसुषुप्त्यादिगुणैः अज्ञरूपैः कामक्रोधादिभिरभेदोऽहं क्रोधवान् कामितवानित्यज्ञानं योऽसौ हेय इत्यर्थः—

वस्तुस्थितेरन्यथात्वं नानात्वमिति कीर्तितम् ॥
ज्ञानस्यैव तु नानात्वाच्च स्यात्कामादिमान्मतिः ।
कामादिषु स्वधीस्थेषु केवलं जीवसंस्थितिः ॥
इति बुद्धिरभेदः स्यात्स न कार्यः कथञ्चन ।
अदुष्टकामश्चिद्रूपो जीवाभिन्नस्वरूपतः ॥
दुष्टकामो मनोधर्मस्तस्माद्धेयः सदैव सः ।

इतिप्रमाणेन हेयत्वं ज्ञायते इत्यर्थः ॥ ३ ॥

अकामात्मेत्युक्तं विवृणोति । निवृत्तमिति । फलानपेक्षया यथा वस्तुज्ञानपूर्वं यत्कर्म तन्निवृत्तं तदेव सेवेत कुर्यात् अनीदृशं यत्कर्म तत्प्रवृत्तं त्यजेत् कुर्यात् अहमेव परो यस्य स मत्परः अनेनाकामात्मनो बुधस्य कर्मविधानं प्रतीतिविरुद्धमिति परास्तम्—

निष्कामं ज्ञानपूर्वं च निवृत्तमिति चोच्यते ॥
निवृत्तं सेवमानस्तु ब्रह्माभ्येति सनातनमिति ।

एतच्च मानम् । ननु सकामस्य कर्मविधानात्तत्त्यागः कथमत्राह । जिज्ञासायामिति । जिज्ञासायां ब्रह्मविचारे कर्मचोदनां कर्मविधिं ब्रह्मज्ञानोत्पत्तौ प्रवृत्तानां सर्वशब्दानां कर्मादिविषयत्वाङ्गीकारे विरोधापत्त्या तत्रानादरलक्षणत्यागो विधीयते न तु सर्वात्मना अन्तःकरणशुद्धिद्वारा ज्ञानाङ्गत्वेनाङ्गीकारादिदर्शनादितो नाद्रियेतेति युक्तम् ॥ ४ ॥

ननु यमादिचोदनापि नादरणीया किन्नेत्याह । यमानिति । यमनियमाः—

अहिंसा सत्यमस्तेयमसङ्गो ह्रीरसंचयः ॥
आस्तिक्यं ब्रह्मचर्यं च मौनं स्थैर्यं क्षमाभयम् ।
शौचं जपस्तपो होमः श्रद्धातिथ्यं मदर्चनम् ।
तीर्थाटनं परार्थेहा तुष्टिराचार्यसेवनमिति ।

यस्यति कश्चित्तद्विहितकाले निवृत्तादिवत् ज्ञानोत्पत्तौ गुरूपासनमप्यन्तरङ्गमित्याह । मदभिज्ञमिति । मय्येव आत्मा ध्यानसमर्था बुद्धिर्यस्य स तथा तम्—

मामेव नित्यं ध्यायेद्यो मदात्मा सम्प्रकीर्तितः ॥

इतिवचनात् ॥ ५ ॥

तस्य गुरुप्रसादजनकगुणानाह । अमानीत्यादिना । नितरां गमयतीति निगमो निर्णायकं वैष्णवशास्त्रं तदिमत् ॥ ६ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सर्वेषु जीवात्मस्वादिष्वात्मनः स्वस्यार्थमिव प्रयोजनमुभयोः सम न तु विशेषं "पश्येत् ह्योभयेच्च साक्ष्ये" इति च वा प्रयोजनं पश्येदिति वा ॥ ७ ॥

जीवपरमात्मानावपि परस्परं देहादेश्च भिन्नत्वेन ज्ञातव्याविति सदृष्टान्तमाह । विलक्षणा इति । एधवत् स्वयंप्रकाशः ह्यज्ञितास्य सर्वस्य द्रष्टा आत्मा परमात्मा स्थूलसूक्ष्मदेहाद्विलक्षणो भिन्न आत्मा जीवश्च हरेर्देहादेश्च भिन्न इति ज्ञातव्याविति शेषः दाह्याद्दारुणो यः पावकः ॥ ८ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तदेवं श्रीमदुद्धवमुपलक्षणीकृत्योपदिष्टमिति यथोक्तं तथा स्फुटमेवान्यान् प्रत्युपदिशति । मयीति ॥ १ ॥ २ ॥

गुणैरिन्द्रियैः भेदात्मधीर्बहिर्नानाबुद्धिः भक्तिरूपाभेदात्मधीस्तु नानात्मिका न भवति श्रीभगवद्रूपाखण्डैकात्मत्वादिति ज्ञेयम् ॥ ३ ॥

मत्पर इति क्रियाग्रहेऽपि योज्यं मदाश्रयं विना सर्वमपि तत्तद्व्यर्थमित्यभिप्रायात् संन्यासेन परमवैराग्यपूर्वकं सूचयति यथोक्तं श्रीगीतासु—

आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते ।
योगारूढस्य तस्यैव शमः कारणमुच्यते ॥
यदा हि नेन्द्रियार्थेषु न कर्मस्वनुषज्जते ।
सर्वसङ्कल्पसंन्यासी योगारूढस्तदोच्यते इति ॥ ४ ॥

यमानित्युक्तकम् ॥ ५ ॥

यद्भिज्ञामिति युग्मकम् । जायादिषु उदासीनः ममताविशेषमभावयन् यतः सर्वेषु जीवेषु सुखरूपं दुःखहानिरूपं चार्थमात्मन इव पश्यन् चाक्षुन् यतः समश्च पश्यन्निति ॥ ६ ॥ ७ ॥

ननु जायादिषु सम्बन्धवैशिष्ट्येन ममतावैशिष्ट्यात्सक्तिरनुसन्धानवैशिष्ट्यं दुर्निवारमित्याशङ्क्य तेषुत्वेन तत्स्वरूपं चारयति । विलक्षणा इति चतुर्भिः ॥ ८—१२ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

साधनस्य साधनं देहसम्बन्धाद्धस्य आत्मनः ।
द्वादशे जिज्ञासूनां भक्तस्योक्तश्च लक्षणम् ॥

शिक्षानुकथा साधनमुपदिशति । मया सर्वेषु पञ्चरात्रादुक्तेषु मदीयधर्मेषु ॥ १ ॥

कथमनात्मता स्वमध्येव तदाह । अग्विति । गुणेषु विषयसुखेषु स्वध्यानेन पुरुषार्थबुद्धया ये सर्वे आरम्भास्तेषां विपर्ययं फलं वैपरीत्यमन्वीक्षेत पुनः पुनः पश्येत् अतएव विवेकी समासितनिश्चयभावो निष्कामः स्यादिति भावः ॥ २ ॥

व्यावहारिकफलस्य नश्वरत्वात् प्राप्तिरप्यप्राप्तितुल्यैव पारमार्थिकफलन्तु कदाचिदपि नैव प्राप्यत इत्याह । सुप्तस्येति । नानात्मकत्वात् नानापदार्थावलम्बनत्वाद्विफलः पारमार्थिकफलशून्यो यथा तथैव गुणैरिन्द्रियैर्भेदात्मकेषु नानाविषयेषु धीः नानापदार्थानालम्बनीकृत्य या धीः सत्यपि । तथैव प्रयोगः इन्द्रियैर्गुणमयवस्तुषु पृथक् पृथक् बुद्धिः पारमार्थिकफलशून्या भद्राभद्रात्मकनानापदार्थावलम्बनत्वात् मनोजन्यस्वप्नमनोरथवत् तस्मात् परमेश्वरैकावलम्बना बुद्धिरेव पारमार्थिकफला तद्रूपगुणलीलाभक्त्यादीनां ततः पार्थक्याभावात् चिदेकमयत्वात् केवलभद्रात्मकत्वाच्च तदैक्यमेव ज्ञेयम् अतएवोक्तं "व्यवसायात्मिका बुद्धिरेकेह कुरुनन्दन । बहुशाखा ह्यनन्ताश्च बुद्धयोऽव्यवसायिनामिति ॥ ३ ॥

यस्मादेवं तस्मान्मत्परः मदेकावलम्बनधीर्निष्कामः निवृत्तं नित्यं कर्म प्रवृत्तं काम्यं कर्म जिज्ञासायां सत्यामेव प्रवृत्तो जिज्ञासोत्तरदशायां योगारूढश्चेदित्यर्थः । कर्मचोदनां नित्यनैमित्तिकादिकर्मविधिमनधिकारान्नाद्रियेत यदुक्तम् "आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते । योगारूढस्य तस्यैव शमः कारणमुच्यते यदा हि नेन्द्रियार्थेषु न कर्मस्वनुषज्जते । सर्वसङ्कल्पसंन्यासी योगारूढस्तदोच्यते" इति ॥ ४ ॥

किन्तु यमानहिंसादीन् अभीक्ष्णमादरेण सेवेत नियमान् शौचादींस्तु क्वचित् यथाशक्ति तांश्च कालविशेषेऽध्याये वक्ष्यति किञ्च सर्वतोऽप्यधिकेनाग्रहेण गुरुमुपासीनेत्याह । मदभिज्ञमिति ॥ ५ ॥

गुरुसेवकस्य धर्मानाह । अमानीति । निर्ममः ममताशून्यः गुरुविषये च दृढसौहृदः असत्वरः साध्यवस्तुप्राप्तौ त्वरामकुर्वन् ॥ ६ ॥

कीदृशेन विचारेण कुत्र निर्ममः स्यादित्यत आह । जायेति । आत्मनः स्वस्य अर्थं स्वर्गरूप्यादिसुखरूपं अन्यमिव समं पश्यन् तत्र यथा व्यावहारिकं यावत् यस्य करणं तावदेव तस्य ममतास्पदं न तु सर्वदैव तत्तदेवं जायादिकमपीति तत्र तत्र ममताया अनैकान्तिकत्वदर्शनात् निर्ममतैवोचिता यदुक्तं चित्रकेतुपुत्रेण । "यथा वस्तूनि पण्यानि हेमादीनीत्युपक्रम्य नित्यस्यार्थस्य सम्बन्धो ह्यनित्यो दृश्यते नृषु । यावद्यस्य हि सम्बन्धो ममत्वं तावदेव हीति" श्रीगुरुदेवदेवयोस्तु तादृशत्वाभावात् तत्र दृढसौहृदमेवोचितम् ॥ ७ ॥

देहेत्यात्मनां नैव कुर्यादित्यत्र विचारमाह । विलक्षण इति । स्थूलसूक्ष्मदेहद्वयाज्जडात् दृश्याच्च आत्मा चेतयिता ईक्षिता द्रष्टा च विलक्षणः जीवात्मनोऽपि किञ्चित् किञ्चित् चेतयितृत्वादिकमस्त्येव यतः स्वतः स्वप्रकाशः स्वप्रकाशो ह्यात्मा प्रकाश्यात् जडात् दृश्याद्देहादन्य एवेत्यतस्तत्र कथमहन्तां कुर्यादिति भावः । यद्यपि परमात्मैव स्वप्रकाशः जीवात्मा तु परमात्मप्रकाश्य एव प्रसिद्धस्तथापि तस्य परमात्मप्रकाशितत्वे सति किञ्चित्स्वप्रकाशत्वमपि स्यात् यथा सूर्यप्रकाशितत्वे सत्येव चन्द्रकरजलादेरपि किञ्चित् स्वपरप्रकाशकत्वं स्यादिति विलक्षणयोरन्यत्वे दृष्टान्तः यथाग्निर्दाह्यात् दारुणः काष्ठात् सकाशात् दाहको ह्यन्यः यतः प्रकाशकः प्रकाशकोऽग्निर्हि स्वतोऽन्यात् प्रकाश्यात् काष्ठादन्य एव यद्यप्यविद्यादशायां जीव इवाग्निः काष्ठस्थदाहकः काष्ठावृत एव तिष्ठत्यपि विद्यादशायां विद्वान् जीवो विद्याद्वारा अविद्याया दाहकोऽपि स्यात् काष्ठानावृतः प्रकटोऽग्निरिवेत्यर्थः ॥ ८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ज्ञानं गुर्वनुग्रहलभ्यं बहुभिः सद्धर्मपूर्वैर्गुरुभिः सुपुष्कलं सुस्थिरं कर्तव्यमित्युक्तमथ स्वभक्त्युत्पादकं तदेव ज्ञानं तत्स्वरूपे हेयोपादेयान् बहूनर्थान् तदुपदेष्टारं मुख्यं गुरुं च स्वयमेव

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

यावज्ज्ञानात्वं तावत्पारतन्त्र्यं कर्मकर्तृत्वप्रयुक्तं गुणकर्मवश्यत्वं स्यात् ॥ ३२ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

सुराक्रीडेषु देवक्रीडास्थानवनेषु ॥ २५ ॥

समाप्यते क्षीयते ॥ २६ ॥

स्वतोऽसुराणां वैष्णवाचार्यैर्यज्ञं कृत्वा स्वर्गं गत्वा कर्मफलं भुक्त्वा मर्त्यलोकमागतानां गतिमाह। यदीति ॥ २७ ॥

आलभ्य हिंसित्वा ॥ २८ ॥

मनुष्ययाज्ञिकस्य स्थितिमाह। कर्माणीति। मर्त्यधर्मिणो मरणधर्मिणः पुरुषस्य तत्र देहे किं सुखं लभ्यते न किमपीत्यर्थः ॥ २९ ॥

न केवलं लोकत्रयस्यानित्यफलत्वं सत उपरितनानां सत्यलोकपर्यन्तानामप्येवमेवेत्याह। लोकानामिति ॥ ३० ॥

एवं मनुष्यादिब्रह्मपर्यन्तं लोकानां लोकपालानां च सृष्ट्यादिकर्त्रा कालाख्येन भगवता मायागुणोपादानत्वेन तत्कर्मानुगुणं प्रवर्त्यते तस्मादस्य ज्ञानमेवात्यन्तदुःखनिवर्तकत्वेन नित्यं सुखदायीति भावेनोपसंहरति। गुणा इति। गुणाः सत्त्वादयः प्रकृतेः कर्मफलभोक्तृत्वमिति मतं प्रत्याह। जीवकर्त्वति। तुशब्देनाचेतनस्य भोक्तृत्वानुपपत्तिं दर्शयति सत्त्वादिगुणयुक्तः ॥ ३१ ॥

एवं जीवपरभेदं प्रतिपाद्य तदभेदमतमनूद्य दूषयति। यावदित्यारभ्य तावदीश्वरतो भयमित्यन्तग्रन्थः पूर्वपक्षीयः य एतन्मतम् उपासीरन् सेवन्ते तेऽन्धे तमसि मुह्यन्ति दुःखोद्रेकात् ॥ ३२—३३ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

गुणा इति तैः तत्र एतेनेति पूर्वदर्शितभीषास्मादित्यादिश्रुत्यात्मकपुराणस्वरूपस्ववाक्यप्रामाण्येनेत्यर्थः। न स्वात्मेति। अथ स्वकान्तरस्यैवात्मनः साक्षित्वेनैव तत्तत्प्रेरकत्वात्तु स्वेच्छयेति भावः। यद्वा अथ जीवस्य स्वतः कर्मकर्तृभोक्तृरूपत्वं तन्मतं साङ्ख्यमतेन निराकरोति। गुणा इति। तत्तत्स्वभाव एव तत्र तत्र कारणमिति भावः ॥ ३१ ॥

यावदिति सार्द्धकम्। नानात्वं चाद्वयवादिमतेन निराकरोति यावदित्यर्द्धेन। तत्रैवाद्वयवादिनां सिद्धान्तनिर्वाहं दर्शयति। नानात्वमित्येकेन। अयमर्थः एक एव खलु चिदेकलक्षणसत्तामात्रस्वरूप आत्मा स एवात्मन्यनाद्यविद्यया गुणमयीं मायां तद्वैभवजातकार्यवर्गं च कल्पयन्नस्मदर्थमेकं युष्मदर्थांश्च बहून् कल्पयति स्वप्नवत् तत्रास्मदर्थः स्वस्वरूपः पुरुषः युष्मदर्थास्त्रिविधाः पुरुषान्तररूपाः जडरूपा ईश्वराख्यपुरुषविशेषरूपाश्चेति ततस्तस्यामविद्यायां गतायां नानात्वाभावादीश्वरो नाम को वस्तुतो नास्ति स नास्त्येव किमुत तत्पारतन्त्र्यं किमुततरां तस्माद्भयं किमुततमां चान्यपारतन्त्र्यादिकमिति तदेवं मतद्वयेन नहि कदाचिदनीदृशं जगदिति ज्ञानं नित्यं नास्तीति परिहृते तत्तदुपाधेर्जन्मनाशदर्शनाज्ज्ञानस्य त्वनाशदर्शनादिति भावः ॥ ३२ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

कामेन इच्छया गच्छता विमानेन ॥ २५ ॥

कालेन चालितः पातितः ॥ २६ ॥

कर्मणामधिकारी द्विविधः धार्मिकोऽधार्मिकश्च तत्र प्रथमस्य गतिरुक्ता द्वितीयस्य गतिमाह। यदीति। वाशब्दात्स्वतोऽपि कश्चिदजितेन्द्रियः स्यादित्यर्थः। कामात्मा अत एव कृपणो दीनः अत एव लुब्धो भोगतृष्णाकुलः स्त्रैणः स्त्रीलम्पटः तदर्थम्भूतविहिंसकः ॥ २७ ॥

अविधिना "श्येनेनाभिचरन् यजेत" इत्यादिविरुद्धविधिना उल्वणं तमः स्थावरत्वम् ॥ २८ ॥

एवं कर्मसु प्रवृत्तस्य नास्ति सुखमित्युपसंहरति। कर्माणीति ॥ २९ ॥

यच्च तुष्यतु दुर्जन इतिन्यायेनाङ्गीकृतं स्वर्गादीनां नित्यत्वं तन्निराकरोति। लोकानामिति। स्वर्गलोकस्य तत्पालानां च नैव नित्यत्वमित्याह। लोकानामिति। मत् मत्तः तथा च श्रुतिः—

> भीषास्माद्वातः पवते भीषोदेति सूर्यः।
> भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः॥

इति एतेनैव स्वयमीश्वरत्वाविष्कारेणेश्वराभावाङ्गीकारः परित्यक्तः ॥ ३० ॥

नरकानवशो जन्तुर्गत्वेत्युक्तं तत्र जीवस्यैवं वैवश्यं किम्प्रयुक्तमित्यपेक्षायामाह। गुणा इति। गुणा इन्द्रियाणि कर्तॄणि कर्माणि देवपूजादीनि स्वपरस्त्रीसम्भोगशब्दादिग्रहणकृषिवाणिज्यादीनि चादृष्टदृष्टफलानि सृजन्ति कुर्वन्ति तांश्च गुणान् सदसदिन्द्रियाणि गुणः सत्त्वादिः सृजते जीवस्तु गुणैः सदसदिन्द्रियैः सत्त्वादिभिश्च संयुक्तो भद्राभद्राणि कर्मफलानि भुङ्क्ते ॥ ३१ ॥

गुणैरिन्द्रियैः कृत्वा उच्चनीचगतिप्राप्तिलक्षणं वैषम्यं यावत्स्यात् तावदात्मन एकस्यापि जीवस्य नानात्वं देवतिर्यगादिरूपत्वं स्यात् यावदेवं नानात्वं तावत् पारतन्त्र्यं कर्माधीनत्वम् ॥ ३२ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

कामगेन इच्छानुरूपगतिना विमानेन किङ्किणीजालानां क्षुद्रघण्टिकाघटितस्थानविशेषाणां मालाः यस्मिन् तेन सुराक्रीडेषु देवक्रीडास्थलेषु स्त्रीभिः सह क्रीडन् आत्मपातं न वेद नित्योऽप्यात्मा प्राकृतवस्तुसंगो न नित्योऽतस्ततो वैराग्यमुचितमिति भावः ॥ २५ ॥

कालचालित इति। नित्योऽपि कालः स केवलं प्राकृतवस्तुसंयोगहेतुरेव नास्ति किन्तु तद्वियोगहेतुरपीत्यर्थः ॥ २६ ॥

एवं विहिते काम्ये कर्मणि प्रवृत्तस्य गतिरुक्ता निषिद्धे प्रवृत्तस्य गतिमाह। यदीति द्वाभ्याम्। यदि वाऽसतां सङ्गादधर्मे

यावदस्यास्वतन्त्रत्वं तावदीश्वरतो भयम् ।
य एतत्समुपासीरंस्ते मुह्यन्ति शुचार्पिताः ॥ ३३ ॥
काल आत्मागमो लोकः स्वभावो धर्म एव च ।
इति मां बहुधा प्राहुर्गुणव्यतिकरे सति ॥ ३४ ॥

उद्धव उवाच ।

गुणेषु वर्त्तमानोऽपि देहजेष्वनपावृतः ।
गुणैर्न बध्यते देही बध्यते वा कथं विभो ! ॥ ३५ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

निषिद्धे कर्मणि रतः प्रवृत्तः अतो भूतविहिंसकः यतस्तैणः यतः अजितेन्द्रियः अतः कामात्मा । अतः कृपणः अतो लुब्धः ॥ २७ ॥

किञ्च पशून् अविधिना आलभ्य हत्वा प्रेतभूतगणान् यजन् नरकान् गत्वा उल्बणमतिघोरं पुनः पुनः संसारप्रदं तमो याति ॥२८॥

प्रवृत्तिमार्गस्थजीवगतिमुपसंहरति । कर्माणीति । दुःखमेवोदर्के सुखरोत्तरफलं येषां तानि विहितनिषिद्धरूपाणि यदुक्तं तत्तत्कृतिभेदेन जायते म्रियते च धीरिति तत्र दूषणं नोक्तम् । सोऽयं देवदत्तः एतावन्तं कालं सुखमहमस्वाप्सामित्यादिप्रत्यभिज्ञानस्य ज्ञाननित्यतासूचकस्य प्रसिद्धत्वात् ॥ २९ ॥

अस्तु निरीश्वरमतं लोपप्रक्तं सेश्वरपक्षेऽपीश्वरोऽस्तीत्यत्र निश्चितं परमेश्वरं भोक्तृभोग्यनियन्तारं भगवानाह । लोकानामिति द्वौ परार्द्धौ परमायुर्यस्य तस्य "भीषास्माद्वातः पवते भीषोदेति सूर्यः । भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चम" इति श्रुतिरप्यत्रानुसन्धेया ॥ ३० ॥

ननु भोग्यविषये नास्ति विवादः भोक्तृविषये स्वस्ति तत्र देहेन्द्रियादिषु जीवः क इत्यत्राह । गुणा इति । जीवस्तु जीवयति सचेष्टदेहेन्द्रियादिकं करोतीति जीवश्चेतनः कर्मफलानि भुङ्क्ते ननु कर्मफलभोक्ता जीवोऽस्तु कर्मकर्ता क इत्याकाङ्क्षायामाह । असाविति । असौ जीव एव कर्माणि दुःखोदर्काणि कुर्वन् देहेन तैः पुनरित्युक्तत्वात् "कर्ता शास्त्रार्थवत्वात्" इति सूत्राच्च 'विज्ञानं यज्ञं तनुते' इति श्रुतेश्च ननु ज्ञानस्वरूपस्य केवलस्य कथं कर्तृत्वादि सङ्गच्छते इत्यत्र करणान्याह । गुणा इति । गुणाः इन्द्रियाणि जीवेन प्रवर्त्तितानि करणानि कर्माणि सृजन्ति ननु केषाञ्चिदिन्द्रियाणां सात्विके कर्मणि केषां चिद्राजसे केषाञ्चित्तामसे प्रवृत्तिस्तत्र किङ्कारणं तत्राह । गुण इति । गुणाः सत्त्वादिः गुणा इन्द्रियाणि अनुसृजते तत्र तत्र प्रवर्तयति नन्वन्यस्य करणमन्यः कथं प्रवर्तयति तत्राह । गुणसंयुक्तः सत्त्वादिगुणैः सम्यक् युक्तः गुणपरतन्त्र इत्यर्थः ॥ ३१ ॥

अत एव आत्मनः स्वभावतो नानात्वेऽपि यावद्गुणवैषम्यं तावन्नानात्वम् अयं सात्विकः अयं राजसः अयं तु तामस इत्येवं नानात्वमित्यर्थः । किञ्च यावदात्मनः नानात्वं तदैव तावदेव इह लिङ्गे पारतन्त्र्यं गुणवश्यत्वम् ॥ ३२ ॥

भाषा टीका ।

नूपुरों के समूह की माला वाले इच्छाचारी विमान पर चढकर आनंदित होकर देवतों के स्थानों में क्रीडा करता हुआ उहां से अपने गिरने की खबर नहीं रखता है ॥ २५ ॥

जब तक पुण्य समाप्त न होवे तब तक स्वर्ग में आनंद करता है जब पुण्यक्षय होता है तब नहीं चाहने पर भी कालके हेतु से चालित होने से फिर नीचे को गिर पड़ता है॥२६॥

यदि अधर्मियों के संग से अधर्म में रत होता है अथवा स्वयं अजितेन्द्रिय है कामाभिलाषी है कृपण है लोभी है तो प्राणियों का हिंसक होता है ॥ २७ ॥

बिना विधि से पशुओं को मारकर प्रेत भूत गणों का यजन करता है तब वह जन्तु परवश होकर नरकों में जाकर घोर तमोगुण से स्थावर योनि को प्राप्त होता है ॥२८॥

इस प्रकार से मनुष्य देह में दुःख के हेतु कर्म करता है फिर उन कर्मों से दूसरी देह को प्राप्त होता है तब मरण धर्मा मनुष्य को क्या सुख है ॥ २९ ॥

जितने लोक और लोक पाल और जो कल्प जीवी हैं तिनको भी मेरा भय है द्विपरार्ध आयु वाले ब्रह्माको भी मेरे से भय है ॥ ३० ॥

इंद्रियों द्वारा सब कर्म किये जाते हैं उन इंद्रियों की उत्पत्ति सत्वादि गुणों से होती है परन्तु उन इंद्रियों के सम्बन्ध से आत्मा कर्म फलों का भोक्ता होता है ॥ ३१ ॥

जब तक गुणों की विषमता रहैगी तब तक जीवात्मा में देव मनुष्यादि शत्रु मित्रादि भेद रहता है जब तक आत्म स्वरूप में देवादि भेद ज्ञान है तब तक उपास्य पर आत्मा के ज्ञान न होने से कर्मों के पर तंत्र रहता है ॥ ३२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

यच्च गूढमभिप्रेतं प्रवृत्तिरेव श्रेयसीति तत्राऽऽह । य एत दिति । एतद्गुणवैषम्यं तत्कृतं भोगं कर्मचेत्यर्थः । उपासीरन् सेवेरन् ते लोकादीनामनित्यत्वाच्छुचार्पिताः प्राप्ताः सन्तो मुह्यन्ति ॥ ३३ ॥

कथं वर्त्तेत विहरेत्कैर्वा ज्ञायेत लक्षणैः ।
किं भुञ्जीतोत विसृजेच्छयीताऽऽसीत याति वा ॥ ३६ ॥
एतदच्युत ! मे ब्रूहि प्रश्नं प्रश्नविदाम्बर ! ।
नित्यमुक्तो नित्यबद्ध एक एवेति मे भ्रमः ॥ ३७ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां
संहितायां वैयासिक्यामेकादशस्कन्धे
दशमोऽध्यायः ॥ १० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

न केवलमनित्यतामात्रं किन्तु मायामयत्वमपीत्याह । काल इति । स्वभावो देवत्वादिपरिणामहेतुः धर्मस्तद्भोगकारणम् । गुणव्यतिकरे मायाक्षोभे सति मामेव प्राहुर्न मद्व्यतिरिक्ताः सन्ति ॥ ३४ ॥

ततो निवृत्तिरेव मुक्तिहेतुत्वाच्छ्रेयसीति सिद्धम् एवं नाव देह एवाऽऽत्मा तस्य च गुणकार्यदेहसम्बन्धकृतः संसारः आत्मज्ञानाच्च मुक्तिरित्युक्तं विलक्षणः स्थूलसूक्ष्मादित्यादिना तदेव च मतान्तरनिरासेन दृढीकृतमथैषामित्यादिना तत्र पृच्छति । गुणेष्विति । अयमर्थः गुणेष्वसत्सु मुक्तिः सत्स्वेव वा आद्य ज्ञानसाधनाभावान्न मुक्तिः द्वितीये च गुणेषु वर्तमानोऽपि तत्कार्यदेहजेषु कर्मसु सुखादिषु च कथं न बध्येत तथापि तैराकाशवदनावृतत्वान्न बध्यत इति चेत्तर्हि बन्धो न सम्भवतीत्याह । अनपावृतः कथं बध्यत इति ॥ ३५ ॥

यदि तु सत्स्वेव तदहङ्कारेण बध्यते तन्निवृत्त्या च मुच्यत इति मतं तर्हि तत्कथं ज्ञातव्यमिति पृच्छति । बद्धो मुक्तो वा कथं वर्तेतेत्यादि किं भुञ्जीत कथं भुञ्जीतेत्यर्थः ॥ ३६ ॥

एतत् एतद्विषयं प्रश्नम् किञ्च एक एवाऽऽत्माऽनादिगुणसम्बन्धान्नित्यबद्धः मुक्तेर्जन्यत्वेऽनित्यत्वप्रसङ्गान्नित्यमुक्त इत्यप्यङ्गीकार्यं स्यात् तत्र मे भ्रमो भवतीत्याह । नित्यबद्ध इति ॥ ३७ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
दशमोऽध्यायः ॥ १० ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

ये एतदित्यसंकम् सेवेरन् धर्मधर्मध्यासेनेति शेषः मुह्यन्ति दुःखेन मूर्च्छामाप्नुवन्ति ॥ ३३ ॥

तदभ्युपगतां नित्यतां निराकृत्य तदभ्युपगतं यथावत्स्वमपि निराकरोति । न केवलमिति । कालादिचतुष्टयं जैमिनिमतानुवादोक्तं विश्वव्यवहारनिमित्तं मामेव प्राहुः अधिष्ठाने मयि कल्पितं वदन्तीत्यर्थः । स्वभावधर्मौ तु पूर्वतोऽधिकौ तत्र कालो भोगकालः आत्मा भोक्ता आगमो भोगोपायबोधकं शास्त्रं लोकः स्वर्गादिः स्वभावो व्याख्यातः धर्मः तद्भोगकारणं देवत्वादि-भोगकारणमपूर्वं ततः कालादेर्मिथ्यात्वात् ॥ ३४ ॥

तदेव च संसारस्य मिथ्यात्वमात्मज्ञानस्यैव मोक्षहेतुत्वञ्च तत्र निवृत्तेर्मुक्तिहेतुत्वे गुणानां मायामयत्वात् गुणेषु वर्त्तमान इत्यनुपपन्नमतोऽयमर्थः । आद्ये गुणासत्त्वपक्षे द्वितीये च प्रातीतिकगुणसत्त्वपक्षे यद्यपि गुणेषु वर्त्तमानस्तथापि तैर्गुणैः अहं कर्त्ता भोक्तेति कथं बध्यते बद्धत्वेन प्रतीयते ॥ ३५ ॥

तत अपि किं विसृजेत् कथञ्च विसृजेत् कथं शयीत शयनं कुर्यात् आसीत उपविशेत् याति गच्छति ॥ ३६ ॥

एतद्विषयं बद्धमुक्तविषयं मुक्तेर्जन्यत्व इति यज्जन्यं तदनित्यमिति व्याप्तेरनित्यत्वप्रसक्तेः तत्र एकस्यैव नित्यबद्धमुक्तत्वे ॥ ३७ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीराधारमणदासगोस्वामिकृतदीपिकादीपने टिप्पणे
दशमोऽध्यायः ॥ १० ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

यावद्देहात्माभिमानं कर्मपारवश्यात् अवश्यन्तत्वं कर्मवश्यत्वं यावत्तावत्कर्मफलप्रदादीश्वराद्भयम् एतच्छरीरमुपासीरन् आत्मत्वेनानुसंदधते ते मुह्यन्तीत्यर्थः ॥ ३३ ॥

देशकालधर्माधर्मेत उपासायां हि सुखदुःखभयादिहेतवः कालादयोऽपि तदधीना इत्याह । काल इति । आत्मा शरीरं पुण्यपापानुष्ठाता वा आगमः मार्गः स्वभावः क्षुरकण्टकविषाग्निचन्दनचन्द्रिकादिवस्तुस्वभावः गुणव्यतिकरे सृष्टिवेलायाम् ॥ ३४ ॥
त्रिगुणमये शरीरे वर्त्तमानस्य बद्धस्य गुणातीतत्वमसम्भावितमिति चोदयति । गुणेषु वर्त्तमानोऽपीति ॥ ३५—३७ ॥

इति श्रीमद्भागवतव्याख्याने एकादशस्कन्धीये
श्रीसुदर्शनसूरिकृतशुकपक्षीये
दशमोऽध्यायः ॥ १० ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

विषयेषु वर्तमानोऽपि गुणैर्विषयैर्न बध्यते उत बध्यते द्वितीये कथं बध्यते इति ॥ ३५ ॥

कोऽयं इति तत्राह । कथमिति । यदि बद्धस्तर्हि केन प्रकारेण वर्तेत लोके बद्धस्य प्रवृत्त्यदर्शनात् चेष्टादिलिङ्गाभावेन तज्ज्ञानं च दुरापादमिति भावेनाह । कैरिति । बद्धस्यापि भोगाभावे मरणं स्यादतः किम्भुञ्जीतेति भुञ्जानस्य हानोपादाने दृष्टे तत्रापि किञ्जहाति बद्धः शयनाद्यन्यतमं करोति तत्रापि किंकरोति ॥ ३६ ॥

ब्रूहि परिहारेण स्पष्टीकुरु एवं पृच्छतस्तव कोऽभिप्रायः इत्यत एकजीववादिमतमवष्टभ्य प्रश्नबीजमाह । नित्येति । कुत एतदिति चेन्न न मोक्षो न बन्धनमित्यादिपरिहारात् "शिष्योऽपि पूर्वपक्षस्थस्तद्वदात्ममतं ब्रुवन् । नैव दूष्यस्त्वसत्येन स्थिरत्वार्थं हि तद्वच" इति वचनादुक्तवत्स्य नासत्यतादोषोऽपि ॥ ३७ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
दशमोऽध्यायः ॥ १० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तदेतत् पूर्वोक्तं त्रयमपि मतान्तरं निन्दति । य एतदित्यर्द्धकेन ॥ ३२ ॥

यतः काल इति कालादिचतुष्टयं जैमिनिमतानुवादोक्तं विश्वव्यवहारसिद्धिनिमित्तं तत् पारिशेष्यात् स्वभावः साङ्ख्यमतं गुणादेः प्रत्येकं विलक्षणकार्यकरत्वं धर्मस्त्वद्वयमतं सत्तामात्रम् अपूर्ववादिस्त्वेतु कर्मेत्येवावक्ष्यत् सुखदुःखभोगकारणत्वस्य विवक्षितत्वात् ततश्च मामेव ते प्राहुः किन्तु काल इत्यादिरूपेण तद्यथावन्मद्रूपेण तत्रापि बहुधा प्रत्येकं कारणं प्राचुर्येण मिथश्च कैमुत्येन नत्वखण्डकारणत्वेन मामेकं प्राहुरित्यर्थः "तेऽपि मामेव कौन्तेय । यजन्त्यविधिपूर्वकम् । अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च । न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते " इतिवत् तत्र हेतुः गुणव्यतिकरे गुणक्षोभादिभिरासङ्गे पराभूतत्वे सतीति तत्परामर्शादेव श्रुतिस्मृतियुक्तिविरुद्धानीश्वरवादिनो भूत्वा ते तथा वदन्तीत्यर्थः । ईश्वरकारणवादिनान्तु प्रायस्तान्यपि न दूषणायेति भावः । तथाहि "यदंशविद्धाः प्रचरन्ति कर्मसु नैवान्यदा लौहमिव प्रतप्त"मिति न्यायेन परमात्मस्वरूपेश्वरांशत्वात् स्वस्वजडवर्गप्रवर्त्तकत्वात् चिदात्मनां जीवानां स्वरूपसिद्धे अपि कर्तृत्वभोक्तृत्वे उपाधिं विना न स्पष्टीभवतः तस्मादिच्छयैवोपाधितो जाते च ये तादृशं न साक्षात् सम्बन्धः किन्त्वज्ञानेनैव तस्माद्यथैवातित्र कर्मेति सुखदुःखभोरिति च विशेषितं तथा प्रत्यात्मं नानात्वं भवतु किन्तु परमात्मरूपेणैकत्वमेव तथा लोकस्याव्यक्ताद्व्यक्तकारणरूपेण भवतु नाम नित्यत्वं किन्तु स्थूलरूपेणानित्यत्वमेव तथात्मनामुपाध्यंशेन नास्ति सर्वथा नित्यत्वं किन्तु स्वरूपेणैव तथा कालस्य तत्प्रभावरूपतया आगमस्य च तन्निश्वासात्मतया नित्यत्वमस्तु प्रवाहे यत्र प्रकारो नास्त्येव तथा गुणादेरपि

स्वभावः कारणं भवतु अविद्योपहित आत्मा वा किन्तु सर्वकारणेश्वरशक्त्यात्मकत्वेनैवेति तदेवं सर्वस्येश्वराश्रयैकासिद्धतया तस्य चेश्वरस्य च श्रुतिस्मृतिविद्वदनुभवप्रामाण्येन सद्रूपतया मत्तोऽन्यत्र रक्तानां भयमिति वैराग्यमेव श्रेयः तदेतज्जैमिनिमतनिरासायात्रैवोक्तं लोकानां लोकपालानामित्यनेन मतान्तरनिरासाय चान्यत्रोक्तं "आरुह्य कृच्छ्रेण परं पदं ततः पतन्त्यधोऽनादृतयुष्मदङ्घ्रय" इत्यनेनेति तात्पर्यम् ॥ ३४ ॥

देहजेषु गुणेषु वर्त्तमानोऽपि कथं तैर्न बध्यते इत्यन्वयः वर्त्तमानत्वेऽप्यनावृतश्चेत् कथं वा बध्यत इत्यन्वयः । अन्यत्तैः तत्र गुणेष्वसत्सु मुक्तिरित्यत्र बन्धस्तु तत्सद्भावेन ज्ञात एव ज्ञेयः ॥ ३५—३७ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
दशमोऽध्यायः ॥ १० ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तस्मात् प्रवृत्तिरेव श्रेयसीति ये आहुस्तानाक्षिपति ये एवं कर्मैव उपासीरन् सेवेरन् ते शुचार्पिताः शोकप्रोताः सन्तो मुह्यन्ति ॥ ३३ ॥

लोककालागमात्मनां सर्वेषामेव नित्यत्वमितियत्परमतमङ्गीकृत्योक्तं तत्राह । काल इति । स्वभावो देवत्वादिपरिणामहेतुः । धर्मस्तद्भोगहेतुः इति गुणव्यतिकरे मायाक्षोभे सत्येव मामेव बहुधाभूतं तेषां मन्मायाशक्तिकार्यत्वादाहुः तस्मादस्य जीवस्य कर्मबन्धविमोचनार्थं यतनीयमिति मतं साधितम् ॥ ३४ ॥

ननु च भवन्मते मोक्ष एव पुरुषार्थोऽवगतः स च भक्तिज्ञानवैराग्याभ्यासाद्भवति तस्मिन् सति पुरुषो मुक्त उच्यते इति मया न बुध्यते इत्याह । गुणेष्विति । मुक्तस्यापि दत्तात्रेयभरतादेर्भोजनशयनाटनादिश्रवणात् स्थूलसूक्ष्मदेहद्वयं तिष्ठत्येव तस्मिंश्च स्थिते सति देहजेषु गुणेषु वर्त्तमानोऽपि तैर्गुणैर्देही कथं न बध्यते तथापि तैराकाशवत् चिन्मयत्वादनावृतो जीवो न बध्यते इति चेत् तर्हि बन्धो न सम्भवतीत्याह । अनावृतः कथं बध्यत इति ॥ ३५ ॥

यदि तु सत्स्वपि गुणेषु विषयेन्द्रियादिषु तदभिमानेन बध्यते तन्निवृत्त्या च मुच्यते इति मतं तर्हि मया तथा कथं ज्ञातव्यमिति पृच्छति । कथं वर्त्तेतेत्यादिना । वर्त्तनविहरणभोजनमूत्रपुरीषविसर्जनशयनासनगमनानि कर्माणि मुक्तस्य बद्धस्य च तुल्यान्येव दृश्यन्ते । तानि च निरभिमानानि साभिमानानीति मया कैर्लक्षणैर्ज्ञातव्यानि इति ॥ ३६ ॥

नित्यमुक्तो दत्तात्रेयभरतादिर्नित्यबद्धो देवदत्तयज्ञदत्तादिस्तु-ल्यवैहिकक्रियत्वादेक एवेति भ्रम इति वैलक्षण्यं तु मया प्रष्टुमशक्यमप्यस्त्येव तत्त्वयाहं ज्ञापयितव्य इति भावः । अत्र नित्यपदमनधिकार्थम् ॥ ३७ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
एकादशस्य दशमः सङ्गतः सङ्गतः सताम् ॥ १० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अद्योषित भगवतस्य गुणाभिभूतस्य गुणवश्यत्वमस्तु तावत् यदुक्तं लोकानां लोकपालानां मद्भयमिति तन्निवृत्तिः कदेत्यत आह । यावदिति । यावत् अस्वातन्त्र्यं गुणपारतन्त्र्यम् तावदीश्वरतो मत्तो भयं संसारभयम्भवति तदेवाह । एतदस्वातन्त्र्यं ये उपासीरन् ते शुचार्पिताः जन्ममरणादिसन्तापेनार्दिताः सन्तो मुह्यन्ति संसारे एव भ्रमन्ति त्यक्तगुणपारतन्त्र्यास्तु मुच्यन्ते इत्यर्थः ॥ ३३ ॥

ननु कर्तृभोक्तृणां नानात्वं मन्यसे इत्याक्षेपस्तेषां नानास्वरूपाणामपि केनचित्प्रकारेण नानात्वे सति घटेत तदनानात्वं कीदृशमत्र चेतनाऽचेतनानन्तशक्तिभिःसमानातिशयोऽहमेकः अतश्चेतनाचेतनपदार्थानामेकपदार्थे ऽन्तर्भावादनानात्वमित्याह । काल इति । गुणव्यतिकरे सति मामेव सर्वशक्तिमेव कालोऽचेतनविशेषः आत्मा चेतनः लोकः चिदचित्समुदायः धर्मः सर्वोऽपि वेदे प्रोक्तो निवृत्तिप्रवृत्तिरूपः इति नाना "सर्वं खल्विदं ब्रह्म तज्जलानिती"त्यादीनि वाक्यानि प्राहुरिति दिक् ॥ ३४ ॥

गुणवश्याः संसारे भ्रमन्ति त्यक्तगुणपारतन्त्र्या विमुच्यन्ते इत्युक्तं तत्र पृच्छति । गुणेष्विति । अनपावृतो विस्तृतज्ञानो जीवः हे विभो ! हे सर्वव्यापक कथं वध्यते देहजेषु स्वस्ववृत्तिरूपेण देहे वर्तमानेषु सत्त्वादिगुणेषु वर्तमानो देही गुणैः कथं वा न वध्यते कथं गुणपारतन्त्र्यं त्यक्त्वा मुक्तो भवतीत्यर्थः ॥ ३५ ॥

गुणैर्बद्धो यः सांसारिकसुखकामः यश्च मुक्तिकामः कथं वर्त्तेत किम्भुञ्जीत उत अपि कथं विसृजेत अनिष्टमिति शेषः ॥ ३६ ॥

किञ्च—

तथा पठन्ति सूत्र इति—

असुर्या नाम ते लोका अन्धेन तमसा वृताः ।

तांस्ते प्रेत्याभिगच्छन्ति ये केचात्महनो जनाः ॥

इति च वेदे श्रूयते तत्र एकः नित्यमुक्त एव एकः नित्यबद्ध एव इति मे भ्रमः तदंशभूतानां क्षेत्रज्ञानां समस्वभावानां मध्ये केन हेतुना केषांचिन्नित्यमुक्तत्वं केषाञ्चिन्नित्यबद्धत्वमिति मे मम महान् संशय इत्यर्थः । हे अच्युत ! नित्यविग्रह हे प्रश्नविदां प्रश्नाभिप्रायाभिज्ञानां मध्ये वर श्रेष्ठ मे एतत्प्रश्नं प्रश्नसमूहं ब्रूहि ॥ ३७ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
दशमाध्यायार्थप्रकाशः ॥ १० ॥

---

भाषा टीका ।

जब तक इस जीव को स्वस्वरूप पर स्वरूप ज्ञान के बिना परतंत्रता है तब तक संसार में रहने से ईश्वर से भय है तिस से जो लोग इस संसारादिक देहादिक में ही ममता रखते हैं वे सदा शोक युक्त रहते हैं ॥ ३३ ॥

गुणों के क्षोभ होने से काल आत्मा आगम लोक स्वभाव धर्म इस प्रकार से मेरेको बहुत प्रकार कहते हैं अर्थात् इन सब का कारण मही हूं ॥ ३४ ॥

उद्धव उवाच ।

हे विभो ! श्रीकृष्णचन्द्र इस देह मे से उत्पन्न होने वाले गुणों में वर्तमान रहकर भी इनसे लिप्त न होकर कैसे नहीं बंधता है अथवा कैसे बंध जाता है सो कहिये ॥ ३५ ॥

इस देह में रहकर बंध से छूटने वाला पुरुष कैसा वर्तता है कैसे विहार करता है अथवा किन लक्षणों से जाना जाता है कैसे भोजन करता है कैसे वस्तुओं को छोडता है कैसे सोता है कैसे बैठता है कैसे जाता है ॥ ३६ ॥

हे प्रश्नवेत्ताओं में श्रेष्ठ ! अच्युत ! भगवन् मेरे इस प्रश्न का उत्तर कहिये और नित्य मुक्त जीव तथा नित्यबद्ध जीव एक ही होगा करके मेरे को भ्रम है तिसको भी आप दूर कीजिये ॥ ३७ ॥

इति श्रीमद्भागवत एकादशस्कन्ध में दसमाध्याय
श्रीवृन्दावनस्थ पं० भागवताचार्यकृत
भाषा टीका समाप्त ॥ १० ॥

---

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे दशमोऽध्यायः ॥ १० ॥

—:*:—

## अथैकादशोऽध्यायः ।

———:*:———

श्रीभगवानुवाच ॥

बद्धो मुक्त इति व्याख्या गुणतो मे न वस्तुतः ।
गुणस्य मायामूलत्वान्न मे मोक्षो न बन्धनम् ॥ १ ॥
शोकमोहौ सुखं दुःखं देहापत्तिश्च मायया ।
स्वप्नो यथाऽऽत्मनः ख्यातिः संसृतिर्न तु वास्तवी ॥ २ ॥
विद्याऽविद्ये मम तनू विद्ध्युद्धव ! शरीरिणाम् ।
मोक्षबन्धकरी आद्ये मायया मे विनिर्मिते ॥ ३ ॥
एकस्यैव ममांशस्य जीवस्यैव महामते ! ।
बन्धोऽस्याविद्ययाऽनादिर्विद्यया च तथेतरः ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

एकादशे तु बद्धानां मुक्तानां चाथ लक्षणम् ॥
साधूनां च तथा भक्तेर्लक्षणं हरिणेरितम् ।

नित्यमुक्तो नित्यबद्ध एक एवेति मे भ्रम इति यदुक्तं तत्किं वस्तुतो विरोधः प्रतीतितो वा नाद्यः बन्धमोक्षयोर्वास्तवत्वाभावादित्याह । बद्धो मुक्त इति द्वाभ्याम् । आत्मा बद्धो मुक्तश्च मे गुणतो मदधीनसत्त्वादिगुणोपाधितो न तु वस्तुतः नन्वौपाधिकत्वेऽपि तण्डुलपाकादिवद्वास्तवत्वं किं न स्यात्तत्राऽऽह । गुणस्य मायामूलत्वाद्बन्धनं नास्ति अत एव मोक्षश्च नास्ति ननु कथं सर्वशास्त्रविरुद्धमुच्यते तत्राऽऽह । इति मे व्याख्येति । एवं मत्कृतो निर्णयः न स्वमतिकुतर्कैरित्यर्थः । अथवैवमन्वयः आत्मा बद्धो मुक्त इति या व्याख्या उक्तिः सा मे गुणतो मद्गुणपारतन्त्र्यात् अत्र हेतुत्वेन गुणानिवर्तारि वाँस्मस्तद्व्यतिरेकमाह ॥ अत एव न मे बन्धनं मोक्षो वेति अन्यत्समानम् ॥ १ ॥

एवं कारणभूतगुणानां मायामयत्वात्तत्कार्यसंसृतिर्मायेति प्रपञ्चयति शोकमोहाविति । यथा स्वप्न आत्मनो बुद्धेरेव ख्यातिर्विवर्तस्तद्वत् ॥ २ ॥

अतो वस्तुविरोधस्तावन्नास्ति प्रतीतिस्त्वौपाधिकी परत इत्याह । विद्याऽविद्ये इति । तन्येते मोक्षबन्धावाभ्यामिति तनू शक्ती कुतः मे मायया विनिर्मिते मायावृत्तिरूपत्वात् मोक्षबन्धकरीत्येकवचनं द्विवचनार्थे ननु तत्कार्यत्वे बन्धमोक्षयोरनादित्वनित्यत्वे न स्याताम् न आद्ये अनादी अतो यावदविद्यां प्रवर्तयामि तावद्बन्धो यदा विद्यां ददामि तदा मोक्षः स्फुरतीत्यर्थः तथा च स्कन्दपुराणे—

बन्धको भवपाशेन भवपाशाच्च मोचकः ।
कैवल्यदः परं ब्रह्म विष्णुरेव सनातनः ॥

इति ॥ ३ ॥

तत्र शरीरिणामिति । बहुवचननिर्देशाद्विषयभेदेन विरोध उक्त इति भ्रान्तिं व्यावर्तयन्बन्धमोक्षव्यवस्थामुपपादयति । एकस्यैवेति । तर्हि किमात्मनो ममापि बन्धो नहीत्याह । अस्य जीवस्यैवेति । नन्वात्मभेदे जीवो नाम कोऽन्योऽस्ति पृथक् कथं च बन्धमोक्षसुखदुःखादिव्यवस्था तत्राऽऽह । ममांशस्येति । अयम्भावः यथैकस्यापि चन्द्रादेर्जलाद्युपाधिना बिम्बप्रतिबिम्बरूपो भेदो यथा च तत्र जलकृताः कम्पादयः प्रतिबिम्बस्यैव यथा च प्रतिबिम्बानामप्युपाधिभेदादेकस्मिन्नुदकुम्भे भग्ने तद्गतप्रतिबिम्बस्यैव बिम्बैक्यं नान्यगतस्य तथाऽविद्यायाम् प्रतिबिम्बस्य मदंशस्य जीवस्यैव तत्कृतो बन्धस्तस्य चोपाधिभेदान्नाव्यवस्थेति । तथा चाऽऽहुः—

यथैकस्मिन्घटाकाशे रजोधूमादिभिर्युते ।
न सर्वे संप्रयुज्यन्ते तथा जीवाः सुखादिभिः ॥

इति एतच्चातिरहस्यं स्वबुद्ध्या निश्चेतव्यमिति सम्बोधयति । हे महामते ! इतरो मोक्षः ॥ ४ ॥

———

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

तत् एकस्यैव बद्धमुक्तत्वं प्रतीतितः भ्रान्त्या नाद्यः वस्तुविरोधपक्षो न सम्भवति मे गुणत इति गुणा जीवस्य नैव मे इति बद्धमायागुणत्वात् नियन्तृनियम्यभावेन सम्बन्धं व्याचष्टे

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

भवतीनेति बन्धमोक्षयोरौपाधिकत्वेऽपि यथा स्थाल्यग्नितापात् पयसोऽपि ताप इत्यादिन्यायेन स्थाल्याद्युपाधिकत्वेऽपि वन्हिः संयोगेन तण्डुलपाको वास्तवो भवति तद्वद्बन्धमोक्षयोर्वास्तवत्वं किं न स्यादित्यर्थः । मायामूलत्वाद्दार्ष्टान्तिके गुणलक्षणोपाधेर्मिथ्यात्वात् अतएव बन्धाभावादेव पूर्वार्धे व्याख्यानादर इति व्याख्येत्यस्याः स्थानपतितत्वं चातोऽथवेति उक्तिः शास्त्रेषु वर्णनम् अत्र बन्धमोक्षव्यवस्थायां हेतुत्वेनेति व्यतिरेकव्याप्तिघटितेनेत्यर्थः । तद्व्यतिरेकं बन्धमोक्षाभावम् अतएव बन्धमोक्षयोर्गुणपारतन्त्र्यप्रयुक्तत्वादेव अयं प्रयोगः असौ बन्धमोक्षविषयः गुणपरतन्त्रत्वात् अमुकवत् यन्नैवं तन्नैवं यथाहमिति ॥ १ ॥

गुणानां मायामयत्वात् मायया तत्सम्बन्धस्य मिथ्यैव स्फोरणादित्यर्थः।तत्कार्या संसृतिः गुणकार्यरूपा सुखदुःखादिसंसृतिर्माया मिथ्यैव विवर्तोऽत्विकान्यथाभावः यथा रज्वां भुजङ्गबुद्धिः ॥ २ ॥

अतः बन्धमोक्षयोर्मिथ्यात्वात् वस्तुतो विरोध एकस्यैव बन्धमोक्षलक्षणो नास्ति किन्तु बन्धमोक्षयोः प्रतीतिः स्फूर्तिस्तूपाधिकृता घटत इत्याहेत्यर्थः । तन्येते स्फूर्तिविषयीभूते क्रियेते आभ्यां विद्याविद्याभ्यामिति तथा शक्ती बहिरङ्गे वितिमिते प्रसारिते मायावृत्तिरूपत्वादाभासशक्तेः कार्यरूपत्वात् बन्धमोक्षकरी बन्धमोक्षकर्यौ तत्कार्यत्वे विद्याविद्ययो मायाकार्यत्वे अनादी इति विद्याविद्ययोरनादित्वात् वस्तुतो नित्यमुक्तत्वेऽपि प्रतीतितोऽनादिबन्धत्वमिति युगपदुभयत्वं घटत इत्यर्थः प्रवर्तयामि प्रसारयामि तावद्वस्तुतोऽसत्यपि बन्धः स्फुरति बहिर्मुखस्य प्रतीयते यदा विद्यां स्वरूपज्ञानं ददामि तदा स्वरूपतया सत्येव मोक्षः स्फुरति बन्धक इति भयं द्वितीयाभिनिवेशतः स्यादिति न्यायेन भवरोगस्य मूलनिदानं तु वैमुख्यमेवेति बन्धस्य मायाकार्यत्वेऽपि भगवद्धेतुकत्वाद्भगवानेव मायया भवपाशेन बहिर्मुखस्य बन्धकः सम्मुखस्य तु मोचकः विष्णुरेवेति मोक्षदातृत्वे देवतान्तरध्यानाधिकारः सूचितः ॥ ३ ॥

तत्र बन्धमोक्षव्यवस्थायां विषयभेदेन अधिकारिभेदेनेति यावत् बन्धमोक्षव्यवस्थामेकस्यैव बन्धमोक्षविषयत्वनियममुपपादयति युक्त्या साधयति आत्माऽभेदादात्मनः एकत्वात् शङ्कते नन्विति आत्मनोऽभेदे एकत्वे सति अस्य आत्मनो भिन्नः कोऽस्ति न कोऽपि नान्योऽतोऽस्ति द्रष्टेत्यादि श्रुतेः पृथक्त्वेऽप्येकस्य बन्धमोक्षादिव्यवस्था च कथमित्यर्थः । अंशस्येत्युक्त्या पृथक्त्वं नाङ्गीकृतं किन्तु अंशिनोऽपि कथं न बन्धादि एकस्यैव बन्धादिकं च कथमित्याक्षेपस्य परिहारार्थमयं भाव इति तत्र बिम्बप्रतिबिम्बयोर्मध्ये प्रतिबिम्बस्यैव ननु बिम्बस्येति बिम्बस्थानीयेश्वरस्य न बन्धादिकमित्यर्थः । एवमीश्वरे शङ्कां परिहृत्य जीवे बन्धादिव्यवस्थां दृष्टान्तेन साधयति यथा चेति तत्र बिम्बप्रतिबिम्बयोर्मध्ये उपाधिभेदेन उदकुम्भलक्षणोपाधिनानात्वेन तद्वतेति भग्नोदकुम्भगतप्रतिबिम्बस्यैव तत्कृतोऽविद्याकृतः तस्य च अविद्याप्रतिबिम्बितजीवस्य उपाधिना भेदात् अविद्याकार्यदेहाद्युपाधिनानात्वात् सर्वे घटाकाशाः एतद्बन्धमोक्षव्यवस्थापनम् ॥ ४ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

गुणेषु वर्तमानस्यैव गुणातिरसनप्रकारं वक्ष्यन् गुणमयप्रकृतौ वर्तमानस्य परमात्मभूतस्य स्वस्य जीवस्येव गुणबद्धत्वशङ्कां शमयितुं प्रथमं स्वस्वभावमाह । बद्धो मुक्त इति । गुणतो बद्धः गुणतो मुक्त इत्याख्या नित्यनिर्दोषस्य मम वस्तुत एव नास्ति सत्यमेव नास्ति इत्यर्थः । नत्वनेन श्लोकेन परस्यैवात्मनो गुणबन्धमभ्युपगम्य तस्यापारमार्थ्यमुच्यते एकस्यैव ममांशस्येत्युत्तरश्लोकेन जीवस्यैव बन्ध इति वक्ष्यमाणत्वात् ॥१॥

एवं स्वस्य गुणत्रयबन्धाभावमुक्त्वा जीवस्यापि संसारबन्धस्य औपाधिकत्वादनित्यत्वमित्याह । शोकेति । मायया प्रकृत्या स्वाप्नशरीरसम्बन्धसुखदुःखादिप्रतीतिवत् संसृतिर्वास्तवी नाशित्वात् "अनाद्यो परमार्थश्च प्राज्ञैरभ्युपगम्यत" इतिवास्तवत्वस्याविनाशरूपत्वात् स्वप्नप्रपञ्चस्य चेश्वरसृष्टत्वं दृश्यमानप्रपञ्चस्येव श्रूयते "न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान् रथयोगान् पथः सृजते य एषु सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाण" इति ॥ २ ॥

अथ त्रिगुणात्मकप्रकृतिसम्बन्धश्च स्वरूपाज्ञानरूपाविद्यया तन्निवृत्तिश्च विद्यया विद्याविद्ये च स्वाधीने इत्याह । विद्याविद्ये इति । तनू तनुवन्मदधीने मायया सङ्कल्परूपज्ञानेन माया वयुनं ज्ञानमिति हि नैघण्टुकाः एवमविद्याकृतप्रकृतिवश्यत्वरूपो बन्धो जीवस्यैव बन्धश्चानादिः ॥ ३ ॥

अनादेरपि तस्य अन्तवत्त्वं विद्ययेत्याह । एकस्यैवेति । एकस्यशरीरापेक्षया प्रधानभूतस्य निर्विकारत्वादेकरूपस्येति वा अंशस्य शरीरतया विशेषणत्वेनांशस्य विशिष्टैकदेशो हि विशेषणम् एकदेशश्चांशः परमात्मा च जीवविशिष्टः "यस्यात्मा शरीर" मिति जीवशरीरकत्वश्रुतेः जीवस्यैव बन्धः ननु तदन्तर्यामिणः परमात्मनः ॥ ४ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथ गुणेषु वर्तमानस्यैव गुणातीतस्वरूपप्रकारं वक्ष्यन् तावज्जीवेश्वरैक्यं प्रतिक्षेप्तुं गुणमयप्रकृतौ वर्तमानस्य परमात्मभूतस्य स्वस्य गुणकर्मवश्यत्वशङ्कां शमयितुं स्वस्वभावमाह । बद्धो मुक्त इति । गुणतः त्रिगुणकर्मभिर्बद्धः तेभ्यो मुक्त इति च व्याख्या निर्दोषस्य मम वस्तुत एव नास्ति गुणत इति सार्वविभक्तिकस्तसिः मे इत्यनेन—

प्रधानक्षेत्रज्ञपतिर्गुणेशः ।
क्षरं प्रधानममृताक्षरं हरः ॥
क्षरात्मानावीशते देव एकः ।

इत्यादिश्रुत्युक्तविधं प्रकृतिपुरुषेश्वरत्वमभिप्रेतं वस्तुतो मे नास्तीत्येतदेवोपपादयति । गुणस्येति । गुणस्य सत्त्वादिगुणमूलककर्मणो मायामूलत्वान्मायाख्यप्रकृतिसम्बन्धमूलकत्वान्मम मायानियन्तुर्न तद्गुणैर्बन्धः अत एव मोक्षोऽपि नास्ति किन्तु गुणकर्मवश्यस्य जीवस्यैव तौ इत्यर्थः । नत्वनेन श्लोकेन परस्यैवात्मनो गुणकर्मवश्यबन्धमभ्युपेत्य तस्यापारमार्थिकत्वमुच्यते एक-

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

स्यैव ममांशस्येत्युत्तरश्लोकेन जीवस्यैव बन्ध इति वक्ष्यमाणत्वात् ॥ १ ॥

एवं स्वस्य गुणासक्तकर्मबन्धाभावमुक्त्वा जीवस्यापि संसारबन्ध औपाधिकत्वादनित्य इत्याह । शोकेति । मायया मच्छक्त्या प्रकृत्या जीवस्य शोकादयो भवन्ति अतो यथा स्वप्ने आत्मनः ख्यातिः शरीरसम्बन्धसुखदुःखादिप्रतीतिस्तद्वत्संसृतिर्न तु वास्तवी अवास्तवी आत्मवस्तुस्वरूपप्रयुक्ता नित्या न भवति किन्त्वौपाधिकी अनित्येत्यर्थः । कथमनादेरनित्यत्वमिति न शङ्कनीयम् आद्यन्तरहितस्यैव नित्यत्वात् केवलानादित्वमात्रस्य नित्यत्वप्रयोजकत्वाभावादिति भावः । एतेन कथमनपावृतः कथं वा गुणैर्न युज्यते इति प्रश्नस्योत्तरमुक्तं भवति दृष्टान्तेऽपि स्वाप्नप्रपञ्चस्यावास्तवत्वं नामानित्यत्वमेव न तु मिथ्यात्वं तस्यापि जाग्रत्प्रपञ्चस्येव "न तत्र रथा न रथयोगा न पन्थानो भवन्ति अथ रथान् रथयोगान् पथः सृजते स एतेषु सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः" इतीश्वरसृष्टत्वश्रवणादिति ॥ २ ॥

कस्तर्ह्यौपाधिकस्यापि संसृतिबन्धस्य कारणं कश्च तन्निवृत्तिकारणमित्यत आह । विद्याविद्ये इति । विद्या मदुपासना अविद्या स्वात्मपरमात्मयाथात्म्याज्ञानं ते मम तनू तनुवन्मदधीने मायया सङ्कल्परूपज्ञानेन "माया तु वयुनं ज्ञानम्" इति नैघण्टुकाः त्रिगुणात्मकप्रकृतिसम्बन्धः स्वरूपाज्ञानरूपाऽविद्या तन्निवृत्तिस्तु विद्यया विद्याविद्ये च मत्सङ्कल्पायत्ते इत्यर्थः । ते च शरीरिणां जीवानां मोक्षबन्धकारी विद्या मोक्षकरी अविद्या च बन्धकरीत्यर्थः ॥ ३ ॥

गुणस्य मायामूलत्वान्न मे मोक्षो न बन्धनमित्यनेन सूचितं जीवस्यैव बन्धमोक्षभाक्त्वं विशदयति । एकस्यैवेति । हे महामते ! एकस्य शरीरापेक्षया प्रधानभूतस्य एवकारेण शरीरव्यावृत्तिः जीवस्यैवेति एवकारेणेश्वरव्यावृत्तिः ममांशस्य मच्छरीरतया मद्विशेषणत्वेन मदंशस्य विशिष्टैकदेशे विशेषणमेकः अंशः परमात्मा च जीवविशिष्टः "यस्यात्मा शरीर"मिति जीवशरीरकत्वश्रुतेः तथा इतरो मोक्षः विद्यया एवमविद्याकृतप्रकृतिबद्धत्वरूपो बन्धो जीवस्यैव बन्धस्यानादित्वादनादेरपि तस्यानश्वरत्वं विद्यमेत्युक्तम् ॥ ४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

भेदज्ञानमेव मुक्तिसाधनं तत्साधनं भक्तिस्तथा वैराग्यमित्येतत्सर्वमेतस्मिन्नध्याये कथयति । तत्रादौ गुणोऽविद्यादिना बद्धमुक्तस्य बोधं तत्परिहरति । बद्ध इत्यादिना । बद्धो मुक्त इति व्याख्या जीवस्येति शेषः । इशब्द एवार्थे जीवस्यैवेत्यर्थः । स्वतः चिद्रूपस्य कथं बद्ध इत्यत आह । गुणत इति । सत्त्वादिगुणसम्बन्धान्नित्यस्वरूपस्य एतत्सम्बन्धः कथमत आह । म इति । गुणानां जीवस्य च मम वशत्वान्मदधीनप्रवृत्तित्वाच्च सुघटघटकशक्तिमत्त्वान्ममेत्यर्थः । तर्हि चैतन्याद्युत्तमशरीरस्य कदाचिदस्य सुखम् आह । न वस्तुत इति । वस्तुतः रूपा नास्ति तन्निवर्तकेश्वरेच्छाधीनत्वान्न मिथ्येत्यर्थः । गुणासक्तत्वाद्भगवत एव तौ किं न स्यातामत्राह । गुणस्येति । जातिविवक्षया एकवचनं गुणानां मायामूलत्वात्तत्प्रवर्तकत्वेन सम्बन्धः स्वतोऽहं निर्गुण इत्यतो बन्धमोक्षौ न स्त इति भावः । ब्रह्मण एव मायामयौ बन्धमोक्षौ नाविद्यमानजीवस्येत्यङ्गीकर्तुमुचितं प्रतीतत्वान्नामामायिकोऽव्याहारो युक्त इतीदं चोद्यम् अमायत्वान्निर्गुणोऽहं बन्धमोक्षौ नचापि मे । मदधीनस्य जीवस्य बन्धमोक्षौ सदैव त्विति" स्पष्टप्रमाणवचनेन परिहृतमिति त्वन्मनोरथकल्पनामात्रं न प्रकाशयेति ॥ १ ॥

जीवस्य संसारो वास्तवो न चेत्तर्हि कस्मादयमस्येत्याशङ्क्याज्ञानादिति सोदाहरणमाह । शोकमोहाविति । मायया अज्ञानेन यथा स्वप्ने स्वप्नोऽयमित्यज्ञानेनात्मनः शोकमोहादिख्यातिः एवं तथा स्वरूपाज्ञानेन शोकादि न तु स्वरूपस्य तस्य सुखात्मकत्वात् स्वभावार्थक्रियाकारित्वेन संसृतिः सत्यपि न वास्तवी प्रतिहन्तुमशक्या भवतीत्यर्थः—

> स्वप्नोऽयमित्यविज्ञानात्स्वप्ने दुःखमुपाश्नुते ॥
> निजस्वरूपानुभवराहित्यात्तद्वदेव तु ।
> जाग्रद्दुःखमपि प्रोक्तं विष्णुतत्त्वं न पश्यतः ॥
> तस्मात्तदस्वभावत्वात्तदप्येतदवास्तवमिति ।

वचनात् स्वप्नदृष्टान्तेन संसारस्य न मिथ्यात्वमुच्यत इति ॥ २ ॥

अत्र मायानिरुक्तिः किं न स्यात्तथा प्रसिद्धेरित्यतस्तन्निराकरणमाह । विद्याविद्ये इति । मम तनू प्रतिमावत् स्थिते किं कार्यं इत्यत आह । शरीरिणां देहिनां बन्धमोक्षकरी आद्ये अनादितो विद्यमाने मे मायया प्रकृत्या निर्मिते ममेच्छावशगे च साक्षात्स्वरूपत्वे—

> विद्याविद्ये मम तनू प्रतिमावत्सदोदिते ।
> सदा तद्व्यतिरिक्तस्य नित्यज्ञानसुखात्मनः ॥
> मदिच्छावशगे नित्यमविद्यानिर्मिता गुणाः ।
> सत्त्वाद्या मदधीनत्वादविद्याया न मे गुणाः ॥
> अविद्या चैव विद्या च गुणाः सत्त्वादिका अपि ।
> देहोत्पत्तिः सुखं दुःखं सर्वमेतन्मदिच्छया ॥
> अतोऽहं बन्धमोक्षाभ्यां रहितो नित्यमेव तु ।
> मुक्तशब्दोदितो बन्धराहित्याच्च विमोक्षत इति ॥

प्रमाणविरोध आपद्यते मोक्षबन्धकत्वं । चाभिमानिदेवतासाम्यात्तत्र श्रियाभिमतप्राकृतसत्त्वगुणजाता विद्या दुर्गादिकृततमोगुणजाता त्वविद्या तदुक्तम्—

> श्रीस्तु विद्या समुद्दिष्टा दुर्गाविद्या प्रकीर्तिता ।
> ते त्वनादी हरेरिच्छानियते सर्वदेरिति ॥ ३ ॥

अवेदी वध्यते चेत्कथं बध्यत इति परमात्मविषयप्रश्नः मे गुणतो बन्धमोक्षाविति परिहारोऽपि तत्र जीवस्यैव ताविति भवद्भिरुच्यते अत इदं कथं सङ्गच्छत इति तदस्थशङ्कां परिहरन्नुपसंहरति । एकस्येति । जीवः परमात्मेति द्विविधं तत्त्वं तयोरेकस्यैव जीवस्य बन्धमोक्षौ स क इत्यतो ममांशस्येति स किंस्वरूपांश इत्यतो जीवस्येति जीवो भिन्नांश इति "भिन्नांशस्यैव जीवस्य बन्धमोक्षौ न मे क्वचित् । अभिन्नांशास्तु मत्स्याद्यास्तेजसः कालवह्निवत् । जीवा भिन्नांशकास्तत्र तेजसः प्रतिबिम्बवदिति" अनेन

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सिद्धं किमुक्तं स्यादत्राह । एवमिति । एवमुक्तविधस्य जीवस्याविद्ययानादिबन्धस्तथा विद्ययेतरत् मोक्षलक्षणं श्रेयः स्यादित्यर्थः । अतः परमात्मा कथं बध्यत इति प्रश्नो नोपपन्न इति भावः ॥ ४ ॥

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

गुणस्य मायामूलत्वादिति मायया तत्सम्बन्धस्य मिथ्यैव स्फोरणादित्यर्थः । अन्यैः तत्र द्वितीयव्याख्याने मे मतामिति शेषः ॥ १—२ ॥

कथं तत्राह । विद्येति । अतो वस्तुतो नित्यमुक्तोऽपि प्रतीतितो नादिबद्ध इति युगपदुभयत्वं घटत इत्यर्थः । अत्र मे मम मायया शक्त्या कर्त्र्यौ तनू स्वदृष्टान्तरूपत्वात्स्वांशरूपे अत एवानादी ये निर्मिते प्रसारिते ते एव मम शरीरिणां मदीयानां मोक्षबन्धकर्त्र्यौ भवतः इति स्थिते सा चर्मसंजवद्धका भयं द्वितीयाभिनिवेशतः स्यादिति न्यायेन यस्य यस्मन्महेमुख्यं तस्य तावदविद्यां प्रसार्य स्वरूपावरणपूर्वकं गुणावेशं कुर्वती बन्धं करोति मत्साम्मुख्ये तु गुणावेशत्याजनपूर्वकं स्वरूपस्फुरणं कुर्वती मोक्षं करोतीति ध्येयम् अतस्तस्या एव तयोः कर्तृत्वेऽपि मद्धेतुकत्वाद्बन्धको भवपाशेनेत्यादुच्यत इति भावः । बन्धमोक्षकरी इति "सुपां सुलुक् पूर्वसवर्ण" इत्यादिना पूर्वसवर्णश्छान्दसः ॥ ३ ॥

एवं शरीरिणां प्रातीतिके बन्धे सति प्रत्येकमेवं व्यवस्थेत्याह । एकस्यैवेति । ममांशस्य रश्मिपरमाणुस्थानीयस्य मत एव तस्य जीवस्यैव ननु मण्डलस्थानीयस्य मम मत एव चैकस्यैव ननु सर्वस्येत्यर्थः ॥ ४—५ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

"एकादशे बद्धमुक्तवैलक्षण्यस्य शिक्षणम् ।
साधूनां लक्षणं भक्तेरङ्गान्यप्युक्तवान् हरिः ॥

कथं मोक्षः कथं बन्ध इति तत्र प्रश्नोऽयं वस्तुतो न घटत इत्याह । बद्ध इति । मे गुणतः मदधीनसत्त्वादिगुणैर्बद्ध इति ततो मुक्त इति व्याख्या वस्तुतो न सम्भवति कुतः गुणस्य गुणसम्बन्धस्य मायामूलत्वान्मायया अविद्यया दुस्तर्कशक्त्या दुर्घटस्य देहेन्द्रियादिगुणसम्बन्धस्य मिथ्यैव स्फोरणादित्यर्थः । अत एव मे मम मते इति शेषः । न बन्धनं बन्धनाभावादेव न मोक्षश्च ॥ १ ॥

तत्र बन्धस्य मिथ्यात्वप्रकारं वर्णयति । शोकमोहाविति । देहापत्तिर्देहाद्देहान्तरप्राप्तिः देहस्य आपत्तिरापत् मृत्युर्वा मायया मायिकोपाधिसम्बन्धेन अविद्यया मायिकोपाध्यन्तःकरणे सूक्ष्मदेहे जीवस्य अभिमानादेव तदीयधर्माणां शोकमोहादीनामपि स्वीयत्वेन ग्रहणमित्यर्थः । अतः शोकमोहादिमत्त्वलक्षणा संसृतिर्न वास्तवी न वस्तुभूता शोकमोहादीनां मायासृष्टत्वेन सत्यत्वेऽपि तत्सम्बन्धस्य जीवे अविद्याकल्पितत्वान्मिथ्यात्वमित्यर्थः । यथा आत्मनो बुद्धेः स्वप्नार्थविषयः स्वप्नो मिथ्या तथा ॥ २ ॥

ननु केयमविद्या यया मिथ्याभूतोऽपि गुणसम्बन्धः स्फोरितस्तत्राह । विद्याविद्ये मम तनू तन्वेते बन्धमोक्षाख्याभ्यामिति तनू शक्ती शरीरिणां बन्धमोक्षकरी बन्धमोक्षकर्त्र्यौ अविद्या बन्धकरीत्यर्थः । इमे च मे मम मायया मद्रूपा शक्त्या विनिर्मिते सृष्टे किञ्च मायावृत्तित्वादेव तयोर्मायासृष्टत्वमौपचारिकमेवोच्यते इत्याह । आद्ये अनादी अनाद्यनन्तमव्यक्तं नित्यं कारणमव्ययमिति द्वादशोक्तेः पुंसोऽस्ति प्रकृतिर्नित्येति वैष्णवोक्तेश्च मायाशक्तिरिव तद्वृत्ती विद्याविद्ये अपि नित्ये एव तदेवं मायायास्तिस्रो वृत्तयः प्रधानमविद्या विद्या च प्रधानेनोपाधिः सत्त्व एव सृज्यते अविद्यया तदध्यासो मिथ्या भूतः विद्यया तदुपराम इति तिसृणां कार्यम् ॥ ३ ॥

ताभ्यामेव मदीयशक्तिभ्यामविद्याविद्याभ्यां मदीयजीवशक्तेरेकाव्यापसप्रसारणाप्रसारणाभ्यां वस्तुभूतावपि बन्धमोक्षौ प्रख्यापितौ मदीयसृष्टयादिलीलाशक्तिप्रेरणवशादित्याह । एकस्यैवेति । अंशस्य विभिन्नांशरूपस्य जीवस्य 'प्रकृतिं विद्धि मे परां जीवभूतां महाबाहो ययेदं धार्यते जगदिति' मदुक्तेर्जीवस्य मच्छक्तित्वेऽपि ममैवांशो जीवलोके जीवभूतः सनातन" इति मदुक्तेरंशत्वं चेत्यर्थः । अत्र शरीरिणामिति पूर्वोक्त नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामानिति श्रुतेश्च जीवानां बहुत्वेऽपि कथमेकस्येत्युक्तम् उच्यते एकस्या अपि तटस्थाख्यजीवशक्तेर्वृत्तिबाहुल्यादेव बहवो जीवा इत्युच्यन्ते यथा एकस्या अपि बहिरङ्गाख्याया मायाशक्तेः प्रधानमविद्याविद्या चेति द्वे वृत्ती तयोश्चापि प्रतिजीवं वृत्तिबाहुल्याद्बहुत्वमेव यथा च मायावृत्तीनां मायाशक्त्यानन्यत्वं तथैव जीववृत्तीनामपि जीवशक्त्यानन्यत्वं किञ्च जीवशक्तिमायाशक्त्योर्वृत्तीनामपि नित्यत्वमेव ज्ञेयं नित्यो नित्यानामिति बन्धमोक्षकरी आद्ये इत्यादिवचनेभ्यः अविद्याध्वंसे सति जीवस्य निर्वाण इत्यादिवाक्येषु ध्वंसनिर्वाणशब्दाभ्यामुपरामब्रह्मसायुज्ये उच्येते ब्रह्मणा सह युज्यत इति सयुक् तस्य भावः सायुज्यमिति जीवस्य न तत्र स्वरूपध्वंसः किञ्च—

विष्णुशक्तिः परा प्रोक्ता क्षेत्रज्ञाख्या तथापरा ।
अविद्या कर्मसंज्ञान्या तृतीया शक्तिरिष्यते ॥
यया क्षेत्रज्ञशक्तिः सा तारतम्येन वर्त्तते इति ॥

विष्णुपुराणोक्तेः प्रायो वशीभूता सृष्टिलीलासिद्ध्यर्थमित्याह । बन्ध इति । अस्य अविद्यया बन्धः स च कर्मणोऽनादित्वादनादिः मोक्षसम्भवात् सान्तः इतरो मोक्षः जन्यत्वात् सादिरनश्वरत्वादनन्तो ज्ञेयः ॥ ४ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

जीवः कथं बध्यते पुनः स कथं मुक्तो भवतीति प्रश्नस्योत्तरमाह । बद्ध इति । जीवः गुणतो बद्धः मे मत्तो मुक्तो भवति इति व्याख्या सिद्धान्तोक्तिः "मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते" इति स्ववचनान्तराच्च ननु ज्ञानस्वरूपो जीवः स्वत एव किं न विमुच्यते इत्यत आह । न वस्तुतः । न स्वत इति मम बन्धमोक्षव्यवहारो नास्ति स एवान्येषां विमुक्तिहेतुरहमस्मीत्याह । न मे मोक्षो न बन्धनमिति । ननु गुणस्याचेतनस्य चेतनबन्ध-

अथ बद्धस्य मुक्तस्य वैलक्षण्यं वदामि ते ।
विरुद्धधर्मिणोस्तात ! स्थितयोरेकधर्मिणि ॥ ५ ॥
सुपर्णावेतौ सदृशौ सखायौ यदृच्छयैतौ कृतनीडौ च वृक्षे ।
एकस्तयोः खादति पिप्पलान्नमन्यो निरन्नोऽपि बलेन भूयान् ॥ ६ ॥
आत्मानमन्यं च स वेद विद्वानपिप्पलादो न तु पिप्पलादः ।
योऽविद्यया युक् स तु नित्यबद्धो विद्यामयो यः स तु नित्यमुक्तः ॥ ७ ॥
देहस्थोऽपि न देहस्थो विद्वान् स्वप्नाद्यथोत्थितः ।
अदेहस्थोऽपि देहस्थः कुमतिः स्वप्नदृग्यथा ॥ ८ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

कत्वं तयो र्मत्यबन्धकत्वं कथं घटेतेत्यत आह । गुणस्य मायामूलत्वादिति । मम प्रकृतिमूलत्वात् ॥ १ ॥

मायाया बहुनर्थहेतुतां दर्शयति । शोक इति । "न तत्र रथा न रथयोगा न पन्थानो भवन्ति अथ रथान् रथयोगान् पथः सृजते य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः" इति श्रुतिप्रोक्तपरमपुरुषस्य स्वप्नेऽपि कर्मविशेषफलप्रदातुर्मे मायया आत्मनो जीवस्य यथा एषो मम सम्भ्राडहमीशादिरूपा ख्यातिः प्रतीतिः भवति तथा एषे शोकादयः किं बहुना संसृतिः जन्ममरणप्रवाहरूपः संसारः माययैव सा स्वप्ने ख्यातिः संसृतिश्च प्रवाहस्तथापि स्वरूपधर्मभूता नेत्यर्थः ॥ २ ॥

यदुक्तं नित्यमुक्तो नित्यबद्ध एक एवेति मे भ्रम इति तत्र विद्याविद्याभ्यां सर्वं सङ्गच्छत इत्याह । विद्येत्यादिना । हे उद्धव ! शरीरिणां बन्धमोक्षकरी बद्धमुक्तव्यवस्थानुसारिण्या मे माययेच्छया विनिर्मिते प्रवर्तिते कथम्भूते आद्ये पूर्वसिद्धे स्वस्यैव बन्धमोक्षासाधारणहेतुत्वं द्योतयितुमाह । मम तनू मदात्मके विद्याविद्ये ज्ञाताज्ञानापरपर्याये भवतः ॥ ३ ॥

हे महामते ! मदुक्तसिद्धान्तश्रवणधारणादौ कुशल ! ममांशस्य एकस्यैव अविद्यया बन्धः कथंभूतः अनादिः साधनाभावेऽनन्तोऽपि ज्ञेयः तस्मात्स नित्यबद्धः इति फलितोऽर्थः एकवचनं जातिविषयं तथा ममांशस्य एकस्यैव विद्यया च इतरः मोक्षः कथंभूतः अनादिरनादिमुक्तस्य बन्धासंभवात्स नित्यमुक्त इत्युच्यते अतस्तद्विषयको भ्रमो न कर्तव्य इति फलितोऽर्थः अथाचेतनवर्गाद्विलक्षणं नाहमर्थभूतं जीवात्मानं प्रतिपादयितुमंशं विशिनष्टि । अस्येति । साभाव्योक्तिः नित्यबद्धस्य अन्येषां च समास्यतोऽहंप्रत्ययगोचरत्वात् अस्य अहंप्रत्ययगोचरत्व ननु अहंप्रत्ययगोचरश्चेज्जडसङ्घातः प्रतीयते स एवाविद्यया बद्धः किमित्यत आह । जीवस्यैवेति । जीवयति देहेन्द्रियमनोबुद्ध्यादिकमचेतनवर्गं चेतयतीति जीवस्तस्याचिद्वर्गभिन्नस्य ज्ञानस्वरूपस्यैवेत्यर्थः । एतेन चिज्जडग्रन्थिर्जीव इति मायावादिमतस्य निर्मूलत्वं द्योतितम् ॥ ४ ॥

---

### भाषा टीका ।

श्री भगवान् उवाच मैं सब जीवों से सदा भिन्न हूं फिर इस शरीर मे रहने से भी गुणों से मेरे को बद्ध वा मुक्त कोई नहीं यथार्थ कह सकता है क्यों कि गुण तो मेरी माया से होते हैं तिस से मेरा न मोक्ष है न बंध है ॥ १ ॥

और जीव के भी शोक मोह सुख दुःख देह योग यह सब हमारे संकल्प रूप माया से होते हैं वे भी जीव स्वरूप मे नित्य नहीं हैं जैसे कि स्वप्न में अनेक प्रकार की सृष्टि परमेश्वर करता है तैसेही जीव का संसार भी जब तक गुणों का सम्बंध है तबही तक रहता है नित्य नहीं है ॥ २ ॥

हे उद्धव ! अनादि काल से हमारी माया से निर्मित गुणों को विस्तार करने वाली जीवों के बंध मोक्ष देने वाली विद्या अविद्या ऐसी ! हमारी दो शक्ती हैं ॥ ३ ॥

हे महामति ! उद्धवजी स्वरूप से नाना होने पर भी निर्विकार चेतनता रूप से एकही प्रकार तथा मेरा विशेषण भूत जो जीव है तिसको हमारी अविद्या से अनादि बंध है विद्या से उसका मोक्ष हो जाता है ॥ ४ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

तदेवम् व्यवस्थामुपपाद्य कथं वर्तेतेत्यादिवैलक्षण्यप्रश्नस्योत्तरमाह । अथेति । तच्च वैलक्षण्यं द्विविधं जीवेश्वरयोरेकं जीवानां चैकं तत्र जीवेश्वरयोर्वैलक्षण्यमाह । विरुद्धधर्मिणोरिति सार्धद्वयेन । शोकानन्दधर्मवतोरेकस्मिन्धर्मिणि शरीरे नियम्यनियन्तृत्वेन स्थितयोः ॥ ५ ॥

सुपर्णौ वृक्षात्पक्षिणाविव देहात्पृथग्भूतौ । सदृशौ चिद्रूपत्वात् सखायौ अविप्रयोगादेकमत्याच्च यदृच्छयाऽनिरुक्तया मायया वृक्षवत् इति वृक्षो देहः 'ऊर्ध्वमूलमवाक्शाखं वृक्षं यो वेद संप्रती'ति श्रुतेः —

ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम् ।
छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवि'दिति ॥

स्मृतेश्च तस्मिन् कृतं नीडं निकेतनं हृदयरूपं याभ्याम्

### श्रीधरस्वामिकृतभावार्थदीपिका ।

तौ नयोर्मध्ये एको जीवः पिप्पलाशनम् पिप्पलोऽश्वत्थो देहस्तस्मिन्नदनीयं कर्मफलमित्यर्थः । खादति भक्षयति अन्य ईश्वरो निरन्नोऽभोक्ताऽपि निजानन्दतृप्तो बलेन ज्ञानादिशक्त्या भूयानधिकः श्रुतिश्च—

द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीतीति ॥ ६ ॥

बद्धाधिकमेवाऽऽह । आत्मानमिति अतो योऽविद्यया युग्युक्तः स तु नित्यबद्धोऽनादिबद्धः यस्तु विद्याप्रधानः स तु नित्यमुक्तः मायाया अनावरकत्वादाश्रयाव्यामोहकत्वाच्च ॥ ७ ॥

इदानीं बद्धमुक्तजीवानामेव मिथो वैलक्षण्यमाह । देहस्थोऽपीति दशभिः । विद्वान्मुक्तः संस्कारवशेन देहस्थोऽपि देहस्थो न भवति यथा स्वप्नादुत्थितः स्वप्नभोगो स्वप्नदेहे स्थितोऽपि तत्रस्थो न भवति तद्गतसुखदुःखाद्यभावात् तद्वत् तथा वस्तुतोऽदेहस्थोऽपि कुमतिरविद्वान् देहस्थस्तन्निमित्तसुखदुःखभाक् यथा स्वप्नदेहगत इति ॥ ८ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता
### दीपिकादीपिनी टिप्पणी ।

वैलक्षण्यप्रश्नस्य बद्धमुक्तयोः परस्परं विरुद्धलक्षणाक्रान्तत्वलक्षणस्य प्रश्नस्य ॥ ५ ॥

चिद्रूपत्वात् सदृशाविति चिद्रूपत्वेनैव कश्चिदभेदनिर्देश इति भावः । अवियोगात् देहाधिकरणयोः परस्परं वियोगाभावात् एकमध्यात् एका समाना हृदयावस्थानव्यवसायलक्षणा मतिर्ययोस्तयोर्भावस्तत्त्वं तस्माच्च सखायौ वृश्च्यते कालेन छिद्यते इति वृक्षो देहः ऊर्ध्वं सर्वोत्तमः श्रीनारायणो मूलं यस्य तं अवाक् ततोऽर्वाचीनाः कार्योपाधिहिरण्यगर्भाद्यः शाखा इव शाखा यस्य तं यः संप्रति वेद स तत्त्वं वेदेति श्रुत्यर्थः । एवं स्मृतावश्वत्थमिति नश्वरत्वात् श्वः प्रभातपर्यन्तमपि स्थास्यतीति विश्वासानर्हत्वादश्वत्थं प्राहुः प्रवाहरूपेणाविच्छेदादव्ययं च प्राहुरिति तस्मिन् वृक्षे तयोर्जीवेश्वरयोर्मध्ये सयुजा सयुजौ समानं रूपं चिद्रूपत्वं युङ्क्ते भजतः इति सदृशाविमेन समानोऽर्थः समानमेकं "रथाङ्गयोर्नो यः समानपद" इतिवत् अभिचाकशीति साक्षितया प्रकाशते ॥ ६ ॥

विद्या चात्र स्वरूपशक्तिवृत्तिरेव अकर्तृत्वं तथा व्याख्यातत्वात् नन्वीश्वरस्यापि मायया सृष्ट्यादिकर्तृत्वात् कुतो न बन्ध इति चेत्तत्राह । मामया इति मायां व्युदस्य चिच्छक्त्या कैवल्ये स्थित आत्मनीति श्रीमदर्जुनोक्तेस्तस्य मायाश्रयत्वेऽपि न बन्ध इति भावः ॥ ७ ॥

इदानीं जीवेश्वरयोर्वैलक्षण्यनिरूपणानन्तरं तद्वदेति स्वप्नदेहगतसुखाद्यभावात् वस्तुतः वस्तुस्वरूपविचारेणेत्यर्थः । तन्निमित्तेति अध्यासेन देहोपाधिकसुखदुःखभागित्यर्थः ॥ ८ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

इत्येनद्दृढयितुं जीवपरयोः स्वरूपस्वभाववैलक्षण्यस्य विवक्षितत्वमाह । अथ बद्धस्येति । मुक्तस्य नित्यनिर्दोषस्य परमात्मनः स तु नित्यमुक्त इत्यनन्तरश्लोके । एकधर्मिणि शरीरे ॥ ५ ॥

सुपर्णौ शोभनप्रयत्नादिगुणकौ सदृशौ अनेन श्रुतिगतसयुजा इति पदार्थ उक्तः समानगुणयोगो हि सयुक्त्वं सखायौ उपकार्योपकारकभावेन स्थितौ यदृच्छया लोकदृष्टहेत्वन्तररहितमिति भावः वृक्षः शरीरं नीडो हृदयकमलं पिप्पलं प्रकृतिः ऊर्ध्वमूलमधः शाखमित्युक्तेः अन्नं शब्दादिभोग्यं निरन्नः कर्मकृतभोगरहितः एकस्यैव इत्यवधारणं भोक्तृत्वरूपवैषम्यमुक्तम् ॥ ६ ॥

अथ श्रुत्यन्तरसिद्धबद्धत्वमुक्तत्ववैषम्यमाह । आत्मानमिति । विद्यामयः स्वाभाविकज्ञानमयः ईश्वरः नित्यमुक्तशब्देन कदाचिन्मुक्तजीवात् व्यावृत्तिः एवं स्वस्य गुणवश्यत्वाभाव उक्तः ॥ ७ ॥

अथ प्रश्नस्य प्रतिवचनमारभते । देहस्थोऽपीति । न देहस्थः अदेहस्थतुल्यः आत्माभिमानाभावात् स्वप्नाद्यथोत्थितः स्वप्नोत्थितस्य हि स्वाप्नशरीरात्माभिमानो नास्ति अदेहस्थोऽपि । गर्भमहाप्रलयादिदशायामनिष्पन्नदेहोऽपि देहस्थः बद्ध इत्यर्थः । स्वप्नशरीरे आत्मत्वाभिमानवशात् स्वप्नदृष्टान्त उक्तः ॥ ८ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एतदेव द्रढयितुं जीवपरयोः स्वभाववैलक्षण्यं विवक्षितमाह । अथेति । बद्धस्य जीवात्मनः मुक्तस्य नित्यनिर्दोषस्य परमात्मनः स तु नित्यमुक्त इत्यनन्तरश्लोकेः ते तुभ्यं वदामीति कथंभूतयोः हे तात । एकधर्मिणि एकस्मिन् शरीरे स्थितयोः विरुद्धधर्मिणोः एकस्मिन्नेव काले भोक्तृत्वाभोक्तृत्वबद्धत्वमुक्तत्वादिविरुद्धधर्माश्रययोः ॥ ५ ॥

प्रतिज्ञातमेव वैलक्षण्यम्—

द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति ॥

इति श्रुतिप्रसिद्धवृक्षपक्षिरूपकेणोपपादयति । सुपर्णाविति ॥ सुपर्णौ शोभनौ पर्णौ पक्षौ ययोस्तौ तत्र जीवस्य पर्णौ धर्माधर्मौ परमात्मनस्तु निरस्तनिखिलदोषत्वसमस्तकल्याणगुणात्मकत्वरूपौ एतौ जीवेश्वररूपपक्षिणौ सदृशौ शोभनप्रयत्नादिगुणकौ अनेन सयुक्शब्दार्थ उक्तः समानगुणयोगो हि सयुक्त्वं सखायौ उपकार्योपकारकभावेन स्थितौ यदृच्छया लोकदृष्टहेत्वन्तररहितमिति भावः । वृक्षः शरीरं नीडो हृदयकमलं कृतं हृदयकमलरूपं निवासस्थानं याभ्यां तौ "हृदयमात्मा प्रतिष्ठित" इति जीवस्यापि हृदयकमलावस्थितत्वं श्रूयते तयोर्जीवेश्वररूपयोः पक्षिणोरेकः जीवरूपः पक्षी पिप्पलाशं पिप्पलं प्रकृतिम् ऊर्ध्वमूलमधःशाखमश्वत्थमिति प्रकृतेः पिप्पलत्वरूपणात् पिप्पलस्याशनमदनं इत्यर्थं भोग्यं फलवल्लिकादिरूपशब्दादिविषयं खादत्यनुभवति अन्य ईश्वररूपः पक्षी तु निरन्नः पुण्यापुण्यफलसुखदुःखादिभोगरहितः बलेन सार्वज्ञ्यसर्वशक्त्यादिना भूयान् अपरिच्छिन्नोऽपि स्वस्वरूपस्वभावसंकोचरहितः प्रकाशत इत्यर्थः । अनेनानश्नन्नन्यो अभिचाकशीतीत्यस्यार्थः उक्तः ॥ ६ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

किञ्च यथा द्वावजावीशानीशौ अज्ञो ह्येको भोगार्थयुक्तेत्यादि-श्रुत्यन्तरसिद्धत्वात्तस्य वैलक्षण्यमाह । आत्मानमिति । यो विद्वान् सर्वज्ञः अपिप्पलादः अभोक्ता च स आत्मानमन्यमप्रधानम्पुरुषञ्च वेद यथावत्साक्षात्करोति पिप्पलादो भोक्ता जीवस्त्वात्मानमन्यं स्वसखं परमात्मानं च न वेद किन्तु देहमेवात्मतयाभिमन्यत इति भावः । किञ्च योऽविद्यया स्वपरयाथात्म्याज्ञानेन युज्यते इति युक् स तु नित्यबद्धः यश्च विद्यामयः विद्वन्मय इतिपाठेऽपि स एवार्थः स तु नित्यमुक्तः नित्यं हेयप्रतिभट ईश्वर इति । नित्यमुक्तशब्देन कदाचिन्मुक्ताज्जीवाद्व्यावृत्तिः ॥ ७ ॥

अथ कथं यतेतैतयोरन्तरं वदन् विद्वत्प्रसङ्गादविदुषोऽपि वृत्तिमाह । देहस्थोऽपीति । विद्वान्देहस्थोऽपि न देहस्थः अदेहस्थतुल्यः देहात्माभिमानमकुर्वन्वर्ततेत्यर्थः । यथा स्वप्नादुत्थितस्तद्वत् स्वप्नोत्थितस्य हि स्वप्नशरीरे आत्माभिमानो नास्तीति स दृष्टान्तितः कुमतिर्देहात्माभिमानी स्वदेहस्थोऽपि गर्भमहाप्रलयादिदशायामनिष्पन्नदेहोऽपि देहस्थः बद्ध एवेत्यर्थः यथा स्वप्नदृक् तद्वत् स्वप्नद्रष्टुः स्वाप्नशरीरे आत्माभिमानसद्भावात्स दृष्टान्तितः ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

एकस्मिन् भोगायतने स्थितयोर्जीवपरयोरेकस्य जीवस्यैव तौ स्त इति यदुच्यते तत्र विवेकधर्मं कथं स्यादत्राह । अथेति । यतो जीवस्यैव बन्धमोक्षौ अथ तस्माद्बद्धस्य जीवस्य मुक्तस्य विष्णोर्वैलक्षण्यं अज्ञानाद्यादिज्ञानाद्यादिलक्षणं ते तुभ्यं वदामीत्यन्वयः मुक्तनामत्वं च हरेरेव मुख्यं नित्य*शुद्धमुक्तेत्यादिपदानां हरावेवेत्यवधारणादित्यादिषु पुरुषोत्तमव्याख्यानवचनात् सिद्धम्—

मुक्तस्य तु न मे मोक्षो बन्धाभावात् कथञ्चन ॥
मुक्त इत्यपि नामैतद्दीप्यतेऽसौ दिवाकरः ।
इति यद्वन्धराहित्यात्तु त्रुटत्वादिर्दीप्तिवत् ॥
कादाचित्कतया वाच्यं बन्धाभावादमोक्षिनः ।
जीवस्य बन्धमोक्षस्तु मत्प्रसादात्कदाचनेति ॥
तयोरवयवव्यवस्थाकार्थसिद्धिः बद्धस्य जीवस्य ।
बद्धजीवा इमे सर्वे पूर्वबन्धसमन्वयात् ॥
नित्यमुक्तस्ततो विष्णुर्मुक्तनामा सदोदितः ।
अबद्धत्वादमोक्षोऽपि दीप्यतेऽसौ रविर्यथेति ॥

स्पष्टप्रमाणात् सति वैलक्षण्ये बद्धाबद्धव्यवस्था एकं कथं तदेव कथमिष्यत उक्तं विरुद्धधर्मिणोरिति ॥ ५ ॥

तत्र प्रथममेकधर्मिणोरयुक्तं विदूषणेति । सुपर्णाविति । पृ पालनपूरणयोरिति धातोः सुष्ठु पालकत्वात् पूर्णत्वाद्धरिः पालकत्वात्पूर्णत्वाच्च जीवोऽपि सुपर्णौ इत्युच्यते अयं च विरुद्धधर्म-

स्यन्तर्भूयते चिदानन्दत्वेन सदृशौ वृक्षसमानधर्मे देहे स्थितत्वाच्च सखायौ यदृच्छयान्यदृष्टप्रेरकेच्छया अथ विरुद्धधर्मानाह । एक इति । पिप्पलं कर्मफलं जीवादन्यो हरिर्निरन्नो भोगरहितोऽपि बलेन भूयान् पुष्टः अदननिमित्तं बलन्नास्तीत्यर्थः । आत्मानं स्वम् अन्यं जीवं च अन्यो भगवद्विषयज्ञानविधुरः यश्चो भगवद्धर्मः अनेन श्लोकद्वयेन, द्वा सुपर्णा सयुजा सखायेत्यादिश्रुतिर्विवृता अज्ञानश्चान्योऽभिचाकशीतीत्यादौ यदशनाद्यभावेन हरेरदनमनुच्यते तद्दुःखाद्यदनमेव न तु सुखानदनमित्यादि सर्वम्—

अनश्नत्वं हरेर्दुःखानश्नत्वादुच्यते सदा ॥
विषयान्वयिनापि पूर्णत्वात्स्वरूपानन्दभोगिनः ।
शुभमत्त्येव हि सदा सर्वत्रापि स्थितं विभुः ॥
स्वादोरदनवद्योऽसि जीवोऽस्वाद्यपि यत्सदा ।
अनात्मरूपावश्यात्स्वाद्वत्तीति ततः श्रुतिरिति ॥
अस्वादुस्वादुवद्योऽसि जीवो नैवं जनार्दनः ।
अतो नात्तीति वचनमश्नतोऽपि शुभं सदेति ॥
साधनानशनत्वेन नरदेवौ यथो दितौ ।
अस्ति विनादवर्णैर्वत्स्तथा नास्ति हरेर्भुज इति ॥

बहुप्रमाणसिद्धोऽयमर्थः तद्यथाप्रोक्तं निरन्नोऽपि बलेन भूयानितीति स्वयं स्वरूपेण तथापि नादननिबन्धनं तस्य बलं कुतः—

यत्रा सुपर्णा अमृतस्य भागमनिमेषं विदथाभिस्वरन्ति ॥
इनो विश्वस्य भुवनस्य गोपाः स मा धीरः पाकमत्राविवेश ।
यस्मिन्वृक्षे मध्वदः सुपर्णा निविशन्ते सुवते चाधि विश्वे ॥
तस्येदाहुः पिप्पलं स्वाद्वग्रे तन्नोन्नशद्यः पितरं न वेदेत्यादि ।

वाक्यशेषात् वृक्षे स्थित्वा मध्वदः सुपर्णा यस्मिन्नश्नन्ति सुपर्णौ अधिविश्वे सुपर्णाः निविशन्ते तदाधारत्वेन सुवते च तस्यैव सुपर्णस्य स्वादुपिप्पलम् अत्स्यन्तु स्वादुमदश्नाति न स्वादु यावत्पितरं परमात्मानं न वेदेति—

सुपर्णौ द्वौ शरीरस्थौ जीवश्च परमस्तथा ॥
पालकत्वाद्दनाज्जीवस्तत्रात्तीति श्रुतौ श्रुतः ।
स्वबलेनाद्दनाद्विष्णुर्नात्तीत्यत्तापि सन् श्रुतः ।
स एव हि शुभस्यात्ता जीवोऽस्यस्यैव वेदनादिति ॥

वचनाद्य जीवपरमात्मानावेवोच्येते न सामान्यपक्षिणाविति-ज्ञायते सर्वं वा अत्तीति तददितेरदितित्वं यस्य ब्रह्म च क्षत्रञ्चोभे भवत ओदनः "अत्ता चराचरग्रहणात्" अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव चेत्यादेश्च अत्तृत्वस्य लिङ्गत्वेनोक्तत्वाल्लिङ्गयोरप्यसम्प्रतिपन्नत्वेन निर्णयहेतुत्वाद्धरेरेवं सर्वात्मनानत्तृत्वमत्रोच्यते किन्तु अशुभानत्तृत्वेनानत्तृत्वश्रुतिः कृतार्थत्वेन प्रामाण्यलक्षणाच्छ्रुतिवाक्यानामस्माकं न कापि क्षतिरिति—

जीवो मुक्तोऽपि नो जीवात् परमात्मानमेव च ।
वेत्ति सर्वात्मना विष्णुर्वेत्त्येकः पुरुषोत्तमः ॥
तस्य प्रसादतः किञ्चिद्ब्रह्माद्या अपि जानते ।
अन्यजीवोऽनपेक्ष्यैको जानाति तु चतुर्मुखः ।
समाहितेन तद्रूपं तु वेदाज्ञानाः क्रमात्ततः ॥

इत्यनेन आत्मानमन्यं च स वेदेत्युक्तं सर्वज्ञत्वादिधर्म-

* विष्णोर्मुक्तपादव्याख्याने दैवीमीमांसासूत्रं प्रमाणत्वेनोदाहरति । नित्यशुद्धेति अन्यथादिस्वरूप शक्तितात्पर्यलक्षणयुक्त्या दिव्यर्थः ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कनिष्ठं तदुक्तं तान्यहं वेद सर्वाणि न त्वं वेत्थ परन्तपेत्यादि मुक्तेष्वतिव्याप्तमिदं लिङ्गमिति चेन्न—

अज्ञा जीवास्तु कथ्यन्ते मुक्ता अल्पत्ववेदनात् ।
ज्ञ इत्येवोच्यते नित्यं सर्ववेत्तृत्वतो हरिरिति

वचनात्—

अनाद्यविद्ययान्धत्वं जीवस्य यदि योग्यता ।
प्रयत्नश्चानुकूलः स्यादन्तवद्भवति ध्रुवम् ॥
नित्यमेवान्यथान्धत्वमयोग्या मानुषादयः ।
बद्धत्वं सर्वजीवानां नियमान्नित्यमेव तु ॥
बद्धत्वं विष्णवधीनत्वमन्धत्वं तददर्शनम् ।
अतः क्वचिदनित्यत्वमन्धतायां भविष्यति ॥
मुक्तस्यापि तु बद्धत्वमस्ति यत्स हरेर्वशः ।
मुक्ताख्या दुःखमोक्षात्स्याद्बद्धाख्या हर्यधीनतः ॥
नित्यबद्धा अपि ततो मुक्ता दुःखविमोक्षतः ।
नित्यमुक्तस्त्वेक एव हरिर्नारायणः प्रभुः ॥

इत्यनेन सोपपत्तिकेन यो विद्ययान्धः स तु नित्यमुक्त इत्येतद्विवृतम्—

शतं सहस्राणि चतुर्दशेह परागतिर्जीवगणस्य दैत्य ! ।
आरोहणं तत्कृतमेव विद्धि स्थानं तथा निःसरणं च तेषाम् ॥

इति जीवगुणस्य गतिबाहुल्यप्रवेशनिर्गमनप्रतीतेर्नित्यमुक्तत्वं हरेर्लिङ्गं न हरेरन्यत्र गमनतः स एव नित्यमुक्तः ननु मुक्तैः सेव्यत्वं युक्तमुक्तं तत्कथमिति चेन्न कृष्णो मुक्तैरिज्यते वीतमोहैः मुक्तानां परमागतिरिति वचनात् तर्ह्येषां कदा तु मुक्ताख्येति चेन्न सर्वात्मना पञ्चदशकलानां त्यागानन्तरं तदाख्या तदुक्तम्—

कलाः पञ्चदश त्यक्त्वा श्वेतद्वीपनिवासिनाम् ॥

मुक्ताख्येति पश्चादपि स्वतन्त्रा इमतो विष्णवधीनास्त इति यत्प्रसादात्कथा मोक्षः तदधीनत्वमस्तु नान्याधीनतास्त्यतः स्वाधिकानां वशे स्थिता इति । अन्याधीनत्वादधिकं दुःखं नास्तीत्यत उक्तं तत्राप्यस्मादधिकं किञ्चित्सुखमस्ति हरेर्विनेति । अतो नित्यमुक्तत्वं च स्वातन्त्र्यं नान्यनिष्ठमित्युपसंहरति ।

नित्यमुक्तः स एवैकः स्वतन्त्रः संयतः सदेति ॥ ६—७ ॥

ननु उभयोर्देहस्थत्वाविशेषादेकस्य मुक्तत्वेन दुःखानदनमितरस्य बद्धत्वेन दुःखादनकुतमित्याशङ्क्य विद्वत्त्वाविद्वत्त्वे कारणमिति भावेनाह । देहस्थोऽपीति । विद्वान्नित्यनिर्दुःखानन्दानुभवः सर्वज्ञः श्रीहरिर्देहस्थोऽपि देहाभिमानाभावान्न देहस्थोऽपि तत एव दुःखं च नास्तीति कथं स्वप्नादुत्थितः पुरुषस्तद्गतदुःखादिकं नास्ति तथेति कुमतिरविद्वान् जीवो देहाभिमानित्वाद्देहादन्योऽपि देहदेहस्थो यथा स्वप्नदृक् तद्गतदुःखादिकं भुङ्क्ते तथेति ॥ ८ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तादृशभेदं वैलक्षण्येनैव दर्शयति । सुपर्णाविति द्वाभ्याम् । अत्र सदृशाविति तद्देषमेवाभेदनिर्देशः क्वचिदिति भावः । श्रुतौ सयुजेति समानं रूपं चिद्रूपत्वं युङ्क्ते भजत इति समानोऽर्थः ॥ ६ ॥

विद्यामय इत्यत्र विद्या स्वरूपशक्तिवृत्तिरेव । व्याख्यातं चाक्रूरस्तुतौ ॥ ७—१६ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

यदुक्तं केषां स्यादेतदवयोरिति तत्राह । अयेति । अयं जीवो बद्धः अयं जीवो मुक्त इति यथोच्यते तथा जीवात्मा बद्धः परमात्मा मुक्त इत्यपि अयमात्मा अपहतपाप्मेति यदुच्यत एवेत्यतः प्रथमं जीवात्मपरमात्मनोर्वैलक्षण्यमाकर्णयेत्याह । सार्धद्वयेन । विरुद्धधर्मिणोः शोकानन्दधर्मवतोः एकस्मिन् धर्मिणि शरीरे नियम्यनियन्तृत्वेन स्थितयोः ॥ ५ ॥

सुपर्णौ वृक्षात् पक्षिणाविव देहात् पृथग्भूतौ सदृशौ चिद्रूपत्वात् सखायौ सह योगात् । यदृच्छयेति वृक्षे तयोरासक्त्यनासक्तिपूर्वकनीडकरणे तदीयपिप्पलाशभोजित्वाभोजित्वे च हेत्वभाव उक्तः मायया वृक्ष उच्यत इति वृक्षो देहः ऊर्ध्वमूलमधःशाखं वृक्षं यो वेद सम्प्रतीति श्रुतेः ऊर्ध्वमूलमधःशाखमश्वत्थम्प्राहुरव्ययमिति स्मृतेश्च तस्मिन् वृक्षे आसक्त्यनासक्तिपूर्वककृतं निकेतनं हृदयरूपं याभ्यां तौ तयोर्मध्ये एको जीवः पिप्पलाशं पिप्पलोऽश्वत्थो देहस्तस्मिन्नदनीयं कर्मफलमित्यर्थः । आदत्ति भुङ्क्ते अन्यः परमात्मा निरन्नः अभोक्तापि निजानन्दतृप्तो यद्येन ज्ञानादिशक्त्या भूमानाधिकः श्रुतिश्च—

द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीतीति ॥ ६ ॥

स परमात्मा आत्मानं स्वम् अन्यं जीवं च वेद न पिप्पलं कर्मफलमत्तीति सः पिप्पलादो जीवस्तु न तु स्वमन्यं च वेद युक्तायुक्तः स नित्यबद्धो जीवः विद्यामय इति विद्याशब्देनात्रान्तरङ्गा चिच्छक्तिरुच्यते नतु बहिरङ्ग मायाशक्तिवृत्तिः तथा च गोपालतापनीश्रुतिः । द्वौ सुपर्णौ भवतो ब्रह्मणोऽंशभूतस्तथेतरो भोक्ता भवति अन्यो हि साक्षी भवतीति भोक्ताभोक्तारौ वृक्षधर्मे तिष्ठतः यत्र विद्याविद्ये न विदामो विद्याविद्याभ्यां भिन्नो विद्यामयो हि यः स कथं विषयी भवतीति स्मृतिश्च छायातपौ यत्र न गृध्रपक्षाविति छायातपौ अविद्याविद्ये इति व्याख्या ॥ ७ ॥

अथ बद्धमुक्तयोर्जीवयोर्मिथो वैलक्षण्यमाह । देहस्थोऽपीति दशभिः । तत्र त्रिभिः कथं वर्तेतेत्यस्योत्तरमाह । विद्वान् मुक्तः संस्कारवशेन देहस्थोऽपि देहस्थो न भवति यथा स्वप्नादुत्थितः बाधितानुवृत्तिन्यायेन स्मर्यमाणे स्वप्नदेहे स्थितोऽपि तत्रस्थो न भवति तद्गतसुखदुःखयोः स्वनिष्ठत्वेनाप्रतीतेः तथा वस्तुतो न देहस्थोऽपि कुमतिरविद्वान् देहस्थः तन्निमित्तसुखदुःखभाक् यथा स्वप्नदृक् स्वप्नान् पश्यन् स्वप्नदेहगतः ॥ ८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

कथं वर्तेतेत्यादिप्रश्नोत्तरं वदन् जीवेश्वरयोः परस्परं बद्धमुक्तादीनां जीवानां च वैलक्षण्यं दर्शयति । अथेत्यादिना । विरुद्धधर्मिणोः अल्पज्ञत्वसर्वज्ञत्वादिधर्मवतोः एकधर्मिणि समानस्थाने नियम्यनियन्तृत्वादिना स्थितयोः ॥ ५ ॥

एतौ प्रत्येकत्वादिना विद्वदनुभवप्रसिद्धौ एकस्य कर्मफलभोगार्थमपरस्य तत्फलदानाद्यर्थमेवं भूतं स्वेच्छानुरूपतया

इन्द्रियैरिन्द्रियार्थेषु गुणैरपि गुणेषु च ।
गृह्यमाणेष्वहं कुर्यान्न विद्वान् यस्त्वविक्रियः ॥ ९ ॥
दैवाधीने शरीरेऽस्मिन् गुणभाव्येन कर्मणा ।
वर्तमानोऽबुधस्तत्र कर्ताऽस्मीति निबध्यते ॥ १० ॥
एवं विरक्तः शयन आसनाटनमज्जने ।
दर्शनस्पर्शनघ्राणभोजनश्रवणादिषु ॥ ११ ॥
न तथा बध्यते विद्वांस्तत्र तत्रादयन् गुणान् ।
प्रकृतिस्थोऽप्यसंसक्तो यथा खं सविताऽनिलः ॥ १२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

शोभने पर्णे पतत्रं ययोस्तादृशौ ज्ञानस्वरूपत्वज्ञातृत्वाद्यर्थत्वेन सादृश्यात् सखायौ प्रवर्त्यप्रवर्त्तकत्वात् ऊर्ध्वमूलोऽवाक्शाख एषोऽश्वत्थः सनातनः । ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययमिति श्रुतिस्मृतिप्रसिद्धे वृक्षे समष्टिव्यष्टिदेहे यदृच्छया कृतं हृत्कमलरूपं नीडं याभ्यां तौ तयोर्मध्ये एकः जीवाख्यः सुपर्णः पिप्पलः समष्टिव्यष्टिरूपो देहः ब्रह्मादिपिपीलिकान्ततास्थानं तत्राद्यते इत्यन्नं कर्मफलं खादति भक्षयति अन्य ईश्वराख्यः सुपर्णस्तु निरन्नः पिप्पलान्नं न खादति परमानन्दरूपत्वात् बलेन सर्वेश्वरत्वसर्वात्मत्वादिना भूयान् अत्र "द्वा सुपर्णा सयुजा सखाया समानं वृक्षम्परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति" इति श्रुतिरनुसन्धेया ॥ ६ ॥

ईश्वरस्य सर्वज्ञत्वं जीवस्याज्ञत्वं चाह । आत्मानमित्यर्द्धेन ज्ञानाज्ञानाभ्यां नित्यमुक्तनित्यबद्धयोर्वैलक्षण्यमुक्तमिदानीं नित्यं कर्मफलप्रेप्सुर्नित्यबद्धः नित्यं विद्याप्रधानः स नित्यमुक्त इत्याहार्द्धेन । य इति । अविद्यया कर्मरूपया युक् युक्तः—

अविद्या कर्मसंज्ञान्या तृतीया शक्तिरिष्यते ।
यया क्षेत्रज्ञशक्तिः सा वेष्टिता नृप ! सर्वगा ॥
संसारतापानखिलानवाप्नोत्यतिसन्ततान् ।
तया तिरोहितत्वाच्च शक्तिः क्षेत्रज्ञसंज्ञिता ॥
सर्वभूतेषु भूपाल ! तारतम्येन वर्त्ततेइति ।

स्मृतेः विद्यामयो विद्याप्रधानः ॥ ७ ॥

अथ सामान्यतो बुभुक्षुं मुमुक्षुं च परस्परविलक्षणतया प्रतिपादयति । देहस्थ इत्यादिना । विद्वान् कालानवच्छिन्नस्वस्वरूपस्थितिवित् प्रारब्धकर्मवशाद्देहस्थोऽपि न देहस्थः देहसमकालस्थितिमान्न भवति नित्यो नित्यानामिति श्रुतिप्रोक्तनित्यस्थितिमानहं देहपरिच्छिन्नसत्ताको नाहमीति जानातीत्यर्थः।स्वप्नादुत्थितः प्रबुद्धः यथा स्वाप्नदेहं परिच्छेद्यमात्मनः स्थितिं नैव मन्यते तद्वत् कुमतिः कुत्सिते देहादावहमित्यादिमतिर्यस्य सः अदेहस्थोऽपि देहसमकालस्थितिशून्योऽपि देहस्थ एव देहाभिन्नस्वस्वरूपंमन्य एव यथा स्वप्नदृक् स्वप्नद्रष्टा ॥ ८ ॥

---

भाषा टीका ।

हे तात उद्धवजी! अब मैं बद्ध तथा मुक्त दोनों की विलक्षणता को तुम से कहता हूं वे दोनों एक धर्म वाले भौतिक शरीर मे रहते हैं और स्वयं बुद्धि से विलक्षण धर्मवाले हैं ५

इस शरीर रूपी वृक्ष मे जीवात्मा परमात्मा दोनो पक्षी सरी के हैं दैवयोग से इन ने इस वृक्ष मे खोतर बनाया है दोनो बरोबर रहते हैं तिनमे से एक जीव तो कर्म फल को भोगता है और ईश्वर तो कुछ नहीं खाकर भी अधिक सदा प्रकाश करता है ॥ ६ ॥

सर्वज्ञ वह परमात्मा तो अपने को तथा जीवको दोनों को जानता है और कर्मफल को नहीं भोगता है और विद्या नित्य ज्ञान मय है वह नित्यही मुक्त है जो अज्ञानी जीव है वह तो कर्मफल को भोगता है औ अविद्या से युक्त है वह देह संबन्ध रहने तक नित्यही बद्ध है ॥ ७ ॥

इस प्रकार से इस देह में रहकर भी जो ज्ञानी है वह तो अपने को देह में नहीं रहा सरीका ही समुझता है जैसे स्वप्न में से उठा पुरुष उस देह से मोह नहीं करता है और जो अज्ञानी है वह तो प्रलयादिक में देह में नहीं रहने पर भी अपने को देहस्थ समुझता है जैसे स्वप्न में देखता हुआ पुरुष उसी बुद्धिमें रहता है ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अत्र हेतुत्वेन वैलक्षण्यान्तरमाह द्वाभ्याम् । इन्द्रियैरिन्द्रियार्थेषु गृह्यमाणेष्वपि यस्तु विद्वान् स नाहंकुर्यादहं गृह्णामीति मतिं न कुर्यादित्यर्थः । कुतः गुणैर्गुणेषु गृह्यमाणेषु अत एवाविक्रियो रागादिशून्यः तदुक्तम् गीतासु—

तत्त्ववित्तु महाबाहो ! गुणकर्मविभागयोः ।
गुणा गुणेषु वर्तन्ते इति मत्वा न सज्जत इति ॥ ९ ॥

अबुधस्तु पूर्वकर्माधीनेऽस्मिन् शरीरे वर्तमानो गुणैरिन्द्रियैर्भाव्येन कर्मणा तत्र देहादौ निबध्यते कुतः कर्ताऽस्मीत्यहंकारेण तदुक्तम् तत्रैव

वैशारद्येक्षयाऽसङ्गशितया छिन्नसंशयः ।
प्रतिबुद्ध इव स्वप्नान्नानात्वाद्विनिवर्तते ॥ १३ ॥
यस्य स्युर्वीतसंकल्पाः प्राणेन्द्रियमनोधियाम् ।
वृत्तयः स विनिर्मुक्तो देहस्थोऽपि हि तद्गुणैः ॥ १४ ॥
यस्यात्मा हिंस्यते हिंस्रैर्येन किंचिद्यदृच्छया ।
अर्च्यते वा क्वचित्तत्र न व्यतिक्रियते बुधः ॥ १५ ॥
न स्तुवीत न निन्देत कुर्वतः साध्वसाधु वा ।
वदतो गुणदोषाभ्यां वर्जितः समदृङ्मुनिः ॥ १६ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः ।
अहङ्कारविमूढात्मा कर्ताऽहमिति मन्यते इति ॥

एतैस्त्रिभिः श्लोकैः कथं वर्तेतेत्यस्य प्रश्नस्य सुखदुःखशून्यो निरभिमानश्च देहे वर्तेत इत्युत्तरमुक्तं भवति ॥ १० ॥

वैलक्षण्यान्तरं वदन् किं भुञ्जीतेत्यादिप्रश्नोत्तरमाह । एवमिति त्रिभिः । अन्यगतमेव कर्म मां बध्नातीत्येवं विरक्तो विद्वान् तथा अविद्वानिव शयनासनादिषु न बध्यते कुतः तत्र तत्र विषयेषु गुणानिन्द्रियाणि यावद्यन् भोजयंस्तत्साक्षित्वेन वर्तमानो न तु स्वयमदन् एतदेव कुतस्तत्राऽऽह । प्रकृतिस्थोऽपीति । साक्षीन । यथा खं सर्वत्र स्थितमपि न सज्जते यथा सविता जले प्रतिबिम्बितोऽपि यथाऽनिलः सर्वत्र सञ्चरन्नपि तद्वत् ॥ ११-१२॥

असङ्गेन वैराग्येण शितया तीक्ष्णया छिन्नाः संशया असम्भावनादयो यस्य सः नानात्वाद्देहादिप्रपञ्चात् ॥ १३ ॥

कथं विहरेदित्यस्योत्तरत्वेन वैलक्षण्यान्तरमाह । यस्य स्युरिति । तद्गुणैर्देहगुणैः संकल्पशून्याभिः प्राणादिवृत्तिभिर्विहरन् मुक्त इत्यर्थः ॥ १४ ॥

एवं तावद्बद्धमुक्तयोः स्वसंवेद्यमेव वैलक्षण्यमुक्तमिदानीं कैर्वा ज्ञायेत लक्षणैरित्यस्योत्तरतया परैरपि सुज्ञेयं वैलक्षण्यमाहुर्यस्यात्मेति त्रिभिः हिंस्रैर्दुर्जनैरन्यैर्वा प्राणिभिर्यस्याऽऽत्मा देहः पीड्यते यदृच्छया येन केनापि कश्चित्किञ्चिदर्च्यते वा स बुधस्तत्र न व्यतिक्रियते नाति विक्रियत इत्यर्थः । तदुक्तम् याज्ञवल्क्येन—

"यः कण्टकैर्वितुदति चन्दनैर्यश्च लिम्पति ।
अक्रुद्धोऽपरितुष्टश्च समस्तस्य च तस्य चेति ॥ १५॥

किञ्च साध्वसाधु वा कुर्वतो वदतो वा जनान् न स्तुवीत न च निन्देत यो लौकिकव्यवहारे विमुखः स मुक्त इत्यर्थः ॥ १६

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

अत्र मुक्तस्य देहस्थत्वेऽपि तद्गतसुखदुःखाद्यभाक्त्वे बद्धस्यादेहस्थत्वेऽपि तन्निमित्तसुखदुःखादिभाक्त्वे च निरहङ्कारत्वादेव देहस्थत्वेऽपि सुखाद्यभाक्त्वमिति निरहङ्कारत्वस्य तत्र हेतुत्वम् एवं यो निरहङ्कारः स मुक्त इति बद्धाद्वैलक्षण्यमित्यर्थः ॥ ९ ॥

मान्येन सूत्रेण तत्र अहङ्कारेण बद्धत्वं तत्र गीतायामुक्तं साहङ्कारत्वादेव वस्तुतोऽदेहस्थत्वेऽपि तद्गतसुखदुःखादिभाक्त्वमिति साहङ्कारत्वस्य तत्र हेतुत्वम् एवं यः साहङ्कारः स बद्ध इति मुक्ताद्वैलक्षण्यं चेत्यर्थः ॥ १० ॥

एवमिति सार्द्धकं तथास्य व्याख्यानम् अविद्वानिवेति तत्साक्षित्वेन इन्द्रियसाक्षित्वेन ॥ ११ ॥ १२ ॥

एतदेव साक्षित्वेन वर्त्तमानस्यैव प्रकृतिस्थोऽपीति सार्द्धकम् असंसक्तेन नानात्वात्प्रवृत्तेः साक्षित्वमित्यर्थः ॥ १३ ॥

वैलक्षण्यान्तरं बद्धान्मुक्तस्यान्यद्वैशिष्ट्यं यस्य प्राणेन्द्रियमनोधियां वृत्तयः क्षुत्पिपासादर्शनश्रवणादिसङ्कल्पनिश्चयरूपाः पुरुषकर्तृकसदसत्सङ्कल्पशून्या भवन्ति स देहस्थोऽपि देहगुणैर्जन्मनाशादिभिर्मुक्तः तथाच सङ्कल्पशून्याभिरित्यादि व्याख्यातम् ॥ १४ ॥

स्वसंवेद्यं बद्धमुक्तयोर्भेदं सुज्ञेयम् अन्यैः पश्वादिभिर्यो नातिविक्रियते हर्षशोकादिपरवशो न स्यात् तत् परैर्ज्ञेयलक्षणं तस्य तोदकस्य तस्य लिम्पकस्योपरि यथासङ्ख्यमक्रुद्धोऽपरितुष्टश्च किन्तु तयोरपि समः स मुक्तः परैरपि सुज्ञेय इत्यर्थः ॥ १५ ॥

किञ्च अन्यदपि परवेद्यं लक्षणमाहेत्यर्थः । लौकिकव्यवहारे विमुखत्वमेव यथा कथञ्चित् परवेद्यं लक्षणमित्यर्थः ॥ १६ ॥

### सुदर्शनसूरिकृतशुकपक्षीयम् ।

अदेहस्थत्वमेव विवृणोति । इन्द्रियैरिति । गुणैः गुणभूतैरिन्द्रियैः इन्द्रियार्थेषु गुणेषु गृह्यमाणेषु अविक्रियः हर्षविषादादिरहितो भोक्ता अभिमानं न करोतीत्यर्थः ॥ ९ ॥

कुमतेर्देहस्थितिं विवृणोति । दैवाधीन इति । गुणान् आत्मत्वेन सम्मान्यत इति गुणाभाव्यं तेन अबुधः अज्ञः ॥ १० ॥ ११ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

प्रकृतिस्थः अविकृतः संसर्गे सत्यपि अविकृतत्वे दृष्टान्तत्रयं यथाखमित्यादि ॥ १२ ॥

वैशारद्या विशारदया नानात्वात् देवत्वादिभेदात् विनिवर्तते देवोऽहमित्याद्यभिमानं न करोति ॥ १३ ॥

वीतसङ्कल्पाः इदं संपाद्यमिदं द्रष्टव्यमिदं परिहर्तव्यमित्यभिसंधानरहिताः ॥ १४—१६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अदेहस्थत्वमेव विवृणोति । इन्द्रियैरिति । यस्तु विद्वान् गुणैः प्रकृतिपरिणामात्मकैरिन्द्रियैर्गुणेषु इन्द्रियार्थेषु शब्दादिष्वनुकूलप्रतिकूलेषु गृह्यमाणेषु सत्स्वविक्रियः हर्षविषादादिरहितः नाहं कुर्यादात्मनि कर्तृत्वभोक्तृत्वाभिमानं न कुर्यादित्यर्थः ॥ ९ ॥

कुमतेर्देहस्थितिं विवृणोति । दैवाधीन इति । गुणैः प्राकृतैस्तत्कार्यभूतैरिन्द्रियैर्यो भाव्यते सम्पाद्यते इति तथा तेन कर्मणा हेतुना वर्तमानोऽपि अबुधः देहस्य दैवाधीनतां प्राचीनकर्मनिमित्ततां तत्र स्थितिं च तथा देहविलक्षणमात्मानं च अजानन् देहमात्मानं मन्वान इत्यर्थः । अत एव कर्तास्मीति निबध्यते देहात्माभिमानकर्तृत्वभोक्तृत्वाभिमानैर्बद्धो भवतीत्यर्थः ॥ १० ॥

कथं विहरेदित्यादीनां विशेषप्रश्नानामुत्तरमाह । एवमिति । इत्थं कुमतेर्देहाद्यनुचिन्तनेन विरक्तो देहतदनुबन्धिष्वासक्तिरहित इत्यर्थः । अशनं व्याप्तिः "अशूङ् व्याप्तौ" इत्यनुशासनात् शयनादिषु कर्मसु यथोचितं वर्तमानं एवेति शेषः—

युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु ।
युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ॥

इत्यत्र भगवतैवोक्तत्वात् ॥ ११ ॥

तत्र तत्र शब्दादिविषयेषु गुणान् गुणपरिणामात्मकानीन्द्रियाणि व्यापारयन् मत्प्रसादानुभावपरमेश्वरायत्तसत्तास्थितिप्रवृत्तिमत्स्विन्द्रियेष्वेव कर्तृत्वभोक्तृत्वादिकमनुचिन्तयीतेत्यर्थः । तदेवाह । न तथेति । विद्वान्—

तत्त्ववित्तु महाबाहो गुणकर्मविभागयोः ।
गुणा गुणेषु वर्तन्त इति मत्वा न सज्जते ॥

इत्युक्तविधमतिमान् तथा न बध्यते इत्यर्थः । गुणानाद्यन्नित्यनेनौदासीन्यमात्मनि कर्तृत्वभोक्तृत्वादिकं तु शरीरेऽनुसंधेयमिति फलितम् ईश्वरस्याकर्तृत्वमनुसन्धेयमिति वक्ष्यते मयि सर्वाणि कर्माणि निरपेक्षः समाचरेदिति ननु कर्माणि कुर्वतस्तत्फलभूतानि सुखदुःखादीन्यनुभवतो देहे वर्तमानस्य कथमौदासीन्यरूपमविक्रियत्वं सम्भवेदत आह । प्रकृतिस्थोऽपीति । प्रकृतिस्तत्परिणामात्मको देहस्तत्स्थोऽप्यसंसक्तः तदभिनिवेशरहितः तत्प्रयुक्तसुखदुःखादिष्वविक्रिय इति यावत् तत्स्थत्वेऽपि तत्प्रयुक्तेष्वविकृतत्वे दृष्टान्तत्रयं यथाखं सवितानिल इति । यथा खमाकाशः सर्वत्रावस्थितोऽपि व्याप्यगतदोषैर्न विक्रियते यथा सविता स्वप्रभया व्याप्नुवन्नपि तद्वत्प्रकृतिस्थोऽपि प्रकृत्यनभिनिवेशनात्तत्स्थतुल्यो भवतीत्यर्थः ॥ १२ ॥



किंचायमसङ्गेन देहाद्यनभिनिवेशेन निशितया वैशारद्या विशारदया ईक्षया बुद्ध्या छिन्नाः संशया यस्य सः स्वप्नात्प्रतिबुद्ध इव नानात्वाद्देवत्वादिभेदाद्विनिवर्तते देवोऽहमित्याद्यभिमानं न करोतीत्यर्थः । देहादहं विलक्षणो न वा किमहं स्वतन्त्र उतेश्वरपरतन्त्रः किमेवाहमीश्वर एवोत तस्माद्भिन्न इत्यादयः संशयाः ॥ १३ ॥

अथ कैर्वा ज्ञायेत लक्षणैरित्यस्योत्तरमाह । यस्येति । यस्य प्राणादीनां वृत्तयो व्यापारा वीतसंकल्पाः स्युः इदमदनीयमिदं द्रष्टव्यमिदं सम्पाद्यमिदं परिहर्तव्यमित्याद्यभिसन्धिरहिताः स्युरित्यर्थः । स एव देहस्थोऽपि तद्गुणैर्विनिर्मुक्तो ज्ञेयः ॥ १४ ॥

यस्यात्मा देहः हिंस्रैर्दुर्जनैर्हिंस्यते पीड्यते अथवा येन केन चिद्यदृच्छया किञ्चिदर्च्यते सत्क्रियते तथापि तत्र हननार्चनादौ न व्यतिक्रियते नातीव विक्रियते स एव बुधः विद्वानिति ज्ञेयः ॥ १५ ॥

किञ्च यः साध्वसाधु वा कुर्वतो वदतो वा जनान् स्तुवीत न निन्देत् गुणदोषाभ्यां रहितः मानापमानयोस्तुल्यदृष्टिः स ज्ञेयः ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

एतदेव विवृणोति । इन्द्रियैरिति । गुणैर्हरेरप्रधानैर्जीवैः श्रोत्रादीन्द्रियैः गुणेष्वप्रधानेष्वर्थेषु विषयेषु गृह्यमाणेषु सत्सु यस्त्वविक्रियः कृशोऽहं छिन्नोऽहमित्यादिविकाररहितो विद्वान् परमात्मा स नाहङ्कुर्यादित्यन्वयः—

शरीरस्थोऽपि विद्वत्वान्न विष्णुर्बध्यते क्वचित् ।
अविद्वत्वात्तु तत्रैव देहे जीवस्तु बध्यते ॥
स्वप्नदृग्यदिमे जीवा हरिः स्वप्नेऽस्थितो यथा ।
सदा तमोविहीनोऽपि ज्ञापनार्थमुदीर्यते ॥

स्मृतेः—

आत्मनो वशगैर्जीवैरात्मनो वशगेषु च ।
दुःखेषु गृह्यमाणेषु मनआदिभिरिन्द्रियैः ॥
अहं दुःखीति नैवैष ह्यहङ्कुर्यात्परः पुमान् ।
जीवगत्वेन तद्दुःखं विष्णुः पश्यति सर्वदा ।
अतो न दुःखभाग्विष्णुः स्वातन्त्र्यात्पुरुषोत्तमः ॥
पारतन्त्र्यादहं दुःखीत्येवं जीवः प्रपश्यति ।
तस्मात्स दुःखभाग्युक्तो यावदीशः प्रसीदतीति ॥

अनेन चानयोः श्लोकयोरर्थो विवृत इति जीवगत्वेन तद्दुःखं विष्णुः पश्यति सर्वदेत्यनेन अभिचाकशीतीत्यस्यार्थः सूचित इति ॥ ९ ॥

जीवस्याहमस्मीत्याभिमान एवानर्थप्रवाहहेतुरित्याह । दैवेति । दैवाधीनेऽस्मिन् शरीरे वर्तमानोऽबुधोऽज्ञो जीवः प्राक्तनकर्मवशादहं गुणभूतोऽस्वतन्त्रः ईशाधीनः इति भाव्येन भावनीयेन कर्मणा अहमेव कर्तास्मीति मन्यमानस्तत्र शरीरे नितरां बध्यत इति—

अस्वतन्त्रः स्वतन्त्रोऽस्मीत्येवं जीवः प्रभावयन् ॥
बध्यते हीशकोपेन राजभावेन भृत्यवदिति ।

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

वचनात्स्वातन्त्र्यकर्तृत्वाभिमानोऽत्र विवक्षित इति । अत्रात्मस्वातन्त्र्यं दैवाधीनमित्यनेन सूचितम् ॥ १० ॥

कालोऽपि शरीरस्थीर्णतामीरयतीति शरीरस्य कालाधीनत्वं च तर्हि कथं कारं न बध्यत इति तत्राह । एवमिति । एवं शयनादिषु स्वस्य स्वातन्त्र्याभिमानेन बध्यमानस्तत एवापारदुःखमनुभुञ्जन् विद्वानेषु विरक्तः तत्र तत्र हरिः स्वातन्त्र्यं विद्वांस्तत्र तत्र शरीरयात्रार्थं गुणान् विषयानाददन् स्वीकुर्वंस्तथा कर्तृत्वाभिमानिवन्न बध्यत इत्यन्वयः गुणान् पुण्यलक्षणानाददत् उपार्जयन्निति वा भेदज्ञानिन एव बद्धत्वं नाभेदज्ञानिन इत्यनेनोच्यते इति किं न स्यादिति चेन्न—

नित्यबद्धोऽपि जीवोऽयमात्मनो नित्यबद्धताम् ॥
विज्ञाता नित्यमुक्तत्वं मत्स्य वेत्ता न्ननुत्पते ।
तदधीनत्वबन्धे तु विद्यमानेऽप्यदुःखभाक् ॥
देहस्थोऽपि न दुःखी स्यादन्यत्रारिकस्तु मुक्तिगः ।

इतिवचनात् जीवभिन्नविष्णुज्ञानाद्बन्धमोक्ष इत्यस्योपपत्तेः एतज्ज्ञानफलमाह । प्रकृतिस्थोऽपीति । असङ्गेन वैराग्येण शितया तेजितया वैशारद्या विशारदमूलया विष्णोरनुग्रहादुत्पन्नया ईक्षया अपरोक्षज्ञानेन छिन्नसंशयोऽत एवासंसक्तः प्रकृतिस्थः शरीरस्थोऽपि ज्ञानी स्वप्नात्प्रतिबुद्ध इव नानात्वान्मिथ्याज्ञानान्निवर्तेत इत्यन्वयः । "नानात्वमिति वै मिथ्याज्ञानं कुत्र चिदुच्यते वस्तुयाथात्म्यतोऽन्यत्वाज्ज्ञानस्योज्झो विवक्षित" इति वचनात् नानात्वशब्दस्य मिथ्याज्ञानवाचित्वस्य प्रसिद्धेः उक्तं युक्तं ॥ ११—१३ ॥

वाय्वाकाशयोः सर्वत्र सत्त्वेऽपि तन्निमित्तलेपाभावो यथा नास्ति तथेति पूर्वोक्तजीवन्मुक्तावस्थामेव विशदयति । यस्येति यस्य प्राणेन्द्रियमनोधियां चेष्टादिलक्षणा वृत्तयः चीनसङ्कल्पाः फलानुसन्धानरहिताः स्युः स देहस्थोऽपि तद्गुणैर्देहधर्मैर्निर्मुक्तो नारिकेलकपालमुक्तान्तस्थनारिकेलवदित्यन्वयः ॥ १४ ॥

यावच्छरीरपातं जीवन्मुक्तः कथंकारं तिष्ठतीत्यत्राह । यस्येति । आत्मा देहः मनो वा हिंस्रैर्हिंसाशीलैः प्राणिभिः येन केनचित्केन चिद्यदृच्छया प्राप्तेन चन्दनादिना तत्र तस्यामवस्थायां स बुधः न विक्रियेते इति ॥ १५ ॥

एतद्विशदयति । न स्तुवीतेति । कुर्वतः पुरुषान् साध्वादि वदतो वा गुणदोषाभ्याम् अल्पेन तुच्छेन गुणेन दोषमात्रेण च वर्जितो ननु गुणमात्रेण वर्जित इत्यर्थः । दोषश्चैव गुणश्चोभावीशतन्त्रौ न मे वशाविस्यादिवाक्यविरोधः सर्वगुणवर्जितेति अङ्गीकार इति भावः ॥ १६ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी

इन्द्रियैर्गुणैरिन्द्रियार्थेष्वपि गुणेषु गृह्यमाणेषु न अहंकुर्यात् अहं गृह्णामीति मतिं न कुर्यात् निरहंकारित्वे लिङ्गमविक्रियः तद्विकाररहितः विकारवत्त्वेऽप्यहं न किमपि करोमीति भाव्यैव भ्रुवन् कपटी महावद्धो ज्ञेयः ॥ ९ ॥

* इति ज्ञानदोषी स्यादर्जितोऽप्यगुणो न चास्ति शेषतात्पर्यम् ।

दैवाधीने पूर्वकर्माधीनेऽस्मिन् शरीरे वर्तमानः गुणैरिन्द्रियैभाव्येन कृतेन कर्मणा निबध्यते कुतः कर्ताहमित्यहंकारेण यदुक्तम्—

अहंकारविमूढात्मा कर्ताहमिति मन्यत इति ॥ १० ॥

किं भुञ्जीतेति यदुक्तं तत्राह । एवमिति त्रिभिः । न तथा बध्यत इति शयनासनादिषु यथा अविद्वांस्तत्र तत्रासक्त्या तत्तदुपायापायोत्थाभ्यां हर्षशोकाभ्यां बध्यते तथा न बध्यते तेन बाधितानुवृत्तिन्यायेन किंचिन्मात्रहर्षशोकवत्त्वेऽपि न क्षतिः यतो विरक्तः तत्र तत्र विषयेषु गुणानिन्द्रियाणि भावयन् भोजयन् तत्साक्षित्वेन वर्तमानः नतु स्वयमदन् ॥ ११ ॥

एतदेव कुतस्तत्राह । प्रकृतिस्थोऽपीति सार्द्धेन । यथा खं सर्वत्र स्थितमपि न सज्जति यथा सविता सर्वत्र किरणजालं प्रसारयन्नपि यथा चानिलः सर्वत्र संचरन्नपि तद्वत् ॥ १२ ॥

असंगेन वैराग्येण शितया तीक्ष्णया छिन्नाः संशया असम्भावनाद्या यस्य सः नानात्वात् नानादेहप्रपञ्चात् ॥ १३ ॥

यदुक्तं कथं विहरेदिति तत्राह । यस्येति । तद्गुणैर्देहधर्मैः शोकमोहादिभिर्विनिर्मुक्तः सन् संकल्पशून्याभिः प्राणादिवृत्तिभिर्विहरतीति भावः ॥ १४ ॥

यदुक्तं कैर्वा ज्ञायेत लक्षणैरिति तत्र सर्वस्वलक्षणानि मुक्तलक्षणान्याह । यस्येति त्रिभिः । हिंस्रैर्दुर्जनैर्यस्यात्मा देहो हिंस्यते दण्डपातप्रहारादिभिः पीड्यते यदृच्छया हेतुना विनैव येन केनापि स्रक्चन्दनादिना किंचिदर्च्यते वा तत्र न व्यतिक्रियते नाति विक्रियते दुर्जनान् प्रति न क्रुध्यति सुजनान् प्रति न तुष्यतीत्यर्थः । यदुक्तं याज्ञवल्क्येन—

यः कण्टकैर्वितुदति चन्दनैश्च विलिम्पति ।
अक्रुद्धोऽपरितुष्टश्च समस्तस्य च तस्य चेति ॥ १५ ॥

साध्वसाधु कुर्वतो वदतो वा जनान् न स्तुवीत न च निन्दयेत् ॥ १६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ननु विद्वान् यदासीत तदधीनमासीदिति श्रुतिप्रोक्तपराधीनत्वज्ञानवान् तथात्मपरमात्मज्ञानवान् अविक्रियः रागद्वेषरहितः सन् इन्द्रियैः श्रोत्रादिभिः करणैरिन्द्रियार्थेषु शब्दादिषु गुणैः सत्त्वादिभिः शुभेषु आगत्यादिषु हिताहितेषु गृह्यमाणेषु सत्सु अहं न कुर्यात् अहं गृह्णामीति संसारव्यापिकां मतिं न कुर्यात् चकारान्मम कर्मव्याजेन भगवान् सर्वं कारयतीति मुक्त्यर्थिकां मतिं कुर्यात् ॥ ९ ॥

अबुधः परमेश्वराधीनतानभिज्ञः तथात्मपरमात्मानभिज्ञः दैवाधीने क्षणभङ्गुरेऽस्मिन् शरीरे वर्तमानः आत्मत्वेन सज्जमानः तत्र संसारे निबध्यते ननु मुच्यते केन बध्यते इत्याकाङ्क्षायामाह । गुणाः इन्द्रियाणि भाव्यन्ते येन तेन कर्मणा किञ्च स्वातन्त्र्येणाहमेव कर्तास्मीत्यहङ्कारेण ॥ १० ॥

कथं वर्तेतेत्यस्योत्तरमुक्त्वा किम्भुञ्जीतेत्यस्योत्तरमाह । एवमित्यादित्रिभिः । यथा अबुधः बध्यते एवं विद्वान् सर्वं भगवदधीनमिन्द्रियलोचकं कर्म संसारहेतुः संसारसुखमनित्यत्वादिदोषवत्सुखमित्यादिज्ञानवान् न बध्यते संसारे न निमज्जतीत्यन्वयः सांसारिकं सुखं बहुदोषवदेवं शयनादिषु विरक्तः ॥ ११ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

शोधकं चरित्रं न स्यात् किं तत् अस्य विश्वस्य स्थित्यादिरूपम् तद्धेतुरित्यर्थः लीलावतारेरीप्सितं जगतः प्रेमास्पदं श्रीरामकृष्णादिजन्म वा न स्यात् तां निष्फलां गिरं धीरो धीमान् न धारयेत् ॥ २० ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

देहार्थे साध्वसाधु कर्म यो न कुर्यान्न वदेन्न ध्यायेदपि तथाच यो दैहिकेऽपि कर्मण्युदासीन इति व्याख्यातम् एतानि निरहङ्कारत्वविरक्तत्वादीन्येव सिद्धस्याभाधारणलक्षणान्यपि साधकस्य मुमुक्षोः साधनानि मुक्त्यर्थमनुष्ठेयानीति ज्ञातव्यानीत्यर्थः ॥ १७ ॥

उक्तैः साधनैः निरहङ्कारत्वविरक्तत्वादिभिस्तदर्थनिष्ठस्य वेदस्य प्रतिपाद्योऽर्थो यः परमात्मा तन्निष्ठो न भवेत् ध्यानाद्यभियोगं ध्यानाद्यभिनिवेशम् आदिना नामसङ्कीर्त्तनादिभक्त्यङ्गपरिग्रहः पुरुषार्थपर्यवसायी मुक्तिसाधकः ॥ १८ ॥

एतदेव ध्यानाद्यभावे शास्त्राभ्यासस्य श्रमैकफलत्वमेव सत्यार्थनिदर्शनैरन्यपदार्थदृष्टान्तैः असतीं व्यभिचारिणीत्वात् कामशून्यां दृष्टादृष्टफलशून्यं दृष्टमैहिकं फलं धनार्जनादि अदृष्टं श्राद्धादिजन्यं तच्छून्यं मया हीनां मदीयलीलादिशून्यां वैदिकीमपि वाचम् ॥ १९ ॥

स्थित्यादिरूपं तन्नाम नामचरित्राणां प्रस्तुतत्वात् तेषां साक्षात् स्थित्यादिरूपत्वासम्भवाल्लक्षणया तद्धेतुरिति व्याख्यातम् एवेत्यर्थं इत्युक्तं स्थितिरत्र धारणा प्रेमास्पदं प्रेमविषयं निष्फलां गिरं वेदलक्षणामपि तदुक्तं श्रीनारदेन इदं हि पुंसस्तपसः श्रुतस्य वेत्यादि अतएव गीतं कलियुगपावनावतारेण श्रीभगवता—

> श्रुतमप्यौपनिषदं दूरे हरिकथामृतात् ।
> यन्न सन्ति द्रवच्चित्तकम्पाश्रुपुलकोद्गमा इति ॥ २० ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

न कुर्यादिति स्वस्मिन् साध्वसाधु कारिषु स्वयम्मनोवाक्कायैर्न साध्वसाधुकारीति न चिन्तयेत इत्यर्थः ॥ १७ ॥

गुणेषु वर्त्तमानस्य गुणोत्तीर्णत्वं नाम न शयनाशनभोजनादिविरहः किन्तु अहङ्काररागद्वेषराहित्यमुपकार्यापकारिषु तुल्यचित्तत्वं दर्शनस्पर्शनादिषु तृणलोष्ठदर्शनादिषु स्वपाद्यनाबुद्धिविरहश्चेति प्रतिवचनमुक्तं भवति एवं विधस्य पुरुषस्य शास्त्रजन्ययोगजन्यज्ञानद्वयमप्युपादेयमित्याह । शब्दब्रह्मणीति । परे ब्रह्मणि समाधिपर्यन्तज्ञाना ॥ १८ ॥

अतीर्थीकृतमात्मानुगुणरहितं मया हीनां मत्प्रतिपादनहीनां वाचं दुःखदुःखी रक्षति ॥ १९ ॥

मया हीनां वाचमित्येतद्विवृणोति । यस्यामिति ॥ २० ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

किञ्चात्मारामः स्वयमपि किञ्चिल्लौकिकं कर्म साध्वसाधु वा न कुर्यान्न वदेन्न ध्यायेच्च किन्तु मुनिर्मननशीलोऽनया देहस्थोऽपि न देहस्थ इत्यादिनोक्तविधया वृत्त्या जडवद्विचरेत् ॥ १७ ॥

तदेव गुणेषु वर्त्तमानस्य गुणोत्तीर्णत्वं नाम न शयनासनभोजनादिविरहः किन्त्वहङ्काररागद्वेषराहित्यमुपकारापकारादिषु तुल्यचित्तत्वं दर्शनस्पर्शनादिषु कर्तृत्वाभिमानशून्यत्वं सुवर्णलोष्ठादिष्वेष्टानिष्टबुद्धिविरहश्चेति प्रतिवचनमुक्तं भवति एवं विधस्य पुरुषस्य शास्त्रजन्यमुपासनात्मकं चेति ज्ञानद्वयमुपादेयमित्याह । शब्दब्रह्मणीति । निष्णातः पारं गतोऽपि यदि परे ब्रह्मणि परब्रह्मविषयकसमाधिपर्यन्तज्ञाने न निष्णायात्परिनिष्ठितो न भवेत्तर्हि तस्य श्रमोऽध्ययनाध्यापनादिश्रमः श्रमफलः श्रम एव फलं यस्य सः निरर्थकः श्रम इत्यर्थः । तत्र दृष्टान्तः अधेनुं चिरप्रसूतां निःक्षीरां गामित्यर्थः । तां रक्षतो यथा रक्षा श्रमैकफला तद्वत् ॥ १८ ॥

एतदेव दृष्टान्तान्तरैश्च प्रपञ्चयति । गामिति । दुह्यत इति दोहः पयः दुग्धः दोहो गोस्तत्र दोहोऽस्ति यस्यास्तां गामसतीं कामशून्यां दुष्टां भार्यां च पराधीनं प्रतिक्षणं दुःखहेतुं देहमसत्प्रजां दृष्टादृष्टशून्यं दुरात्मानं पुत्रं च अतीर्थीकृतमागते पात्रेऽदत्तं वित्तं दुष्कीर्तिदुरितापादकम् अङ्ग हे उद्धव ! मया हीनां मत्प्रतिपादनरहितां वाचं च यो रक्षति स दुःखदुःखी दुःखानन्तरमेव दुःखमस्यास्तीति तथा ॥ १९ ॥

मया हीनां वाचमित्येतदेव विवृणोति । यस्यामिति । अङ्ग हे उद्धव ! अस्य जगतः स्थित्युत्पत्तिसंहारात्मकं पावनं श्रवणतोऽवृतश्च पावनकरं मे मम कर्म चरित्रं यस्यां वाचि प्रतिपाद्यं न स्यात् लीलया मेऽवतारान्ते तथा लीलापदेनास्यावतारणं कर्मनिमित्तत्वव्युदासः तेषु ईप्सितं जगतः प्रेमास्पदं रामकृष्णादिजन्म वा न स्यात्तां वन्ध्यां निष्फलां गिरं धीमान्न धारयेत् पावनमित्यनेन स्वजन्मकर्मप्रतिपादनरहितायाः प्रत्युतापवित्रतावहत्वं च सूचितम् अथवा लीलावतारेप्सितजन्मेति समाहारद्वन्द्वः तत्रेप्सिताः प्रियतमाः भक्ता इत्यर्थः । जन्मग्रहणं कर्मणोऽप्युपलक्षणं भगवद्भागवतजन्मकर्मादिकमित्यर्थः ॥ २० ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तन्मतं कथमाह । न कुर्यादिति । आत्मारामो मुनिः साधु कुर्याद्वदेद्ध्यायेच्च असाधु न कुर्यान्न वदेन्न ध्यायेच्च शुभजीवानुद्दिश्येति शेषः अतीतानागतज्ञानी त्रैलोक्योद्धरणक्षम इत्यादेः साधु न कुर्यादित्यर्थो नोपपद्यते इति आत्माराम इत्यत्राऽऽत्मशब्देन परमात्मा एवोच्यते न जीवाद्यन्यतमः ॥ १७ ॥

तदेकनिष्ठेन भक्त्याधीतवेदादिशब्दराशिः फलवान् स्यादन्यथा निष्फल एवेत्याह । शब्देति । परे ब्रह्मणि न निष्णातो निष्ठितो निरतो न स्याद्यदि तर्हि तस्य पुंसः श्रमः वेदाध्ययनायासो भ्रमज्ञानं तमसि परिभ्रमणं वा फलमस्येति श्रमफलः स्यात् अधेनुमदोग्ध्रीं गां रक्षत इव यथा तथास्य तदाज्ञान-

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

परिश्रम एवावशिष्यते न तु जीवनफलमिति भावः । यद्वा श्रमफलः प्रयत्नफलः श्रमः कायक्लेशः—

*स्थितिशब्देन नियमः क्वचिज्जीवनमुच्यते ।
क्वचित्तत्त्वे क्वचिच्चैव क्वचिद्गतिविरोधितेति ॥

अत्र निष्णातः निष्णीयादिति शब्देन नियम उच्यत इति भावः
अधेन्वा चरति माययैष वाचं शुश्रुवाँ अफलामपुष्पामिति श्रुतेः ॥ १८ ॥

एतमेवार्थं दृष्टान्तबाहुल्येन द्रढयति । गां दुग्धेति । पराधीनं परप्रेष्यं कुर्वन्तं देहम् अतीर्थीकृतं विषयविषयोपरक्तं कृष्णा गोषु सत्पथचीरतमा सती सा सती साध्वी पतिव्रता पराज्ञः परापियज्ञादः परजातः परेभितः सोऽयं मनुष्यलोकः पुत्रेण जय्यः अनपत्यं परं मन्ये कदपत्यात्कुचां पद्मात् नार्थस्य धर्मैकान्तस्य कामो लाभाय हि स्मृतः वाचस्तु गोविन्दगुणाश्रितत्वे फलमित्यादेः यस्त्वेवं विधं गवादिकं रक्षति स दुःखेऽनवरमिह निजदुःखानुभवो वर्तत इत्यर्थः ॥ १९ ॥

अन्यदेवतापरत्वपरवाचो रक्षणे फलं किं न स्यादत्राह । यस्यामिति । यस्य जगतः स्थित्युद्भवप्राणनिरोधलक्षणं कर्म "दुग्धदोहां तु गां रक्षेत् क्षीरमात्रप्रयोजनः । यथा तद्वदरेरन्यवाचो धारणमिष्यते" इति वचनादन्यविषयवाचा नित्यानन्दलक्षणमोक्षफलं न स्यादतो मुमुक्षुः तन्न कुर्यादतो तत्त्वजिज्ञासानर्थकमीति मज्जिज्ञासैव पुरुषार्थसाधनं तद्वन्तमुद्दिश्य न कुर्यान्न वदेदिति विधीयते तत्त्वजिज्ञासुरिति ॥ २० ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

पूर्वं ज्ञानयोगमुक्त्वाधुना भक्तियोगमुद्भावयितुमाह । शब्दब्रह्मणीति । अत्र परब्रह्मपदेन परतमात्मा उच्यते न तु ब्रह्मत्वमणवत्त्वादिविवेकेनेति ज्ञेयं सर्वत्र तत्सामान्यात् ॥ १८ ॥

तदेवं शब्दब्रह्माभ्यासस्य परब्रह्मानुपासः प्रयोजनमित्युक्तं तत्रापि वेदांशेषु विशेषत उपनिषद्भागे शब्दब्रह्मशास्त्रप्रतिपाद्यकत्वे क्लिष्टेऽपि तद्विचारकोटिभिरपि परब्रह्मनिष्ठा न जायते किन्तु यस्य तत्रिमर्शे श्रीभगवदाकारपरब्रह्मलीलादिकं प्रतिपाद्यते तदभ्यासेनैव भगवदाकारे च निष्ठा जायते तदुक्तं संसारसिन्धुमतिदुस्तरमुत्तितीर्षोर्नान्यः प्लव इत्यादि श्रेयःसृतिं भक्तिमुदस्येत्यादि च अत एव मदीयलीलाशून्यां वैदिकीमपि वाचं नाभ्यसेदित्याह द्वाभ्याम् । गामिति । मया श्रीभगवता हीनां मम लीलादिशून्याम् ॥ १९ ॥

यस्यामिति । तां निष्फलां गिरं वेदलक्षणामपि तदुक्तं श्रीनारदेन इदं हि पुंसस्तपसः श्रुतस्य वेत्यादि अत एव गीतं कलियुगपावनावतारेण श्रीभगवता "श्रुतमप्यौपनिषदं दूरे हरिकथामृतात् । यत्र सन्ति द्रवच्चित्तकम्पाश्रुपुलकोद्गमा" इति ॥ २० ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अनया वृत्त्या अनेन स्वभावेन मुक्तलक्षणं भिन्नं बद्धलक्षणं च ज्ञेयम् ॥ १७ ॥

किञ्च भगवति सच्चिदानन्दमयाकारत्वभावनया भक्तिं कुर्वीत तदैवात्र मुक्तलक्षणो मुक्तजीवः सिद्धेदन्यथा तु पतेदित्याह । शब्दे वेदशास्त्रे ब्रह्मणि तत्प्रतिपाद्यनिर्विशेषे ब्रह्मणि च निष्णातः विशिष्टज्ञानकुशलः विशिष्टानुभवकुशलश्च किंतु परे ताभ्यां सकाशादपि परमाश्रयत्वेन श्रेष्ठे भगवति न निष्णायात् भक्तिकौशलः यावन्न भवेत् निष्णातशब्दस्य कुशलार्थत्वाद्भगवति सच्चिदानन्दाकारत्वभावनया भक्तिरेवात्र कुशलता यां विना तस्य श्रमः श्रमैकफलो व्यर्थ एव न तु पुरुषार्थप्रापकः दुग्धकामस्य अधेनुं वन्ध्यां चिरप्रसूतां वा रक्षतो यथा श्रमः अत्र शब्दब्रह्मणि वेदे निष्णातोऽपि परे ब्रह्मणि निर्विशेषे इति व्याख्यायामेकदेशान्वय उत्तरश्लोकार्थतात्पर्यविरोधश्च स्यात् ॥ १८ ॥

दुग्धधेन्वादीन् विषयान् मत्संबन्धेनैव स्वीकुर्यान्न तु मत्संबन्धशून्यानतश्चैव मयि निष्णातत्वमिति वक्तुं सर्वेन्द्रियव्यापारोपलक्षणकमेकं वागिन्द्रियव्यापारमेव साक्षीकृत्य सबहुतरदृष्टान्तमाह । गामिति । दुग्धा इति दोहः पयः दुग्धो दोहो नास्त्यत्र दोग्धा यस्याः तां कस्मादपि मूल्यप्रदानेन विनैव प्राप्तां रक्षति पाति गौरियं महत्यद्भुतरक्षणादिचारणैर्दुग्धवती पुनः प्रसूतिमती च भविष्यतीति बुद्ध्या दुग्धलोभी दुःखदुःखी ऐहिकदुःखवान् आयत्यां तस्या गोर्दुग्धालाभदर्शनानुपेक्षया लग्नपापात् पारत्रिकं च सदुःखं तथान् एवमसतीं भार्यां सतीजनकृतधर्मोपदेशादिभिरवश्यां सती भविष्यतीति बुद्ध्या सन्तानकामलोभी रक्षतीत्येवमसत्प्रजामित्यादावपि व्याख्येयं देहं पराधीनं प्रतिक्षणं दुःखहेतुम् असत्प्रजां दृष्टादृष्टफलशून्यं पुत्रम् आगते पात्रे अदत्तं दुर्वित्तं दुष्कीर्तिदुरितापादकम् अङ्ग हे उद्धव ! दुःखानन्तरं दुःखमेव यस्य स एव रक्षति ॥ १९ ॥

ननु त्वत्सम्बन्धिनैव सा वाक् का किं तत्त्वमस्यादिजीवब्रह्मैक्यप्रतिपादिका वा काचिदन्यैव वेति तां स्पष्टमाविष्कर्तुमपेक्षायामाह । यस्यां मम कर्म चरितं विश्वस्य स्थितिरुद्भवः प्राणनिरोधः संहारश्च यत्र तत् ततोऽप्युत्कृष्टतमत्वेन विभूत्याह । लीलावतारेषु ईप्सितं सर्वजगत्सुभगं मज्जन्म जन्मोपलक्षितबाल्यलीलादिकं यत्र तच्चरितं न स्यात्तां गिरं वेदलक्षणामपि वन्ध्यां विफलां धीरः पण्डितो न बिभृयादपण्डित एव बिभृयात् ॥ २० ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

किञ्चित् ऐहिकामुष्मिकफलविषयं साध्वसाधु वा न कुर्यात् न वदेत् न ध्यायेत् देहवाङ्मनसां नियमनं भगवति कुर्यात् । अनया वृत्त्या जडवल्लोकवच्चिद्विचरेत्स मुनिः आत्मारामो आत्मनि परब्रह्मणि रममाणशीलो ज्ञेयः अनेनैव कथं विद्वदविद्वस्यापि प्रतिलक्षणं ज्ञेयम् किञ्च मुमुक्षुचेष्टिताद् वैपरीत्येन बुभुक्षुचेष्टितमप्युक्तं भवति ॥ १७ ॥

---

* स्थितिः जीवनं भार्या रक्षणम् ।

एवं जिज्ञासयाऽपोह्य नानात्वभ्रममात्मनि ।
उपारमेत विरजं मनो मय्यर्प्य सर्वगे ॥ २१ ॥
यद्यनीशो धारयितुं मनो ब्रह्मणि निश्चलम् ।
मयि सर्वाणि कर्माणि निरपेक्षः समाचर ॥ २२ ॥
श्रद्धालुर्मे कथाः शृण्वन् सुभद्रा लोकपावनीः ।
गायन्ननुस्मरन् कर्म जन्म चाभिनयन्मुहुः ॥ २३ ॥
मदर्थे धर्मकामार्थानाचरन्मदपाश्रयः ।
लभते निश्चलां भक्तिं मय्युद्धव ! सनातने ॥ २४ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एवं परब्रह्मणि निष्ठापर्यन्तं मुमुक्षुचोचितमुद्धवम्प्रति भगवतोपदिष्टमिदानीं तदभावे वेदधारणश्रमो निरर्थक एवेत्याह । शब्दब्रह्मणीति । परे परब्रह्मणि न निष्णाधात् तद्ध्यानं न कुर्यात् तस्य शब्दब्रह्मधारणश्रमः श्रमफलः श्रम एव केवलं फलं यस्य सः अधेनुं यथानहि रक्षतः रक्षा यथा श्रमैकफला तद्वत् ॥ १८ ॥

दुह्यते इति दोहः पयः दुग्धो दोहो यस्यास्तां स्त्रीकरणानन्तरं पयो नष्टमितिबुद्ध्या मतीर्थीकृतमपात्रे दत्तं पात्रे च न दत्तं तदुक्तं महाभारते—

न्यायागतस्य वित्तस्य बोद्धव्यौ द्वौ व्यतिक्रमौ ।
अपात्रे प्रतिपत्तिश्च पात्रे चैव न दीयते इति ॥

मया वेदार्थभूतेन हीनाम् अन्यार्थपरत्वेन गृहीतामित्यर्थः । हे अङ्ग ! दुःखदुःखी एव रक्षति दुःखानामपि दुःखं दुःखदुःखं तदस्यास्तीति स तथा ॥ १९ ॥

यस्यां गिरि अस्य चिदचिदात्मकस्य प्रपञ्चस्य स्थित्यादिरूपं पावनं सर्वपवित्रीकरणं मे कर्म लीलावतारेषु मत्प्रकेप्सितं जन्म वा न स्यात्तां धीरः मुमुक्षुर्न बिभृयात् ॥ २० ॥

---

### भाषा टीका ।

ज्ञानी पुरुष न कुछ विशेष कार्य करे न कुछ कहे न कोई लौकिक भली बुरी बात की चिन्ता करे इस वृत्ति से रह कर आत्माराम मुनि होकर जडकी नांई विचरा करे ॥ १७ ॥

केवल वेदादिक शब्द में निपुण होकर भी परब्रह्म के आराधन में यदि कुशल न होवे तो उसका पठन पाठनादिक सब श्रम ही मात्र है जैसे दूध की आशा से बांझ गऊ का सेवा करना है तैसे ॥ १८ ॥

जिस के फिर दूध नहीं होनेवाला है ऐसी गऊ दुष्ट भार्या पर के अधीन शरीर और कुपात्र पुत्र धर्मादि उपयोग रहित धन हे उद्धव जी ! मेरे संबंध बिना वाणी इतनी वातों का संग्रह करने वाला सदा बड़ा दुःख पाता है ॥ १९ ॥

हे उद्धव जी ! जो धीर पुरुष है सो ऐसी बांझ वाणी को धारण न करे जिस वाणीमें इस जगत् की उत्पत्तिस्थिति प्रलयरूपी पवित्र लीला न होवै और हमारे जन्म चरित्र तथा लीलावतारादि चरित्र न होवैं वही वाणी केवल बांझ है ॥ २० ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

उक्तम् ज्ञानमार्गमुपसंहरति । एवम् निश्चित विचारेणाऽऽत्मनि नानात्वभ्रमं देहाद्यध्यासं निरस्य निर्मलं मनो मयि सर्वगे परिपूर्णे समर्प्य संधार्य उपारमेत न शास्त्रपाण्डित्यमात्रेणेत्यर्थः ॥ २१ ॥

यद्यनीशो ऽशक्तस्तर्ह्यस्तामिदं मद्भक्त्यैव कृतार्थो भविष्यसीत्याह । मयीति ॥ २२ ॥

मदर्पणेन कर्मणा विशुद्धसत्त्वस्यान्तरङ्गां भक्तिमाह । श्रद्धालुरिति द्वाभ्याम् । अभिनयन्स्वयमनुकुर्वन् ॥ २३ ॥

आचरन् सेवमानः ॥ २४ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

ज्ञानमार्गं भक्तिसहितं तामन्तरा तदनिष्पत्तेः विचारेण बद्धो मुक्त इति व्याख्या गुणतो मे न वस्तुत इत्यादिपूर्वोक्तप्रकारेण देहाद्यध्यासं ब्राह्मणोऽहमित्यन्तर्धर्माध्यासः अयं पुत्र एवाहमिति बाह्यधर्माध्यासः भाविना गृह्यते तमध्यासं निरस्य त्यक्त्वा तत्त्वार्थं मल्लीलादिश्रवणेन धारयित्वा उपारमेत साधनप्रयासाद्विरमेत् न तु शास्त्रपाण्डित्यमात्रेणास्मदस्ताधी भवेदित्यर्थः ॥ २१ ॥

इदं ज्ञानमिश्रभक्त्यनुष्ठानमास्तां मद्भक्त्यैवैकस्यैकारेण ज्ञानस्याकुर्वैत्युदासः कृतार्थं इति ज्ञानस्यानुषङ्गसिद्धत्वादित्यर्थः ॥२२॥

अन्तरङ्गां ज्ञानकर्मोदनावृतां शुद्धामित्यर्थः । श्रद्धालुरिति युग्मकं स्वयमनुकुर्वन्निति जन्मकर्मलीलयोर्मध्ये ये ईश्वरा निजानुगमनीयभावसिद्धभक्तगतास्तान् स्वयमनुकुर्वन् भगवत्कृतांस्तु मन्त्रद्वारानुकुर्वन्नित्यर्थः । धर्मो गोदानादिस्तमपि मदर्थे मदीयजन्मादिमहोत्सवाङ्गत्वेनाचरन् कामो महाप्रसादसेवननिवासादि-

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

लक्षणयुक्तमपि मदीयसेवार्थमन्मन्दिरवासादिलक्षणत्वेनैव यथार्थो धनसङ्ग्रहस्तमपि मदर्थे मत्सेवोपयोगित्वेनैवाचरन् सेवमानः तामेव कथाश्रवणादिलक्षणां निश्चलां सर्वदाप्यव्यभिचारिणीं लभते तत्सुखेन कैवल्यादेरप्यनादरात् नच भजनीयस्य चञ्चलता तस्याश्चलता शङ्क्या यतः सनातने ॥ २३ ॥ २४ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

एवमिति । नानात्वभ्रमं देहादात्मानं विविच्य परमात्मनि च भक्तिं कृत्वा लौकिके कर्मण्युपरमेदित्यर्थः मदर्थे इति काम शब्दः शास्त्राविरुद्धकामपरः ॥ २४—२७ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

प्रश्नस्योत्तरमुपसंहरन् विवेकं विदधाति । एवमिति । एवमित्थं जिज्ञासया विचारेण जीवात्मनि नानात्वभ्रमं देवमनुष्यादिनानात्वभ्रममपोह्य देहाज्जीवात्मानं विविच्येत्यर्थः । कस्मिंश्चिदुद्भिन्नात्मनि मयि विरजे विगतरजोगुणमाहात्म्यादिभिः सात्त्विकैः सर्वैकप्रवणं मनोऽर्थे निधाय मयि भक्तिं कुर्वन्नित्यर्थः । लौकिककर्मणः उपरमेदित्यर्थः ॥ २१ ॥

नैर्मल्यमेव मनसः सम्पादयितुं दुःशकं कुतस्तत्र भक्तिकर्तव्यतेत्यभिप्रायमाशङ्क्य भक्तियोगोत्पादकानुपायानुपदिशति यदीति । मयि ब्रह्मणि निश्चलं यथा तथा मनो धारयितुं यद्यशक्तः असमर्थस्तर्हि सर्वाणि यथाश्रमोचितानि कर्माणि निरपेक्षः सर्वान्तरात्मप्रयोजककर्तृभूतपरमात्मप्रवर्तितदेहेन्द्रियफलैकाणि ननु मत्कर्तृकाणीत्यध्यवसायेन तत्फलापेक्षारहितः समाचर कुरु ॥ २२ ॥

किञ्च श्रद्धालुरिति । सुभद्राः जगन्मङ्गलावहाः शृण्वतो वदतश्च लोकस्य पावनकरीर्मम कथाः शृण्वन् गायंश्च जन्म श्रीरामकृष्णादिजन्मानुस्मरन् कर्म चेष्टितमभिनयन् आचरननुकुर्वन् ॥ २३ ॥

मदर्थे धर्मकामार्थानाचरन् सेवमानः धर्मस्य चेश्वराराधनार्थता नाम तत्प्रीणनद्वारा अपवर्गार्थता कामानां तदर्थत्वं तदुपभुक्तगन्धवासोऽलङ्कारचन्दनादिकैरभोजनस्थादिरूपमर्थानां तदाराधनोपयोगित्वं मदुपाश्रयः मामाश्रयत इत्याश्रयः मामाश्रयतेऽनेनेत्याश्रय इति वा अहमेवोपाश्रयो यस्य सः ईश्वर एव प्राप्यः प्रापकश्चेत्यध्यवसायीत्यर्थः । एवं भूतस्त्रिरसनातने सर्वकारणे मयि हे उद्धव । निश्चलां भक्तिं लभते ॥ २४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

उपसंहरति । एवमिति । वक्तव्यथार्थज्ञानं नानात्वभ्रममेव तस्य जिज्ञासयापोह्य निरस्य उपारमेत प्रवृत्तिमार्गादिति शेषः नानात्वभ्रमो भेदभ्रम इति मतम्—

जीवस्येश्वरत्वविज्ञानं जीवानामेकता तथा ।
ईशस्य बहुताज्ञानमीशस्यानीशता तथा ॥
जगतोऽसत्यताज्ञानं नानात्वभ्रम उच्यते ।
इत्यनेन विरुद्धत्वान्न ग्राह्यं च बुभूषुभिः ॥

इति ॥ २१ ॥

नन्वस्तु जीवन्मुक्तस्य समर्थस्य हरौ निरन्तरं मनो निधायोपासितृत्वमितरस्य मुमुक्षोरुपासनोपायः कथमिति तत्राह । यदीति । कृतानि मयि समर्प्य कुर्वाणानि मद्विषयत्वेन समाचर ॥ २२ ॥

निष्कामत्वेन मामुद्दिश्य कर्म कुर्वाणस्येत्यर्थं भावमाह । श्रद्धालुरिति ॥ २३ ॥

मत्कथाश्रवणादिना किं फलं स्यादित्यत उक्तं लभत इति । निरन्तरस्मृतिफलां भक्तिं लभते ॥ २४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तदेवं भक्त्यैव ज्ञानं सिद्ध्यतीत्युक्तं तं च ज्ञानमार्गमुपसंहरति । एवमिति । जिज्ञासया यत्नो मुक्तं इति व्याख्या गुणातो मे न वस्तुत इत्यादिपूर्वोक्तप्रकारकविचारेण आत्मनि शुद्धजीवे नानात्वं देवत्वमनुष्यत्वादिभेदमपोह्य एवं मल्लीलादिश्रवणेन मनो मयि ब्रह्माकारे सर्वगे अर्प्य धारयित्वा उपारमेत ॥ २१ ॥

तदेवं ज्ञानमिश्रां भक्तिमुपदिश्य तदनादरेणानुषङ्गिकाखिलज्ञानगुणां शुद्धामेव भक्तिमुपदिशति चतुर्भिः । यदीति । निश्चयं टीकायां धस्ते पदं त्वमचिता यति विघ्नमुद्भावितया इत्यत्र खलु ज्ञानेच्छुरेव प्राकृतः श्रीमदुद्धवं प्रति च तादृशत्वमारोप्यैवेदमुच्यते ततश्च श्रेयःसृतिं भक्तिमुदस्य ते इत्यादिप्रमाणेन भक्तिं विना केवलज्ञानमार्गेण ब्रह्मणि मनो धारयितुं निश्चितमेवानीशो भवति ततोऽपि स्वतो ज्ञानादिसर्वगुणसेवितं भक्तिमार्गमेवाश्रयेति तत्सोपानमुपदिशति । यदीत्यादिना अथवा प्राक्तनभक्तिबलाभावात् ब्रह्मज्ञानेच्छुर्यदि तत्र मनो धारयितुमनीशः स्यात् तदानुनाथेवं कुर्विति योज्यं समाचर अर्पय निरपेक्षः वाञ्छान्तररहितः किम्वा तदेवमपि यदस्य लीलाकथायां श्रद्धा न स्यात् तस्य ब्रह्मधारणायामप्यशक्तिः स्यात् किमुत भगवद्धारणायामिति तस्येव शुद्धभक्तावेव पर्यवसायितुमाह । अथानीश इति ॥ २२ ॥

श्रद्धालुत्वे च सति शुद्धां भक्तिमाह । श्रद्धालुरिति युग्मकेन अभिनयन् जन्मकर्मलीलायोर्मध्ये येऽशा लिलाभीष्टमात्मभक्तगतास्तान् स्वयमनुकुर्वन् भगवद्गतान् भक्तान्तरगतांश्च तानन्यद्वारानुकुर्वन्नित्यर्थः ॥ २३ ॥

किञ्च यो धर्मो गोदानादिलक्षणस्तमपि मदर्थे मदीयजन्मादिमहोत्सवाङ्गत्वेनैव यश्च कामो महाप्रासादवासादिलक्षणस्तमपि मदर्थे मदीयसेवार्थमन्मन्दिरवासादिलक्षणत्वेनैव यथार्थो धनसङ्ग्रहस्तमपि मदर्थे मत्सेवामात्रोपयोगित्वेनैवाचरन् सेवमानः मदुपाश्रयः मामेवाश्रयतेऽन्यचेताश्च सन् तामेव कथाश्रवणादिलक्षणां भक्तिं मयि निश्चलां सर्व-

**सत्सङ्गलब्धया भक्त्या मयि मां स उपासिता ।**
**स वै मे दर्शितं सद्भिरञ्जसा विन्दते पदम् ॥२५॥**

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

ताञ्चाव्यभिचारिणीं लभते तत्सुखेन केवलवादावल्पनादरात् न च भजनीयस्य चलतया वा सा चलिष्यतीति मन्तव्यमित्याह । सनातन इति ॥ २४ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

ज्ञानमार्गमुपसंहरति । एवं जिज्ञासया उक्तलक्षणप्रकारेण विचारेण आत्मनि स्वस्मिन् नानात्वभ्रमं देहद्वयाभिमानलक्षणं देवत्वमनुष्यत्वादिभेदमपोह्य निरस्य उक्तलक्षणया भक्त्या च मयि विरजं विपक्वमायाकषायं मनः समर्प्य भक्त्युत्थेन ज्ञानेन उपारमेत तत्सायुज्यं प्राप्नुयात् तथाचोक्तम्

> भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः ।
> ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ॥

इति ॥ २१ ॥

एवं च मदर्पितनिष्कामकर्मणैवान्तःकरणशुद्धिरन्तःकरणशुद्ध्यधीनमेव भक्तिसहितं ज्ञानं तेन च ब्रह्मणि निश्चलमनोधारणा ततो ब्रह्मभूतः प्रसन्नात्मेत्यादिमुक्तेर्विरामसमये त्रिगुणातीतया मद्भक्तेः प्राप्तिस्तया च विपक्वकषायस्य मनसो मयि सम्यक् निदिध्यासनं ततो भक्त्युत्थेन शुद्धज्ञानेन सायुज्यमिति क्रमस्तत्र कश्चिद्यदि निश्चलमनोधारणारूपिकां चतुर्थीं भूमिकामप्यधिरोढुं न शक्नुयात्तदा स्वान्तःकरणस्य स्वस्य शुद्धभावमनुमाय तच्छुद्ध्यर्थं पुनरपि मदर्पितनिष्कामकर्मैव कुर्य्यादित्युक्तं लक्ष्यीकृत्याह । यद्यनीश इति । सर्वाणि नित्यनैमित्तिकानिवृत्तकर्माणि ॥ २२ ॥

तदेवं सार्द्धैश्चतुर्भिर्ज्ञानयोगमुक्त्वा भक्तियोगमाह । श्रद्धालुरित्यादिना मया क्या हुकृतोभय इत्यन्तेन अत्र श्लोकार्थकेनालुक्प्रत्ययेन भक्तावौपाधिकश्रद्धावन्तो ज्ञानिप्रभृतयो व्यावृत्ताः प्रथमत एव श्रद्धालुरिति यदोऽस्यासौ भक्तावेव श्रद्धानेनाधिकारीति ज्ञापयति यदुक्तं "यदृच्छया मत्कथादौ जातश्रद्धस्तु यः पुमान् । न निर्विण्णो नातिसक्तो भक्तियोगोऽस्य सिद्धिद इति । तावत्कर्माणि कुर्वीत न निर्विद्येत यावता मत्कथाश्रवणादौ वा श्रद्धा यावन्न जायते" इति । ज्ञानकर्माधिकारिभ्योऽस्य भेदश्च सुभद्राः बाधिपपःपरश्रीचौर्य्यवेणुगानरासाद्या गायन्ननुस्मरन्निति ज्ञानस्य पौनःपुन्यं स्मृत एव भवेदिति भावः । कर्म कालियदमनादिकं जन्म नन्दोत्सवादिकं नाटकादिरीत्या अभिनयन् चकारात् गायन्ननुस्मरंश्च ॥ २३ ॥

मदर्थे अर्थेत्यर्णे मज्जन्मयात्रा दिवसे मत्स्वरूपश्रीगुरुदेवाराधनदिवसे च धर्मां ब्राह्मणवैष्णवसम्प्रदानकार्य्यवस्त्रादिदानानि कामा वैष्णवसमाजप्रासमधुरमहाप्रसादसम्भोजनस्रक्चन्दनताम्बूलोपयोगवसनपरिधानाद्याः अर्था विष्णुवैष्णवसेवार्थद्रव्याहरणानि आचरन् कुर्वन् निश्चलां साधनसाध्यदशयोः स्थिरां नैष्ठिकीं सनातने इति तदाराध्यस्य मद्विग्रहस्य सनातनत्वात्तद्भक्तिरपि सनातनी निश्चलैवेति भावः ॥ २४ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

आत्मनि अनादिकालतः प्रवृत्तं नानात्वभ्रमं ब्रह्मात्मकत्वज्ञानाभावेन प्रत्येकं स्वतन्त्रसत्ताकत्वं भ्रान्तिः देहेन्द्रियादिविलक्षणात्मज्ञानाभावेन देह एवात्मेत्यभिमानेन वालयुवादिनानात्वभ्रान्तिश्च एवं जिज्ञासया अपोह्य विरजं शोधितं मनः सर्वगे मयि अर्प्य वेदनोपासनध्यानापरपर्य्यायां भक्तिं प्राप्य कर्मादिरूपाद्धुसाधनात् उपरमेत् ॥ २१ ॥

ब्रह्मणि मयि यदि मनो धारयितुमनीशः तर्हि कर्मफले निरपेक्षः सर्वाणि मनः शोधकानि कर्माणि समाचर ॥२२॥

विशेषतो मे कथाः शृण्वन् गायन् मे जन्म कर्म च अनुस्मरन् अभिनयन् स्वयमनुकुर्वन् ॥ २३ ॥

किं बहुना धर्मकामार्थान् त्रिवर्गमपि मदर्थे आचरन् वेदनोपासनध्यानाद्यपरपर्य्यायां भक्तिं लभते ॥ २४ ॥

---

### भाषा टीका ।

इस प्रकार के विचार से आत्मा में जो नाना प्रकार के भ्रम हैं तिनको दूर करके निर्मल मनको सर्व व्यापक हमारे विषय अर्पण करके संसार से निवृत्त होजावै ॥ २१ ॥

यदि मनको निश्चल करके ब्रह्म के विषय धारण न कर सके तब तो यथाश्रम विहित सब कर्मों को मेरे में अर्पण करके निरपेक्ष होकर आचरण करै ॥ २२ ॥

सुन्दर कल्याण देने वाली लोकों को पवित्र करने वाली हमारी कथा ओं को श्रद्धालु होकर सुना करै हमारे जन्म कर्म का गाता हुआ स्मरण करता हुआ वारंवार अभिनन्दन करता रहै ॥२३॥

मेरे आश्रय होकर मेरे लिये धर्म अर्थ काम इनको करता हुआ पुरुष हे उद्धव ! सनातन मेरे विषय में निश्चल भक्ति को प्राप्त होता है ॥ २४ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

सतश्चानेन प्रकारेण मयि सत्सङ्गेन लब्धया भक्त्या स भक्तो मामुपासिता ध्याता भवति स च ध्यानशीलः सद्भिर्दर्शितं वै निश्चितं सुखेनैव मे पदं स्वरूपं प्राप्नोति ॥ २५ ॥

उद्धव उवाच

*साधुस्तवोत्तमश्लोक ! मतः कीदृग्विधः प्रभो ! ।
भक्तिस्त्वय्युपयुज्येत कीदृशी सद्भिरादृता ॥ २६ ॥
एतन्मे पुरुषाध्यक्ष ! लोकाध्यक्ष ! जगत्प्रभो ! ।
प्रणतायाऽनुरक्ताय प्रपन्नाय च कथ्यताम् ॥ २७ ॥
त्वं ब्रह्म परमं व्योम पुरुषः प्रकृतेः परः ।
अवतीर्णोऽसि भगवन् ! स्वेच्छोपात्तपृथग्वपुः ॥ २८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

सत्सङ्गलब्धया भक्त्येत्युक्तं तत्र सतां भक्तेश्च विशेषं पृच्छति ॥ साधुरिति । साधवः स्वस्वमतिकल्पिताः सन्ति बहवस्तव तु कीदृशः संमतः भक्तिरपि बहुविधा लोके कीदृशी पुनस्त्वय्युपयुज्येत सद्भिश्च नारदादिभिरादृता ॥ २६ ॥

एतच्च कथ्यताम् गुह्यं चाति गुह्यं त्वयैव वक्तव्यमित्यैश्वर्यमाविष्कुर्वन्नाह हे पुरुषाध्यक्षेत्यादिना ब्रह्मादिनियन्तः ॥ २७ ॥

अत्र हेतुः त्वमिति । व्योमवदसङ्गः यतः प्रकृतेः परः स्वेषां भक्तानामिच्छयोपात्तं पृथक्परिमितं वपुर्येन सः ॥ २८ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

ततश्च भक्तेर्नैश्चल्यानन्तरम् अनेन कथाश्रवणादिरूपेण प्रकारेण ध्यानाऽनवरतस्फूर्त्तिमान् ॥ २५ ॥

विशेषं विशिष्टं लक्षणम् उपयुज्येत उप आधिक्येन युज्येत नारदादिभिरादृता इति भक्तेस्तत्त्वं त एव जानन्ति तेषां च माहात्म्यं भवानेवेति भेदेन पृष्टम् ॥ २६ ॥

पतत् सद्भक्त्योर्विशिष्टलक्षणं च लोको वैकुण्ठः जगत्-अनन्तब्रह्माण्डात्मकं प्रणताय भक्ताय अनुरक्ताय स्निग्धाय प्रपन्नाय ऐकशरणाय ॥ २७ ॥

अत्र पुरुषाध्यक्षत्वादौ यतो हेतोः प्रकृतेः परः प्रकृतेः परत्वादेवासङ्गत्वमित्यर्थः । स्वेषां भक्तानाम् उपात्तं जगति प्रकटीकृतं परिमितं स्वाभाविकाचिन्त्यशक्त्या विभुत्वेऽपि परिच्छिन्नम् ॥ २८ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

व्योमशब्दो व्योमवन्निर्मलत्वपरः वसुदेवकृष्णप्रद्युम्नादिरूपेण पृथक्त्वम् ॥ २८—३० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

उक्तसर्वोपायनिदानभूतं सत्सङ्गात्मकं कारणान्तरं वदन् मुख्यमुपायरूपकृतस्य भक्तियोगस्य साक्षात्स्वपरप्राप्त्युपायत्वमाह । सत्सङ्गलब्धयेति । सतां साधूनां सङ्गेन लब्धया मयि भक्त्या मां मामेव यो निषेवते स मे मम स्थानमञ्जसा सुखेन विन्दते लभते सद्भिर्दर्शितं वै इत्थं निश्चितं चेत्यर्थः ॥ २५ ॥

सत्सङ्गलब्धया भक्त्येत्युक्तं तत्र सतां भक्तेश्च विशेषं पृच्छति । साधुरिति । हे प्रभो ! साधुः कीदृग्विधस्ते तव मतः अभिमतः सद्भिरादृता आदरपूर्वमनुष्ठिता भक्तिः कीदृशी त्वय्युपयुज्येत साधवः स्वमतिपरिकल्पिताः सन्ति बहवः तव तु कीदृशः सम्मतः तथा भक्तिरपि बहुविधा लोके कीदृशी पुनस्त्वय्युपयुज्येत सद्भिश्च नारदादिभिरादृता ॥ २६ ॥

एतत्तु प्रपन्नाय मे मह्यं कथ्यताम् इदं चातिगुह्यं दुर्विज्ञेयं च त्वयैव वक्तव्यमित्यभिप्रायेण सम्बोधयन् विशिनष्टि । हे पुरुषाध्यक्ष ! त्वं ब्रह्मादिना पुरुषग्रहणं प्रधानस्याप्युपलक्षणं प्रधानपुरुषयोर्नियन्तरित्यर्थः । अनेन यत्किञ्चिज्ज्ञानं कर्म च त्वदायत्तमेवेति कार्त्स्न्येन ज्ञानकर्ममार्गौ त्वयैव ज्ञायेते न त्वदन्यः कश्चिदुपदेष्टा विद्यत इति भावः ॥ २७ ॥

पुरुषाध्यक्षत्वोपयोगिसार्वज्ञ्यसर्वशक्त्यादिकल्याणगुणानुगुणं रूपत्वमाह । त्वं ब्रह्मेति न केवलमुक्तविधः किन्तु निरस्तनिखिलदोषोऽपीत्याह । परमव्योम व्योमवन्निर्मलपरो व्योमशब्दः परमशब्दो मलप्रतिभटत्वपरः निर्मलस्वरूप इत्यर्थः । पुरुषाध्यक्षत्वस्य भेदगर्भत्वाज्जीवेश्वरयोरभेदव्युदासाय विशिनष्टि पुरुषः प्रकृतेः पर इति । प्रकृतिशब्दोऽत्र भूमिरापोऽनलो वायुरपरेयमितस्त्वन्यामिति श्लोकद्वयोक्तचिदचिदात्मकप्रकृतिद्वयपरः परशब्देनाभ्यधिकत्वमुत्कृष्टत्वं च तन्त्रेण विवक्षितं परित्राणाय साधूनामवतीर्णस्य सर्वैतत्कथनमुचितमित्याशयेनाह । अवतीर्णोऽसीति । हे भगवन् ! स्वेच्छया उपात्तानि परिगृहीतानि पृथङ्नानाविधानि वपूंषि श्रीरामप्रद्युम्नानिरुद्धादिरूपाणि येन तथाभूतोऽवतीर्णोऽसि स्वेच्छापदेन वपुषां कर्मनिमित्तत्वव्युदासः ॥ २८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सापि सत्सङ्गलब्धा चेत् भगवदपरोक्षज्ञानमुत्पद्यते न ज्ञयोग्यमुक्तिमपि जनयतीत्याह । सत्सङ्गेति । पदं वैकुण्ठादिस्थानम् ॥ २५ ॥

सद्भिरिति प्रस्तुतसल्लक्षणोऽप्युद्धवो लोकोपकाराय तल्लक्षणं पृच्छति । साधुस्त्व इति । साधुस्त्वाः साधुत्ववाचिनः शुद्धचगु-

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

द्विनिमित्तत्वात्साधुत्वे वर्तमानानां पुंसां मनः कीदृग्विधं भवति साधवः किंलक्षणा इत्यर्थः । कीदृशी किंलक्षणा भक्तिस्त्वय्युपयुज्येत त्वदुत्तमप्रसादयोगजननी सद्भिरादृता सम्भाविता "आदृतौ सादरार्चितौ" इत्यमरः ॥ २६ ॥

एतत्सद्भक्त्योर्लक्षणम् ॥ २७ ॥

स्पष्टार्थस्य दुरवबोधत्वाद्दुष्परिहर इति नेत्याह । त्वमक्षेति । स्वेच्छयोपात्तं स्वीकृतं पृथग्वपुः शोभनाकारं वासुदेवादिशरीरं येन सः स्वेच्छोपात्तपृथग्वपुः शुभाकारे तनौ वपुरिति यादवः—

> नित्यानन्दशरीरोऽपि वसुदेवादिदेहगः ॥
> प्रदर्शयेज्जनि स्वस्य नित्यं देहादिवर्जितः ।
> वसुदेवादिदेहेषु प्रवेशस्तस्य भण्यते ॥
> देहोपादानमिति तु नह्यन्यो देह इष्यते ।
> अन्याभिमतदेहेषु प्रविष्टः सर्वदा हरिः ॥
> नान्यानभिमतो देहो विष्णोरस्ति कदाचन ।
> अतोऽशरीरो भगवान् पुत्रताभिमतिस्तु या ॥
> वसुदेवादिकानां तु सैव मिथ्या मतिर्भवेत् ।
> अन्याहंभावयुग्देह एवासौ हरिराश्थितः ॥
> न तदन्येषु देहेषु कश्चित्तस्य प्रवेशनम् ।
> मम पुत्रत्वबुद्धिमिति भ्रामणाय यदा हरेः ॥
> वसुदेवादिदेहेषु तनूपात्तिस्तु सा गतिः ।
> अनुपात्तशरीरस्य तनूपात्तिरितीष्यते ॥

तद्देहं पितृदेहत्वे उपात्ते यतो हरिरिति एतद्वाक्यमत्रार्थे मानम् ॥ २८ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

नन्वेवं भूतभक्तिमार्गे प्रवृत्तिर्निष्ठा वा कथं स्यादित्याशङ्क्य तत्र हेतुमाह । सत्सङ्गेति । भक्त्या भक्तिरुपया स भक्तो मामुपासिता भजमानो भवति ॥ २५ ॥

उत्तमाधिकत्वेन युज्येत सैव सद्भिरादृता साधूनां स्वभक्तानां माहात्म्यं त्वमेव सुष्ठु जानासि भक्तेस्तत्त्वन्तु ते साधव एवेति भेदेन पृष्टम् ॥ २६ ॥

हे पुरुषाध्यक्ष ! महत्स्रष्ट्राद्यवतारिन् लोको वैकुण्ठः जगत्सु अनन्तब्रह्माण्डात्मकं प्रपन्नाय भक्ताय अनुरक्ताय स्निग्धाय प्रपन्नाय स्वैककारणाय ॥ २७ ॥

साक्षाद्भगवानेव त्वमवतीर्णोऽसि भगवत एव वैभवमाह । ब्रह्म त्वं परमव्योमाख्यो वैकुण्ठस्त्वं प्रकृतेः परः पुरुषोऽपि त्वमिति । भगवानपि कथं भूतः सन्नवतीर्णः स्वेच्छामयस्य अनुसारेण स्वेषां सर्वेषामेव भक्तानामिच्छायै तां पूरयितुमुपात्तानि तत्तत्त आकृतानि पृथग्वपूंषि निजतत्तदाविर्भावा येन तथाभूतः सन्निति तं प्रति यथाह आत्मवान् पश्येमुत्फुल्लरोचकटाक्षमोदैरित्यादि तथा च देवाः केचित्त्रिविक्रमयुत इत्यादि यथा च ब्रह्मा नारायणस्त्वमित्यादौ नारायणोऽङ्गमिति यथा च देवाः स्याम्लत्वाङ्घ्रिरित्यादि अत एवाक्रूरः अद्भुतानीत्यादि अत एव गोविन्दभुजगुप्तायामित्यादि ॥ २८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

एवं भूतायां भक्तौ कः प्रवर्तक इत्यपेक्षायामाह । सत्सङ्गेति । भक्त्या उक्तलक्षणया नैष्ठिक्या उपासिता भजमानो भवति ततश्च सद्भिरेव दर्शितं पदं मच्चरणं मद्धाम वा अञ्जसा शीघ्रं रुच्यासक्तिरतिप्रेमभूमिकारूढः सन् विन्दते प्राप्नोति ॥ २५ ॥

भक्तिप्रादुर्भावकं साधुमेव श्रुत्वा तल्लक्षणं पृच्छति । साधुरिति । मतस्तव सम्मतः सद्भिरादृतापि भक्तिस्त्वयि कीदृश्युपयुज्येत ॥ २६ ॥

पुरुषाणां महत्स्रष्ट्रादीनामध्यक्षेत्यपारमैश्वर्यं लोकस्य महावैकुण्ठलोकस्याध्यक्षेत्यपारा संपत् तदपि जगत्यस्मिन्मायिकेऽपि लोकोद्धारणार्थं कृपया प्रकर्षेण भवसि प्रादुर्भवसीत्यपारं कारुण्यं चोक्तं प्रणताय मह्यं प्रणतत्वेऽप्यहं न जगज्जनवत् किं त्वनुरागीत्याह । अनुरक्ताय अनुरक्तत्वेऽपि नाहमर्जुनादिवद्देवान्तरोपासक इत्याह । प्रपन्नायेति ॥ २७ ॥

किञ्च त्वद्भक्तिप्रवर्तकः साधुस्त्वत्स्वरूपाद्भिन्नोऽपि त्वत्स्वरूपभूत एवेत्याह । त्वमिति । व्योमवदसंगः अतः प्रकृतेः परः सदपि प्राकृतेऽस्मिन् लोके कृपया जीवोद्धारार्थमवतीर्णोऽसि कीदृशः स्वैर्भक्तैरिच्छयोपात्तानि गृहीतानि पृथग्भूतानि वपूंषि यतः सः स्वस्वरूपभूतानि वपूंष्येव त्वं स्वभक्तिप्रवर्तनार्थं भक्तेभ्यो दत्तासीत्यर्थः । यदुक्तं नारदेन प्रयुज्यमाने मयि तां शुद्धां भागवतीं तनुमिति अत एव त्वद्भक्तं गुरुं लोकास्त्वत्स्वरूपत्वेनैव ध्यायन्तीति भावः । यद्वा त्वमात्मारामत्वात् जगत्यस्मिन्नुदासीनोऽपि स्वभक्तिप्रचारणार्थमवतरस्येवेत्याह । त्वमिति । स्वेच्छया उपात्तानि पृथक् पृथग्वपूंषि श्रीकपिलदत्तात्रेयश्रीनारदाद्याकारा येन सः यदुक्तं वसुमूर्तिकमूर्तिनामिति ॥ २८ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

स लब्धभक्तिः इत्थं सत्सङ्गलब्धया मयि भक्त्या मामुपासिता भवति स वै स एव सद्भिः "स तु तत्पदमाप्नोति यस्माद्भूयो न जायते निरञ्जनः परमं साम्यमुपैति" इत्यादिभिर्वेदैर्दर्शितं मे पदं विन्दते लभते नान्यः ॥ २५ ॥

सत्सङ्गलब्धया भक्त्येति साधुसङ्गस्य भक्तिप्रापकत्वं भक्तेर्भगवत्पदप्रापकत्वं श्रुत्वा साधूनां भक्तेश्च विशेषं पृच्छति । साधुरिति ॥ २६ ॥

पुरुषाध्यक्ष ! ब्रह्मादिनियन्तः लोकाध्यक्ष ! सर्वलोकस्वामिन् जगत्प्रभो ! सर्वविश्वस्वामिन् ॥ २७ ॥

यतः हे भगवन् ! त्वं ब्रह्म बृहद्गुणशक्त्याद्याश्रयः परमव्योम सर्वचेतनाचेतनाश्रयस्थानं प्रकृतेः परः पुरुषः कार्यकारणरूपप्रकृतिविलक्षणविग्रहवान् स्वेच्छोपात्तपृथग्वपुः स्वेच्छया स्वकीया ये प्रह्लादगजपतिवैरोचनिप्रभृतयस्तदिच्छया उपात्तानि गृहीतानि पृथक् नानाकाराणि वपूंषि येन सः अवतीर्णोऽसि ॥ २८ ॥

---

### भाषा टीका ।

सत्संग से प्राप्त भई जो मेरे विषय में भक्ति तिस से वह मेरी उपासना करैगा तब तो सत्पुरुषों का दिखाया जो हमारा स्थान तिस को प्राप्त हो जावेगा ॥ २५ ॥

श्रीभगवानुवाच ।

कृपालुरकृतद्रोहस्तितिक्षुः सर्वदेहिनाम् ।
सत्यसारोऽनवद्यात्मा समः सर्वोपकारकः ॥ २९ ॥
कामैरहतधीर्दान्तः मृदुः शुचिरकिञ्चनः ।
अनीहो मितभुक् शान्तः स्थिरो मच्छरणो मुनिः ॥ ३० ॥
अप्रमत्तो गभीरात्मा धृतिमान् जितषड्गुणः ।
अमानी मानदः कल्पो मैत्रः कारुणिकः कविः ॥ ३१ ॥
आज्ञायैवं गुणान् दोषान् मयादिष्टानपि स्वकान् ।
धर्मान् संत्यज्य यः सर्वान् मां भजेत स सत्तमः ॥ ३२ ॥
ज्ञात्वाऽज्ञात्वाऽथ ये वै मां यावान् यश्चास्मि यादृशः ।
भजन्त्यनन्यभावेन ते मे भक्ततमा मताः ॥ ३३ ॥
मल्लिङ्गमद्भक्तजनदर्शनस्पर्शनार्चनम् ।
परिचर्या स्तुतिः प्रह्वगुणकर्मानुकीर्तनम् ॥ ३४ ॥
मत्कथाश्रवणे श्रद्धा मदनुध्यानमुद्धव ! ।
सर्वलाभोपहरणं दास्येनाऽऽत्मनिवेदनम् ॥ ३५ ॥
मज्जन्मकर्मकथनं मम पर्वानुमोदनम् ।
गीतताण्डववादित्रगोष्ठीभिर्मद्गृहोत्सवः ॥३६ ॥

भाषा टीका ।

उद्धव उवाच ।

हे प्रभो ! हे उत्तमश्लोक ! किस प्रकार का साधु आपको सम्मत है और सत्पुरुषों से आदृत कौनसी भक्ति है कि जिस का आप के लिये उपयोग होता है ॥ २६ ॥

हे पुरुषाध्यक्ष ! हे लोकाध्यक्ष ! हे जगत् प्रभो ! मै आप का नम्र अनुरागी शरणागत भक्त हूं मेरे से इस बात को आप कहिये ॥ २७ ॥

आप ब्रह्म हो परमव्योम वैकुण्ठनाथ हो प्रकृति पुरुष दोनों से परे पुरुष हो हे भगवन् ! अपनी इच्छा से नाना प्रकार के रूपधारण करने वाले आप ने यह अवतार भक्त-हितार्थ लिया है ॥ २८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तत्र त्रिभिर्लक्षणैः साधुं निरूपयति । कृपालुरिति पञ्चभिः । कृपालुः परदुःखासहिष्णुः सर्वदेहिनां केषांचिदप्यकृतद्रोहः तितिक्षुः क्षमावान् सत्यं सारः स्थिरं बलं वा यस्य सः अनव-द्यात्माऽसूयादिरहितः सुखदुःखयोः समो हर्षविषादरहितः यथाशक्ति सर्वेषामुपकारकः ॥ २९ ॥

कामैर्विषयैरक्षुभितचित्तः दान्तः संयतबाह्येन्द्रियः मृदुरकठिनचित्तः शुचिः सदाचारः अकिञ्चनोऽपरिग्रहः अनीहो दृष्टक्रियाशून्यः मितभुक् लघ्वाहारः शान्तो नियतान्तःकरणः स्थिरः स्वधर्मे मच्छरणो मदेकाश्रयः मुनिर्मननशीलः ॥ ३० ॥

अप्रमत्तः सावधानः गभीरात्मा निर्विकारः धृतिमान्विपद्यप्यकृपणः जितषड्गुणः क्षुत्पिपासे शोकमोहौ जरामृत्यू षडूर्मयः एते जिता येन सः अमानी न मानाकाङ्क्षी अन्येभ्यो मानदः कल्पः परबोधने दक्षः मैत्रोऽवञ्चकः कारुणिकः करुणयैव प्रवर्तमानो न दृष्टलोभेन कविः सम्यक् ज्ञानी ॥ ३१ ॥

किञ्च मया वेदरूपेणादिष्टानपि स्वधर्मान् सन्त्यज्य यो मां भजेत सोऽप्येवं पूर्वोक्तवत्सत्तमः किमज्ञानान्नास्तिक्याद्वा न धर्माचरणे सत्त्वशुद्ध्यादीन् गुणान्विपक्षे नरकपातादीन् दोषांश्चाऽऽज्ञाय ज्ञात्वाऽपि मद्ध्यानविक्षेपकतया मद्भक्त्यैव सर्वं भविष्यतीति दृढनिश्चयेनैव धर्मान् सन्त्यज्य । यद्वा भक्तिदार्ढ्येन निवृत्ताधिकारतया सन्त्यज्य । अथवा । विवेकादयुपवासकृच्छ्रादिकायक्लेशसाधनानिषेधयादयो ये भक्तिविरुद्धा धर्मास्तान् सन्त्यज्येत्यर्थः ॥ ३२ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

किञ्च यावान् देशकालापरिच्छिन्नः यश्च सर्वात्मा यादृशः सच्चिदानन्दादिरूपः तं मां ज्ञात्वा अज्ञात्वाऽपि भक्ता विशेषतः पुनः पुनर्ज्ञात्वा एकान्तभावेन ये भजन्तीति ॥ ३३ ॥

साधुलक्षणमुक्त्वा भक्तेर्लक्षणमाह । मल्लिङ्गेत्यष्टभिः लिङ्गानि प्रतिमादीनि ॥ ३४ ॥

सर्वलाभोपहरणं सर्वस्य लब्धस्य समर्पणम् ॥ ३५ ॥

पर्वाणि जन्माष्टम्यादीनि तदनुमोदनम् ॥ ३६ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

तत्र साधुभक्तयोर्मध्ये पञ्चभिरिति तत्रापि श्लोकत्रयेणावरं मिश्रभक्तिमन्तं साधुं निरूपयति ॥ २९ ॥

कामैर्विषयैः । दृष्टादृष्टक्रियाशून्यः दृष्टा क्रिया दृष्टफलिका लौकिकी अदृष्टा चाऽदृष्टफलिका वैदिकी अग्निहोत्रादिलक्षणा ताभ्यां शून्य इत्यर्थः । स्वधर्मे भगवदर्पिते निष्कामे वर्णाश्रमलक्षणे स्थिर इति व्याख्येयम् अनीहत्वेनोक्तत्वात् । आत्मस्मृतौ सावधानः ॥ ३० ॥

निर्विकारः निष्कामत्वेन हर्षशोकादिविकारशून्यः हृष्टक्षोभेन भोजनाविक्षोभेन । सम्यक् ज्ञानी भक्तिवशेनात्मसाक्षात्कारस्त्वर्थः । इति कर्मज्ञानमिश्रावरसाधुनिरूपणं स्वधर्मे स्थिरत्वात् सम्यग् ज्ञानित्वाच्च ॥ ३१ ॥

किञ्च । मध्यमं शुद्धभक्तिमन्तं साधुं निरूपयतीत्यर्थः । सोऽपि कृपालुत्वादिगुणशून्योऽपि । पूर्वोक्तवत् कृपालुत्वादिगुणविशिष्टमिश्रभक्तवत् । सत्तमः कर्मज्ञानाद्यनावरणेन शुद्धभक्तिमात्रनिष्ठत्वात् । तथाच यस्तु कृपालुत्वादिगुणान् लब्ध्वा धर्मज्ञानपरित्यागेन केवलं मां भजति स तु परमसत्तम इति भावः । विपक्षे धर्मोऽनाचरणे । दोषान् धर्मत्यागजन्यान् मनोमालिन्यादीन् "नाचरेद्यस्तु वेदोक्तं स्वयमज्ञोऽजितेन्द्रियः" इत्यादेः । धर्मानुष्ठानस्य ध्यानविक्षेपकत्वात् । सर्वे धर्मसाध्याः सत्त्वशुद्ध्यादिगुणाः । पूर्वोऽपि भक्तस्य निश्चय एव धर्मत्यागे हेतुस्तु तत्र मानमित्यवसायहेति भक्तिमाहात्म्येन भक्तौ विश्वासेन निर्गुणाधिकारत्वात् । तदुक्तं भगवता । "तावत्कर्माणि कुर्वीत न निर्विद्येत यावता । मत्कथाश्रवणादौ वा श्रद्धा यावन्न जायते" इति तथाच तत्त्यागे मानमुक्तम् । वैष्णवस्य स्मार्त्तधर्मानुष्ठानमयुक्तमिति बोधयितुं पुनरथवेति विशेषकारस्त्वुपवासः स्मार्त्तमते विद्धाप्यविद्धा विधेया परतो द्वादशी नचेदित्यादेः तथा कृष्णैकादश्यामनुपवासोऽपि तन्मत एव "सङ्क्रान्तौ रविवारे च कृष्णपक्षादिने तथा । एकादश्यां न कुर्वन्ति उपवासं च पारणा"मित्यादेः । सङ्क्रान्तावुपवासेन पालनेन युधिष्ठिर । एकादश्यां च कृष्णायां ज्येष्ठः पुत्रो विनश्यती"त्यादेश्चावैष्णवविषयत्वात् तथाऽभिलेखेन मांसादिना श्राद्धम् आदिना तिर्यक्पुण्ड्रादिपरिग्रहः धर्मशब्दस्य सङ्कुचितवृत्त्यनुपगमार्थमित्यर्थं इत्युक्तम् ॥ ३२ ॥

किञ्चेति शुद्धदास्यादिभावेन भजन्तमन्यस्तु सर्वोत्तम इत्याहेत्यर्थः । ज्ञात्वेति ऐश्वर्येण दास्यभावो विवक्षितः अज्ञात्वेत्यनेन तु केवलमाधुर्येण श्रीव्रजेन्द्रनन्दनत्वाद्यवलम्बनो भावोऽभिप्रेतः भक्तिशास्त्राविश्वासेन साधकस्य ज्ञानवैशिष्ट्येनैकान्तिकत्वमुपपद्येतेत्यभिप्रायेण तु यद्वेति । तथाच वैधी भक्तिरेव साधकावस्थायां प्रचुरेति व्यञ्जितम् रागस्य दौर्लभ्यादिति ज्ञेयम् । किञ्च भक्तपदनिर्देशात् भक्तेः स्वरूपाधिक्यं भावभक्तावेव विवक्षितं तन्निर्देशेन च सर्वोत्तमत्वं मे मता इत्यनेन तत्रैव स्वसम्मतेर्वैशिष्ट्यम् अत एव प्रकरणप्राप्तमेकवचनं हित्वा ये ते इति गौरवेण बहुवचनं निर्दिष्टम् एवञ्च तद्भावविशिष्टप्रेमस्तु तु परमवैशिष्ट्यं कैमुत्येनाभिप्रेतमिति च ज्ञेयम् ॥ ३३ ॥

प्रतिमादीनीत्यादिना मन्दिरपूजादिग्रहः तेषामपि गौणलिङ्गत्वात् मल्लिङ्गमद्भक्तेत्यत्र षष्ठ्या लुक् छान्दसः उपरार्द्धेऽप्यन्वयात् प्रह्वत्वं नमस्कारः भावप्रधानोऽयं निर्देशः ॥ ३४ ॥

दासेत्यत्र कर्मणि प्रत्ययः । दास्येनेति वैधभक्तौ दास्यस्य प्राधान्यात् । उपलक्षणं चैतद्भावान्तरेणाप्यात्मनिवेदनस्य आत्मार्पितोऽत्र भवतोऽत्र विभो ! विधेहीत्याद्युक्तेः ॥ ३५ ॥

अनुमोदनमभिनयेन श्लाघनम् ॥ ३६ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

जिताः षड्गुणाः क्षुत्पिपासे शोकमोहौ जरामृत्यू षडूर्मयो येन सः ॥ ३१ ॥

धर्मान् कामान् ॥ ३२ ॥

यः यत्स्वरूपः यादृशः यत्स्वभावः यावान् यद्विभूतिकः ॥ ३३ ॥

मल्लिङ्गम् अर्चारूपं मद्भक्तः प्रणामपरः ॥ ३४—३६ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तावत्साधुरेवं विधो मम मत इत्याह । कृपालुरिति पञ्चभिः । कृपालुः स्वार्थनिरपेक्षपरदुःखासहिष्णुः तन्निराचिकीर्षुर्वा अकृतद्रोहः देहिनां कुत्रापि देहे न कृतो द्रोहो येन सः तितिक्षुर्द्वन्द्वसहिष्णुः सत्यं सारं बलं स्थिरं वा यस्य सः अनवद्यः द्वेषासूयादिरहितः आत्मा मनो यस्य सः समः स्वपरेषु समदृष्टिः सर्वानुपकरोतीति सर्वोपकारकः ॥ २९ ॥

कामैरहताऽक्षुभिता धीर्यस्य सः दान्तः निगृहीतेन्द्रियः मृदुर्मृदुचित्तः शुचिर्बाह्याभ्यन्तरशौचवान् तत्र बाह्यं स्नानादिजन्यमान्तरं विष्णुचिन्तनजम् अकिञ्चनः अनन्यप्रयोजनः अनीहः लौकिकव्यापाररहितः दृष्टादृष्टफलेच्छारहितो वा मितं यथा तथा भुङ्क्त इति तथा शान्तो निगृहीतान्तःकरणः स्थिरः स्थिरचित्तः अहमेव शरणं रक्षिता प्राप्त्युपायश्च यस्य सः मुनिः शुभाश्रयसंशीलनशीलः ॥ ३० ॥

अप्रमत्तः सावधानः गभीरात्मा अनवगाह्याभिप्रायः धृतिमान् आपत्स्वपि धैर्यसमन्वितः जिताः षड्गुणाः अशनायापिपासाशोकमोहजरामृत्यवो येन सः मनोजयस्य प्राणजयपूर्वकत्वाज्जितप्राणापानादिजयः सुकर एवेति भावः । अमानी स्वस्य सत्कारानभिलाषी अन्येभ्यो मानदः सत्कारकारकः कल्पः हितो-

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

परेषु दक्षः मैत्रोऽवञ्चकः कारुणिकः करुणयैव प्रवर्तमानः न स्वार्थलाभेन कविः चिदचिदीश्वरतत्त्वत्रययाथात्म्यज्ञः ॥ ३१ ॥

किञ्च आज्ञायेति । मयादिष्टानुपदिष्टान् वेदमुखेनोक्तान् गुणान्दोषांश्च आज्ञाय विज्ञाय विरोधिस्वरूपस्यापि ज्ञेयत्वाद्दोषानित्युक्तम्, सर्वान्स्वकान्वर्णाश्रमोचितान् धर्मान्सन्त्यज्य सर्वधर्मान्परित्यज्येत्यत्रेवात्रापि यथासंप्रदायं त्यागो विवक्षितः यः मामुपायोपेयभावेन भजेत्स च सत्तमः साधूत्तमः ॥ ३२ ॥

किंच ज्ञात्वेति । यः यत्स्वरूपः यादृशः यत्स्वभावः यावान्यद्विभूतिकश्चास्मि तथा पुनः पुनर्विचार्य ये मामेवानन्यभावेन नान्यस्मिन् प्रयोजनान्तरोपायान्तरदेवतान्तरादौ यो भावस्तेन भजन्ति ते भक्ततमाः वैशब्दो निश्चयद्योतकः ॥ ३३ ॥

एवं साधुलक्षणमुक्तमथैवं विधानां सतां संगाच्छ्रवणीयानि भक्तियोगानुग्राहकाणि तल्लक्षणान्याह । मल्लिङ्गेत्यादिभिरष्टाभिः मल्लिङ्गमर्चारूपं मल्लिङ्गमद्भक्तजनदर्शनादीनि भक्तियोगानुग्राहकाणि तल्लक्षणानीत्यष्टमान्ते ऽध्याहर्तव्यं परिचर्या पादपीडनादिरूपा मद्गुणकर्मः प्रणामपरः गुणकर्मानुकीर्तनम् ॥ ३४ ॥

मदनुध्याने श्रीद्वयकानुध्याने सर्वलाभोपहरणं सर्वस्य लब्धस्य समर्पणं दास्येन स्वाभाविकेन आत्मनः स्वस्य निवेदनं समर्पणं मच्छेषत्वाध्यवसायः ॥ ३५ ॥

मम जन्मकर्मकथनं श्रोतृसन्निधाविति शेषः मम पर्वसु जयन्त्यादिष्वनुमोदनम् उत्सवकरणेनेति शेषः गीतादिभिर्मद्गृहेषु मदालयेषूत्सवः ॥ ३६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

भगवान्सल्लक्षणं वक्तीत्याह । भगवानिति । सर्वदेहिनामकृतद्रोहः समबुद्धः आत्मा मनो यस्य स तथा ॥ २९ ॥

संचितं किंचनमस्मदीयं धनं न विद्यते इत्यकिंचनः संकोचकत्वं शुचेति यादवः अनीहो निषिद्धाचरणवर्जितः किंच नैष्ठावधर्मैः स्थिरः निश्चलः अहमेव शरणं यस्य स मच्छरणः मुनिः मद्गुणमननशीलः ॥ ३० ॥

अप्रमत्तो विहिताचारे प्रमादरहितः गम्भीरात्मा अनवगाह्यमनोगतिः आपदि धृतिमान् जिताः षट् कामादि गुणाः षडिन्द्रियविषया वा येन स तथा अमानी आत्मन्यविद्यमानगुणाभिमानरहितः मानदः ज्ञानोपदेष्टा कल्पः विहितक्रियाकरणनिपुणः कृपालुत्वं मनोधर्मः कारुणिकत्वं कायिकधर्म इति पृथगुक्तं कविः सर्वज्ञः ॥ ३१ ॥

सामान्यलक्षणमुक्त्वा विशेषलक्षणमाह । आज्ञायेति । चशब्द यथार्थं यो मया मद्वेदेनादिष्टान् गुणान् दोषान् अपि आज्ञाय सम्यग्ज्ञात्वैव स्वकान् स्वविहितान् धर्मान् भागवतसंगात् यदि संत्यज्य समर्थो मां भजेत्स एव सत्तम इत्यन्वयः ॥ ३२ ॥

भक्तेरनेकविधत्वेऽपि उत्तमोत्तमाः शुश्रूषितत्वेन पृष्टत्वात्तं प्रश्नं परिहरति । ज्ञात्वेति । अथ सतां लक्षणकथनानन्तरमात्यन्तिकभक्तलक्षणमुच्यते यद्वा शास्त्रगुरूपदेशतो भगवन्माहात्म्यं ज्ञात्वाथ च विशेषतो ज्ञात्वेति वीप्सया माहात्म्यज्ञानेन पुनः पुनर्विशेषं द्योतयति तदुक्तम्—

ज्ञात्वापि मम माहात्म्यं तत्रोत्सुकतया पुनः ॥

विशेषाच्च विशेषेण ज्ञात्वा मामश्नुतेऽधिकमिति परिमाणतो यावानस्मि स्वरूपतो योऽस्मि लक्षणतो यादृशोऽस्मीति तत्त्वेन येऽनन्यभावेनात्युत्तमभक्त्या मां चैवं भजन्ति ते भक्ततमाः निरतिशयभक्ता मम नानात्वेन ज्ञाता इत्यन्वयः अत्र तमप्प्रत्ययेन भक्तानां बाहुविध्यप्रकाशनेन भक्तेरपि तथात्वं सूचयतीति ॥ ३३ ॥

इदानीं सर्वसाधारणं भक्तिलक्षणमाह । मल्लिङ्गेति । अत्र कर्तव्यपदमध्याहृत्यान्वेतव्यं विधिप्रकारत्वात् । सर्वलाभोपहरणं सर्वलाभस्य द्रव्यस्योपहरणं हरावर्पणं दास्येन सहात्मनिवेदनमात्मसमर्पणं यद्वा दास्येन सहात्मनि मनसि निवेदनम् ॥३४॥३५॥

पर्वानुमोदनम् उत्सवानुष्ठानम् उत्सवं दृष्ट्वा हर्षो वा ॥३६॥३७॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ॥

अथ साधनतारतम्येन साधूनां तारतम्यमाह पञ्चभिस्तत्रावरं मिश्रभक्तिसाधकमाह । कृपालुरिति त्रिकेण । अत्र मच्छरण इति विशेषणम् उत्तरत्र स च सत्तम इति चकारेण तु पूर्वोक्तो यथा सत्तमस्तथायमपि सत्तम इति व्यक्तेरेवमेवंभूतो मच्छरणः सत्तम इत्याक्षिप्यते अन्यथैः तत्र स्थिरः स्वधर्मे इति स्वकान् धर्मान् संत्यजेदित्युत्तरोक्ताद्विरोधापादनार्थम् अत्रैव मूलेन सर्वानिति पदेन कोऽपि न त्यक्तः अस्तु तावद्विरुद्धानां वार्तेति भावः ॥ २९—३१ ॥

मध्यममभिश्रसाक्षाद्भक्तिसाधकमाह । आज्ञायैवमिति । निवृत्ताधिकारतया सन्त्यज्येत्यन्ता व्याख्या ग्राह्या यथा च श्रीहयशीर्षपञ्चरात्रोक्तनारायणव्यूहस्तवः—

ये त्यक्तलोकधर्मार्था विष्णुभक्तिवशं गताः ।
ध्यायन्ति परमात्मानं तेभ्योऽपीह नमो नम इति ॥

अत्र त्वेवं व्याख्या यदि च स्वात्मनि तत्तद्गुणयोगाभावस्तथापि एवं पूर्वोक्तप्रकारेण गुणान् कृपालुत्वादीन् दोषांस्तद्विपरीतांश्चाज्ञाय हेयोपादेयत्वेन निश्चित्यापि यो मया तेषु गुणेषु मध्ये तत्रादिष्टानपि स्वकान् नित्यनैमित्तिकलक्षणान् धर्मानेव वर्णाश्रमविहितान् तदुपलक्षणं ज्ञानमपि मदनन्यभक्तिविघातकतया सन्त्यज्य मां भजेत् स च सत्तमः चकारात्पूर्वोऽपि सत्तम इत्युत्तरस्य तत्तद्गुणाभावेऽपि पूर्वसाम्यं बोधयति ततो यस्तु तत्तद्गुणान् लब्ध्वा धर्मज्ञानपरित्यागेन मां भजति केवलं स तु परमसत्तम एवेति व्यक्त्या गम्यमस्य पूर्वत आधिक्यं दर्शितम् अत्र अद्वेष्टा सर्वभूतानामित्यादि श्रीभगवद्गीताद्वादशाध्यायप्रकरणमप्यनुसन्धेयं सत्तम इत्यनेन तद्वरस्यापि सत्तमत्वं स्वत्वमप्यस्तीति दर्शितम् अस्तु तावत्सदाचारस्य तद्भक्तस्य सर्वमनन्यदेवताभक्तत्वमात्रेण दुराचारस्यापि सत्त्वान्यपर्यायं साधुत्वं विधीयते अपि चेत्सुदुराचार इत्यादौ अत्र च साधुसत्प्रस्तावे यथायुक्तं लक्षणं नोत्थापितं तत्खलु तादृशभक्तस्य भक्त्युन्मुखेऽनुपयुक्ततामभिप्रेत्य यथोक्तं श्रीप्रह्लादेन । सङ्गेन साधुभक्तानामिति साधुष्ट सदाचारः ॥ ३२ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तदेवमीश्वरबुद्ध्या विभिन्नमार्गभक्तयोस्तारतम्यमुक्तम् तत्रै-वोत्तरस्यानन्यत्वेन श्रेष्ठत्वं दर्शितं तत्रैवार्चनमार्गे त्रिविधत्वं लभ्यते पाद्मोत्तरखण्डात् तत्र महत्त्वं तापादिपञ्चसंस्कारित्वादौ मध्यमत्वम् —

तापः पुण्ड्रं तथा नाम मन्त्रो यागश्च पञ्चमः ।
अमी पञ्चैव संस्काराः पारमैकान्त्यहेतवः ॥

इत्यत्र कनिष्ठत्वं शङ्खचक्राद्यूर्द्ध्वपुण्ड्रधारणाद्यात्मलक्षणम् । तन्नमस्करणं चैव वैष्णवत्वमिहोच्यते इत्यत्र अथ शुद्धदास्यसख्यादिमात्रमात्रेण यो ऽनन्यः स तु सर्वोत्तम इत्याह । ज्ञात्वेति ज्ञात्वा अज्ञात्वा वा ये केवलमनन्यभावेन श्रीव्रजराजनन्दनत्वाद्यालम्बनो यः स्वाभीप्सितो दास्यादीनामेकतरो भावः तेनैव भजन्ति न कदाचिदन्येनेत्यर्थः । ते तु मे मया भक्ततमा मताः साधुस्त्वेत्याद्यनुसारेण ते मे भक्ततमा मता इत्यन्तिमस्यैव सप्तमस्यातिशयो दर्शितः अत एव योगेश्वरैरपि चतुर्थे प्रार्थितम् । प्रेयाश्च तेऽन्य इत्यादिना ज्ञात्वाज्ञात्वेत्यत्राज्ञानज्ञानयोर्हेयोपादेयत्वं निषिद्धं भक्ततमा इत्यत्र पूर्ववाक्यस्थं सत्पदानिर्देशमातिक्रम्य विशेषतो भक्तपदनिर्देशात् भक्तेः स्वरूपाधिक्यमत्रैव विवक्षितं मे मता इत्यत्र मम तु विशिष्टा सम्मतिरत्रैवेति सूचितम् इह-शानुकचरत्वात् अत एव प्रकरणप्राप्तमेकवचननिर्देशमप्यतिक्रम्य गौरवेणैव ये त इति बहुवचनं निर्दिष्टं ततः किमुत तद्भावलिप्सप्रेमाणा इति भावः ॥ ३३ ॥

मल्लिङ्गमद्भक्तजनेति षष्ठीलुक् छान्दसः उत्तरार्द्धेऽप्यन्वयात् प्रह्वीति प्रह्वत्वं नमस्कारः ॥ ३४ ॥

दास्येनात्मनिवेदनमिति वैधभक्तौ दास्यस्य प्राधान्यात् ॥ ३५-३८ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

कर्मज्ञानादिमिश्रा केवला चेति भक्तेर्द्वैविध्यात्तत्प्रसक्तः साधुरपि द्विविधस्तत्र प्रथममाह त्रिभिः । कृपालुः परस्य संसारदुःखासहिष्णुः अद्रोहिण्यपि जने अकृतद्रोहः सर्वदेहिनां स्वमवजानतामपि तितिक्षुरपराधक्षन्ता सत्यमेव सारो बलं यस्य सः अनवद्यात्मा असूयादिदोषरहितः समः सुखदुःखाभ्यां मानापमानाभ्यां च तुल्यः ॥ २९ ॥

कामैरक्षुभितचित्तः दान्तः संयतबाह्येन्द्रियः मृदुः अकठोरचित्तः शुचिः सदाचारः अकिञ्चनः अपरिग्रहः अनीहः व्यावहारिकक्रियाशून्यः मितभुक् पवित्रलघ्वाहारः शान्तः शान्तिरतिमान् स्थिरः स्वधर्मे स्वकर्मसु फलोदयपर्यन्तमव्यग्रः आफलोदयकृत् स्थिर इति लक्षणात् मच्छरणः मदेकाश्रयः मुनिर्मननशीलः ॥ ३० ॥

अप्रमत्तः सावधानः गभीरात्मा अन्यैर्दुरवगाह्यस्वभावः धृतिमान् निर्विकारः जितषड्गुणः क्षुत्पिपासाद्यूर्मिरहितः अमानी मानाकाङ्क्षाशून्यः अन्येभ्यो मानप्रदः कल्पः परबोधने दक्षः मैत्रः अवञ्चकः कारुणिकः करुणयैव प्रवर्त्तमानः कविर्बन्धमोक्षज्ञः इत्यष्टाविंशतिगुणवानयं सत्तम इत्युत्तरस्यानुषङ्गः अतः शान्त इति जितषड्गुण इति पदाभ्यामयं मिश्रभक्तो निर्वाणवाञ्छाशून्यत्वात् भक्तात्मारामः शान्तभक्त इति संज्ञाभ्यामुच्यते अयं स्वपूर्वदशायां ज्ञानमिश्रभक्तिमान् तत्पूर्वदशायां कर्ममिश्रभक्तिमानासीदतस्तदा तदाश्य भक्तेः प्राधान्यं सिद्धदशायां तु कर्मज्ञानाद्यनादरणाच्छुद्धभक्त एवायमुच्यते इत्यतः सत्तम इति ज्ञानमिश्रभक्तिमान् सत्तरः कर्ममिश्रभक्तिमान् सन्निम्नवगच्छते अतोऽयं स्वसाङ्गिनं स्वतुल्यं चिकीर्षुः प्रथमं कर्ममिश्रां भक्तिमुपदिशति ततस्तेनोपदिष्टः सच निष्कामः कर्ममिश्रामेव भक्तिं कुर्वंश्च कर्माणि व्रजन् योगी कर्मभिस्त्यज्यते हि स इति न्यायेनारूढदशायामनादृतत्वात् अत एव कर्मणामुपरमे सति ज्ञानमिश्रां भक्तिं लभते । ततस्तत्पाकदशायां भक्तेः प्राबल्ये सति ज्ञानेऽप्यनादृतत्वादुपरमत्वात्वे सति भक्तात्मारामः इति शान्तभक्त इति संज्ञाभ्यां स चाप्युच्यमानो भवति तस्य ज्ञानेऽनादरो यथा भक्तिरसामृतसिन्धूद्धृता तदुक्तिः "अस्मिन् सुखघनमूर्तौ परमात्मनि वृष्णिपत्तने स्फुरति । आत्मारामतया मे वृथा गतो बत चिरं कालः" इति । हरेर्गुणाक्षिप्तमतिर्भगवान् बादरायणिरिति प्रथमे च तद्दशायां भक्तिबाधितस्य ज्ञानस्य सर्वेऽपि तस्य भक्त्यनावरकत्वात् —

अन्याभिलाषिताशून्यं ज्ञानकर्माद्यनावृतम् ।
आनुकूल्येन कृष्णानुशीलनं भक्तिरुच्यत इति ॥

शुद्धभक्तिलक्षणस्य तत्र नाव्याप्तिर्ज्ञेया ॥ ३१ ॥

अथ केवलाया भक्तेः प्रवर्त्तकं साधुं लक्षयति । आज्ञायेति । यथा धर्मान् नैव सम्त्यज्य सत्तम उक्तः एवं मया वेदरूपेणादिष्टानपि सर्वान् धर्मान् सन्त्यज्य मद्भक्त्यैव भद्राविशेषतस्तया सम्यक् प्रकारेणैव त्यक्त्वा यो मां भजेत् किमज्ञानात्रास्तिक्याद्वा न धर्माचरणे सत्त्वशुद्ध्यादीन् गुणान् विपक्षे दोषांश्च आज्ञाय सम्यगेव ज्ञात्वापि भक्त्यैव मे सर्वं भविष्यतीति दृढनिश्चयेनैव धर्मान् सन्त्यज्येति स्वामिचरणाः स च सत्तम इति पूर्वाधिकारी धर्मांश्च सन्त्यज्य भजेदयं तु सन्त्यज्यैवेति भेदः तथा पूर्वः कृपालुत्वादिसम्पूर्णगुणवानेव सत्तमः अयं तु विशेषणान्तरानुपादानात् तावत्संख्यकगुणवत्त्वाभावेऽपि सत्तमः नचास्य तावद्गुणाभाव एवेत्याशङ्कनीयम् —

भक्तिः परेशानुभवो विरक्तिरन्यत्र चैष त्रिक एककाल इति ।

यस्यास्ति भक्तिर्भगवत्यकिञ्चना सर्वैर्गुणैस्तत्र समासते सुराः ॥

इत्यादिश्रवणादचिरेणैव सर्वदोषोपशमनपूर्वकसर्वगुणोदयस्य तत्रावश्यंभावित्वात् किञ्च पूर्वो जितषड्गुणत्वात् सिद्धदशावस्थ एव सत्तमः अयं तु तादृशत्वानुक्तेः साधकदशावस्थोऽपि सत्तम इत्यस्य पूर्वत एतावान् व्यञ्जित उत्कर्षः प्रथमत एव शुद्धभक्तिमत्त्वाज्ज्ञेयः ॥ ३२ ॥

अयं सिद्धदशावस्थश्चेत्तु परममहोत्कृष्ट एवोच्यत इत्याह । ज्ञात्वाज्ञात्वेति । वीप्सा भक्त्याहमेकया ग्राह्य इति मदुक्तेः भक्तितारतम्येन मन्माधुर्यमधिकाधिकं प्रतिक्षणमनुभवगोचरीकुर्वन्त्येत्यर्थः । यावान् कालदेशाभ्यामपरिच्छिन्नोऽप्यहं भक्तेच्छावशात् परिच्छिन्नश्च यश्च साक्षात् परब्रह्माप्यहं श्यामसुन्दराकारो वसुदेवपुत्रश्च यादृशः आत्मारामः आप्तकामोऽप्यहं भक्तप्रेमैवास्वादनात्मारामोऽनाप्तकामश्च अनन्यभावेनैकान्तिकत्वेनेति ये ते इति गौरवेण बहुत्वम् भक्ततमा मता इति पूर्वोक्तलक्षणः सत्तम एव मया मद्भक्तशब्देनोच्यते अयं तु मे भक्ततमो मया सम्मत इत्यर्थः ॥ ३३ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी

यदुक्तं भक्तिस्त्वयि कीदृश्युपयुक्तेति तत्राह । मल्लिङ्गमद्भक्तजनेत्यत्र षष्ठीलुगार्षः उत्तरार्द्धेऽप्येवमेवात् मद्धेति मद्धस्य नमस्कारः ॥ ३४ ॥

सर्वलाभोपहरणं भगवतैव स्वसेवार्थं स्वस्मानीतमिति बुद्ध्या सर्वलब्धवस्तुनो ममताऽस्पदस्य तस्मै समर्पणं दास्येन हेतुना आत्मनो जीवस्य देहस्य चाहंताऽस्पदस्यापि समर्पणम् ॥ ३५ ॥

जन्मकर्मकथनमिति । अनुकीर्त्तनकथनयो रागस्वरताला्दियुक्तत्वायुक्तत्वाभ्यां भेदो ज्ञेयः पर्वाणि जन्माष्टम्यादीनि तेषामनुमोदनमेवाह आभ्याम् । गीतादिभिः मद्गृहाधिकरणक उत्सवः ॥ ३६ ॥

मम जन्मकर्मकथनमित्यनेनैव तत्तिथीनां जन्माष्टम्यादीनामनुमोदनमप्युक्तं मम पर्वानुमोदनं मम रासोत्सवादिस्वर्वाणि पूर्णमास्यादीनि तदनुमोदनम् ॥ ३६ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

साधुलक्षणमाह । कृपालुरिति पञ्चभिः । कृपालुः परदुःखदुःखितमनाः सर्वदेहिनामनुकूलप्रतिकूलानामकृतद्रोहः यतः तितिक्षुः सत्यं यथार्थाचरणं सारो बलं यस्य अतएवात्मा विशुद्धबुद्धिः समो निर्द्वन्द्वः सर्वेषां साध्वसाधूनामुपकारकः तस्य दौर्लभ्यमुक्तमितिहाससमुच्चये—

सुलभाः पुरुषा लोके साधवः साधुकारिषु ।
दुर्लभः पुरुषो लोके यश्च साधुरसाधुष्विति ॥ २९ ॥

काम्यन्ते क्रियादिभिरिति कामाः भोगास्तैर्योग्यैरपि अहतधीः अलुब्धमतिः दान्तः नियतबाह्यकरणः मृदुः कोमलस्वभावः शुचिः बाह्याऽभ्यन्तरशुद्ध्यर्थं कृतशास्त्रीयानुष्ठानः अकिंचनः मयि कृतात्मात्मीयभरन्यासः अनीहः त्यक्तत्रिवर्गचेष्टः मितभुक् स्वल्पभुक् शान्तः संयतान्तःकरणः स्थिरः भगवद्धर्मादचालयः मच्छरणः अहं गृहपदाभयः सर्वापद्भ्यो रक्षिता च यस्य सः मुनिर्मद्ध्याननिष्ठः ॥ ३० ॥

अप्रमत्तः अवहितः गभीरात्मा विपुलबुद्धिः धृतिमान् असाहसिकः जितषड्गुणः "क्षुत्पिपासे प्राणनिष्ठे शोकमोहौ मनोऽनुगौ । जन्ममृत्यू शरीरस्य न मे ज्ञानस्वरूपिणः" इत्येवं जितषड्भिः अमानी परेषां मानदः कल्पः हितोपदेशे दक्षः मैत्रः हिताचरणेन जनाल्हादकः कारुणिकः परदुःखनिरासकरणस्वभावः कविः क्रान्तदर्शी सिद्धान्तविदित्यर्थः ॥ ३१ ॥

एवं मयादिष्टान् मयोदितेष्ववहितः स्वधर्मेषु मदाश्रय इत्यादिना मयोपदिष्टान्स्वकान् धर्मान् गुणान्मुक्तो गुणभूतान् आज्ञाय तैर्वा मां भजेत स सत्तमः किंकृत्य अथैषामिमादिना मया दिष्टान् दोषान् संत्यज्य ॥ ३२ ॥

स्वरूपतो योऽस्मि गुणशक्तितो यादृशोऽस्मि इयत्ताज्ञानदृढभागतो यावान् ज्ञातुं शक्योऽस्मि तथा मां ज्ञात्वा ज्ञात्वा पुनः पुनर्ज्ञात्वा च अनन्यभावेन भजन्ति ते भक्ततमाः मे मताः सम्मताः ॥ ३३ ॥

अथ भक्तिलक्षणमाह । मल्लिङ्गेत्यष्टभिः । लिङ्गानि पूजाधिष्ठानानि ॥ ३४ ॥

ईक्ष्यन्ते इति ईक्षाणि गृहवनोपवनवस्त्रालंकारादीनि द्रव्याणि तेषामुपहरणं समर्पणं देवपित्राद्यर्थं कमप्यंशं विहाय निवेदयेदिति सूचयितुं सर्वपदप्रयोगः ॥ ३५ ॥

---

### भाषा टीका ।

#### श्री भगवान् उवाच ।

जो कृपा करने वाला होवै किसी का द्रोह नहीं करै सब की सब बातों का सहने वाला सत्य बोलने वाला पाप रहित समदृष्टि वाला सब के उपकार करने वाला ॥ २९ ॥

कामों में से दुःख नहीं पाने वाला बाहिर की इन्द्रियों को जीतने वाला कोमल चित्तवाला पवित्र अकिञ्चन विशेष चेष्टारहित परिमित भोजन करने वाला भीतर की इन्द्रियों के जीतने वाला स्थिर बुद्धिवाला मेरे आश्रय रहने वाला मुनि ॥ ३० ॥

प्रमाद नहीं करने वाला गम्भीर बुद्धिवाला धीरज वाला राग द्वेषादि छैः गुणों को जीतने वाला आप मान रहित दूसरे को मान देने वाला ज्ञान देने में समर्थ कृपा वाला पण्डित होवे वह साधु है ॥ ३१ ॥

ऐसे गुण दोषों को जानकर मेरे सिखाये हैं तौभी भक्ति से विरोधि होवैं तो सब अपने धर्मों को छोड कर जो मेरे ही को भजता है वह उत्तम साधु मेरा सम्मत है ॥ ३२ ॥

हम जैसे हैं जितने वडे हैं जो हैं इस बात को जानकर अथवा नहीं भी यथार्थ जानकर जो पुरुष अनन्यभाव से हमको भजते हैं वे भक्तों में श्रेष्ठ मेरे मत में हैं ॥ ३३ ॥

मेरी मूर्तियों का दर्शन मेरे भक्तों का दर्शन तथा स्पर्शन तथा अर्चन सेवा स्तुति नमस्कार गुण कर्मों का कीर्तन ॥३४॥

हे उद्धवजी मेरी कथा के श्रवण में श्रद्धा मेरा अनुचिन्तन करना लाई हुई सब युक्त पदार्थों का मेरे अर्पण करना दास्य भाव से आत्मा का निवेदन करना ॥ ३५ ॥

मेरे जन्म कर्मों के चरित्रों का कथन करना मेरे एकादश्यादिपर्वोत्सवों का अनुमोदन करना गीत नृत्य बाजों से भक्तजन वैष्णव गोष्ठी से मेरे मंदिर का उत्सव करना वह सब मेर में करने की उत्तम भक्ति के लक्षण हैं ॥ ३६ ॥

यात्राबलिविधानं च सर्ववार्षिकपर्वसु ।
वैदिकी तान्त्रिकी दीक्षा मदीयव्रतधारणम् ॥ ३७ ॥
ममार्चास्थापने श्रद्धा स्वतः संहत्य चोद्यमः ।
उद्यानोपवनाक्रीडपुरमन्दिरकर्मणि ॥ ३८ ॥
सम्मार्जनोपलेपाभ्यां सेकमण्डलवर्तनैः ।
गृहशुश्रूषणं मह्यं दासवद्यदमायया ॥ ३९ ॥
अमानित्वमदम्भित्वं कृतस्यापरिकीर्तनम् ।
अपि दीपावलोकं मे नोपयुञ्ज्यान्निवेदितम् ॥ ४० ॥
यद्यदिष्टतमं लोके यच्चातिप्रियमात्मनः ।
तत्तन्निवेदयेन्मह्यं तदानन्त्याय कल्पते ॥ ४१ ॥
सूर्योऽग्निर्ब्राह्मणो गावो वैष्णवः खं मरुज्जलम् ।
भूरात्मा सर्वभूतानि भद्र ! पूजापदानि मे ॥ ४२ ॥
सूर्ये तु विद्यया त्रय्या हविषाग्नौ यजेत माम् ।
आतिथ्येन तु विप्राग्र्ये गोष्वङ्ग ! यवसादिना ॥ ४३ ॥
वैष्णवे बन्धुसत्कृत्या हृदि खे ध्याननिष्ठया ।
वायौ मुख्यधिया तोये द्रव्यैस्तोयपुरस्कृतैः ॥ ४४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

बलिविधानं पुष्पोपहारादिसमर्पणम् सर्ववार्षिकपर्वसु चातुर्मास्यैकादश्यादिषु विशेषतः ॥ ३७ ॥

उद्यानादिकरणे सामर्थ्ये सति स्वतः असति चान्यैः सम्भूयोद्यमः उद्यानं पुष्पप्रधानम् उपवनं फलप्रधानं वनम् आक्रीडं क्रीडास्थानम् ॥ ३८ ॥

सम्मार्जनं रजसोऽपाकरणम् उपलेपो गोमयादिभिरालेपनम् सेकस्तैरेव प्रोक्षणम् मण्डलवर्तनं सर्वतोभद्रादिकरणम् मह्यं मम ॥ ३९ ॥

कृतस्य धर्मस्यापरिकीर्तनं स्वयमन्येन वा निवेदितं न स्वीकुर्यात् एतच्च साधारणं स्थावरविषयं रागप्राप्तविषयं वा भक्त्यात्तु ग्राह्यमेव—

षड्भिर्मासोपवासैस्तु यत्फलं परिकीर्तितम् ।
विष्णोर्नैवेद्यसिक्थेन पुण्यं तद्भुञ्जतां कलौ ॥
हृदि रूपं मुखे नाम नैवेद्यमुदरे हरेः ।
पादोदकं च निर्माल्यं मस्तके यस्य सोऽच्युतः ॥

इत्यादिवचनेभ्यः यद्वा अन्यस्मै निवेदितं मे नोपयुञ्ज्यात् मह्यं न निवेदयेदित्यर्थः—

विष्णोर्निवेदितान्नेन यष्टव्यं देवतान्तरम् ।
पितृभ्यश्चैव तद्देयं तदानन्त्याय कल्पते ॥
पितृशेषं तु यो दद्याद्धरये परमात्मने ।
रेतोधाः पितरस्तस्य भवन्ति क्लेशभागिनः ॥

इत्यादिवचनेभ्यः ॥ ४०—४१ ॥

इदानीमेकादश पूजाधिष्ठानान्याह । सूर्य इति हे भद्र ! ॥ ४२ ॥
अधिष्ठानभेदेन पूजासाधनान्याह । सूर्य इति त्रिभिः । त्रय्या विद्यया सूक्तैरुपस्थानादिना अङ्ग हे उद्धव ! यवसादिना तृणादिना ॥ ४३ ॥

बन्धुसत्कृत्या बन्धुवत्सम्मानेन हृदि खे हृदयाकाशे मुख्यधिया प्राणबुद्ध्या तोये तोयादिभिर्द्रव्यैस्तर्पणादिना ॥ ४४ ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

यात्रा दोलाचन्दनक्रीडाद्युत्सवः एकादश्यादिष्वित्यादिना पवित्रादमनकदोलिका दीपमालादिपरिग्रहः ॥ ३७ ॥

सम्भूय मिलित्वा ॥ ३८ ॥

तैर्गोमयादिभिरेव दासवदिति लौकिको दासो यथान्वितः अमायया वित्तशाठ्यादिकं विना ॥ ३९ ॥

अदम्भित्वं लोकेषु मिथ्याधर्मख्यापनराहित्यम् एतच्च निवेदितस्यास्वीकरणञ्च साधारणं कस्याप्यनिजमेव भुक्तं यत् स्थावरं कालान्तरस्थात् भगवदुपयोगादेवासन्निवेदितमप्यग्राह्यं

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी।

पथिकादिपूज्यमानमहारण्यदेवालयादौ कस्याप्यधिकारिणोऽभावात् किम्वा चौरादिप्रसादो मह्यं देयोऽन्यस्त्वन्यस्मै इति लोभेन प्राप्तो यस्तद्विषयम् असाधारणमस्थावरं चेत्तदा त्वधिकारीच्छायां स्वाधिकारे वा सति भक्त्या तु ग्राह्यमेव साधारणोत्थादिसङ्कोचकल्पने मानाभावादद्देति ॥ ४० ॥

अक्षीति । चकारान्मम प्रियं च ॥ ४१ ॥

पूजाधिष्ठानानीति तद्विभूतिष्वपि तेषु बहिर्दृष्ट्या सम्बन्धो न विचारणीयः किन्तु मम पूजाधिष्ठानदृष्ट्यैवेत्यर्थः ॥ ४२ ॥

अधिष्ठानभेदेनेति। तत्तदधिष्ठानविशेषेण तत्पूजोपकरणविशेषानाहेत्यर्थः ॥ सूक्तैर्वैदिकवाक्यैः चित्रं देवानामित्यारभ्य सूर्य्य आत्मा जगतस्तस्थुषश्चेति ओं तच्चक्षुर्देव हितमित्यादिभिः आदिना गायत्र्या पुष्पमिश्राञ्जलिनिःक्षेपः तर्पणादिनेत्यादिना पुष्पाञ्जलिपरिग्रहः ॥ ४३ ॥ ४४ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

पर्वं उत्सवः तान्त्रिकी भगवच्छास्त्रोक्ता दीक्षा यज्ञादिभिर्भागैरवाराधनसंकल्पः ॥ ३७ ॥

स्वत उद्यमः एकस्यैवोद्यमः संहत्य सहायान्तरमपेक्ष्योद्यमः उद्यानमायतनान्तर्गतम् उपवनं नद्यादिसमीपगतम् आक्रीडः पुष्पोपचयादिक्रीडनार्हः ॥ ३८ ॥ ३९ ॥

अमायये त्येतद्विवृणोति । अमानित्वमित्यर्थेन दीपावलोकं दीपावलोकमपि मम निवेदितं नोपयुञ्ज्यात् छत्रचामरतालवृन्तपवनादीनामनुपयोज्यत्वप्रदर्शनार्थमिदम् ॥ ४०—४२ ॥

अथवा आसत्येनेत्यादिमन्त्रैः ॥ ४३ ॥

आकाशे पूजनं हृदयाकाशान्तरे ध्यानमित्याह हृदीति । मुख्यधिया मुख्यप्राणबुद्ध्या ॥ ४४ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यात्रा दिव्यदेशयात्रा सांवत्सरिकपर्वसु चातुर्मास्यैकादश्यादिषु बलिविधानं विशेषतः पूजाविधानम् उत्तमा तान्त्रिकी भगवच्छास्त्रोक्ता दीक्षा पञ्चसंस्कारसम्पत्तिः वैदिकीति पाठे अध्वर्युर्गृहपतिं दीक्षयित्वा यजमानं दीक्षयेदित्युक्ता विधा यज्ञार्थदीक्षा मदीयव्रतान्येकादश्युपवासादीनि तेषां धारणम् ॥ ३७ ॥

मम यार्चा पूजामूर्तिस्तस्याः स्थापने श्रद्धा आदरः सत्यां शक्तौ स्वतस्तदभावे इतरैः सह संहत्य सम्भूय उद्यमश्च उद्यानेत्यादेर्भावः तत्रोद्यानमायतनान्तर्गतं वनम् उपवनमायतनसमीपवनम् आक्रीडाः पुष्पोपचयादिक्रीडनार्हाणि स्थानानि गोपुरायायतनस्य परितः स्थितानि तत्स्थानि मन्दिराणि तेषां कर्मणि निर्माणे स्वतः संहत्य चोद्यम इति पूर्वेण सम्बन्धः ॥ ३८ ॥

सम्मार्जनं धूलापाकरणम् उपलेपनं गोमयादिभिः सेकस्तैरेव प्रोक्षणं मण्डलवर्तनं सर्वतोभद्रस्वस्तिकचक्राम्बुजादिमण्डलकरणम् एभिरमायया दासवन्मद्य मम गृहशुश्रूषणं गृहालङ्कारः ॥ ३९ ॥

अमानित्वं दुरहङ्काररहित्यम् अदम्भित्वमप्रख्यापकत्वं कृतस्य धर्मस्यापरिकीर्तनं धर्मः क्षरति कीर्तनादिति स्मृतेः मे मह्यं स्वयमन्येन वा निवेदितं दीपावलोकं नोपयुञ्ज्यात्स्वव्यापारोपयोगिनं न कुर्यात्किन्त्वन्यदेव दीपारोपणं कुर्यादित्यर्थः । दीपावलोकग्रहणं स्तालवृन्तव्यजनादीनामप्यनुपयोज्यत्वप्रदर्शनपरः ॥ ४० ॥

किञ्च लोके यदिष्टतमं कमनीयं वस्तु यच्चात्मनः स्वस्य प्रियतमं तत्तन्मह्यं निवेदयेदेवं चेत्तदानन्त्याय ममापरिमितप्रीतयेऽक्षय्यफलाय वा कल्पते ॥ ४१ ॥

अथ भक्तिलक्षणान्येव पूजाविधानानि वक्तुं तदधिष्ठानान्याह । सूर्य इति । हे भद्र ! सूर्यादीनि सर्वभूतान्तानि एकादश मम पूजापदानि ॥ ४२ ॥

तत्रोद्देशक्रमेण पूजाप्रकारानाह । सूर्ये त्विर्त्यादिना । त्रय्या विद्यया आसत्येनेत्यादिभिर्मन्त्रैरग्नावाहवनीयादौ तान्त्रिके च हविषा चरुपुरोडाशाज्यादिरूपेण मां यजेतेति सम्बन्धः विप्राग्र्ये ब्राह्मणश्रेष्ठे आतिथ्येन विप्राग्नौ इति पाठे विप्रशरीरान्तर्गतजाठराग्नौ भद्र हे उद्धव ! गोषु यवसादिभिः यवसं तृणमादिशब्देन पिण्याककादिसंग्रहो ज्ञेयः ॥ ४३ ॥

वैष्णवे विष्णोर्भक्ते बन्धुसत्कृतिर्बन्धोरिव सत्कारस्तथा आकाशे पूजा नाम हृदयाकाशान्तरे ध्यानमित्याह । हृदि खे ध्याननिष्ठयेति यजेत मामित्युत्तरत्र सम्बन्धः मुख्यधिया मुख्यप्राणधिया तोये तु तोयपुरस्कृतैस्तिलादिभिरित्यर्थः । द्रव्यैर्गन्धपुष्पदूर्वादिभिः ॥ ४४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अर्चा प्रतिमा उद्यमः करणादौ प्रयत्नः उद्यानोपवनादिकर्मण्युद्यमो वा सद्मनि सम्मार्जनोपलेपाद्युद्यमो वा ॥ ३८ ॥

मह्यं मम च गृहशुश्रूषणं तदमायया सेकमण्डलवर्तनैः एकेन मुख्येन मण्डलेन सहितैः मण्डलान्तरमण्डलकरणैः कर्तव्यमिति शेषः सेकमण्डलवर्तनैरिति केचित्पठन्ति चन्दनादिजलप्रोक्षणं सेकः मण्डलमलङ्कारः वर्तनं प्रदक्षिणवर्तनं विशेषजीवनं प्राक् वर्तनं गमनं स्थिति च ॥ ३९ ॥

मे निवेदितं दीपावलोकं नोपयुञ्ज्यात् स्वप्रयोजनाय न स्वीकुर्यात् ॥ ४० ॥

हविराद्यर्पणे सुखोपायमाह । यद्यदिति । आनन्त्याय अनश्वरफलाय मोक्षायेत्यर्थः । अनन्तं वैष्णवं कृतमिति स्मृतेः ॥ ४१ ॥

अधिकारिणां योग्यतया अनेकनिधत्वेन फलविशेषाय मदर्चनाधिष्ठानं चोपदिशामीत्याह । सूर्य इति । हे भद्र ॥ ४२ ॥

तत्तत्साधनं चार्चनार्थमाह । सूर्ये त्विति । गोष्ठे स्थिता गा यवसादिना पूजयेदिति शेषः ॥ ४३ ॥

बन्धुजामाताऽयमिति सत्कृत्या सत्कारेण हृदि खे हृदयाकाशे ध्याननिष्ठया उत्कृष्टध्यानेन वायौ मुख्यप्राणे मुख्यधिया सर्वदेवोत्तमो वायुरिति ज्ञानेन तदुक्तम्—

> सर्वदेवोत्तमो वायुरिति ज्ञानाच्चापरम् ।
> प्रियमस्ति हरेः किञ्चित्तथा वायोर्हरेर्विदः ।
> इति हरेरुत्तमत्वविदः वायोरप्येवं कृतः ।
> भारतीवायुलक्ष्मीनामात्मनश्च यथाक्रमम् ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

आधिक्यज्ञानतो विष्णुः सर्वतः संप्रसीदतीति ।

वचनात् वायुर्भीमो भीमनादो महौजाः इत्यनेनापि हेतुपूर्वकत्वेन वायोः सर्वदेवोत्तमत्वमुक्तं एवार्थः तस्माद्वायुरेव व्यष्टिकोपु: समष्टिरयं पुनः मृत्युं जयति च एवं वेदेत्यनेन वायुज्ञानस्यापमृत्युं जयत्वोक्तेश्च-

पञ्चभूतमनोबुद्धिरुद्राणां प्रतिदेहकम् ।

वायुतश्चापि नेतृत्वाद्वायुर्व्यष्टिः समष्टिक इति ॥

वचनेन वायोर्व्यष्टिं समष्टिं च सम्यक् ज्ञात्वा मनो युञ्ज्यात् द्रव्यैः पुष्पैः ॥ ४४ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

दासवदिति यथा लौकिको दासः स द्वेष्यस्यप्यदापि तथैव कर्तव्यमित्यर्थः । अमायया चलाचित्तवित्तशाठ्यादिकं विना ॥ ३९ ॥

अदाम्भिकत्वं लोकेषु मिथ्याभक्तिख्यापनराहित्यं नोपयुञ्ज्यात् स्वार्थे न व्यवहरेत् अन्यैः तत्र साधारणं कल्याद्यनिजं पथि कादिपूज्यमानमद्वारायदेवालयादावधिकार्यभावात् स्थावरं कालान्तरस्थायि भगवदुपयोगयोग्यत्वात् यथा दीपावलोकः रामो लोभः भक्त्या तु प्राह्यमेवेति असाधारणमस्थावरं चेत् तत्राप्यधिकारिच्छायां सत्यां स्वाधिकृतत्वे सति चेति भावः ॥ ४० ॥

यद्यदिति । चकारान्मम प्रियं च ॥ ४१ ॥

तत्रनित्यमेव संबध्यमाना ये सूर्यादयस्तेऽपि बहिर्दृष्टयो न संबध्याः किन्तु मदधिष्ठानदृष्ट्यैवेत्युपदिशन् तत्र तत्र योग्यानुपासनाविशेषानप्युपदिशति ॥ सूर्ये इत्यादिभिः व्याख्या टीकावत् ॥ ४२ ॥

किंवा सूर्ये इति युग्मकं सूर्यान्तर्यामितोपस्थाने अभीप्सितव्येत्यर्थः । यथातिथौ क्रियते तथैवाहरहश्च गृहागते विप्राग्न्ये कर्तव्यमित्यर्थः । विप्राग्न्यं तु भागवतशास्त्राद्विशेषार्थे विप्राद् द्विषड्गुणयुतादित्यादेः अन्यत्रादरमात्रं कार्यमिति ज्ञेयं वैष्णव इति विप्रत्वादिरहितेऽपि तत्सामान्येऽपि ननु पूर्ववदृष्ट्यभावेनेत्यर्थः वायोरेतत्सर्वजीवनहेतुत्वं तत्तु तदन्तर्यामिशक्त्येति भावनेत्यर्थः । खादिषु भूतेषु तेजसोऽनुक्तिः सूर्याग्निभ्यां चरितार्थत्वात् ॥ ४३ ॥ ४४ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

सर्वेषु वार्षिकेषु वत्सरसम्बन्धिषु पर्वसु फाल्गुनपूर्णिमादिषु या दोलादियात्रास्तासु वलिविधानं विविधवस्त्रालंकारमिष्टान्नस्रक्चन्दनपुष्पादिपूजोपहारकरणं व्रतान्येकादश्यादीनि ॥ ३७ ॥

अर्चा प्रतिमा उद्यानादिकरणे सामर्थ्ये सति स्वत एव असति अन्यैः सम्भूयाप्युद्यमः आक्रीडं क्रीडास्थानं पुरं चक्रवेष्टनम् ॥ ३८ ॥

सम्मार्जनं तृणधूल्याद्यपसारणं प्रथमं गोमयमृज्जलैरुपलेपो द्वितीयः स्थले शुष्के सति सेकः पुष्पोदकैस्तृतीयः मण्डलवर्तनं सर्वतोभद्रादिनिर्माणं चतुर्थं तैरेवं मम गृहस्य शुश्रूषणं सेवा दासवत् लौकिकेन राजकीयदासेन राज्ञो गृहस्य यथा यद्यप्यदापि तदापि तथेत्यर्थः । अमायया वञ्चितचित्तशाठ्यराहित्येन ॥ ३९ ॥

अमानित्वमनहंकारः अदाम्भिकत्वं लोके मिथ्याभक्तिख्यापनराहित्यं मे मह्यं निवेदितं दीपावलोकमपि नोपयुञ्ज्यात् मह्यं दत्तस्यान्नादेर्दीपस्य च स्वव्यवहारमात्रे उपयोगो न कर्तव्य इत्यर्थः किन्तु परमार्थसिद्ध्यर्थं वैष्णवेभ्यो दत्त्वा स्वयमुपभुञ्जीतेत्यर्थः

षड्भिर्मासोपवासैश्च यत्फलं परिकीर्तितम् ।

विष्णुनैवेद्यसिक्थेन पुण्यं तद्भुञ्जतां कलौ ।

हृदि रूपं मुखे नाम नैवेद्यमुदरे हरेः ।

पादोदकं च निर्माल्यं मस्तके यस्य सोऽच्युतः ॥

इत्यादिवचनेभ्यः ॥ ४० ॥

लोके शास्त्रे च यदिष्टतमं तन्मह्यं निवेदयेत् तेन दुर्गमअर्थ्यादीनि शास्त्रविहितान्यपि लोके इष्टतमत्वाभावात् तथा मद्यादीनि संकर्षणप्रियाण्यपि शास्त्रे इष्टतमत्वाभावाश्च निवेदयेदिति भावः । तत्रापि यच्च आत्मनः स्वस्यातिप्रियं तत्तु विशेषतो निवेदनीयमित्यर्थः ॥ ४१ ॥

त्वां कुत्र पूजयेदित्यपेक्षायामेकादश पूजाधिष्ठानान्याह । सूर्ये इति ॥ ४२ ॥

तत्र तत्राधिष्ठितं स्वेष्टदेवं केन प्रकारेण पूजयेदित्यपेक्षायामाह । सूर्ये इति त्रिभिः त्रय्या विद्यया सूक्तैरुपस्थाननमस्कारादिना यवसादिना तृणप्रदानकण्डूयादिभिः ॥ ४३ ॥

बन्धुसत्कृत्या स्वीयमन्याविश्वासाक्तिपूर्वकसम्मानेन हृदि खे स्वहृदयाकाशे ध्यानेन मुख्यधिया प्राणोऽयं मुख्य इति बुद्ध्या तोये द्रव्यैर्जलपुष्पतुलस्यादिभिः ॥ ४४ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यात्रासु रथयात्राप्रभृतिषु बलिविधानं पुष्पोपहारादिसमर्पणं तच्च सर्ववार्षिकेषु पर्वसु प्रतिवर्षं तत्तत्तिथिषु ॥ ३७ ॥

शक्तौ स्वतः अशक्तौ भागवतान्तरैः संभूयोद्यमः ॥ ३८ ॥

सेकः सुगन्धिजलैः प्रोक्षणं मण्डलानां सर्वतोभद्रादीनां वर्तनं स्थापनम् ॥ ३९ ॥

निवेदितमन्यस्मै समर्पितं दीपावलोकमपि मे नोपयुञ्ज्यात्

विष्णोर्निवेदितान्नेन यष्टव्यं देवतान्तरम् ।

पितृभ्यश्चैव तद्देयं तदानन्त्याय कल्पते ॥

पितृशेषं तु यो दद्याद्धरये परमात्मने ।

रेतोधाः पितरस्तस्य भवन्ति क्लेशभागिनः ॥

इत्यादिवचनेभ्यः ॥ ४० ॥ ४१ ॥

भक्तिसङ्ख्यनेनोपदिष्टानि स्वाधिष्ठानान्याह । सूर्ये इति हे भद्र ! "दानं मानसमेतं ज्ञानमगर्वं क्षमान्वितं शौर्यं सत्यं प्रियवाक् सहितं चत्वारि यत्र स चतुर्भद्रः" इति महाभारते चतुर्भद्रत्वचनात् पूजास्पदानि पूजाधिष्ठानानि ॥ ४२ ॥

त्रय्या विद्यया आसत्येत्यादिरूपया ॥ ४३ ॥

मुख्यधिया प्राणबुद्ध्या ॥ ४४ ॥

---

स्थण्डिले मन्त्रहृदयैर्भोगैरात्मानमात्मनि ।
क्षेत्रज्ञं सर्वभूतेषु समत्वेन यजेत माम् ॥ ४५ ॥
धिष्ण्येष्वेष्विति मद्रूपं शङ्खचक्रगदाम्बुजैः ।
युक्तं चतुर्भुजं शान्तं ध्यायन्नर्चेत्समाहितः ॥ ४६ ॥
इष्टापूर्तेन मामेवं यो यजेत समाहितः ।
लभते मयि सद्भक्तिं मत्स्मृतिः साधुसेवया ॥ ४७ ॥
प्रायेण भक्तियोगेन सत्सङ्गेन विनोद्धव ! ।
नोपायो विद्यते सध्र्यङ् प्रायणं हि सतामहम् ॥ ४८ ॥
अथैतत्परमं गुह्यं शृण्वतो यदुनन्दन ! ।
सुगोप्यमपि वक्ष्यामि त्वं मे भृत्यः सुहृत्सखा ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां
संहितायां वैयासिक्यामेकादशस्कन्धे
एकादशोऽध्यायः ॥ ११ ॥

भाषा टीका ।

संपूर्ण वार्षिक पर्वों में यात्रा बलिका विधान करना वैदिक पञ्च संस्कार पूर्वक अष्टाक्षर तथा तान्त्रिकद्वयमन्त्रादि ग्रहण पूर्वक दीक्षा लेना मेरे एकादशी जन्माष्टमी आदि व्रतों का धारण करना ॥ ३७ ॥

मेरी मूर्ति के स्थापन करने में श्रद्धा रखनी एकेला अथवा औरों के साथ मिलकर मंदिर का उद्यम करना बाग बगीचा पुष्प वाटिका ग्राम मंदिर करने में उद्यम करना ॥३८॥

मंदिर का मार्जन करना लीपना सेचन करना रंगवल्ली से मंडल बनाना निष्काम होकर दास की नाईं मेरे मंदिर का कार्य करना ॥ ३९ ॥

अभिमान नहीं करना दंभ नहीं करना किए हुये पुण्य का नहीं कहना दीपकादिक भी मेरे अर्पण करे पीछे उसमें अपना स्वार्थ नहीं रखना ॥ ४० ॥

जो जो वस्तु लोक में अत्यंत इष्ट होवे और अपने को अति प्रिय लगे परंतु शास्त्र में निषिद्ध न होवे तौ उस वस्तु का मेरे को अर्पण करै तो अनंत फल की प्राप्ति होवै ॥ ४१ ॥

हे भद्र ! उद्धवजी सूर्य अग्नि ब्राह्मण गऊ वैष्णव आकाश वायु जल पृथिवी आत्मा संपूर्ण प्राणि मात्र इतने सब मेरे निमित्त से पूजा करने के स्थान हैं ॥ ४२ ॥

हे उद्धवजी सूर्य में वेद मन्त्रों के द्वारा उपस्थान से पूजन करै अग्नि में हविष से मेरा पूजन करै उत्तम ब्राह्मण में आतिथ्य भोजनादिक से गऊन में घांस जल आदिक से ॥४३॥

वैष्णव में बंधु सरीखा पूर्ण सत्कार से हृदयाकाश में ध्यान करके वायु मे मुख्य प्राण की दृष्टि से जल में तर्पण पुष्पादिकों से मेरा पूजन करै ॥ ४४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

स्थण्डिले भुवि मन्त्रहृदयैः रहस्यमन्त्रन्यासैः ॥ ४५ ॥

सर्वाधिष्ठानेषु ध्येयमाह । धिष्ण्येष्विति । इत्यनेन मन्त्रप्रकारेण एषु धिष्ण्येषु ॥ ४६ ॥

उक्ताया भक्तेः फलमाह । इष्टापूर्तेति । सद्भक्तिं दृढां भक्तिम् अथवा भक्तेरन्तरङ्गसाधनमाह । इत्थं मत्स्मृतिः साधुसेवया भवति । यद्वा स्मृतिर्ज्ञानम् ततश्च दृढभक्तिमतः पुंसः साधुसेवया मज्ज्ञानं भवतीत्यर्थः ॥ ४७ ॥

ज्ञानभक्तिमार्गावुक्तौ तत्र ज्ञानमार्गादपि भक्तिमार्गः श्रेष्ठ इत्याह । प्रायेणेति । सत्सङ्गेन यो भक्तियोगस्तेन विनोपायः संसारतरणे न विद्यते सत्सङ्गेनेत्यत्र हेतुमाह । हि यस्मात्सतामहं प्रायणं प्रकृष्टमयनमाश्रयः अतः सत्सङ्गो मदन्तरङ्ग इत्यर्थः ॥४८॥

इदानीं सांख्ययोगादीनि साधनान्तरसव्यपेक्षाणि सव्यभिचाराणि च सत्सङ्गस्तु स्वतन्त्र एव समर्थः फलाव्यभिचारी चेति वर्णयितुमाह । अथेति । एतद्दश्यमाणं परमं गुह्यमतः शृण्वित्यर्थः ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
एकादशोऽध्यायः ॥ ११ ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

रहस्यमन्त्रन्यासैः ॐ हृदयाय नमः शिरसे स्वाहा शिखायै वषट् कवचाय हुमिति गोप्यमन्त्राणां पृथिव्यां स्थापनैः आत्मनि देहे स्वात्मानं त्वंपदार्थम् अयं ममात्मा तदधिष्ठानमिति बुद्ध्या भोगैर्यजेत क्षेत्रज्ञमन्तर्यामिरूपं मां सर्वभूतेषु सुखदुःखयोः समत्वदृष्ट्या यजेत ॥ ४५ ॥

सर्वाधिष्ठानेषु सूर्याद्येकादशसु अत्र सर्वत्र चतुर्भुजरूपध्याने सत्यपि पूजाप्रकारस्य द्वैविध्यं गवादिषु तु मन्दिरस्थापादिना यथा तदधिष्ठातृप्रतिमायाः परिचर्या स्यात्तथैव ग्रासादिना परिचर्या हृदयाकाशजलादौ तु साक्षात्तदधिष्ठातुरेवोपासनेति सवसादेरभक्ष्यत्वेन चतुर्भुजसम्प्रदानकत्वाऽसम्भवात् ॥ ४६ ॥

उक्तायाः साधनरूपायाः भक्तेः फलं प्रेमलक्षणां भक्तिम् अत्रेष्टशब्देन सप्तसंस्थोक्तानि अग्निहोत्रदर्शपौर्णमासचातुर्मास्यपशुयागवैश्वदेवबलिहरणान्युच्यन्ते पूर्तशब्देन सुरालयारामकूपवापीतडागप्रपान्नसत्राण्युच्यन्ते तत्राग्निहोत्रादीनां भक्तौ प्रवेशोऽन्तर्यामिरूपभगवदधिष्ठानत्वेनाग्न्यादिसन्तर्पणाय कूपारामादीनाञ्च तत्परिचर्यार्थं क्रियमाणत्वात् तत्र प्रवेशः अस्याः दृढायाः अन्तरङ्गसाधनं मुख्याङ्गं सत्सङ्गः मत्स्मृतिः दृढा भक्तिः एकाङ्गरूपायाः स्मृतेः भावद्भक्तिसाधकत्वं सार्वत्रिकमतो यद्वेति ज्ञानमत्र साक्षात्कारः ॥ ४७ ॥

तत्र मार्गद्वयमध्ये प्राप्नोतीति वितर्कं कृत्वा सर्वत्र साधारण्येनेति भक्तियोगस्य विशेषणम् ॥ ४८ ॥

साङ्ख्ययोगादीनीत्यादिना धर्मादीनां परिग्रहः तत्र साङ्ख्यं वैराग्यादिसापेक्षं योगः समाधिर्यमाद्यपेक्षः धर्मादीन्यपि जनस्वेच्छापेक्षाणि सव्यभिचारीणि भक्त्यभावे फलव्यभिचारवन्ति च स्वतन्त्रः वैराग्याद्यनपेक्ष एव साध्यं जनयितुं समर्थः फले भगवत्प्रसादलक्षणेऽव्यभिचारी च अथ अत एव परमं गुह्यम् यतो गुह्यत्वात् कृष्णसुहृत् व्रजसन्देशप्रापणलक्षणाहितकर्मा सखा यन्त्रणाशून्यमित्रस्त्विमान् ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीराधारमणदासगोस्वामिकृतदीपिकादीपने टिप्पणे
एकादशोऽध्यायः ॥ ११ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

भोगैरात्मानमात्मनीति व्रतं विना नात्मा क्लेशयितव्य इत्यर्थः । समत्वं रागद्वेषराहित्यम् ॥ ४५ ॥

एषु सूर्यादिषु धिष्ण्येषु स्थानेषु ध्यायन्नर्चेदित्यन्वयः ॥ ४६–४८ ॥

गुह्यं श्रोतव्यार्थः ॥ ४९ ॥

इति श्रीमद्भागवतव्याख्याने एकादशस्कन्धीये
श्रीसुदर्शनसूरिकृतशुकपक्षीये
एकादशोऽध्यायः ॥ ११ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

धूपात्मकस्य भूषाशब्देन यक्षाब्जादिमण्डलस्कृतो देशो विवक्षितः तदाह । स्थण्डिल इति । मन्त्रहृदयैर्मूलमन्त्रहृदयाद्यङ्गमन्त्रन्यासैरात्मनि स्वाभिन्नात्मानं मां भोगैः शास्त्राविरुद्धकामैर्यजेत व्रतं विना नात्मा क्लेशयितव्य इत्यर्थः । सर्वभूतेषु देवमनुष्यादिशरीरेषु क्षेत्रज्ञं जीवशरीरकं मां समत्वेन रागद्वेषादिराहित्येन यजेत ॥ ४५ ॥

एतेषु सूर्यादिषु धिष्ण्येषु स्थानेष्वपि मद्रूपमेव ध्यायन्समाहितोऽवहितचित्तः समर्चेत् ॥ ४६ ॥

किञ्च इष्टं वैदिकं कर्म पूर्तं स्मार्तं तयोः समाहारस्तेन यः समाहितो मामेव यजेत सोऽपि मल्लिङ्गादिदर्शनादिकादिव मयि सद्भक्तिं प्रेमात्मिकामविच्छिन्नां भक्तिं लभते उक्तसर्वलक्षणोपकृता सद्भक्तिः साधुसेवाफलमेवेत्युपसंहरति । मत्स्मृतिः साधुसेवयेति । मत्स्मृतिर्भक्तिः सत्सङ्गमूलैव ॥ ४७ ॥

न ततोऽन्यः कश्चिन्मत्प्राप्त्युपायो विद्यते इत्याह । प्रायेणेति । हे उद्धव ! सत्सङ्गलब्धेन भक्तियोगेन विना समीचीनो मत्प्राप्त्युपायो न विद्यते प्रायेणेत्यनेन क्वचिन्न्यासयोगस्यापि उपायत्वं सत्सङ्गलब्धत्वं च विवक्षितं सत्सङ्गेनत्यत्र हेतुमाह । हि यस्मादहं सतां प्रायणम् उपाय उपेयश्च इष्यते इत्ययनं यस्यानेनेत्ययनमिति व्युत्पत्तिद्वयस्य विवक्षितत्वादुपायोपेयभावेनाश्रितोऽहं तदधीनः सत्सङ्गादेव मद्वशीकार इति भावः ॥ ४८ ॥

अथेत्थं निरूपितबहुङ्गभक्तियोगस्य दुष्करत्वाभिप्रायमाहस्य प्रायणमित्यनेन सूचितं स्ववशीकरणोपायं न्यासयोगं विवक्षुः तस्य परमगोप्यत्वमधिकारिविशेषविषयोपदेश्यत्वं च स्थापयन् शुश्रूषामुत्पादयंश्च तत्कथनं प्रतिजानीते । अथैतदिति । सुगोप्यस्याप्युक्तौ हेतुतयोपात्तं भृत्यः सुहृत्सखेति विशेषणत्रयम् ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
एकादशोऽध्यायः ॥ ११ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मन्त्रहृदयैर्नमोऽन्तैर्मन्त्रैः आत्मनि स्वशरीरे मनसि वा आत्मानमन्तर्यामिणं क्षेत्रज्ञं जीवान्तर्यामिणं सर्वभूतेषु समत्वेन एकप्रकारेण विकारमन्तरेण स्थितं भोगैः स्रग्गन्धादिभिः भोगो राध्ये धने सौख्ये इति आत्मशब्देनात्र जीवः किं न स्यात्तस्य पूजनस्य तन्त्रेषु विहितत्वात् क्षेत्रज्ञः पुरुषो ह्यात्मा संसारी चेतनो मत इत्यभिधानाच्चेति चेन्न—

"आत्मनिष्ठो हरिः पूज्य आत्मनामाशनादिकैः ।
तत्सम्बन्धादात्मशब्दो जीवस्याप्युपचारत इति ॥

वचनादात्मा मुख्यो हरिरेवेति ज्ञायते तत्र विधानस्य हरेरधिष्ठानत्वेन पीठत्वेनलक्षणचर्चनोपपत्त्या सावकाशत्वात् ॥ ४५ ॥

एतेष्वधिष्ठानेषु ध्यानप्रकारमाह । धिष्ण्येष्विति । धिष्ण्येषु स्थानेषु ॥ ४६ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

पूजाफलमाह । इष्टेति ॥ ४७ ॥

प्रायेणेत्यत्रोत्तरार्थं साकल्येन यथार्थज्ञानेन सतां प्रकर्षेणायनमाश्रयः ॥ ४८ ॥

उत्तराध्याये वक्ष्यमाणार्थप्राशस्त्यं कथयति । अथेति । वक्तव्ये हेतुमाह । भृत्य इति । ज्ञानेन भर्तुं योग्यः सुपूजित इत्यनो यद्वा सुहृत् आपदि हितकर्तृत्वात्सखा ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
एकादशोऽध्यायः ॥ ११ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अयं ममात्मा तदधिष्ठानमिति बुद्ध्या योगैरित्यादिक्षेत्रज्ञमन्तर्यामिरूपं मां समत्वेन सुखदुःखयोः द्वयोः समत्वदृष्ट्या ॥ ४५ ॥

धिष्ण्येष्विति अत्र सर्वत्र चतुर्भुजस्यैवानुसंधाने सत्यपि त्रिधा गतिः एकाधिष्ठानपरिचर्ययैवाधिष्ठातुरुपासनालक्षणा मन्दिरोपलेपनादिना तदधिष्ठातृप्रतिष्ठाया इव यथा वैष्णवे बन्धुवत्सला गोस्वक्रजवत्सादिनस्यादि यतो बन्धुसत्कारो वैष्णवविषयकः ईश्वरे तु प्रभुभाव उपदिश्यते ईश्वरे तदधीनेष्वित्यादौ तथा गोसम्प्रदानकमेव यवसादिभोजनदानं प्रयुज्यते न तु श्रीचतुर्भुजसम्प्रदानकम् असम्भवत्वात् यद्यदिष्टतमं लोक इत्यादिपूर्वमुक्तम् अथान्या तु साक्षादधिष्ठातुरुपासनालक्षणा यथा हृदि खे ध्याननिष्ठया तोये द्रव्यैस्तोयपुरस्कृतैरित्यादि अत्राग्न्यादौ तदन्तर्यामिरूपस्यैव चिन्तनं कार्यं न जातु निजप्रेमसेवाविशेषाश्रयस्य श्रीमूर्तिविशेषस्य स तु सर्वथा परमसुकुमारत्वादिबुद्धिजनितया प्रीत्यैव सेवनीयः यथोक्तं श्रीभगवतैव वस्त्रोपवीताभरणेत्यादि तेषां तथा भक्तिरीत्या परमेश्वरस्यापि तथा बुद्धिः श्रूयते यथा नारदीये ।

> भक्तिग्राह्यो हृषीकेशो न धनैर्धर्मजासुर ।
> भक्त्या संपूजितो विष्णुः प्रददाति समीहितम् ॥
> जलेनापि जगन्नाथः पूजितः क्लेशहा हरिः ।
> परितोषं व्रजत्याशु तृषार्तः सुजलैर्यथेति ॥

अत्रैव दृष्टान्त उपजीव्यः वैपरीत्ये दोषश्च यथा ग्रीष्मे जलस्थपूजा प्रशस्ता वर्षासु निन्दिता यदुक्तं गारुडे ।

> शुचिशुक्रगते काले येऽर्चयिष्यन्ति केशवम् ।
> जलस्थं विविधैः पुष्पैर्मुच्यन्ते यमयातनात् ॥
> घनागमे प्रकुर्वन्ति जलस्थं ये जनार्दनम् ।
> ते जना नृपतिश्रेष्ठ ! तेषां वै नरकं ध्रुवमिति ॥

एवमन्यत्रापि परिचर्याविधौ तत्तद्देशकालसुखदानि वस्तूनि विहितानि तद्विपरीतानि निषिद्धानि च विष्णुधर्मे विष्णोः सर्वर्तुचर्या चेति अत उक्तं यदिष्टतममिति तथा तत्र तत्रेष्टमन्त्रध्यानस्थानं च सर्वर्तुसुखमयमनोहररूपरसगन्धस्पर्शशब्दमयत्वेनैव ध्यातुं विहितमस्ति अन्यथा तत्तद्विधिवैयर्थ्यं स्यात्तस्मादग्न्यादौ तदन्तर्यामिरूप एव भाव्य इति स्थितम् ॥ ४६ ॥

इष्टापूर्तेनेति । अत्रेष्टशब्देन सप्तमस्कन्धोक्तरीत्याग्निहोत्रदर्शपौर्णमासचातुर्मास्ययागपशुयागवैश्वदेवबलिहरणान्युच्यन्ते पूर्तशब्देन सुरालयारामकूपवापीतडागप्रपान्नसत्राद्युच्यन्ते एवमुक्तप्रकारेणेष्टापूर्तेन यो मां यजेत स मत्स्मृतिलक्षणां साधुसेवया सतां प्रसङ्गेन सद्भक्तिम् अन्तरङ्गभक्तिनिष्ठां प्राप्नोतीत्यर्थः । तत्राग्निहोत्रादीनां भक्तौ प्रवेशोऽन्तर्यामिरूपभगवदधिष्ठानत्वेनान्यादिसंतर्पणात् कूपारामादीनां च तत्परिचर्यार्थक्रियमाणत्वात्तत्र प्रवेशः ॥ ४७ ॥

प्रायेणेति वितर्के यद्वा सर्वत्र साधारण्येन भक्तियोगेन विना उपायो न विद्यते तल्लक्षणश्चोपायः सत्सङ्गेन विना न विद्यत इत्येवार्थः तत्र हेतुः प्रायणम् ॥ ४८ ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
एकादशोऽध्यायः ॥ ११ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

स्थण्डिले प्रसिद्धसंस्कृतायां भुवि मन्त्रहृदयैः रहस्यमन्त्रन्यासैः आत्मनि देहे आत्मानं जीवं योगैरयं ममात्मापि मदधिष्ठानमिति बुद्ध्यैव इत्येभिर्योगैरेतु योगेन सर्वभूतेषु क्षेत्रज्ञमन्तर्यामिणं यजेत ॥ ४५ ॥

इत्येषु इत्यनेन प्रकारेण एषु धिष्ण्येषु चतुर्भुजामिति प्राधिकत्वेनोक्तं वस्तुतः श्रीरामाद्युपासका अपि स्वस्वमन्त्रध्येयं स्वरूपमेव ॥ ४६ ॥

इष्टापूर्तेनेति इष्टं हविषाग्नौ यजेत मामित्युपलक्षितं पूजादिकं पूर्तम् उद्यानोपवनेत्याद्युक्तं तेन सद्भक्तिं सतीमुत्तमां प्रेमलक्षणां मत्स्मृतिः मत्कर्तृका स्मृतिः साधुसेवयेति यस्तु साधूनाधिकृत्य सेवते तं स्वयं सदा स्मरामीत्यर्थः ॥ ४७ ॥

ज्ञानभक्तिमार्गावुक्तौ वस्तुतस्तु संसारतरणायुपायवस्तुना भक्तिरेवोपाय इत्याह । प्रायेणेति वितर्के इति सन्दर्भः यद्वा सत्सङ्गेन हेतुनैव यः प्रायेण भक्तियोगस्तेन विना नोपायो विद्यते प्रधानभूता केवला चेति द्विविधा भक्तिः साधुसङ्गेनैव भवेदिति व्याख्यातमेव । यच्च मोक्षसाधकं भक्तिमिश्रं ज्ञानं तत्र गुणभूता भक्तिर्या सा तु साधुसङ्गं विनापि भवेदित्यतोऽत्र प्रायग्रहणं तस्या भक्तेः तज्ज्ञानमेव कारणं यथा कर्षकस्य कर्षणादिना पृथ्वीश्वरोपासनं तस्य कारणं कृषिरेव अन्यथा तस्या वैफल्यादिति प्रथमस्कन्ध एव व्याख्यातम् एवं च यत्कर्मभिर्यत्तपसेत्यादिभगवदुक्तेर्ज्ञानादिकं विनापि भक्तिः सर्वफलदात्री भक्त्या तु विना ज्ञानादिकं न मोक्षादिसाधकमिति तत्र तत्रापि भक्तिरेव तत्तत्फलदायिनी व्याख्येयेत्यतोऽन्य उपायोऽजागलस्तनन्यायेनैवेति केचिदाहुस्तत्रैवं भगवदुक्तिरपि प्रमाणम् —

> तापत्रयेणाभिहतस्य घोरे संतप्यमानस्य भवाध्वनीश ।
> पश्यामि नान्यच्छरणं तवाङ्घ्रिद्वन्द्वातपत्रादमृताभिवर्षात् ॥

इत्युद्धवोक्तिरपि संसारसिन्धुमतिदुस्तरमुत्तितीर्षोर्नान्यः प्लवो भगवतः पुरुषोत्तमस्य । लीलाकथारसनिषेवणमन्तरेण पुंसो भवेद्विविधदुःखदवार्दितस्येति शुकोक्तिरपि—

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

किंवा योगेन सांख्येन न्यासस्वाध्याययोरपि।
किंवा श्रेयोभिरन्यैश्च न यत्रात्मप्रदो हरिः॥

इति नारदोक्तिरपि सम्यक् प्रापणं सम्यक् प्रकृष्टमाश्रयः॥ ४८॥

ब्रूयुः स्निग्धस्य शिष्यस्य गुरवो गुह्यमप्युतेति स्मृते-स्तुभ्यमहमनन्यप्रकाश्यमपि वस्तु वक्ष्यामीत्याह। अथैतादिति। सांख्ययोगादीनि साधनान्तरसव्यपेक्षाणि सव्यभिचारीणि च सत्सङ्गस्तु स्वतन्त्र एव समर्थः फलाव्यभिचारी चेति स्वामिचरणाः॥ ४९॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्।
एकादशे सङ्गतोऽत्रैकादशः सङ्गतः सताम्॥ ११॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

स्थण्डिले भुवि मन्त्रहृदयैः रहस्यमन्त्रन्यासैः तत्प्रकारः गोपालतापन्यादिव्याख्यानादौ द्रष्टव्यः॥ ४५॥

एतेषु सूर्यादिषु चतुर्भुजमित्युपलक्षणम्—

द्विभुजं ज्ञानमुद्राढ्यं वनमालिनमीश्वरम्।
दिव्यालङ्करणोपेतं रत्नपङ्कजमाश्रितम्॥
गोपगोपीगवावीतं सुरद्रुमलताश्रितम्।
चिन्तयेच्चेतसा कृष्णं मुक्तो भवति संसृतेरिति॥

श्रुत्युक्तस्य द्विभुजस्यापि॥ ४६॥

इष्टापूर्तेन कर्मणा यो मामेव यजेत् तस्य साधुसेवया मत्स्मृतिमद्विषयकं ज्ञानं ततः स मयि भक्तिं लभते इत्यन्वयः॥४७॥

हे उद्धव! प्रायः सत्सङ्गेन लभ्यो यो भक्तियोगस्तेन विनोपायः मत्प्राप्त्युपायो न विद्यते यतः सतां प्रायणं प्रकृष्टमयनमाश्रयोऽहमेव सत्सङ्गादपि कस्यचित् मद्भक्तिर्न भवतीति भक्तेर्दौर्लभ्यसूचनाय प्रायोक्तिः॥ ४८॥

एतद्वक्ष्यमाणं सत्सङ्गप्रभावं परमं गुह्यं वक्ष्यामि त्वं मे सुहृत्सखापि सन् भृत्यः अतः शृणु॥ ४९॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
एकादशाध्यायार्थप्रकाशः॥ ११॥

भाषा टीका।

पृथिवी की वेदी पर मन्त्रोंके न्यासों से उत्तम सात्विक प्रिय भोगादि कों से आत्मा में सम्पूर्ण भूतों में क्षेत्रज्ञ रूप परमेश्वर जान कर सम दृष्टि से मेरा यजन करे॥ ४५॥

इन सब स्थानों में शंख चक्र गदा पद्म धारण किये हुये चार भुजा वाले शांत मेरे स्वरूप को ध्यान करके सावधान होकर अर्चन करे॥ ४६॥

इस प्रकार से यज्ञादिकों से या मंदिर प्रतिष्ठादिक से जो सावधान चित्त होकर मेरा यजन करता है वह मेरे विषै उत्तम भक्ति को प्राप्त होता है और यदि इसी प्रकार साधु सेवा भी करे तो उसको सदा काल मेरा स्मरण बना रहता है॥ ४७॥

हे उद्धव! प्राय करके भक्ति योग के बिना सत्पुरुषों के संग बिना मुक्ति का उत्तम सहज उपाय दूसरा नहीं है क्योंकि सत्पुरुषों का तो केव मैं ही आश्रय हूं॥ ४८॥

हे यदुनंदन! तुम श्रद्धा से सुनते हो तिस से अब मैं एक परम गुप्त बात भी कहता हूं क्योंकि तुम हमारे भृत्य भी हो सुहृत भी हो सखा भी हो ऐसा न होता तो नहीं कहते॥ ४९॥

इति श्रीमद्भागवत एकादशस्कन्ध में एकादशाध्याय
भाषा टीका समाप्ता॥ ११॥

---

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे एकादशोऽध्यायः॥ ११॥

—:*:—

## अथ द्वादशोऽध्यायः ।

---*---

श्रीभगवानुवाच ।

न रोधयति मां योगो न साङ्ख्यं धर्म एव च ।
न स्वाध्यायस्तपस्त्यागो नेष्टापूर्तं न दक्षिणा ॥ १ ॥
व्रतानि यज्ञश्छन्दांसि तीर्थानि नियमा यमाः ।
यथाऽवरुन्धे सत्सङ्गः सर्वसङ्गापहो हि माम् ॥ २ ॥
सत्सङ्गेन हि दैतेया यातुधाना मृगाः खगाः ।
गन्धर्वाप्सरसो नागाः सिद्धाश्चारणगुह्यकाः ॥ ३ ॥
विद्याधरा मनुष्येषु वैश्याः शूद्राः स्त्रियोऽन्त्यजाः ।
रजस्तमःप्रकृतयस्तस्मिंस्तस्मिन् युगेऽनघ ! ॥ ४ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

द्वादशे साधुसङ्गस्य महिमा वर्णितः पुरा ।
कर्मानुष्ठानतत्त्यागव्यवस्था च ततः परम् ॥

न रोधयति न वशीकरोति योग आसनप्राणायामादिः साङ्ख्यं तत्त्वानां विवेकः धर्मः सामान्यतोऽहिंसादिः स्वाध्यायो वेदजपः तपः कृच्छ्रादि त्यागः संन्यासः इष्टापूर्तमिष्टं च पूर्तं च तत्रेष्टमग्निहोत्रादि पूर्तं कूपारामादिनिर्माणम् दक्षिणाशब्देन सामान्यतो दानं वक्ष्यते ॥ १ ॥

व्रतानि एकादश्युपवासादीनि यज्ञो देवपूजा, छन्दांसि रहस्यमन्त्राः अवरुन्धे वशीकरोति ॥२॥

यातुधाना राक्षसाः ॥ ३—४ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

ततः परं साधुसङ्गमहिमावर्णनानन्तरम् ॥ ० ॥

न रोधयतीति युग्मकं यथा सत्सङ्गो मां वशीकरोति तथा योगादयो नेत्युक्त्वा तेऽपि किञ्चिद्वशीकुर्वन्तीत्यायातं तथाच भक्तिमिश्रा एव ते ज्ञेयाः न साधारणाः अतएव व्रतान्येका-दश्यादीनीति टीकाकृद्भिर्व्याख्यातं नचैतावता नित्यव्रतानाम-कर्तव्यत्वप्रसङ्ग इति वाच्यम् एकस्य फलाधिक्यप्रशंसयान्यस्य नित्यत्वनिराकरणायोगात् कर्माधिकारिणः विप्रमुखकृतप्रसङ्ग-वाग्निहोत्राऽपरित्यागवत् भक्त्यधिकारिणश्च भक्तपूजाद्यधिकत्व-श्रवणात् हर्यर्चनाऽपरित्यागवच्च तत्त्यागायोगाच्च अन्यथा वैष्णवो यदि भुञ्जीत एकादश्यां प्रमादतः । विष्णुवचनं वृथा तस्य नरकं घोरमाप्नुयादिति गौतमीयादि वचनव्याकोपः स्यात् ॥ १ ॥ २ ॥

सत्सङ्गेनेति सार्द्धयुग्मकम् ॥ ३ ॥ ४ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

न रोधयति इदित्थं न करोति न वशीकरोतीति यावत् ॥१-४॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इत्थं बह्वङ्गके बहुवयःकालादिसाध्ये दुष्करे भक्तियोगे उपदिष्टे तत्साध्यतल्लिप्साऽशक्तिभ्यामाविलमानसमुद्धवमालक्ष्य सुकरोपायमात्मनिःक्षेपापरपर्यायं न्यासयोगात्मकं बलीयांसं विव-क्षुस्तावत्तस्यानितरोपायसाध्यसाधनत्वस्थापनाय कैमुत्यनयेन तदु-पायनिष्ठसत्सङ्गस्यैवानितरसाध्यसाधनतामाह । नेति । मां न रोधयति न ह्वदित्थं करोति न वशीकरोतीति यावत् । योगः वर्णाश्रमोचितकर्मयोगः प्राणायामयोगो वा सांख्यं प्रकृतिवि-विक्तात्मोपासनं धर्मः अहिंसादिरूपः स्वाध्यायो वेदाध्ययनं तपो ऽनशनादि इष्टं यागादि वैदिकं कर्म पूर्तं स्मार्तं तयोः समा-हारः त्यागः सामान्यतो दानं दक्षिणा ऋत्विग्भ्यो गुरवे वा दानम् ॥ १ ॥

व्रतान्येकादश्युपवासादीनि यज्ञाः पञ्च महायज्ञाः छन्दांसि रहस्यमन्त्राः तीर्थानि गङ्गादीनि नियमाः शौचाचमनादयः । यमाः बाह्याभ्यन्तरेन्द्रियनियमनोपायाः यथा सत्सङ्गो मामवरुन्धे

## श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

वशीकरोति तथैते मां नावरुन्धते कुतः हि यस्मात्सत्सङ्गः सर्वसङ्गापहः मनसः सर्वेषु मद्व्यतिरिक्तेषु सङ्गमपहन्तीति तथा मनसः सर्वसङ्गापहारेण मदेकसङ्गावहः योगादयस्तु नैवं विधा इति भावः ॥ २ ॥

यद्यपि योगसांख्यादीनां चित्तनैर्मल्यैकाग्र्यापादनद्वारा भक्तियोगोत्पादनेन तद्द्वारा भगवद्वशीकारकारणत्ववत्सत्सङ्गस्यापि गुरूपसत्त्यापादनादिप्रणाड्यैव तद्वशीकारकारणत्वं न साक्षादिति न विशेषस्तथापि सतामात्मनां कथं चित्तस्वान्तिनां च स्वविद्यामाहात्म्यप्रसक्तपरमपुरुषसङ्कल्पेन मोचकत्वप्रतिपादनाय यथावरुन्धे सत्सङ्ग इत्युक्तं तदाह । सत्सङ्गेनेति । सतः सङ्गः सत्सङ्गः स च सन्निधानानिर्वहणतदभिमानविषयत्वप्रमत्वतद्दर्शनस्पर्शनादिविषयत्वादिरूपेण बहुविधः "नास्याब्रह्मवित्कुले भवती"ति श्रुतेः—

> यं यं स्पृशति पाणिभ्यां यं यं पश्यति चक्षुषा ।
> स्थावराण्यपि मुच्यन्ते किंपुनर्बान्धवा जनाः ॥

इत्यभियुक्तोक्तेश्च यातुधाना राक्षसाः नागा गजाः ॥ ३ ॥
रजस्तमःप्रकृतय इत्यनेनात्यन्तमोक्षोपायशून्यत्वमभिप्रेतम् ॥ ४ ॥

---

## श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

भगवद्गुणोत्कर्षज्ञानपूर्विका भक्तिरेव परमपुरुषार्थान्तरङ्गसाधनमिति समर्थयते तत्रादौ गुणोत्कर्षज्ञानानुरक्तयोगादीनां विवक्षितपुरुषार्थसाधनत्वं न भवतीत्याह । न रोधयतीति । योगो ध्यानं रोधयति वशीकरोति । त्यागो दानं यथा मयि सङ्गः गुणसम्प्रीतिभक्तिपूर्विका सर्वपूर्णगुणत्वमतिर्यथा मामवरुन्धे वशीकरोति तथा योगादयो न रोधयन्ति—

> सङ्गस्तु गुणसम्प्रीतिर्गुणवत्त्वेति निश्चयात् ।
> स वेद्दरौ भवेत्तेन मुच्यते नात्र संशयः ॥
> अपरोक्षदृशैर्हेतुर्भवेत्स स्वाद्यादि समः ।
> अन्यथा दुःखमागेव मद्दाभिर्मोक्षकारणमिति ॥

वचनमुक्त एवार्थः नतु सत्सङ्गमात्रम् ॥ १—२ ॥

भगवानुक्तमर्थं प्रपञ्चयति । सत्सङ्गेनेति । दैतेयाः प्रह्लादादयः बहवो मत्सङ्गेन मत्पदं प्राप्ताः रक्षाश्रूको वृत्रः अवान्तिकोऽद्भुतो भिक्षुः यातुधानाः इत्याद्युक्तं श्रृङ्गाग्रादिकतया द्रष्टव्यं विभीषणा इत्यादिषु पुनर्वचनं वणिक् तुलाधारः भवो नामा शूद्रः ते गोप्यादयो मामुपागता इत्यन्वयः ॥ ३—६ ॥

---

## श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अथ सर्वस्यैव भागवतचिह्नधारिमात्रस्य तु यथायोग्यं सेवाविधानं तत्र महाभागवतसेवा द्विविधा प्रसङ्गरूपा परिचर्यारूपा च अत्र प्रसङ्गरूपामाह । न रोधयतीति । पूर्वाध्यायान्ते मद्भक्तिः साधुसेवयेत्यनेन सत्सङ्गस्य सर्वापेक्षत्वमुक्तं अत्र तस्य स्वातन्त्र्येण यथेष्टफलदातृत्वं सर्वापेक्षया परमसामर्थ्यं च वक्तुं परमगुह्यत्वमुपदिष्टम् अपेतविद्याद्विना तदुक्तं परमगुह्यत्वमाह । न रोधयतीति युग्मकेन । अत्र तु इविषाम्नो यजेत मामित्यादौ अग्निहोत्राद्युपलक्षितं पूर्तमुद्यानोपवनाक्रीडत्वाद्युपलक्षितं ज्ञेयं ततश्च यथा सत्सङ्गो मामवरुन्धे वशीकरोति तथा योगो न साङ्ख्यमित्यादिकोऽन्वयः ततस्तेऽपि किञ्चिद्वशीकुर्वन्तीत्यर्थलब्धेर्भगवत्परा एव ज्ञेयाः न साधारणाः अतएव व्रतान्येकादश्यादीनीति टीकाकारः नचैतावता तेषां नित्यानां वैष्णवव्रतानामकर्तव्यत्वं प्राप्तम् एकस्य फलातिशयसामर्थ्यप्रशंसयेतरस्य नित्यत्वनिराकरणायोगात् तथा कर्माधिकारिणः नह्यग्निमुखतोऽयं वै भगवान् सर्वयज्ञभुक् इज्यते हविषा राजन् । यथा विप्रमुखे हुतैरिति श्रुत्वापि पूर्वोक्ताग्निहोत्रादिना यजेदित्यादि विधिं न परित्यक्तुं शक्नुवन्ति तद्वत् भक्त्यधिकारिणश्च यथा मद्भक्तपूजाऽभ्यधिकेति श्रुत्वापि दीक्षानन्तरं नित्यतया प्राप्तां भगवत्पूजां त्यक्तुं न शक्नुवन्ति तद्वदिति अत एव षड्भिर्मासोपवासैस्तु यत्फलं परिकीर्तितं विष्णोर्नैवेद्यसिक्थेन तत्फलं भुञ्जतां कलावित्यपि न बाधकम् एकादश्यादौ हि नित्यत्वेऽप्यानुषङ्गिकमेव महाफलदत्वं तत्र तत्र गतम् अतएव नित्यत्वकरणार्थमपि तादृशवैष्णवं व्रतमवश्यमेव कर्तव्यमित्यागतं नित्यं वैष्णवव्रतस्यादिकं एकादश्यादावर्चनप्रसङ्गे किञ्चिद्दर्शयिष्यामः अतः पूर्वाध्याये टीकाकारैरपि आज्ञायैव गुणान् दोषानित्यत्र विवेकाद्वशीकृत्यैकाद्यनुपवासादिवेदभागादयो ये भक्तिविरुद्धा धर्मास्तान् सन्त्यज्येत्यर्थ इत्युक्तं प्रथमे श्रीभीष्मयुधिष्ठिरसंवादे भगवद्धर्मानित्यत्र हरितोषणान् द्वादश्यादिनियमरूपानिति व्याख्यातं व्रतानि चेरे हरितोषणानीत्यत्र तृतीये एकादश्यादीनीति अतएव भगवन्महाप्रसादैकव्रतस्य श्रीमदम्बरीषस्य सच्छिरोमणेराचारदर्शनया तदेव निश्चीयते अतएव श्रीगौतमेनापि लिखितं स्वतन्त्रे लिखितं वैष्णवो यदि भुञ्जीत एकादश्यां प्रमादतः । विष्णवर्चनं वृथा तस्य नरकं घोरमाप्नुयादिति ॥ १ ॥ २ ॥

अथ प्रस्तुतमनुसरामः वशीकरणमत्र द्विविधं मुख्यं गौणञ्च तत्र मुख्येन प्रेम लभ्यते अन्यथेत्यङ्ग भजतां भगवान् मुकुन्दो मुक्तिं ददाति कर्हिचित् स्म न भक्तियोगमिति न्यायेन । अतएव गौणेनान्यत् फलं तत्र मुख्यं श्रीगोप्यादौ गौणं यागादौ केवल एव स्वीकरणं फलदानेऽपि वशीकरणात्वोपचर्यते तदेतद्वशीकरणे दृष्टान्तानाह । सत्सङ्गेनेत्यादि चतुर्भिः । तत्र सत्सङ्गेनेति सार्द्धयुग्मकं दैतेयाद्युपलक्षिताः असुरा दानवाश्च राक्षसजातिषु विरुद्धचेतनम् ॥ ३ ॥ ४ ॥

---

## श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

> द्वादशे साधुसंगस्य महिमोक्तो व्रजौकसाम् ।
> प्रेम्णः सर्वमहोत्कर्षः सूचितः संशयच्छिदा ॥

योगः आसनप्राणायामादिः सांख्यमात्मानात्मविवेकः धर्मोऽहिंसादिः स्वाध्यायो वेदपाठः तपः कृच्छ्रादि त्यागः संन्यासः इष्टापूर्तम् इष्टं च पूर्तं च तत्रेष्टमग्निहोत्रादि पूर्तं कूपारामादिनिर्माणं दक्षिणाशब्देन सामान्यतो दानं लक्ष्यते ॥ १ ॥

व्रतानि चातुर्मास्यादीनि यज्ञा देवपूजा छन्दांसि रहस्यमन्त्राः न रोधयतीति प्रत्येकेनान्वयादेकत्वं व्रतानीत्यादौ वचनविपरिणामेन न रोधयन्तीत्यर्थः । वशीकरणार्थकत्वात् योगादयो

बहवो मत्पदं प्राप्तास्त्वाष्ट्रकायाधवादयः ।
वृषपर्वा बलिर्बाणो मयश्चाथ विभीषणः ॥ ५ ॥
सुग्रीवो हनुमानृक्षो गजो गृध्रो वणिक्पथः ।
व्याधः कुब्जा व्रजे गोप्यो यज्ञपत्न्यस्तथापरे ॥ ६ ॥
तेनाधीतश्रुतिगणा नोपासितमहत्तमाः ।
अव्रतातप्ततपसः मत्सङ्गान्मामुपागताः ॥ ७ ॥
केवलेन हि भावेन गोप्यो गावो नगा मृगाः ।
येऽन्ये मूढधियो नागाः सिद्धा मामीयुरञ्जसा ॥ ८ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

न मद्वशीकारप्रयोजका इति तैरष्टमहाङ्गयोगिप्रभृतिभिर्न वशीकृतो न प्राप्तः स्यामिति फलितोऽर्थः । न साधयति मां योगो न सांख्यं धर्म उद्धव ! न स्वाध्यायस्तपस्त्यागो यथा भक्तिर्ममोर्जिता । भक्त्याहमेकया ग्राह्य इत्यभिमवाक्यैनैकार्थ्यात् योगादयो न मत्प्राप्त्युपाया इत्यतो नोपायो विद्यत इति पूर्वोक्तरेव दृढीकृता सत्संगो यथाऽवरुन्धे वशीकरोतीत्यत्यन्तप्रयोगेण भक्त्युत्पत्तेः पूर्वमपि स एव स्वयं मां वशीकुर्यात् किं पुनर्भक्तिजनयित्वेत्यर्थो लभ्यते । अत्र यथाशब्दस्तत्र च यथा शब्दो यथावद्विषये एव प्रयुक्तः । भक्त्याहमेकया ग्राह्य इत्यभिमवाक्ये एकयेति पदप्रयोगाद्विवेके योगादीनामपि भक्तिमिश्रत्वात् किञ्चिद्वशीकारत्वमस्त्येवेत्यतो यथाशब्दः सार्थक इत्यपरे प्राहुः सर्वसङ्गापहः सार्वत्रिकासक्तिनिरासक इति वशीकारे हेतुः ॥ ॥ २ ॥ वशीकरणमप्रगौणं मुख्यं च यथा सम्भवं धाराद्यौ श्रीगोप्यादौ च दर्शयति । सत्संगेनेति चतुर्भिः । सन्तः प्रधानीभूतभक्तिमन्तः केवलभक्तिमन्तश्च तत्र पूर्वेषां सङ्गिभिर्भगवद्वशीकारो गौणः उत्तरेषां तु मुख्य इति ज्ञेयं यातुधाना राक्षसाः ॥ ३ ॥ ४ ॥

दीनां फलभूतमवरुन्धे आत्मसात्करोति यतः सर्वेषूक्तेषु स्वाध्यायादिसाधनेषु यः सङ्गः मनोऽध्यासङ्गः तात्पर्यग्राहकत्वरूपो दोषस्तदपहः ॥ २ ॥
यातुधानाः राक्षसाः ॥ ३—४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

इदानीं साधुसङ्गस्य महिमा तदनन्तरं शरणागतिः शरणस्य सर्वात्मत्वं च वर्ण्यते । प्रतिज्ञामाह । नेत्यादिना । न रोधयति न हृदि स्थापयति स्वाध्यायादयः सिद्धान्तोक्तयोगिन एव । यथा सत्सङ्गो मां रोधयति तथा न मां रोधयन्ति यथा तदा सिद्धान्तविरुद्धं योगादिशास्त्रपं च सुतरां नैव रोधयतीति द्वयोरन्वयः । तत्र योगः पतञ्जलिनामकेन केनापि ऋषिणा प्रतिपादितः चित्तवृत्तिनिरोधलक्षणः सांख्यं भगवद्व्यतिरिक्तकपिलकृतं तत्त्वसंख्यानम् धर्मो जैमिन्युक्तः स्वाध्यायो विधिपासोपनयनपूर्वको वेदाभ्यासः तपः आलोचनात्मकं ज्ञानं त्यागो वैराग्यम् इष्टापूर्तम् इष्टं च पूर्तं च तत्रेष्टं श्रौतं पूर्तं स्मार्तं कर्म दक्षिणा दानम् ॥ १ ॥

व्रतानि हरिवासरोपवासादीनि यज्ञः पूजा छन्दांसि रहस्यमन्त्राः यथा स्वाध्यायादिन्यासमन्त्राः यथा स्वाध्यायादितापसांयोवधारणहेतुतया सत्सङ्गः मां सर्वेषां स्वाध्याया-



भाषा टीका ।

श्रीभगवानुवाच ।

सब संसारी संगों का दूर करने वाला सत्संग जैसे मेरे को वश करता है तैसे योग तथा सांख्य धर्म वेदाध्ययन तप त्याग यज्ञयागादिक मंदिर निर्माणादिक दक्षिणा व्रत यज्ञ वेद मन्त्र जप तीर्थ यम नियम ये सब मेरे को वश नहीं कर सकते हैं ॥ १—२ ॥

हे अनघ उद्धवजी ! सत्संगही से दैत्य राक्षस मृग पक्षी गंधर्व अप्सरा नाग सिद्ध चारण गुह्यक विद्याधर मनुष्यों में वैश्य शूद्र स्त्री अन्त्यज रजोगुण तमोगुण स्वभाव वाले तिस तिस युग में मेरे पदको प्राप्त भये हैं ॥ ३—४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

त्वाष्ट्रो वृत्रः कायाधवः प्रह्लादः ॥ ५ ॥

ऋक्षो जाम्बवान् गृध्रो जटायुः वणिक्पथस्तुलाधारः व्याधो धर्मव्याधः यज्ञपत्न्यो दीक्षितभार्याः ॥ ६ ॥

तेषां सत्सङ्गव्यतिरिक्तसाधनान्तराभावमाह । त इति । न अधीताः श्रुतिगणा यैः तदर्थं च नोपासिता महत्तमा यैस्ते तथा किञ्च अव्रतातप्ततपसः न व्रतानि येषां न तप्तानि तपांसि यैस्ते च ते च तथा मत्सङ्गादिति साद्भिः सङ्गो नाम मयैव सङ्ग इत्यभिप्रेत्योक्तम् यद्वा असङ्गस्यापि सत्सङ्गत्वं विवक्ष्यते अस्यापि सत्त्वात् यद्वा मदीयसङ्गादित्यर्थः ॥ ७ ॥

तत्र वृत्रादीनां भवतु नाम कथञ्चित्साधनान्तरं गोपीप्रभृतीनां तु नान्यदस्तीत्याह । केवलेनेति । सत्सङ्गलब्धेन केवलेन भावेन प्रीत्या नगा यमलार्जुनादयः नागाः कालियादयः यद्वा तदानीं-

### श्रीधरस्वामिकृतभावार्थदीपिका ।

नगानां सर्वतरुगुल्मादीनामपि भगवति भावोऽस्तीति गम्यते तदुक्तं भगवतैव—

अहो अमी देववरामरार्चितं पादाम्बुजं ते सुमनःफलार्हणाम्
नमन्त्युपादाय शिखाभिरात्मनस्तमोऽपहत्यै तरुजन्म यत्कृतमि-
त्यादि सिद्धाः कृतार्थाः सन्त ईयुः प्रापुः ॥ ८ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

कयाधोर्दानवस्य अपत्यं कायाधवः प्रह्लादः तत्र वृत्रस्य सत्सङ्गः प्राग्जन्मनि श्रीनारदाङ्गिरसोः सङ्गः प्रह्लादस्य तु गर्भे श्रीनारदसङ्गः आदिशब्दगृहीतान् कतिचिद्गणयति वृषपर्वा दानवः अस्य जातमात्रस्य मातृपरित्यक्तत्वान्मुनिपालितत्वेन मुनिसङ्गः पुराणान्तरप्रसिद्धो ज्ञेयः बलेः श्रीप्रह्लादसङ्गः बाणस्यापि बलिशम्भुसङ्गः मयस्यापि सभानिर्माणादौ पाण्डवसङ्गः विभीषणस्य हनुमत्सङ्गः ॥ ५ ॥

सुग्रीवस्य हनुमत्सङ्गः हनुमतस्तु भगवद्रूपसत्सङ्गः गजेन्द्रस्य पूर्वजन्मनि सत्सङ्ग उत्तरजन्मान्ते भगवत्सङ्गः गृध्रस्य गरुडदशरथादिसङ्गः वणिक्पथस्य महाभारते जाजलिमुनिगर्वप्रसङ्गे प्रोक्तमहिम्नः श्रीनारदादिसङ्गोऽन्वेषणीयः धर्मव्याधस्य हि आदिवाराहे इयं कथा वसुनामा कश्चिद्वैष्णवो राजासीत् तेन च मृगभ्रान्त्या हतः कश्चिद्ब्राह्मणो ब्रह्मराक्षसः सन् राज्ञः प्रापञ्चिकविष्णुलोकगमनसमये शरीराविष्टो बभूव तद्रोगान्ते राजतां प्राप्तस्य तस्य ब्रह्मपराख्यस्तवपाठतेजसा बहिर्देहान्निर्गतस्तदा तत्कृतधर्मव्याधसंज्ञः सन् जगन्नाथं दृष्ट्वा स्तुत्वा तत्सायुज्यमापेति कुब्जायाः पूर्वजन्मनि नारदसङ्गः श्रीहरिवंशप्रसिद्ध एव गोपीनां च साधनसिद्धानां नित्यसिद्धगोपीसङ्ग एव यज्ञपत्नीनां च श्रीकृष्णगुणकथकलोकसङ्गः अपरे दैतेयादयः ॥ ६ ॥

तदर्थं श्रुतिगणाध्ययनार्थं पूर्वार्थे सत्सङ्गे असङ्गत्वमारोपितं तथाभिधानात् कुर्वन्तो वक्तीति यथा च सत्यापि सत्त्वात् असङ्गोऽपि सत्सङ्ग इति विवक्षितं किन्तु प्रसिद्धिविरुद्धतिस्तु तदवस्थैव सच्छब्देन वैष्णवानामेव प्रसिद्धत्वादतः पुनर्व्रजेति अत्र मम ये सम्बन्धिनस्तेषां सङ्गादिति मध्यमपदलोपी समासः अत एव मदीयसङ्गादित्यर्थ इत्युक्तम् ॥ ७ ॥

तत्र तेषु सत्सु मध्ये सत्सङ्गलब्धेनेति प्रकरणवशाल्लब्धाहृतं पूर्वार्धे नगनागशब्दाभ्यां प्रधानानामेव कृतार्थताऽभिप्रेता न सर्वेषामतो बह्वेति ॥ ८ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

त्वाष्ट्रः त्वष्टुः पुत्रः बाणो मयश्च प्रसिद्धौ बाणमयाभ्यामन्ये विभीषणादयो मोक्षमन्त एवेति भगवत्सङ्कल्पस्य दृढत्वान्मामुपागता इत्युक्तिः ॥ ५ ॥

गृध्रो जटायुः अत्र तस्य मुमुक्षुत्वं श्रीमति रामायणे अपरावर्तिनामिति पदस्य मुक्तिविषयत्वे सति घटते नतु युक्ताव परावृत्तिपरत्वे वणिक्पथः तुलाधारः व्याधः धर्मव्याधः भगवदीयेष्वपि गुणवेणुस्वनापहृतहृदयतया तमेव ध्यायतां प्रकृतिविशेषमोक्षः सम्भवतीत्यनेनैव वचनबलेनाभ्युपगन्तव्यम् ॥ ६—७ ॥

नगा इति मृगविशेषणं वंशस्वनाकृष्टतया निश्चलाः वृक्षा अपि वृक्षाः परिम्लाना इति न्यायेन अन्तः संज्ञा वृक्षाणामपि तत्संनिकर्षविप्रकर्षाधीनतया भगवदनुकम्प्यत्वसम्भवः ॥ ८ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

त्वाष्ट्रो वृत्रासुरः कायाधवः प्रह्लादः तावादी येषां ते बहवो मत्पदं प्राप्ता इति सम्बन्धः यद्वा दैतेयादिषु कांश्चित्साधून्निर्दिशति त्वाष्ट्रकायाधवादय इत्यादिना बाणो मयश्च प्रसिद्धौ ॥ ५ ॥

अथ मृगेषु साधूनाह । सुग्रीवो हनुमानिति ऋक्षो जाम्बवान् पशुष्वाह । गज इति गजो गजेन्द्रः अथ पक्षिष्वाह । गृध्र इति। गृध्रो जटायुः तस्य तु मुमुक्षुत्वं श्रीमति रामायणे—

या गतिर्यज्ञशीलानामाहिताग्नेश्च या गतिः ।
अपरावर्तिनां या च या च भूमिप्रदायिनाम् ॥
मया त्वं समनुज्ञातो गच्छ लोकाननुत्तमानिति ।

प्रसिद्धम् अपरावर्तिनां या गतिरनुत्तमान् लोकान् गच्छेति मुक्तिविषयत्व एव घटते नतु मुक्तेः अपरावर्तिगतिपरत्वे तत्प्राप्यलोकानामनुत्तमत्वाभावात् अथ वैश्येष्वाह वणिक्पथ इति । वणिक्पथः तुलाधाराख्यः अन्त्यजेष्वाह व्याध इति व्याधो धर्मव्याधः स्त्रीष्वाह। कुब्जा व्रजे गोप्यो यज्ञपत्न्य इति । यज्ञपत्न्यो ब्राह्मण्यः कुब्जादीनां केनापि भावेन भगवत्सम्बन्धसद्भावात् भागवतत्वमस्त्येव तथा पर इत्येतदनुक्तसंग्राहकं ज्ञेयम् ॥ ६ ॥

ते त्वाष्ट्रकायाधवादिसम्बन्धिनः न अधीताः श्रुतिगणा यैस्ते न उपासिता महत्तमाः साधवो यैस्ते न सन्ति व्रतानि येषां ते न तप्तं तपो यैस्ते अत्र सन्धिरार्षः किन्तु सतां त्वाष्ट्रादीनां सङ्गान्मामुपागताः प्राप्ताः सत्सङ्गस्य दृढत्वज्ञापनाय मामुपागता इत्युक्तं मोक्षमन्त एवेत इत्यर्थः । नाधीतश्रुतिगणा इत्यादिविशेषणैरुपायान्तरशून्यत्वमेव ख्याप्यते ॥ ७ ॥

नतु युक्तमेतद्भगवद्याथात्म्याभिज्ञानां त्वाष्ट्रादीनां तत्सम्बन्धिनामन्येषां च मुक्तिरिति । इदं त्वयुक्तं यत्केवलं कामनादिभावेन त्वामनुवर्तिनीनां गोप्यादीनामिति अतो न तासां मुक्तिः कुतस्तत्सम्बन्धिनामित्यत आह । केवलेनेति । भावोऽत्र कामभयद्वेषादिरूपाभिप्रायविशेषपरः भावनापरपर्यायध्यानदर्शनादिरूपधात्वर्थपरश्च तस्य केवलं नाम परत्वमुत्कृष्टत्वमिति यावत् तद्यथायोग्यं योज्यं तत्र गोप्यः केवलेन तीव्रेण भावेन कामात्मकेन गावो नगा मृगाश्च सख्य सादरं मदीयगुणश्रवणदर्शनादिरूपेण भावेन ये चान्ये मूढधियः तमोगुणावृतधियः केवलतमोगुणप्रधाना इत्यर्थः केवलेन भावेन भगवद्द्वेषात्मकेन नगा यमलार्जुनादयः नागाः कालीयादयः तेऽपि सिद्धा मुक्त्यर्हाः मदीयगुणश्रवणदर्शनादिभिर्निरस्ताखिलमुक्तिप्रतिबन्धकाः सन्तोऽञ्जसाऽनायासेन मामीयुः प्रापुः नगा इति मृगविशेषणं वा तत्र नगाः निश्चलाः वंशस्वनाकृष्टचित्त-

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तथेति भावः । यद्वा आपिवृत्ताः परिम्लाना इति न्यायेनान्तःस्थानां वृत्तानामपि तत्सन्निकर्षविप्रकर्षादिकत्वे सति हर्षम्लान्यादिदर्शनात् तथा कथंचिद्भावसम्भवाभिप्रायेण नगा इत्युक्तमिति सर्वत्र गुल्मलतादिपर एव नगशब्दः गवादय एव केनापि भावेन मामीयुः किम्पुनर्गोप्यः अतस्तास्तत्सम्बन्धिनश्च मामापुरेवेति भावः ॥ ८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

साधनं विना त्वामुपागताश्चेत्सर्वे किं नाप्नुवन्तीति तत्राह । सत्सङ्गादिति । गुणसम्प्रीतिरपि न वेदादिभ्य उत्पन्नेत्याह । नाधीतेति ॥ ७ ॥

तर्हि केनेत्यत्राह । केवलेनेति । केवलेन निर्दोषेण भावेन भक्तियोगेन केवलेनेति विशेषणान्न द्वेषयुक्ता भक्तिर्मुक्तिसाधनं कथापि हरिविद्वेषी तमो याति न संशय इति वचनात् भावेनापरोक्षज्ञानोत्पादकध्यानेनेति विशेषणाद्विशेषरूपाज्ञानेऽपि मोक्षो नियतः—

विशेषरूपस्याज्ञोऽपि गुणानस्वाति निश्चयः ।
गुणसम्प्रीतिमात्रेण तं दृष्ट्वा मुक्तिमेष्यतीत्युक्तेः ॥

ज्ञानोत्पत्तेः पूर्वमपि भगवल्लीलाद्यनुकारेण परमानन्दः स्यादित्यतो भावेनेति अथवा सुखमार्गेण स्वाभावद्धर्मोपग इति स्मृतेः ॥ ८ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

त्वाष्ट्रेत्यादि । वृत्रस्य सत्संगः प्राग्जन्मनि श्रीनारदाङ्गिरसोः संगः श्रीसंकर्षणसंगश्च प्रसिद्धः कयाधुपुत्रः श्रीप्रह्लादो दैत्यः अस्य गर्भे श्रीनारदसंगः आदिशब्दगृहीतान् पूर्वोक्तजातिक्रमेण कांश्चिद्गणयति । वृषेति । वृषपर्वा दानवः अयं हि जातमात्रो मातृपरित्यक्तो मुनिपालितो विष्णुभक्तो बभूवेति पुराणान्तरप्रसिद्धिः बलेः श्रीप्रह्लादसंगः श्रीवामनसंगश्च तदनन्तरमेव सकायुद्धोपच्छेदनात् बाणस्य बलिमहेशभगवत्संगः अस्य भूतसंतानानन्तरं जातविष्णुभक्तितो महाभागवतमहेशप्राप्तिरेव संगः इतीत्युच्यते मयो दानवः अस्य सभानिर्माणाद्वा पाण्डवसंगो भगवत्संगश्च अन्ते तत्प्राप्तिस्तु ज्ञेया विभीषणो यातुधानः अस्य हनुमत्संगो भगवत्संगश्च ॥ ५ ॥

सुग्रीवाद्या गजान्ता मृगाः तत्र सुग्रीवस्य भगवत्संगः गजो गजेन्द्रः अस्य पूर्वजन्मनि सत्संगः उत्तरजन्मान्ते भगवत्संगः गृध्रस्य श्रीगरुडदशरथादिसंगः श्रीसीतादर्शनं श्रीभगवद्दर्शनं च गन्धर्वादीनामतिप्रसिद्धत्वेनानुदाहृत्य मनुष्येषु वैश्यादीनुदाहरति । वणिक्पथ इति । अस्य महाभारते जाजलिमुनिगर्वप्रसंगे प्रोक्तत्वात् सत्संगोऽन्वेषणीयः धर्मव्याधः शूद्रोऽन्त्यजोऽपि अस्मादिवाराहकथेयं कश्चित्प्राचीने कलियुगे वसुनाम्ना वैष्णवेन राज्ञा प्राग्जन्मनि मृगभ्रान्त्या निहतो ब्राह्मणो ब्रह्मराक्षसतां प्राप्तस्तस्य भागवतविष्णुलोकसिद्धेयगमनसमये तच्छरीरं प्रविष्टः पुनश्च तस्य तद्भोगान्ते राजतां प्राप्तस्य देहात् नरकतृकब्रह्मपराख्यदन्तवपाठतेजसा निर्गतस्तत्कृतधर्मव्याध इति नामाऽभिमानितशयविमुक्तः पर्यवसाने दृष्टनीलाद्रिनाथस्तं च स्तुतवान् प्राप्ततदालिङ्गनस्तत्सायुज्यमवापेति कुब्जाया भगवत्संगः पूर्वजन्मनि च श्रीनारदसंग इति माथुरहरिवंशप्रसिद्धिः गोप्योऽत्र साधारण्यः श्रीकृष्णव्रजे तदानीं विवाहादिना समागताः आसां तन्नित्यप्रेयसीवृन्दसंगः श्रीकृष्णदर्शनादिरूपो भगवत्संगश्च यज्ञपत्नीनां श्रीकृष्णगुणकथकलोकसंगस्तत्संगश्च अपरे दैतेयादयोऽन्ये च ॥ ६ ॥

ते नेति । पूर्ववदध्ययनादिकं भगवत्प्रीणनमेव ग्राह्यम् अत्रैकेषां वृत्रादीनां प्राग्जन्मादौ साधनान्तरं यद्यपि सत्संगानुषङ्गासिद्धिमभिप्रेत्य सत्संगस्यैव तत्फलमुक्तम् धर्मव्याधादीनां तु केवलस्यैव तस्येति ज्ञेयं मत्संगशब्देनात्र मम संगो मदीयानां च संग इत्यभिधीयते उभयत्रापि मत्संबन्धित्वादित्यभिप्रायेण तत्र क्वचापि सत्त्वात्सत्संगप्रकरणे ध्वसंगोऽप्यन्तर्भावितः यत्तु पुरा भागवतसंगेनैव भगवत्कृपा भवतीत्युक्तम् तत्तु तत्सांमुख्यजन्मन्येव अत्र तु स एव भागवतसंगः साधनविशेषत्वेनोच्यत इति न दोषः यदि चात्र कुत्रचित्सांमुख्यजन्मकारणमपि भगवत्संगो भवेत् तदाप्येवमाचक्ष्महे स्वतन्त्रं भगवन्तमङ्गीकृत्य यत्कदाचित् सर्वत्र कृपां वितनोति भगवान् तच्च सत्संबन्धेनैवेत्यतो नाभ्युपगमहानिरिति अत्र सत्संगस्य संगस्तु भावतारतम्याद्व्यधिकरणतारतम्यं ज्ञेयं महत्तमाः श्रुत्यध्यापकाः ॥ ७ ॥

अथ मुख्यं वशीकरणमसंभावितसाधनान्तरेण सत्संगमात्रेण श्रीगोप्यादीनां दर्शयति । केवलेनेति—भावेन प्रकरणप्राप्तसत्संगमात्रजन्मना प्रीत्या भावोऽत्र वशीकारमुख्यत्वे चिन्हम् वशे कुर्वन्ति मां भक्त्या सत्स्त्रियः सत्पतिं यथेत्यादेः भक्त्याहमेकया ग्राह्य इत्यादेश्च गावोऽपि श्रीगोपीवदानन्तुक्य एव ज्ञेयाः मृगा अपि पूर्ववत् यमलार्जुनयोः प्राप्तिस्तदानीं तत्तत्स्वामिकभगवत्प्राप्त्याद्यर्थंभाविनित्यप्राप्तिमपेक्ष्योक्ता सिद्धाः पूर्ववल्लब्धसत्संगास्तु तेषां भावो योगादिभिरप्राप्य एवेति यथावदन्य इत्यत्र यथाशब्दार्थस्य परा काष्ठा ॥ ८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

त्वाष्ट्रो वृत्रः कायाधवः प्रह्लादः अनयोर्जन्मतः प्रागेव नारदसंगः वृषपर्वा तु जातमात्र एव मातृपरित्यक्तो मुनिपालितो विष्णुभक्तोऽभूदिति पौराणिकी प्रसिद्धिः बलेः प्रह्लादसंगः बाणस्य बाहुच्छेदसमये कृपालोर्महादेवस्य सङ्गः मयस्य सभानिर्माणे पाण्डवसंगः विभीषणस्य हनुमत्संगः ॥ ५ ॥

सुग्रीवादीनां श्रवणां लक्ष्मणसंगः गजो गजेन्द्रः अस्य पूर्वजन्मनि नारदादिसङ्गः गृध्रो जटायुरस्य गरुडदशरथादिसङ्गः वणिक्पथस्तुलाधारो भारतप्रसिद्धः अस्य सत्सङ्गो मृग्यः व्याधः धर्मव्याधः तस्य प्राग्ब्रह्मराक्षसतां प्राप्तस्य वाराहपुराणस्थेन वैष्णवेन राज्ञा सह सङ्गः कुब्जायाः पूर्वजन्मनि नारदसङ्ग इति माथुरहरिवंशे प्रसिद्धं गोप्यो मुनिचर्याः पूर्वजन्मनि कृतबहुसाधुसङ्गा एव एतज्जन्मनि नित्यसिद्धगोपीसाङ्गिन्यः यज्ञपत्नीनां व्रजस्थश्रीकृष्णसखीभिर्मालिकताम्बूलिकादिस्त्रीभिः क्रयविक्रयार्थं मथुराप्रस्थानसमये सङ्गः ॥ ६ ॥

यं न योगेन साङ्ख्येन दानव्रततपोऽध्वरैः ।
व्याख्यास्वाध्यायसंन्यासैः प्राप्नुयाद्यत्नवानपि ॥ ९ ॥
रामेण सार्धं मथुरां प्रणीते श्वाफल्किना मय्यनुरक्तचित्ताः ।
विगाढभावेन न मे वियोगतीव्राधयोऽन्यं ददृशुः सुखाय ॥ १० ॥
तास्ताः क्षपाः प्रेष्ठतमेन नीता मयैव वृन्दावनगोचरेण ।
क्षणार्धवत्ताः पुनरङ्ग ! तासां हीना मया कल्पसमा बभूवुः ॥ ११ ॥
ता नाविदन्मय्यनुषङ्गबद्धधियः स्वमात्मानमदस्तथेदम् ।
यथा समाधौ मुनयोऽब्धितोये नद्यः प्रविष्टा इव नामरूपे ॥ १२ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तेषां साधुसङ्गस्तथा यथा प्रकृतिप्रधानीभूता केवला च भक्तिरेव नतु साधनान्तरमित्याह । न इति । न अधीताः श्रुतिगणा वेदार्थं च न उपासिता महत्तमाः श्रुत्यर्थग्राहयितारो मुनयो यैस्ते न व्रतानि येषां न तप्तानि तपांसि यैस्ते च तेच तथा किन्तु सत्सङ्गेनैव हेतुना भक्त्या सत्सङ्गात् मत्संगं प्राप्य मामुपागताः प्राप्ताः सद्भिः सङ्गो नाम ममैव सङ्ग इत्यर्थः ॥७॥

तत्रापि गोपीप्रभृतीनां सर्वतोऽप्यतिवैशिष्ट्यमाह । केवलेन ज्ञानकर्माद्यमिश्रेण निष्कामेण भावेन शृङ्गारवात्सल्यसख्यदास्यमात्रव्याप्तिना भक्तियोगेन । गोप्यः शृङ्गाररसेन गावो वात्सल्यरसेन नगा गोवर्द्धनादिपर्वताः सख्यरसेन मृगा अपि मूढाधियो वृन्दावनवितरुगुल्माद्या नागाः कालियाद्या दास्यरसेन मामीयुः अत्र गोप्यादयः सिद्धा एव पूर्वरागाद्यनन्तरं मामीयुरिति केवलेन भावेन तेषां मत्प्राप्तिमत्त्वमनादितो नित्यसिद्धमेवेत्यर्थोऽवसीयते अन्यथा सिद्धा इति पदस्य वैयर्थ्यं स्यात् ॥८॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

कायाधवः कयाधुपुत्रः प्रह्लादः ॥ ५ ॥
वणिक्पथः तुलाधारः व्याधः धर्मव्याधः ॥ ६ ॥
न अधीताः श्रुतिगणाः यैस्ते तथा तदध्ययनार्थं नोपासिता महत्तमा यैस्ते तथा न सन्ति व्रतानि येषां न तप्तानि तपांसि यैः ते च ते च तथा मत्प्रापकः सङ्गः मत्सङ्गः शाकपार्थिवादित्वात्समासः ॥ ७ ॥
केवलेन हि सत्सङ्गेन लब्धो यो भावः भक्तिस्तेन ॥ ८ ॥

### भाषा टीका ।

वृत्रासुर प्रह्लादजी आदिक वृषपर्वा बली बाणासुर मय दानव विभीषणजी सुग्रीवजी हनुमान्जी जांबवान् गजराज जटायु तुलाधार धर्मव्याध कुब्जा व्रज में गोपिका यज्ञ पत्नी ऐसे और भी मुक्त होगये ॥ ५—६ ॥

उनने न वेद पढे थे न किसी महत्पुरुष का उपासना किया न व्रत किये न तप किया केवल सत्संग से मेरे को प्राप्त होगये ॥ ७ ॥

एक केवल प्रेम भाव से गोपिका गऊ वृक्ष मृग और भी जो मूर्ख बुद्धि वाले नाग आदिक सिद्ध होकर अनायास से मेरे को प्राप्त होगये ॥ ८ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

स्वप्राप्तेर्दुर्लभतामाह । यमिति । योगादिभिः कृतप्रयत्नोऽपि यं न प्राप्नुयात्तं मामीयुरिति पूर्वेणान्वयः अत्र च प्रथमं या गोप्यः पश्चादन्यो वा श्रीकृष्णेन सह सङ्गतास्ते सन्तस्तत्सङ्गोऽन्येषां सत्सङ्गस्तेन च तेषां भक्तिरिति ज्ञातव्यम् ॥ ९ ॥

गोपीनां भावं प्रपञ्चयति । रामेणेति चतुर्भिः । श्वाफल्किना अक्रूरेण मयि प्रणीते सति मे मत्तोऽन्यं सुखाय न ददृशुः कुतः वियोगेन तीव्रो दुःसह आधिर्यासां ताः अत्र हेतुः मय्येव गाढतातिदृढेन भावेन प्रेम्णाऽनुरक्तानि संसक्तानि चित्तानि यासां ताः ॥ १० ॥

तीव्राधित्वं व्यनक्ति । तास्ता इति । मया सह या एव क्षपा रात्रयः क्षणार्धवत्प्रतीतास्ता एव पुनर्मया हीनास्तासां कल्पसमा बभूवुः कथम्भूताः तास्ताः वाचामगोचरा इत्यर्थः ॥११॥

किञ्च एवं तीव्राधयस्ता मोहमिषेण समाधिं प्राप्ता इत्याह । ता इति । मय्यनुषङ्गेणाऽऽसक्त्या बद्धा धियो याभिस्ताः स्वमात्मानं स्वदेहमदो दूरस्थमिदं सन्निहितं च नाविदन् यद्वा स्वं पतिपुत्रादि ममतास्पदम् आत्मानमहङ्कारास्पदं देहम् अदः परं लोकमिदमिमं लोकं च नाविदन्निति । यथा मुनयः समाधौ नामरूपे न विदुस्तद्वत् किन्त्वब्धितोये नद्य इव मयि प्रविष्टा इत्यन्वयः ॥ १२ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

अत्र च गोप्यादिप्रकरणे ॥ ९ ॥

भावं वियोगे प्रेमोद्रेकं प्रणीते सति मथुरां प्रति प्रापिते

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

सति मत्तोऽन्यं निजसख्यादिकमपि सुखाय न ददृशुः प्रियसखीमालापि ज्वालायते इत्याद्युक्तेः किन्त्वतीतनिर्देशेनाधुना तु सुखाय पश्यन्तीति वियोगो नास्तीत्यर्थः । अत्र वियोगतीव्राधित्वे ॥ १० ॥

तावता इति तच्छब्दयोरनुभूतार्थगोचरत्वाद्यच्छब्दानपेक्षत्वम् अतएव वाचामगोचरा इति व्याख्यातम् ॥ ११ ॥

मोहमिषेणोत्पन्नुत्याऽप्रकटलीलाभिनिवेशेन प्रकटलीलाऽननुसन्धानलक्षणमोहस्य वास्तवत्वमभिव्यज्यते समाधेस्तूपमानमात्रत्वं स्तनापदेशं फलयुग्ममेव धत्ते मृदुः काञ्चनवल्लिरेषेतिवत् प्रकृतं यन्निषिध्यान्यत् स्थाप्यते सा त्वपह्नुतिरिति तल्लक्षणात् पूर्वार्धे दूरस्थसन्निहितयोर्विशेषासम्बन्धत्वाज्ज्ञेयत्वानर्हत्वाच्च यद्वेति पतिपुत्राद्यज्ञाने दृष्टान्तो यथा मुनय इति भगवन्मात्राभिनिवेशे दृष्टान्तः अब्धितोये नद्य इवेति ॥ १२ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

यमिति यच्छब्दो भगवत्परः ॥ ९ ॥

श्वाफल्किना अक्रूरेण ॥ १०—११ ॥

तथेदमिति शरीरमुच्यते नद्यः प्रविष्टा इवेति नदीनां नामरूपावेदनमचेतनत्वादपि गोपीनां तु भगवद्ध्यानपारवश्यादिति वैषम्यम् ॥ १२ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

मामिति विवक्षितमात्मानं विशिनष्टि । यमिति । योगादिभिः कृतप्रयत्नोऽपि यं न प्राप्नुयात्तं दुर्लभं मामापुरिति सम्बन्धः व्रतान्येकादश्युपवासादीनि तपः कृच्छ्रचान्द्रायणादिरूपं व्याख्या शास्त्राध्यापनं स्वाध्यायोऽध्ययनं संन्यासस्तुर्याश्रमपरिग्रह इति ॥ ९ ॥ केवलेन हि भावेनेति विवक्षितं गोपीनां भावं प्रपञ्चयति । रामेणेति चतुर्भिः । श्वाफल्किनाक्रूरेण मयि रामेण बलभद्रेण सार्धं सह मथुरां प्रणीते प्रापिते सति मत्तोऽन्यं सुखाय न ददृशुः कुतः वियोगेन तीव्रा दुःसहः आधिर्यासां ताः तत्र हेतुः मयि विगाढेनातिदृढेन भावेन प्रेम्णाऽनुरक्तानि संसक्तानि चित्तानि यासां ताः ॥ १० ॥

तीव्राधित्वं व्यनक्ति । तावता इति । या या इति पाठान्तरम् अङ्ग हे उद्धव । वृन्दावनगोचरेण प्रियतमेन च मया सह याभिर्याः क्षपाः रात्रयः क्षणार्धवन्नीताः यापिताः तावत्य एव पुनर्मया हीनाः तासां गोपीनां कल्पसमा बभूवुः ॥ ११ ॥

किञ्चेत्थं तीव्राधयो मोहव्याजेन समाधिङ्गताः किञ्चिदपि न विदुरित्याह । ता इति । मत्पत्युपदङ्गणासक्त्या बद्धा धीयोभिरता: गोप्यः स्वमात्मानं स्वदेहमदो दूरस्थम् इदं संनिहितं च नाविदन् यथा मुनयः समाधौ स्वात्मानं न विदुर्यथा वाब्धितोये प्रविष्टा नद्यः स्वनामरूपे न विदुः तद्वन्नदीनां नामरूपावेदनमुचितमचेतनत्वाद्गोपीनां तु भगवद्ध्यानपारवश्यादिति वैषम्यम् ॥ १२ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

भक्तिरहितं ज्ञानमपि न मत्प्रापकं किमुतान्यत्साधनजातमिति भावेनाह । यमिति । यं मां राहुवधयत्नवानपि—

> हरिसङ्गविहीनस्तु हरेर्दर्शनवानपि ।
> न मुच्यतेऽखिलज्ञोऽपि तमो याति विनिश्चयात् ॥
> गुणैरन्यैर्विहीनस्तु तद्भक्तेष्वपि चक्रमात् ।
> सङ्गवान्सुखभागेव स्याद्गुणैर्मुक्तिमेति वा ॥
> अभक्तसङ्गहीनस्य व्युत्क्रमात्सङ्गिनोऽपि वा ।
> असङ्गाधिष्ठकाद्विष्णुस्तत्सज्जेषु तत्र चेति ॥

अनेन भगवद्भक्तेस्तद्भक्तभक्तेरन्वयव्यतिरेकौ दर्शिताविति ध्वनितमित्यनेन श्लोकेन ज्ञायते—

> गोपिकाद्या दिवं गत्वा हरिं ज्ञात्वा यथातथम् ।
> परम्पदं ययुः पूर्वसङ्गादेव सुमोचिता इति

वचनाद्भक्तिजनितज्ञानेन मुक्तिमाप्नोति न केवलज्ञानेनेत्यभिप्रायेण न साङ्ख्येनेत्युक्तम् उपलक्षणमेतत् वानादिष्वप्यनुसन्धेयमेतत्—

> श्रोतव्यं च श्रुतश्चैव वक्तव्यं कार्यमेव च ।
> निवर्त्यं च हरेः पूजेत्येवं कुर्यान्न चाक्रमात् ॥
> एवङ्कर्ता तु संन्यासी सर्वोत्सर्गाद्धरौ स्मृतः ।
> अन्यथा नैव संन्यासी निष्क्रियोऽपि शिला यथेत्येवं

लक्षणवान् संन्यासी न तु शिलावन्निष्क्रिय इत्यभिप्रेत्य वेणुमात्रभृत्संन्यासी न मामाप्नोतीति किञ्च—

> नाहं कर्ता तु सर्वस्य कर्तैको विष्णुरव्ययः ।
> इति विदित्वा तु संन्यासी नान्यथा तु कथञ्चन ॥
> मयि सर्वाणि कर्माणि संन्यस्याध्यात्मचेतसा ।
> निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वर इति

लक्षणान्तरवानेव संन्यासी न रक्तपटधारीत्यर्थः ॥ ९ ॥

गोपीनामपि भक्तिरपरोक्षज्ञानान्तरङ्गा न तु रतिनिमित्तेति प्रकटयितुं वक्ति । रामेणेति । ता गोप्यो मत्तोऽन्यद्वस्तु सुखाय न ददृशुरित्यन्वयः ॥ १० ॥

अत्र हेतुमाह । यासामिति ताः क्षपाः ॥ ११ ॥

स्वमात्मानं स्वस्वरूपम् अदः स्वर्गमिदं जगत् तत्र दृष्टान्तमाह । यथेति । समाधौ मुनयो नामरूपे यथा न विदन्ति अब्धितोये प्रविष्टा नद्यश्च अनेन भक्त्यतिशयो दर्शित इति ॥ १२ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तामेव व्यनक्ति । यमिति । यं भावम् अत्रापि योगाद्यो भगवत्परा एव योगादिभिर्यत्नवानपीत्यनेन तत्प्राप्त्यर्थप्रयुज्यमानत्वावगमात् ॥ ९ ॥

अथ साधकचरीणां गोपीनां प्रथमतत्प्राप्तिप्रस्तावेन नित्यप्रेयसीनामपि तन्महाविप्रयोगान्तरप्राप्ति तस्य वियोगस्यातीतत्वनिर्देशाद्दर्शयति द्वाभ्याम् । विगाढभावेन तीव्राधयः सत्यो मत्तोऽन्यं निजसख्यादिकमपि न सुखाय ददृशुः प्रियसखीमालापि ज्वालायते

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इतिवत् तनश्चाधुना तु सुखाय पश्यन्तीति वियोगो नास्तीत्यर्थः ॥ १० ॥

एवं तास्ताः क्षपा मया हीनाः सत्यस्तासां कल्पसमा बभूवुः अधुना तु तादृश्यो न भवन्तीति नास्त्येव वियोग इत्यर्थः । पूर्वं त्वेतस्यैवोद्धवं प्रति मयि ताः प्रेयसां प्रेष्ठे इत्यादौ वर्त्तमानप्रयोगाः कृता इति सोऽयमर्थः स्पष्ट एव प्रतिपत्तव्यः ॥ ११ ॥

ततश्च प्रकटाप्रकटलीलयोः पृथक्प्रतिपत्त्यैवाप्रकटभावमापद्य स्वनामरूपयोरेव ताः स्थिता इत्याह । तास्तथाभूतविरहोत्कण्ठातिशयेनाभिव्यक्तदुर्द्धरमहाभावाः सत्यः अथागमिष्यत्यदीर्घेण कालेनेत्यादिमदुक्तानुसारेण अद्यौम्बुजाक्षापससार भो भवानित्यादिश्रीकारकावासिप्रजावचनानुसारेण च कदाचित्तासां दर्शनार्थं गते मयि लब्धो योऽनुषङ्गो महामोहेन भावाभिव्यक्तिकारी पुनः संयोगस्तेन बद्धा धीर्यासां तथा भूताः सत्यः स्वं ममतास्पदम् आत्मानमहङ्कारास्पदम् अदः अप्रकटलीलानुगतत्वेनाभिमतं वा तथा इदं प्रकटलीलानुगतत्वेनाभिमतं वा यथा स्यात्तथा तदानीं नाविदन् किंतु द्वयोरैक्येनाविदुरित्यर्थः । प्रकटाप्रकटतयाभिन्नं प्रकाशद्वयमभिमानद्वयं लीलाद्वयं चाभेदेनैवाजानन्निति विवक्षितं ततश्च नाम च रूपं चेति समाहारद्वन्द्वेन नामरूपात्मनि अप्रकटप्रकाशविशेषे प्रविष्टा इव न तु प्रविष्टाः वस्तुभेदादित्यर्थः । तत्राहंकारास्पदे प्रविष्टा इवेति वस्तुभेदेन योजयति यथा समाधौ समाध्युपाधौ तुरीयाख्यात्मनि मुनयो जाग्रदाद्युपाधितया विश्वतैजसप्राज्ञाख्या मुनीनामात्मानः प्रविष्टा इव किन्तु तेषां तुरीयं त्रिषु संततमिति न्यायेनोपाधिनैव तुरीयाद्भिन्नतया ख्यातानां तदुपाधिपरित्याग एव प्रवेशतयोपचर्य्यते तथा तासां मत्प्राप्त्यन्तरायतत्परित्याग एव प्रवेशतयोपचर्य्यत इत्यर्थः । अथ ममतास्पदे प्रविष्टा इवेत्यपि सम्यगंशाप्रवेशेन योजयति । यथाब्धितोये नद्यः प्रविष्टा इव भवन्ति पृथिव्यामविच्छेदात् तद्वत्तयोः प्रकाशयोर्मिथो विच्छेदाभानात् प्रविष्टा इवेति ॥ १२ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

केवलस्य भक्तियोगस्य सत्सङ्ग एव हेतुर्नतु सुकृतान्तरं किमपीत्याह । यमिति । यत्नवानपि योगादीनां सम्यगनुष्ठाननिरतोऽपि ॥ ९ ॥

तत्रापि गोपीनां भावस्य सर्वोपरि विराजमानत्वमाह । रामेणेति चतुर्भिः । इत्याफल्किना अक्रूरेण मयि मथुरां प्रकर्षेण नीते सति मे मत्तोऽन्यं सुखाय न ददृशुः यतोऽनुरक्तचित्ताः प्रेम्णः षष्ठीभूमिका योऽनुरागस्तन्मयीभूतानि चित्तानि यासां ताः तत्रापि विशिष्टो गाढो भावः अनुरागोत्तरभूमिकागतो महाभावभेदो रूढाभिधस्तेन हेतुना वियोगे सति तीव्र आधिर्यासां ताः अत्र ददृशुरिति भूतनिर्देशादधुना तु दन्तवक्त्रवधान्ते मया सह संयुक्ता एव वर्त्तन्ते इति द्योतितम् ॥ १० ॥

कल्पस्य क्षणता योगे वियोगे तद्विपर्य्यय इति प्रेम्णः सप्तम्या भूमिकाया महाभावभेदस्य रूढभावस्य लक्षणं सर्वतो विलक्षणं दर्शयति । तास्ता इति । मया सह रासक्षपा ब्रह्मरात्रिपरिमिता अपि क्षणार्द्धवत् यामिनीताः । तासां मया वृन्दावनगोचरेण वृन्दावनस्थेन अथ च वृन्दावने गोभिः सह चरता हीनास्ताः क्षपाः प्रहरचतुष्टयपरिमिता अपि यापयितुमशक्यत्वात् कल्पैर्बहुभिः समाः ॥ ११ ॥

मोहाद्यभावेऽपि सर्वविस्मरणमिति विगाढभावस्यापरमप्यनुभावमुज्ज्वलनीलमणियुक्तं दर्शयति । मयि अनुषङ्गेण नितरां सङ्गेन बद्धा धियो याभिस्ताः । अत्र बद्धपदेन कृष्णस्य त्रिजगन्मोहनविचित्रनीलस्तम्भत्वम् अनुषङ्गस्य बलवद्दामत्वं धीवृत्तीनां कृष्णवाञ्छितसम्पादककामधेनुघटात्वमारोपितं स्वमात्मानं देहं न विदुः रासाभिसारादौ क्व स्थितं क्व वा यान्तमिति नानुसन्दधुः तथा अदः परलोकं धर्मातिक्रमादिति भावः । इदमिमं लोकं लज्जाभयाद्यतिक्रमादिति भावः । समाधौ मुनय इति । तेषां यथा सर्वविस्मरणे ब्रह्मानुभवोऽतिरिच्यते तथैतासां मदनुभव इति सर्वविस्मरणांशे दृष्टान्तः न तु प्राप्यांशे गोपीप्राप्यप्रेममुनिप्राप्यनिर्वाणयोरहो महदेवान्तरं यस्मान्ममत्वाममते तयोः तथाहि सर्वसन्तापनिवर्त्तकात् परमाह्लादकात् दृश्यमानात् चन्द्रादपि सकाशात् सर्वगुणहीनोऽपि दृश्यमानः पतिपुत्रादिको यत् सुखमधिकं दत्ते तत्र ममतैव यदि कारणं तदा किं पुनः सर्वगुणमण्डिते स्वभावादेव निरवधिकसुखप्रदे श्रीकृष्णे परब्रह्मणि निरवधिकैव ममता सुखाधिक्ये कारणं भक्तानामिति अत एवोक्तम्

> ब्रह्मानन्दो भवेदेष चेत्परार्द्धगुणीकृतः ।
> नैति भक्तिसुखाम्भोधेः परमाणुतुलामपीति ॥

ब्रह्म च भक्तेष्वासक्तं तद्वश्यं च मुनिषु तु नैवासक्तं न तद्वश्यं चेति नद्यो यथाब्धितोये प्रविष्टा नामरूपे स्वीये न विदुरिति रसचर्वणांशे दृष्टान्तः ॥ १२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यं माम् ॥ ९ ॥

गोपीनां भावं प्रपञ्चयति । रामेणेति चतुर्भिः । विगाढभावेन दृढप्रेम्णा अनुरक्तं चित्तं यासां ताः वियोगेन तीव्रो दुःसहः आधिर्यासां ताः मे मत्तोऽन्यं सुखाय न ददृशुः ॥ १० ॥

मया सह तास्ताः प्रसिद्धाः क्षपाः क्षणार्द्धवन्नीताः मया हीनाः पुनस्तास्तासां कल्पसमा बभूवुः ॥ ११ ॥

किञ्च ताः मयि अनुषङ्गेण आसक्त्या बद्धा धियो याभिस्ताः अत एव अब्धितोये नद्य इव मयि प्रविष्टाः स्वमात्मानं देहमिदं च लोकमदः परं च लोकं नाविन्दन् यथा समाधौ मुनयो न विदुस्तद्वत् ॥ १२ ॥

---

भाषा टीका ।

योग से सांख्य से दानों से तप से यज्ञों से व्याख्यानों से स्वाध्याय से सन्यास से बड़े यत्नकरने वाला भी जिस मेरे को नहीं प्राप्त होसकता है तिस मेरे को गोपिकादिक केवल भाव से प्राप्त होगये ॥ ९ ॥

मत्कामा रमणं जारमस्वरूपविदोऽबलाः ।
ब्रह्म मां परमं प्रापुः सङ्गाच्छतसहस्रशः ॥ १३ ॥
तस्मात्त्वमुद्धवोत्सृज्य चोदनां प्रतिचोदनाम् ।
प्रवृत्तं च निवृत्तं च श्रोतव्यं श्रुतमेव च ॥ १४ ॥
मामेकमेव शरणमात्मानं सर्वदेहिनाम् ।
याहि सर्वात्मभावेन मया स्या ह्यकुतोभयः ॥ १५ ॥

उद्धव उवाच ।

संशयः शृण्वतो वाचं तव योगेश्वरेश्वर ! ।
न निवर्तत आत्मस्थो येन भ्राम्यति मे मनः ॥ १६ ॥

---

### भाषा टीका ।

जिस समय अक्रूरजी हमको बलदेवजी के सहित मथुरा को लेगये तब गोपियोंने मेरे में चित्त के अनुराग होने से अतिगाढ प्रेम के वश होने से मेरे वियोग होने से तीव्र वेदना के होजाने से मेरे विना और किसी वस्तु को सुख दायक नहीं समझा ॥ १० ॥

हे उद्धवजी ! मेरे साथ वृन्दावन में विचरने से प्रिय मेरे संग होनेसे उन बड़ी रातों को गोपियों ने क्षणमात्र के तुल्य मान लिया था फिर मेरे विना होने से वेही रातें कल्प सरी की गोपिकाओं को हो गईं ॥ ११ ॥

मेरे विषय में मन के अत्यन्त लगजाने से उन गोपियों ने न अपने शरीर का ख्याल किया न पराये का जैसे कि मुनि जन समाधि में सब भूलजाते हैं और जैसे सब नदी समुद्र में मिलजाने से अपने नाम रूप दोनों को छोडदेती हैं तैसे ॥ १२ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

एवं ता अबलाः केवलं मत्कामा अस्वरूपविदः स्वरूपं तु न जानन्ति तथापि सत्सङ्गाज्जारं ब्रह्म जारबुद्धिविषयमपि ब्रह्मस्वरूपमेव मां परमं प्रापुरित्यर्थः ॥ १३ ॥

यस्मादेवं भूतो मद्भजनप्रभावस्तस्मात्त्वं चोदनां श्रुतिं च प्रतिचोदनां स्मृतिं च यद्वा विधिं च निषेधं चोत्सृज्य मां शरणं याहि ॥ १४ ॥

मयैवाकुतोभयः स्याः भव ॥ १५ ॥

पूर्वं तावन्मयोक्तं निरपेक्षः स्वधर्मेष्वाज्ञादिना कर्म कर्तव्यमित्युक्तमिदानीं तु सर्वं त्यक्त्वा मां शरणं याहीत्युच्यते तत्र किमात्मनः कर्तृत्वाद्यस्ति नास्ति वेत्यात्मनः आत्मविषयः संशयो न निवर्तते यद्वा कर्म कार्यं त्याज्यं वेत्यात्मनो हृदिस्थः संशयो न निवर्तत इति पृच्छति । संशय इति । येन संशयेन ॥ १६ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

स्वरूपं परमेश्वरत्वलक्षणं सत्सङ्गाभिव्यक्तिसिद्धानां गोपीनां संगात् जारबुद्धिविषयमपीति अपि नाप्राकृते तद्भक्तिरसाभासत्वेऽपि श्रीकृष्णे तु अचिन्त्यशक्तिभूषणत्वामिति व्यञ्जितं परमं प्रापुरिति प्राप्तौ परमत्वस्य वैशिष्ट्यात्मकस्य विधेयत्वात् तदुक्तमभियुक्तैः "नेष्टा यदङ्गिनि रसे कविभिः परोढा तद्गोकुलाम्बुजदृशां कुलमन्तरेण । आशंसया रसविधेरवतारितानां कंसारिणा रसिकमण्डलशेखरेणेति" । तदेवाह रमणं रतिक्रीडासुखदं मां श्रीकृष्णाख्यमेवेति तस्य ब्रह्मणो निराकारत्वं प्रत्याख्यातम् ॥ १३ ॥

पूर्वार्थे चोदनाशब्दस्य विधिरूपवेदैकदेशपरत्वेऽपि प्रतिचोदनाशब्दस्य स्मृतिपरत्वं न कुत्रापि प्रसिद्धमतो यद्वेति चोदनाशब्दस्य प्रवर्तनार्थत्वात्प्रतिशब्दस्य निवर्तनार्थस्य प्रतिशब्दस्याद्वयां प्रत्याख्यानवत् तथा च प्रतिचोदनाशब्दस्य निषेधार्थो मुख्य एवेति तथा व्याख्यातं प्रवृत्तं दक्षिणमार्गं निवृत्तमुत्तरमार्गम् आवर्तेत प्रवृत्तेन निवृत्तेनाऽश्नुतेऽमृतमित्युक्तेः अयं योगसाङ्ख्यादिर्मया श्रोतव्यः अयं च श्रुतस्तदनुष्ठेय इत्युभयमप्यर्थं त्यक्त्वा शुद्धभक्तस्य द्वयोरप्यनुपादेयत्वात् केवलं मामेव शरणं याहीति पूर्वं प्रतिपादिता सत्सङ्गादिलब्धा भक्तिरेव द्रढीकृता सर्वात्मभावेनेति अन्याभिश्रत्वमपि व्यञ्जितं तत्र तत्परित्यागे किमपि दूषणमित्याह मयैवेति ॥ १४ ॥ १५ ॥

अत्र विप्रतिपत्तौ पूर्वार्थे मीमांसकमतप्रत्याख्यानपूर्वकं कर्तृत्वाद्यभावः विलक्षणः स्थूलसूक्ष्माद्देहादात्मेक्षिता स्वदृगित्यादिप्रघट्टकेन पूर्वमेवोपपादितं इति तद्विषयकप्रश्नो निष्क्रियोद्धवस्य न युक्त इत्यतो यद्वेति तथा चैकान्तभक्तेन कर्म कर्तव्यं वा त्याज्यमिति प्रश्नस्य पूर्वमकृतत्वादपूर्वत्वमिति ज्ञेयम् ॥ १६ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

मतः जारं चोरमस्तीत्यत अतः परमं गुह्यमित्यन्वयः ॥ १३ ॥
तस्मान्मत्समाश्रयणस्य मोक्षहेतुत्वात् प्रतिचोदनां निषेधं

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

यद्वा सामान्यचोदनाया अपवादरूपा विशेषचोदना तामुत्सृज्येति उपायतया बुद्धित्यागो विवक्षितः उपायत्वग्रहणं तत्र वर्जयेदिति प्रपत्तिशास्त्रेषु दृष्टत्वात् यास्यसि मामित्यनुषङ्गः ॥ १४-१५ ॥

एवमुपायविषये श्रोतव्यं सर्वं श्रुतम् अत उद्धवः आत्मविषये श्रोतव्यान्तरं शुश्रूषमाणः पृच्छति । संशय इति ॥ १६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

न केवलं स्वात्मादिकं नाविदन् किन्तु केवलमबला अज्ञाना· त्स्वरूपाविदस्तथापि मत्कामाः मय्येव कामो यासां ताः जारं रमणं लोकप्रतीत्या चोरमन्तारं वस्तुतः परब्रह्मभूतं मां प्रापुः सत्सङ्गेन हि वैतेया इत्युपक्रान्तमुपसंहरति । सङ्गाच्छत-सहस्रशः प्रापुरिति सम्बन्धः ॥ १३ ॥

इत्थमुपदेक्ष्यमाणशरणागत्यास्तन्त्यासयोगप्रभावख्यापनाय तद्यो· गनिष्ठसत्सङ्गस्यैवाऽनितरसाध्यसाधनतामभिधायाथ तं योगमु· पदिशति तस्मादिति हे उद्धव ! तस्माच्छरणागतियोगनिष्ठसत्सङ्· गतेरेवं विधत्वात् चोदनां विधिं प्रतिचोदनां निषेधं यद्वा चोदनां न हिंस्यात्सर्वा भूतानीत्यादिरूपां सामान्यभावनां प्रतिचोदनाम· ग्नीषोमीयं पशुमालभेतेत्यादिरूपामपवादात्मिकां विशेषचोदनाम् उत्सृज्येत्यनेन विधिनिषेधात्मकशास्त्रत्याग उक्तः प्रवृत्तिं च निवृत्तिं चेत्यनेन विधिनिषेधात्मकशास्त्रबोध्यप्रवृत्तिनिवृत्तित्यागः श्रोतव्यमित्यनेनानन्यसाध्यस्वाभीष्टोपायान्तरशुश्रूषात्यागः श्रोतव्य· मुत्सृज्येत्यनेन तदुपायतया श्रुतेषु कर्मज्ञानभक्तियोगेषु उपायत्व· बुद्धित्यागः तत्र विध्यात्मकशास्त्रत्यागो नाम तस्मिन् स्वाभीष्टसा· धनतावबोधकत्वबुद्धित्यागः निषेधात्मकशास्त्रत्यागस्तु निषिद्ध· सेवानिवृत्तेरुपायत्वावबोधकत्वबुद्धित्यागरूपः प्रवृत्तिनिवृत्तित्यागस्तु शास्त्रबोध्ययोः प्रवृत्तिनिवृत्त्योर्दुष्करत्वानुसन्धानेनोपायत्वबुद्धित· श्चिकीर्षाप्रयत्नादित्यागात्मकः अनेन कृत्यकरणाऽशक्तस्याकृत्यकर· णान्निवर्तितुमप्यशक्तस्यापि मच्छरणागतिरभीष्टोपायभूतेति ध्वनितम् ॥ १४ ॥

मामित्यनेन सार्वज्ञ्यसर्वशक्त्याद्याश्रयणासौकर्यापादका श्रित· कार्यापादकवात्सल्यसौशील्यस्वामित्वज्ञानशक्तिपूर्त्यादिकल्याण· गुणयोगित्वमभिप्रेतम् एकमित्यनेन फलोपाययोरैक्यं विवक्षितम् एवकारेण प्रपदने स्वस्य कर्तृत्वव्यावृत्तिः एकवचनेन स्वानुष्ठि· तशरणागतियोगेऽप्युपायत्वबुद्धिव्युदासः तत्र हेतुत्वेनात्मानं विशि· नष्टि । आत्मानं सर्वदेहिनामिति सर्वान्तरात्मभूतेन मनः पर्यन्तसर्वे· न्द्रियप्रचोदयित्रा मयैव प्रकृतोपायानुष्ठानस्य कारितत्वादत्रोपायता· बुद्धिर्न कार्येति भावः । मामेवेत्येवकारोऽन्यैस्तवः तेनासार्वज्ञ्यादिगु· णायोगिचतुर्मुखादिजीवव्यावृत्तिः एवकारस्य स्वसमभिव्याहृत· पदार्थविपरीतपदार्थव्यावृत्तिपरत्वात् सर्वात्मभावेन शरणं याहि उपाये गृहरक्षित्रोः शब्दः शरणमित्ययमित्युक्तेरत्रोचितत्वादुपायपरः शरणशब्दः याहि या प्रापणे प्राप्तिगतिपूर्वपात्याद्गत्यर्था बुद्ध्यर्थाः इति न्यायाद्व्यवस्येत्यर्थः । सर्वात्मभावेन यः सर्व आत्मनः स्वस्य भावः उद्देश्यत्वपितृत्वरक्षकत्वशेषित्वादिनिरूपितवेतृत्वगुणत्व· पद्दृपत्वाशेषत्वादिसम्बन्धज्ञानं तेन एवं चेत् कुतोऽपि भयं नास्ति यस्य सः अकृत्यकरणकृत्याकरणादिमत्प्राप्तिप्रतिबन्धकभयरहितः मां सुखोपभोग्यं प्राप्स्यसि प्राप्स्यसि ॥ १५ ॥

आत्मानं सर्वदेहिनामित्यनेन स्वस्य सर्वान्तरात्मतया सर्वे· न्द्रियप्रचोदयितृत्वमुक्तं तत्प्रकारजिज्ञासया पृच्छति । संशय इति । हे योगेश्वरेश्वर ! योगनिर्वाहकाधिपते तव वाचं शृण्वतो मम उपायविषयः संशयो निवृत्तः आत्मस्थः आत्मविषयस्तु न निवर्तते ततः किमित्यतो विशिनष्टि । येनात्मस्थेन संशयेन मे मनो भ्राम्यति अतस्तं संशयं निराकुर्विति भावः । किं सर्वेन्द्रिय· प्राणनियमनादिकं जीवकर्तृकमुत त्वत्कर्तृकं त्वत्कर्तृकत्वेऽपि कस्य देवमनुष्यादिभावात्मकः संसारः कश्चेन्द्रियादीनामाधारः किं जीव उत शरीरं किम्वा त्वं कश्च सुखदुःखहेतुपुण्यापुण्यार· म्भकः कश्च सुखदुःखयोर्भोक्ता कश्च संसारनिवृत्त्युपाय इत्येवं विधः आत्मस्थः संशयः ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तत्फलमाह । मत्कामा इति । मामेव कामयन्त इति मत्कामाः अस्वरूपविदोऽबलाः जारं मां रमणं मत्वा सङ्गान्मां परमं ज्ञात्वा मामापुरित्यन्वयः । आसां ब्रह्मज्ञानं कथमुद्भूत उच्यते संसारं जरयतीति जारः तं नित्यानन्दप्रदत्वेन रमय· तीति रमणः तं सर्वतो विलक्षणस्वभावस्यास्य विष्णोः स्वरूपं विदन्तीत्यस्वरूपविदः इत्येवं गुणसम्प्रीतितो मां ब्रह्म ज्ञात्वेति गोपिकाद्या दिवं गत्वा हरिं ज्ञात्वा यथा तथमित्ये· तत्रापि प्रमाणत्वेनोदाहर्तव्यमिति ज्ञातव्यम् ॥ १३ ॥

यतो मुमुक्षूणामहमेव शरण्यतस्त्वमपि मां शरणं व्रजे· त्युपसंहरति । तस्मादिति । प्रतिकर्मचोदितां चोदनां नानाकर्म· विधिमुत्सृज्य प्रवृत्त्यादिकं च मयि समर्प्य सर्वदेहिनामात्मानं स्वामिनं यस्मिन्नकुतोभयमस्ति तमेकं मां सर्वात्मभावेन सर्व· स्वामिबुद्धिक्रियया शरणं याहीत्यन्वयः ॥ १४—१५ ॥

प्रथमतो बाधौ मुख्याधिधेत्युक्त्वा विशेषतो गोपिकाप्रशंसनं कृतमिति संशयबीजं हृदि कृत्वोद्धवश्चोदयति । संशय इति भक्तेषु बाधोः सर्वोत्तमत्वमुक्त्वा विशेषतो गोपीस्तुवतस्तव वाचं शृण्वतो ममात्मस्थो मनोगतः संशयो साधुत्तमो गोप्यो वेत्येवमाकारो न निवर्तते प्रत्युत येन वचनेन मे मनो भ्राम्यति निर्धारितैककोटिस्थितं नेत्यन्वयः ॥ १६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ॥

तदेवं प्रकटाप्रकटयोर्द्वयोरपि लीलयोस्तासां स्वप्राप्तौ भाव एव कारणं दर्शितं ततश्चाप्रकटलीलायां प्रविष्टा अपि याश्चि· शेषणाधिक्येन तं प्रापुस्तद्दर्शयन्नन्यद्यथानुवदति । मत्कामा इति अयमर्थः यथा भीष्ममुदारं दर्शनीयं कटं करोतीत्यत्र क्रिया खलु विशेष्यस्य कटं प्रख्यापयन्ती विशेषणानामपि प्रख्या· पयति कटं करोति तं च भीष्ममित्यादिरीत्या तथात्रापि प्रतीयते विशेष्यं चात्र ब्रह्मैव सर्वविशेषाश्रयणीयपरमवस्तुतया तेषु तस्या· विशेषं तदेवं क्रियते तनुवादमनुक्त्वैव न विशेषमुपी· मेत्यनुगमात् तदेवं क्रियते तानुवादमनुक्त्वैव न विधेयमुपी· रयेदित्युक्तदिशा पाठानुरोधनान्न न विधेयं निर्णीयते किन्त्वर्थ·

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

नुरोधेन तस्यैव बलवत्त्वात् यथा यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोतीत्यत्र पच्यन्तां विविधाः पाकाः इत्यादौ सर्वहोहृश्च गृह्यतामित्यत्र अग्निहोत्रं जुहोति यवागूंच पचतीत्यत्र च पर्णमयीत्वादीनामेव विधेयत्वं तद्वत् तद्विशेषवाकाङ्क्षापूर्तेरर्थानुरोधस्य बलवत्त्वं ततश्च पूर्वोक्तरीत्या ताः ब्रह्म प्रापुः किं निर्विशेषतयाविर्भूतं न किन्तु परमं परा मा लक्ष्मीर्यस्मिन् तदिति श्रीभगवद्रूपमेवेत्यर्थः । परमं यो महद्ब्रह्मेति सहस्रनामस्तोत्रात् तादृशत्वं च "शुभाश्रयः सचित्तस्य सर्वगस्य तथात्मन" इति श्रीविष्णुपुराणरीत्यान्यत्रापि भगवदाविर्भावे संभवतीत्याशङ्क्याह मां श्रीकृष्णाख्यमेव प्रापुः यथोक्तं तासु स्वयमेव मय्यावेश्य मनः कृष्णे इत्यादि मयि भक्तिर्हीत्यादि च तत्र च मां निजभावविशेषमयभेदेन द्विधा प्रापुरिति बोधयितुं तासां तत्तद्विशेषणसाहित्येन सविशेषणद्वयमाह । मत्कामा रमणमिति । जारस्वरूपाविद इति रमणशब्देनात्र पतिरेवोच्यते नन्दनशब्देन पुत्र इव रूढ्या यौगिकत्वबाधात् यथा मित्रानन्दनशब्देन मित्रापुत्र एवोच्यते न तु मित्रापतिः मित्रारमणशब्देन च मित्रापतिर्न तु मित्रापुत्रस्तद्वदत्रापि जारशब्देनोपपतिरेवोच्यते न तु पतिः कोषकारमते च तत्रैव रूढः रमणं स्यात्पटोलस्य मूलेऽपि रमणः प्रिये इति विश्वप्रकाशात् स्त्रीजातिसंबन्धेन रमणशब्दवत् प्रियशब्देन पतिरेवोच्यते तथैव प्रसिद्धेः धवः प्रियः पतिर्भर्त्ता जारस्तूपपतिः समावित्यमरकोशाज्जारःपापपतिरिति त्रिकाण्डशेषाच्च पतित्वं तूद्वाहेन कन्यायाः स्वीकारित्वमिति लोक एव भगवति तु स्वभावेनापि दृश्यते परमव्योमाधिपस्य महालक्ष्मीपतित्वं स्वानादिसिद्धमिति ततश्च मत्स्वरूपविद इति स्वरूपं नित्यमेव मत्प्रेयसीत्वलक्षणमवतारसमये मदीयलीलाशक्त्या मोहितत्वाच्च विदन्ति याश्च तथा सत्यो जारं जारबुद्धिवेद्यं सन्तं मां प्रापुः तथापि रमणत्वप्राप्तौ हेतुः मत्कामाः इति मयि कामः कथमस्माकमन्यस्मिन् पतित्वं स्वप्नवद्दृश्येत श्रीकृष्ण एव आगत्य यत्प्राप्नुभवेदित्यभिलाषो यासां तथा सत्यो मां रमणं प्रापुः तादृगभिलाषश्चासां दृष्ट एवोपलभ्यते यथा अपि बत मधुपुर्यामार्यपुत्रोऽधुनास्ते इत्यत्र तस्य स्त्रिया एव वयमिति व्यञ्ज्य तत्र च किङ्करीणामिति श्यामसुन्दर ते दास्य इति वदिष्यात् किङ्करीत्वेनापि निक्षिप भुजगुरुसुगन्धं मूर्ध्नि धेहि कदा नु इत्यनेन तदेवासामसङ्कोचाङ्गीकारेण कदा स्वाङ्गीकरिष्यतीति श्रीराधा स्वयमेव प्रार्थितवतीति तथा कात्यायनि महामाये इत्यादौ गोप्यः किमाचरदित्यादौ यत् पत्यपत्यसुहृदामित्यादौ च श्रीभगवताच स्वमतं तदेवोक्त्वासोपदिष्टं यहुल्यो मे मयारिमका इति अत्र यात यूयमित्याद्यनुसारेण श्रीनन्दराजे निजपितृत्वाभिमननेन स्वस्मिन् गोपत्वमननात् ब्राह्मणस्य मम ब्राह्मणीतिवत् खलु वल्लभस्य मम वल्लवीरूपास्ता इति श्रीशुकवचनेन च कृष्णवध्व इत्युक्तं तदेवं जारबुद्धेर्हेयत्वं रमणबुद्धेरुपादेयत्वं जारबुद्धिवत्त्वमपीति व्याख्याय श्रीस्वामिभिरवगमितं मर्माभिलाषप्राप्तिः अवद्यभयगन्तव्या अन्यथा ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहमिति श्रीगीतोपनिषद्वचः व्यर्थं वदभिलाषपोष्यत्वेनार्थः तस्माद्रमणतया विद्यते इति प्रतिज्ञाहानिर्न स्यात् तत्क्रतुन्यायात् अहं भक्तपराधीन इति स्वेच्छामयस्येति प्रतिज्ञाहानिश्च स्यात्



स्वयमेवेदं दृष्टान्तद्वारा बोधितं मय्यावेश्य मनः कृष्णे इत्यादावनन्तरं या मया क्रीडता रात्र्यां वनेऽस्मिन् व्रज आस्थिताः अलब्धरासाः कल्याण्यो मापुर्मद्वीर्यचिन्तया इति अथ खल्वन्तर्गृहगतानां तासां तान् पतीन् तांश्च देहांस्त्यक्तवतीनामौपपत्यं न सम्भवतीति हे कल्याण्य इत्यनेन भवतीनां न तद्दोषपरित्याग इति वैशिष्ट्यमवगमितं तदेतदभिप्रेत्यैव पूर्वमपि तमुद्धवं प्रति धारयन्त्यतिकृच्छ्रेण प्रायः प्राणान् कथञ्चन प्रत्यागमनसन्देशैरित्युक्त्वा तासां प्राणधारणे आग्रहो दर्शितः जारतया प्रतीतत्वेन रमणत्वेन च मत्प्राप्तौ मम कारुण्यं तु परमसहायमित्याह । अबला इति । तादृशमत्प्रेमकैवल्येन तासु स्वस्वरूपानुसन्धानबलतिरोधानात् न विद्यते बलं मत्साहाय्यं विनान्यत् यासां तादृश्य इति अतएव ममातिकरुणोदयादिति भावः । आस्तां नित्यप्रेयसीनां वार्त्ता तासां सङ्गादन्या अपि शतसहस्रशस्तथा मां प्रापुरिति किञ्च ब्रह्मत्वं परमेश्वरत्वञ्च तत्र स्वाभाविकमेवेति तादृशप्रेमविशेषेण तयो रावरणमेव ननु निर्धूननं परमाधुर्यस्य तु परमोल्लासः अथ जारत्वं तु तत्रासत्यं दुःखमयजुगुप्सितान्यसम्बन्धाविष्कृतं चेति तेन प्रेमविशेषेण निर्धूननमेव ननु पूर्ववदावरणमात्रं परमरमणत्वस्य तु परमोल्लास इति अत्र पद्ये विशेषः श्रीकृष्णसन्दर्भे द्रष्टव्यः ॥ १३ ॥

तदेवं सद्भीष्टतमां श्रीगोपीनामपि स्वप्राप्तिं कथयित्वा तस्यापि तां क्रोडीकुर्वन्नुपसंहरति । तस्मादिति युग्मकेन । यस्मान्मदीयत्वेन लब्धसद्भावानां तेषां नारदाङ्गिरःप्रभृतीनामपि सङ्गमात्रस्यैतावन्महिमा तस्मात्सद्गुणपरमाश्रयत्वेन परमसन्तं तदभीष्टं मामेकमेव शरणं याहि शरणागतिपर्यन्ततया भजेत्यर्थः ततश्च हि निश्चितं मया त्वमकुतोभयः स्याः भविष्यसि तत्र कैमुत्यायात्मनः स्वभावतः सर्वहितत्वं दर्शयति सर्वदेहिनामात्मानं परमात्मानमिति एकमेव शरणमित्येव दर्शयति सर्वात्मभावेनेति तदेव विवृणोति । उत्सृज्येत्यादिना । श्रोतव्यं श्रुतमेवेति ज्ञानाश्रयत्वमपि निराकरोति तत्रैकमिति तदात्वे एवेति कालान्तरे चाश्रयान्तरस्य भावनामपि निषेधति स्म ॥ १४ ॥ १५ ॥

पूर्वं तावच्छ्रीभगवता मयोदितेष्ववहितेत्यादिना कर्ममिश्रा भक्तिरुक्ता ततश्च तत्परत्वे सति निवृत्तं कर्म सेवेतेत्यादिना सर्वमेव कर्म त्याजितं किन्तु ज्ञानमित्यादिना ज्ञानमिश्रा विहिता ज्ञानार्थमात्मतत्त्वनिरूपणं च सुष्ठु कृतम् श्रीमदुद्धवेनापि गुणेषु वर्तमानोऽपीत्यादिना पृष्ट्वा बद्धो मुक्त इत्यादिना श्रीभगवदुक्तः सिद्धान्तोऽवधारितः तत्तु ज्ञानं भक्तिं विना न सिद्ध्यतीति स्वयं भगवतैव पुनः शब्दब्रह्मणि निष्णात इत्यादिनोद्दिष्टम् श्रद्धालुरित्यादिना भक्तिं च दर्शयित्वा तस्या भक्तेर्जन्मनि सिद्धौ च कारणं सत्सङ्ग एवेति दर्शितं पुनरुद्धवेन साधुस्तवेत्यादिना तौ विशेषतः पृष्टौ श्रीभगवता च तावुपदिश्य प्रायेण भक्तियोगेनेत्यादिना केवलः सत्सङ्ग एव दृढीकृतोऽतिशायितश्च तस्मात्त्वमुद्धवेत्यादिना कर्म च ज्ञानं च सर्वमेव त्याजितं तदेवं यद्यपि संशयावसरो नास्ति तथाप्याह । संशय इति । तव वाचं शृण्वतोऽवधारयतो ममात्मस्थः संशयः मयोदितेष्ववहित इत्यादिका व्याख्यावगतप्रवाक्यार्थपर्यालोचनासामर्थ्यं न निवर्तते कुतः येन यतो मम मनो भ्राम्यति वैयग्र्याच्चे-

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

शेषाविष्टमस्ति तस्मात्पुनः सम्यक्त्वेनोपदिश्यतामिति भावः । संशयोऽत्र तत्तत्प्रकरणानामेकतात्पर्य्यताग्रहणे वैकल्यं शृण्वतः इति शृण्वतोऽपीत्यर्थः ॥ १६ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ततश्च ता मां प्रापुरित्याह । मत्कामा मां कामयन्त इति ताः मां परमं ब्रह्म प्रापुः कीदृशं रमणं ताभिः सह रममाणं तारमयन्तं च वीक्ष्य रन्तुं मनश्चक्रे इति आत्मारामोऽप्यरीरमदिति शुकोक्तेः किम्पतिस्वरूपं न जारम् उपपतिस्वरूपम् कीदृश्यः अस्वरूपविदः मन्महामाधुर्य्यमात्रानुभावित्वादैश्वर्य्यलक्षणं मत्स्वरूपविशेषं न विदन्तीति ताः । यद्वा अन्ये भक्तजना इव मत्स्वरूपं मत्सारूप्यं न विन्दन्ते न प्राप्नुवन्ति तत्प्राप्तौ ताभिर्मद्विहारासिद्धेरिति यद्वा ताः स्वस्वरूपं सौन्दर्य्यादिकं न जानन्ति किन्तु मत्सौन्दर्य्यादिकमेवानुभवन्तीति ताः यद्वा न विद्यन्ते स्वरूपविदः स्वरूपज्ञा यासां ताः ॥ १३ ॥

तदेवं श्रीमदुद्धवेन साधुलक्षणं पृष्टः श्रीभगवांस्तारतम्येन त्रिविधं साधु वर्णयित्वा तत्सत्सङ्गप्रादुर्भूतां प्रधानीभूतां केवलां च भक्तिं सामान्यतो निरूप्य भक्तेः स्ववशीकारं विवक्षुः कैमुत्येन सत्सङ्गस्यैव वशीकारित्वमुक्त्वा सत्सङ्गिनो भक्तांश्च निर्दिश्यान्ते गोप्यादिनिष्ठं केवलं भक्तियोगं दुर्लभत्वेन स्तुत्वा सहैव रामेण सार्द्धमित्यादिना तत्रापि गोपीविषयकस्वप्रेमवात्सल्यं सद्याजाज्वल्यमानङ्गारमञ्जिर्यां हृदि मुद्रितमप्यधीरतयैवोद्घाट्य तासामेव भक्तियोगस्य स्ववशीकारसर्वोत्कर्षपराकाष्ठात्वं तासामेव साधुत्वस्यापि सर्वमहामहोत्कृष्टकक्षाविश्रामित्वमभिव्यज्य केवले तदनुष्ठिते भक्तियोग एवोद्धवं प्रवर्त्तयितुमाह । तस्मादिति । चोदनां विधिं प्रतिचोदनां प्रतिषेधं च विहितं कर्म निषिद्धं च कर्म त्यक्त्वेत्यर्थः तर्हि किं संन्यासं कुर्वे न प्रवृत्तं गृहस्थानां धर्मं च निवृत्तं सन्यासिनां धर्मं च त्यक्त्वा तत्रापि श्रोतव्यं श्रुतं च त्यक्त्वेति भाविधर्मश्रवणमनाकाङ्क्ष्य भूतश्रवणं च विस्मृत्येत्यर्थः । सर्वात्मभावेन सर्वो य आत्मनो मनसो भावो दास्यसख्यादिस्तेनैकमेवमामात्मसात्कृत्य शरणं याहि मयैव अकुतोभयः स्याः इति तव नास्ति कर्माधिकारो नापि ज्ञानाधिकारस्तदपि तं तमारम्भ्यारोप्य प्रत्यवायमयं संसारमयं च मन्यसे चेत्तदा तद्द्वयभयात्त्राताऽहं विद्यमान एवास्मीत्यर्थः ॥ १४—१५ ॥

संशयो न निवर्त्तत इत्येतत्पूर्वकक्षा एव मयि सर्वाणि कर्माणि निरपेक्षः समाचरेदिति वदता त्वया मह्यं कर्माधिकारो दत्तः तत्पूर्वं तु—

> यदिदं मनसा वाचा चक्षुर्भ्यां श्रवणादिभिः ।
> नश्वरङ्गृह्यमाणं च विद्धि मायामनोमयमिति ॥
> तस्माद्युक्तेन्द्रियग्रामो युक्तचित्त इदं जगत् ।
> आत्मनीक्षस्व विततमात्मानं मय्यधीश्वरे ॥

इत्युक्तवता मह्यं ज्ञानाधिकार एव दत्तः अधुना तु सर्वं त्यक्त्वा मां शरणं याहीति भक्त्यधिकारं ददासि न जाने पुनरग्रे कमधिकारं मह्यं दास्यसीति सत्वरसोद्भूत वक्रोक्तिर्योतिता ॥१६॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अबलाः सत्सङ्गेतरबलरहिताः मत्कामाः श्रीकृष्ण एवास्मत्सुखहेतुर्नान्यत्किञ्चिदित्येवं मयि कामः सङ्कल्पो यासां ताः मच्छरणाः स्वबुद्ध्या जारमुपपतिं शास्त्रतस्तु परमं ब्रह्ममामेव प्रापुरित्यर्थः ॥ ॥ १३ ॥

यस्मात् शरणागतिरित्थं महाफला तस्मात् हे उद्धव ! त्वमपि चोदनां प्रतिचोदनां विधिनिषेधरूपं शास्त्रं प्रवृत्तं च निवृत्तं च त्रिवर्गोपायं मोक्षोपायं च शास्त्रार्थं श्रोतव्यं श्रुतं च हेयोपादेयानुष्ठानसिद्धये गुरुमुखात् श्रोतव्यं सुज्ञातं च उत्सृज्य ॥१४॥

सर्वात्मभावेन सर्वेषु चोदनादिषु हितकारित्वाहितकारित्वरूपो य आत्मभावः आत्मनो निश्चयः तेन श्रीकृष्ण एव हितमहितं स्वेच्छया कर्तुमकर्तुं समर्थ इत्येवं भूतेन मामेव शरणं याहि सर्वेषु ब्रह्मादिषु सत्सु स्वस्यैव शरणत्वे हेतुमाह । एकमेव निःसमानातिशयं तत्रापि हेतुमामाह । सर्वेषां देहिनां ब्रह्मादीनामात्मानं ननु सर्वतो निवृत्तस्य मे कुतश्चिद्भयं स्यादित्यत्राह । मयैव हि निश्चितम् अकुतोभयः स्याः ॥ १५ ॥

सर्वदेहिनामात्मानमिति तव वाचं शृण्वतो मे आत्मनि सर्वात्मनि त्वयि विषये स्थितः कथमसौ सर्वात्मा इत्येवंरूपः संशयः न निवर्तते ॥ १६ ॥

---

### भाषा टीका ।

वे स्त्री जाति गोपिका गण मेरे स्वरूप को न जान कर भी जार पुरुष की बुद्धि से भी रमण बुद्धि से हजार हाँ सत्संग से परं ब्रह्म मेरे को प्राप्त हो गईं ॥ १३ ॥

तिस कारण से हे उद्धव ! तुम सब वैदिक विधि तथा स्मृति विधि सबों को छोड़कर प्रवृत्त निवृत्त दोनों कर्मों को छोड़कर सुना हुआ तथा सुनने योग्य इनको भी छोड़ कर ॥ १४ ॥

सब प्राणि के एक आत्मा अन्तर्यामी मेरे को सर्वात्मभाव से एकही आश्रय समझ कर शरण प्राप्त होजावो, तब मेरे रक्षक होने से सब धर्माधर्मों से तुम निर्भय होजाओगे ॥ १५ ॥

### उद्धव उवाच ।

हे योगेश्वरों के ईश्वर आप के विचित्र वचनों के सुनने से मेरे मन में स्थित सन्देह निवृत्त नहीं होता है और मेरा मन भ्रमता है ॥ १६ ॥

---

श्रीभगवानुवाच ।

स एष जीवो विवरप्रसूतिः प्राणेन घोषेण गुहां प्रविष्टः ।
मनोमयं सूक्ष्ममुपेत्य रूपं मात्रा स्वरो वर्ण इति स्थविष्ठः ॥ १७ ॥
यथाऽनलः खेऽनिलबन्धुरूष्मा बलेन दारुण्यधिमथ्यमानः ।
अणुः प्रजातो हविषा समिध्यते तथैव मे व्यक्तिरियं हि वाणी ॥ १८ ॥
एवं गदिः कर्म गतिर्विसर्गो घ्राणो रसो दृक् स्पर्शः श्रुतिश्च ।
सङ्कल्पविज्ञानमथाभिमानः सूत्रं रजःसत्त्वतमोविकारः ॥ १९ ॥
अयं हि जीवस्त्रिवृदब्जयोनिरव्यक्त एको वयसा स आद्यः ।
विश्लिष्टशक्तिर्बहुधेव भाति बीजानि योनिं प्रतिपद्य यद्वत् ॥ २० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

उक्तं स एष इत्यष्टभिः अयम्भावः ईश्वरस्तावत्स्वमायावशात्प्रपञ्चात्मना भाति तत्प्रपञ्चाध्यासाच्च जीवानामनाद्यविद्यया कर्तृत्वादि ततो विधिप्रतिषेधाधिकारस्तदानीं सत्त्वशुद्धये कर्माणि कुर्वित्युक्तम् सत्त्वे च शुद्धे पुनः कर्मजाड्यपरिहाराय भक्तिविक्षेपककर्मादरं परित्यज्य दृढविश्वासेन भजेत्युक्तम् जातायां तु विद्यायां न किञ्चित्कर्तव्यमस्तीति तत्र तावदीश्वरस्य प्राणादीन्द्रियद्वारा जीवसंसृतिकारणभूतं प्रपञ्चोद्गममाह सार्धैश्चतुर्भिः। स एषोऽपरोक्षः जीवयतीति जीवः परमेश्वरः अपरोक्षत्वे हेतुः विवरेष्वाधारादिचक्रेषु प्रसूतिरिव प्रसूतिरभिव्यक्तिर्यस्य सः तामेवाभिव्यक्तिमाह। घोषेणेति। घोषेण पराख्येन नादवता प्राणेन सह गुहामाधारचक्रं प्रविष्टः सन्मनोमयं सूक्ष्मं रूपं पश्यन्त्याख्यं मध्यमाख्यं च मणिपूरचक्रे विशुद्धचक्रे चोपेत्य प्राप्य वक्त्रे मात्रा ह्रस्वादिः स्वर उदात्तादिर्वर्णः ककारादिरित्येवं वैखर्याख्यः स्थविष्ठोऽतिस्थूलो नानावेदशाखात्मको भवति। तथाच श्रुतिः—

चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः।
गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्तीति ॥

अभियुक्तश्लोकश्च—

या सा मित्रावरुणसदनादुच्चरन्ती त्रिषष्टिं
वर्णानन्तः प्रकटकरणैः प्राणसङ्गात्प्रसूते ॥
तां पश्यन्तीं प्रथममुदितां मध्यमां बुद्धिसंस्थां
वाचं वक्त्रे करणविशदां वैखरीं च प्रपद्ये ॥

इति ॥ १७ ॥

अव्यक्तस्य सतः सूक्ष्ममध्यमक्रमेणाभिव्यक्तौ दृष्टान्तः । यथेति । यथाऽग्निः खे ऊष्मा अव्यक्तोष्मरूपः दारुण्यपि मथ्यमानोऽनिलसहायः सन् अणुः सूक्ष्मविस्फुलिङ्गादिरूपो भवति पुनः प्रकृष्टो जातो हविषा संवर्धते तथैवेयं वाणी ममाभिव्यक्तिः ॥ १८ ॥

उक्तां वाग्वृत्तिमुपसंहरन्नितरेन्द्रियवृत्तिष्वतिदिशति । एवं गदिर्गदनं भाषणं मे व्यक्तिरित्युपसंहारः कर्म हस्तयोर्गतिः पादयोर्विसर्गः पायूपस्थयोरिति कर्मेन्द्रियाणाम् घ्राणोऽवघ्राणं रसो रसनं दृक् दर्शनं स्पर्शः स्पर्शनं श्रुतिः श्रवणमिति ज्ञानेन्द्रियाणाम् सङ्कल्पो मनसो विज्ञानं बुद्धिचित्तयोरभिमानोऽहङ्कारस्य सूत्रं प्रधानस्य सत्त्वरजस्तमसां विकारोऽधिदेवादिस्त्रिविधः प्रपञ्चो मे व्यक्तिरिति पूर्वेणान्वयः ॥ १९ ॥

तस्मादीश्वरव्यक्तिरूपः प्रपञ्चो नेश्वराद्भिन्नोऽस्तीत्याह । अयमिति । अयं जीव ईश्वर आद्योऽव्यक्त एक एव वयसा कालेन विश्लिष्टा विभक्ता वागादीन्द्रियरूपाः शक्तयो यस्य यद्वा विशेषेण श्लिष्टा आलिङ्गिता मायाशक्तिर्येन सः बहुप्रकार इवाऽऽभाति यतः स एवाद्यः त्रिवृत् त्रिगुणाश्रयः अब्जयोनिर्लोकपद्मस्य कारणभूतः एकस्य बहुधा भाने दृष्टान्तः योनिं क्षेत्रं प्रतिपद्य प्राप्य बीजानि यद्वदिति ॥ २० ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

अयं भावः अष्टानां पद्यानामयमभिप्रायः स्वमायावशात् स्वमायां वशीकृत्येत्यर्थः । प्रपञ्चात्मना बहिरङ्गशक्तिद्वारा विश्वरूपेणेत्यर्थः । अतस्मिंस्तद्बुद्धिरध्यासः देहादिरहमस्मीति तस्मात् ततोऽध्यस्तकर्तृत्वादेः तदानीं विधिप्रतिषेधाधिकारकाले तत्र एवं व्यवस्थायां सत्याम् आधारचक्रं हिरण्यगर्भस्येति ज्ञेयं तत्र मनोमयं पश्यन्त्याख्यं नाभिस्थे मणिपूरकचक्रे सूक्ष्मरूपं मध्यमाख्यं हृदयस्थे विशुद्धचक्रे चोपेत्येत्यर्थः । तथाच वाचः परादिरूपे प्रमाणं श्रुतिः वाक् वाचः परिमितानि संख्यातानि पराख्यादीनि चत्वारि पदानि स्वरूपाणि सन्ति तेषां मध्ये त्रीणि परा पश्यन्ती मध्यमाख्यानि रूपाणि गुहा गुहायां शरीरमध्ये मूलाधारनाभिहृदयेषु निहितानि स्थितानि नेङ्गयन्ति स्वरूपं न प्रकाशयन्ति वाचस्तुरीयरूपं वैखर्याख्यं मनुष्या वदन्त्येव नतु तत्तु तत्त्वतो जानन्ति अथ श्लोके या सा प्रसिद्धा पराख्या मित्रोऽग्निः वरुणः सोमस्तयोः सदनमाधारचक्रं तस्मात् प्राणसङ्गेनोच्चरन्ती स्वयमेवोद्भवन्ती पराख्या अन्तःकरणाभ्यां मनोबुद्धिभ्यां प्रकटकरणेन वागिन्द्रियेण च त्रिषष्टिं वर्णान्

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

प्रसूते प्रसूयते अतस्तां प्रथममुदितां पराख्याम् अन्तः पश्यति ननूच्चारयतीयं तां मनःस्थां पश्यन्त्याख्यां तथा बुद्धिसंस्थामुच्चारयामीति विचारयुक्तां मध्यमां करणविशदां स्थानप्रयत्ननिर्मलां वैखरीमहं प्रपद्ये त्रिषष्टिमिति ह्रस्वदीर्घप्लुतभेदेनाऽणो नव प्लुतस्थामात्रात् ऋ ऌ वर्णाश्चत्वारः ह्रस्वत्वाभावादेचोऽष्टौ उदात्तादिस्वरास्तु तदन्तर्गता एव विसर्गानुस्वारजिह्वामूलीयोपध्मानीयाश्चत्वारः एवं पञ्चविंशतिः स्पर्शाश्च तावन्तः एवं पञ्चाशत् यवलाः सानुनासिका निरनुनासिकाश्चेति षट् रेफ एकः नकारस्य दन्त्यमूर्द्धन्यत्वभेदे द्विः शाठात् शषसहलक्षाः षट् एवं त्रिषष्टिरिति ॥ १७ ॥

अव्यक्तस्य सर्वागोचरस्य सतो ब्रह्मणः खे काष्ठचिन्हे तत्र परात्वमव्यक्तैवेति अव्यक्तोष्मरूपतयोपमीयते पश्यन्ती तु सूक्ष्मविस्फुलिङ्गादिरूपतया मध्यमा प्रकृष्टजाततया वैखरीतु समिद्धतयेति ज्ञेयम् ॥ १८ ॥

एवं गदिरित्युपसंहारो निगमनं विज्ञानं निश्चयात्मकं बुद्धेः अनुसन्धानन्तु चित्तस्येति ज्ञेयं मे व्यक्तिः ममाभिव्यक्तिरूपः ॥ १९ ॥

अयमिति सार्द्धकम् अयं प्रपञ्चाभिव्यक्तिरूपः जीवयति चेतयतीति जीव ईश्वरः पूर्वार्थे वागादीन्द्रियाणां बहुप्रकारान्तर्गतत्वाद्विशेषणमधिकमतो वक्ष्यति तस्मात् मायेश्वरस्यैव बहुप्रकारेण भानात् तन्मायाधिष्ठितत्वात् ईश्वरमायाऽऽश्रितत्वात् तदाश्रयमीश्वराधिष्ठानकं तत ईश्वरात् ॥ २० ॥ २१ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

विवरप्रसूतिः विवरे हृदयच्छिद्रे प्रसूतिः प्रकाशो यस्य सः गुहां प्रविष्टो जीवः प्राणेन घोषेण शब्देन चोपलक्षितः शरीरस्थितिकाले जीवः प्राणं घोषं च न जहातीत्यर्थः।यदेतत्कर्णावपिधाय शृणोति नैनं घोषं शृणोति स यदोत्क्रमिष्यन् भवतीति हि श्रूयते प्राणवायुविघट्टितशरीरच्छिद्र प्रभवः स घोषः मनोमयं मनोग्राह्यं सूक्ष्मं पार्श्वस्थैरनुपलक्ष्यं रूपमुपेत्य स्थितः पश्चादुच्चारणवेलायाम् उरः कण्ठःशिरस्तथेति प्रकारेण ताल्वादिस्थानप्रयत्नवशात् स्थविष्ठो भवतीत्यर्थः। मात्रा ह्रस्वादिः स्वर उदात्तादि ॥१७॥

पूर्वं सूक्ष्मतयानभिव्यक्तस्य क्रमेण स्थूलतयाभिव्यक्तौ दृष्टान्तमाह । यथानल इति । खे काष्ठोदरे ऊष्मा मथनदशायां सूक्ष्ममात्रतयोपलब्धेः मे व्यक्तिः मदधीनत्वेनाभिव्यक्ता ॥ १८ ॥

एवं शब्दप्रसङ्गादुच्चारणं प्रस्तुतं ततश्च वागिन्द्रियव्यापार उक्तो भवति अथान्येषामिन्द्रियाणां व्यापारानाह । एवं गदिरिति । ज्ञानेन्द्रियाणामाह । घ्राण इति । संकल्पविज्ञानं संकल्परूपज्ञानं मनोव्यापारः अहंकारकार्यो ऽनात्मन्यात्मबुद्धिरभिमानः सूत्रं महान् स ह्यध्यवसायहेतुः महान् वै बुद्धिलक्षण इति वचनात् एतत्सर्वं रजःसत्त्वतमोविकारः ॥ १९ ॥

त्रिवृत् गुणत्रयवपुः अब्जयोनिः अण्डं जातं ब्रह्माण्डमजं तदन्तर्यामित्वेन सोऽब्जयोनिः एकः एकरूपः वृद्धिपरिणामादिरहितः मे मदधीनः वयसा कालेन विसृष्टशक्तिः देहानुबन्धित्वाहङ्कारममकाररूपेण विप्रकीर्णचैतन्यशक्तिः बहुधा देवमनुष्यादिरूपेण यथा बीजानि योनिं भूमिं प्रतिपद्याङ्कुरादिरूपेण बहुधा विभान्ति तद्वत् ॥ २० ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तत्र सर्वेन्द्रियव्यापाराणामात्मायत्ततां विवक्षुस्तावद्वागिन्द्रियव्यापारस्य उत्पत्तिक्रममात्मायत्ततां चाह । स एष जीव इति । विवरप्रसूतिः विवरे हृदयच्छिद्रे प्रसूतिः प्रकाशो यस्य सः गुहां हृदयगुहां प्रविष्टः "हृदि ह्ययमात्मा प्रतिष्ठित" इति श्रुतेरिति भावः। स एष जीवः प्राणेन घोषेण च उपलक्षितः शरीरस्थितिकाले जीवः प्राणं तद्घोषं च न जहातीत्यर्थः। यदेतत्कर्णौ पिधाय शृणोति नैनं घोषं शृणोति स यदोत्क्रमिष्यन् भवतीति श्रूयते मनोमयमित्यस्य स घोष इत्यादिः प्राणवायुसङ्घट्टितशरीरच्छिद्रप्रभवः स घोषः तावन्मनोमयं मनोग्राह्यमत एव सूक्ष्मं पार्श्वस्थैरनुपलक्ष्यमाणं रूपमुपेत्य स्थितः पश्चादुच्चारणवेलायाम् उरःकण्ठःशिरस्तथेति प्रकारेण ताल्वादिस्थानप्रयत्नवशात् मात्रादिरूपेण स्थविष्ठः स्थूलतमो भवति तत्र मात्रा ह्रस्वादिः वर्णः ककारादिः स्वर उदात्तादिरिति ॥ १७ ॥

पूर्वं सूक्ष्मतयानभिव्यक्तस्य क्रमेण स्थूलतयोपलभ्यमानत्वे दृष्टान्तमाह । यथेत्यादिना समिध्यत इत्यन्तेन ग्रन्थेन। यथाऽनलः काष्ठोदरस्थोऽग्निः सूक्ष्मः सन्नादौ मन्थनात्प्रभवत्यूष्मात्मकस्ततो दारुणयधिकबलेन मथ्यमानः खे आकाशेऽनिलसहायः सन्नणुर्विस्फुलिङ्गादिरूपो भवति ततः क्रमेण प्रकृष्टो जातो हविषा समिध्यते सम्यग्दीप्यते तथैव वागिन्द्रियव्यापाररूपा वाणी मे व्यक्तिराकारः शरीरं मदधीनेत्यर्थः। प्राणेन घोषेणेत्यनेन जीवप्राणयोः परस्परायत्ता स्थितिरिति सूच्यते विवरप्रसूतिरित्यनेन जीवस्य शरीरावस्थितिदशायां सङ्कुचितप्रकाशत्वमुच्यते तेनाज्ञत्वं फलितं तेन च वागिन्द्रियव्यापारानुगुणतद्योजनाऽसमर्थत्वं च व्यज्यते वाणी चेति चकारोऽन्वेतव्यः तेन दृष्टान्तभूतस्याग्नेरप्यात्मव्यक्तित्वमभिप्रेतम् ॥ १८ ॥

वागिन्द्रियव्यापारस्यात्मायत्तत्वमुक्तम् अथान्येषां कर्मज्ञानेन्द्रियाणां चात्मायत्तव्यापारत्वमाह । एवमिति। गतिः पादेन्द्रियव्यापारः कर्म पाणीन्द्रियव्यापारः रतिरुपस्थस्य विसर्गः मूत्रपुरीषोत्सर्गः पायोः घ्राणं गन्धोपादानं घ्राणेन्द्रियस्य रसः रसग्रहः रसनेन्द्रियस्य दृक् भावे क्विप् दर्शनं चक्षुरिन्द्रियस्य स्पर्शस्त्वगिन्द्रियस्य श्रुतिः श्रवणं शब्दग्रहणं श्रोत्रेन्द्रियस्य सङ्कल्पविज्ञानं सङ्कल्परूपं विशेषज्ञानं मनोव्यापारः अभिमानः अनात्मन्यात्मबुद्धिरूपः सचाहङ्कारस्य व्यापारः सूत्रं महत्तत्त्वं तस्य मणीनां तन्तोरिव बहुकार्याधारत्वादिति भावः। तेन च तद्व्यापारोऽध्यवसायो लक्ष्यते तथाऽन्यश्च यो गुणत्रयपरिणामात्मको देहेन्द्रियादिगणः स च मे व्यक्तिरिति पूर्वश्लोकेन सम्बन्धो ज्ञेयः ॥ १९ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

कस्य तर्हि देवमनुष्यादिभावात्मकः संसार इत्यत आह । अयं हीति । संसारस्याहेतुकत्वशङ्कां वारयितुं विशिनष्टि । त्रिवृत्कृदिति । गुणत्रयवश्य इत्यर्थः । त्रयाणां गुणानां वृत् वर्तनं यस्मिन्निति व्युत्पत्तेः अब्जयोनिरप्सु जातं ब्रह्माण्डम् अत्र तद्योनिरुत्पत्तिस्थानं यस्य सः गुणपारवश्याद्ब्रह्माण्डान्तरुत्पत्तिनिधनवानित्यर्थः । अव्यक्तः सूक्ष्मरूपः अणुरितियावत् स्वरूपतस्त्वेक एकरूपः वृद्धिपरिणामादिरहितः आद्यो नित्यश्च वयसा कालेन विश्लिष्टशक्तिः देहतदनुबन्ध्यादिष्वहङ्कारममकाररूपेण प्रकीर्णचैतन्यशक्तिः बहुधा देवमनुष्यादिरूपेण भाति अत्र दृष्टान्तः यथा बीजानि योनिमुत्पत्तियोग्यं क्षेत्रं प्रतिपद्य प्राप्य बहुधा भान्ति तद्वदित्यर्थः । एकजातीयानामपि जीवानां योनिं प्रतिपन्नानां योन्यनुगुणं वृद्धिह्रासादिरूपबहुधाभानं हि दृश्यत इति भावः ॥२०॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

गोपिका अपि मामापुः किमु पाण्डवाद्या इति गोपिकाप्रशंसनं कृतमिति परिहारं हृदि कृत्वा वायुरेव सर्वगुणैः सर्वोत्तमः स एव हिरण्यगर्भश्चेति दर्शयितुं भगवान् हिरण्यगर्भस्य सर्वोत्तमत्वं वक्ति । य एष इति । यो विवरप्रसूतिः विशेषेण वराणामहङ्काराद्यभिमानिनां प्रसूतिरुत्पत्तिः यस्मात्स तथा उत्पादक इत्यर्थः । एष जीवः जीव प्राणधारणे इति धातोः प्रकृष्टानन्दलक्षणस्य हरेर्विशेषाधिष्ठानत्वात्सत्तमः ब्रह्मा प्राणेन विष्णुना घोषेण वेदात्मिकया प्रकृत्या लक्ष्म्या च सह गुहां रुद्रादीनां हृदयगुहां प्रविष्टः मन्मनोमयं रुद्रादीनां मनसि नियन्तृत्वेन स्थितमत एव सूक्ष्मं परमाणुकल्पं रूपमुपैति । किञ्च मात्रा स्वरो वर्ण इति मात्रास्वरवर्णत्रयात्मकवेदाख्यं स्थविष्ठं रूपमुपैति ॥ १७ ॥

अनेन वेदादीनि विष्णुप्रकृतिब्रह्मणामभिव्यक्तिस्थानानीत्युक्तं तत्र प्रकृतिब्रह्मणोर्विशेषेण वेदादिकं मम व्यक्तिस्थानमित्याह । यथेति । अनिलो वन्धुर्यस्य स तथा ऊष्मोष्णः अनलो दारुणि खेनबलेन मथ्यमानो अणुत्वेन प्रजातो हविषा घृतेन यथा समिध्यते तथैव वेदवाणी मे व्यक्तिः व्यक्तिस्थानं वेदवाण्येव विशेषतो मत्सम्बन्धाङ्गिकेत्यर्थः ॥ १८ ॥

प्रकृत्यादीनां व्यक्तिस्थानत्वेऽपि मम श्रोत्रादीन्यपि वेदादिवद्विशेषतो व्यक्तिस्थानानीत्याह । एवमिति । एवादीनि गत्यादिशब्दवाच्यानि इन्द्रियेन्द्रियविषययोरुभयोर्ग्रहणायैवमुक्तं सङ्कल्पो मनः विज्ञानं बुद्धिः अभिमानोऽन्तःकरणवृत्तिविशेषव्यञ्जकः तस्य रूपान्तरं सूत्रं वायुः सत्त्वसहितं तमः विकारो ब्रह्माण्डः एतानि हरेरधिष्ठानरूपाणि भवन्तीति ज्ञातव्यानि तदभिमानिभ्यो देवताश्च पृथक् सन्ति तिष्ठन् श्रोत्रे तिष्ठन्नित्यादेः ॥ १९ ॥

विवरप्रसूतिरित्युक्तं कारणत्वं गुहां प्रविष्ट इत्युक्तव्याप्तिं च विविच्य सोदाहरणमाह । अयं हीति । मां रमां चान्तरेण वर्णात्मकवेदादिसर्वशब्दवाच्योऽयमब्जयोनिर्ब्रह्मा नियामकत्वेन सर्वोत्तमत्वाज्जीवादिस्त्रिवृज्ज्ञानानन्दबलात्मको व्यक्तः सूक्ष्मः जगदाद्य एक एवाहंकारादिपृथिव्यन्तानि सृष्टानि कार्याण्यनुप्रविश्य विशेषेण श्लिष्टशक्तिरनपगतसामर्थ्य एव तत्तन्नियामकरूपैर्बहुधैव भाति तत्तद्वाहिनामिति शेषः कथमिव यद्वद्यथा कलमादिबीजानि योनिं भूमिलक्षणां प्रतिपद्य बह्वङ्कुराणि भवन्तीति एवं परमात्मानुगृहीतो ब्रह्माहङ्कारादिषु बहुधाव्यक्तीभवतीति यो विवरप्रसूतिर्योनिद्वारा प्रसूयते एष जीव इति संज्ञां लभत इत्यन्यथा व्याकुर्वते तन्मतम्—

> सुपर्णशेषरुद्रादिप्रसूतिस्तु चतुर्मुखः ।
> सर्वजीवोत्तमो जीवो गुणज्ञानसुखादिभिः ॥
> विष्णुभक्त्यादिभिः सर्वैर्नियमात्सर्वकालिकम् ।
> मुक्तावपि न सन्देहः सहि देवेन विष्णुना ॥
> प्राणः प्राणेन जगतामीशेन रमया तथा ।
> वेदात्मिकया च सहितः सूक्ष्मः सन्मनसि स्थितः ॥
> वीन्द्रादीनान्तु सर्वेषां मात्रावर्णस्वरेषु च ।
> स्थूलरूपी सदा तिष्ठंस्तत्र श्रोत्रादिकेषु च ॥
> सर्वेषां प्रेरको ह्येको ज्ञानानन्दबलस्त्रिवृत् ।
> नित्यशक्तिः सर्वगः सन् बहुधेव प्रतीयते ॥
> तस्मिन्नोतमिदं सर्वं पटे यद्वत्तन्तुवत् ।
> स एष वायुरुद्दिष्टो वायुर्हि ब्रह्मतामगात् ॥
> विशेषेण हरेर्व्यक्तिस्थानान्येतानि सर्वशः ।
> मनआदीन्यहङ्कारो ब्रह्मा वेदात्मिका रमा ॥
> त्रिगुणात्मिका च सैव श्रीः सैवोक्ता संविदात्मिका ।
> तस्या अपि नियन्तैको विष्णुः सर्वेश्वरेश्वरः ॥
> यथा दारुषु सूक्ष्मः सन्मथितोऽग्निः समिध्यते ।
> तथा वेदादिषु हरिर्मथितः सम्प्रदृश्यते ॥
> व्यक्तिस्थानान्यथैतानि वेदादीनि हरेर्विदुः ।

इत्यनेन प्रमाणवाक्येन निरस्तमिति नास्माभिस्तद्दूषणाय प्रयत्यते मनसि व्यक्तितां यामि तस्माद्व्यक्तिर्हि मे मन इत्येतत्स्पष्टं च ॥ २० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

वैयग्र्यं च द्विविधम् एकं पूर्वत एवानुगतया स्वस्यागमीत्या अन्यत्सम्प्रति जातया रामेण साक्षिमिश्रणुक्तस्य हन्त तावामनेन सङ्गमः कुत्र कथं विद्यत इति विशेषं ज्ञातुमत्युत्कण्ठया तत्र स एष इत्यस्यार्थद्वयेन द्विविधं वैयग्र्यमपनेतुं स्वस्यागमीक्षा कृतं तत्प्रकरणैकतात्पर्याग्रहणवैयग्र्यं प्रथमेनार्थेन निराकरोति यथापूर्वोक्तं तस्मात्त्वमुद्धवोत्सृज्येति पर्यवसानं सर्वथार्थं पुनः संक्षिपतस्तन्नेतृत्वं तदाश्रयत्वं च तथा विधे मय्येवेति दर्शयितुं सर्वेषां वेदानां शब्दरूपेण आविर्भावरूपत्वमाह । स एष इति द्वाभ्याम् वेदाविर्भावस्य आधारचक्रादिकमत्र चतुर्भ्यो मुखेभ्यः प्रथमतो वेदाविर्भावस्य चतुर्मुखस्यैवेति ज्ञेयम् अत एव नादो वेदशब्दात्मको भवन्ने चतुर्मुखस्यैवेति ज्ञेयम् अत एव नादो वेदशब्दात्मको भवतीत्यादिटीका च संगच्छते व्याख्यास्यते चैकविंशे आकाशात् घोषवान् प्राण इत्यत्र प्राणस्तदुपाधिर्हिरण्यगर्भरूपः घोषवान् नादोपादानप्राण इत्यत्र प्राणस्तदुपाधिर्हिरण्यगर्भरूपः घोषवान् नादोपादानत्वादनन्तपाराभिप्रायेण समाधिप्राणादिमयस्य कालतो देशतश्चानिति अनन्तपारामिश्रत्र न समाधिप्राणादिमयस्य कालतो देशतश्चापरिच्छेदाविति श्रुत्यभियुक्तश्लोकौ दृष्टान्तावेव लौकिकवाङ्मयत्वात् तत्र श्रुतौ वाक्परिमितानि शास्त्राणि निर्णीतानि चत्वारि पराख्यादीनि पदानि रूपाणि तेषां मध्ये आद्यो त्रीणि गुहायां

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

शरीरे आधारनाभिहृदयेषु स्फुरन्त्यपि नेङ्गयन्ति स्वरूपं न प्रकाशयन्तीति पदार्थः अथ श्लोके या सा पराख्या भिन्नोऽग्निः घरुणः स्रोमः नयोः सवनमाधारचक्रं तस्मात्प्राणसंगेनोच्चरन्ती स्वयमेव सूक्ष्ममुद्भवन्तीति त्रिषष्टिं वर्णान् प्रसूयते कैः अन्तःकरणाभ्यां प्रकटकरणेन च ...नां प्रथममुदितां सतीं पश्यन्त्याख्यां अन्तःपश्यति नतूच्चारयति यां तां प्रथमां तथा बुद्धिसंस्थाम् उच्चारयामीति विचारयुक्तां मध्यमां करणविशदां स्थानप्रयत्ननिर्मलां वैखरीं प्रपद्य त्रिषष्टिमिति ह्रस्वदीर्घप्लुतभेदेनाणो नव प्लुतत्वाभावात् ऋलृवर्णाश्चत्वारः ह्रस्वत्वाभावादेचोऽष्टौ उदात्तादिस्वरास्तु तदन्तर्गता एव विसर्गानुस्वारजिह्वामूलीयोपध्मानीयाश्चत्वारः एवं पञ्चविंशतिः स्पर्शाश्च तावन्तः एवं पञ्चाशत् यवलाः सानुनासिका निरनुनासिकाश्चेति षट् रेफ एकः लकारस्य दन्त्यमूर्धन्यत्वभेदेन द्विःपाठात् शषसहळक्षाः षट् एवं त्रिषष्टिरिति म. द्वितीये वैयर्थ्यं द्वितीयेनार्थेन निराकरोति। स एष इति। स एष मल्लक्षणो जीवो जगतो जीवनहेतुः विशेषतो अजस्य जीवनहेतुर्वा परमेश्वरः प्राणेन मत्प्राणतुल्येन घोषेण अजेन सह विवरप्रसूतिः विवरात् अप्रकटलीलातः प्रसूतिः प्रकटलीलायामेवाभिव्यक्तिर्यस्य तथाभूतः सन् पुनर्गुहामप्रकटलीलामेव प्रविष्टः कीदृशः सन् किं कृत्वा मात्रा मम चक्षुरादीनि स्वरो भाषा गानादिः वर्णो रूपम् इति इत्थं स्थविष्ठः स्वपरिजनानां प्रकट एव सन् बहिरङ्गभक्तानां मनोमयं कथंचिन्मनस्येव गम्यम् अन्येषां सूक्ष्ममक्षेयं यद्रूपं प्रकाशस्तदुपेत्य ॥ १७ ॥

तत्र प्रथमेऽर्थे यथानल इति तथैव मम व्यक्तिरूपा वाणी चेत्यर्थः द्वितीयेऽर्थे प्रकटलीलाविष्कारं च सदृष्टान्तं स्पष्टयति। यथेति हि यस्मात् इयं स्वरहस्यैकवेद्यविग्रहस्य ममैव वाणी नान्नासंभावनाविधेयेत्यर्थः। दृष्टान्तोऽयं गर्भादिक्रमेणाविर्भावमात्रांशे तृतीयस्कन्धेऽपि श्रीमदुद्धवेनैव तदुक्तम् अजोऽपि जातो भगवान् यथाग्निरिति ॥ १८ ॥

तदेवं देवस्य स्वाविर्भावत्वं दर्शयित्वा तदर्थद्वारा जीवानां जगदावेशं त्याजयितुं जगति लौकिकवागादिवृत्तीनामपि तत उद्भवं दर्शयति। एवं गादिरिति। यथा पराख्यादिक्रमेण वैदिकी वाग्वृत्तिरुत्पन्ना तथा गदिर्लौकिकवागप्युत्पन्ना किन्तु पूर्वा स्वरूपशक्त्या परा तु माययेति ज्ञेयमित्यर्थः। ततश्च यथा गदिस्तथा कर्मादयोऽपीत्यर्थः ॥ १९ ॥

तथैव दर्शयति। अयं हीति साङ्कं बीजानीति बीजानां मध्ये यदेकमपीत्यर्थः ॥ २० ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

भो प्रियसखोद्धव! मैवं मंस्थाः सर्वेषामेव जीवानामुपकारार्थं भक्तिज्ञानवैराग्ययोगतपोधर्मादीनि मत्प्राप्त्युपायरत्नानि तत्तन्नवनव्यश्रेयानि त्वयि न्यासत्वेनैवार्पयामि त्वन्तु तत्र तत्र वस्तुनि स्वत्वमारोप्य ममैव तादृश्याभिमन्यमनो लज्जामपि किञ्च भजासि अहन्तु भो उद्धव! त्वया ज्ञानमङ्गयस्तां कर्माणि क्रियन्तां भक्तिः कर्त्तव्या योगा अनुष्ठीयन्तां तपश्चर्यतामित्यादिकं सर्वजीवानुद्दिश्यापि त्वामेकमेव लक्ष्यीकृत्य यदवोचं वच्मि वक्ष्यामि वा तेनैव किं त्वं तत्तदनुष्ठानाधिकारी स्वतन्त्रभृत्यं तु मे योऽसि सोऽस्येव साम्प्रतं तु न ते कापि साधकतेति सनमोश्वासमभिव्यञ्जयन् कस्यापि जीवस्य दशाभेदेन कर्माधिकारो ज्ञानाधिकारो भक्त्यधिकारश्च यतो ज्ञायते तस्य वेदस्यार्थं सम्यगहमेव जानामि नान्यो यतो देवस्वरूपेण चतुर्मुखवक्त्रेभ्योऽहमेव प्रादुरभूवमित्याह। स इति। जीवयतीति जीवः परमेश्वरः स प्रसिद्धः एष मल्लक्षणः पुरुष एवेति स्वतन्त्र्या स्वच्छः स्पृशति विवरेषु चतुर्मुखशरीरस्थाधारादिचक्रेषु प्रसूतिरिव प्रसूतिरभिव्यक्तिर्यस्य सः तामेवाभिव्यक्तिमाह। घोषेण पराख्येन नादेन नादवता प्राणेन सह गुहामाधारचक्रं प्रविष्टः सन् मनोमयं सूक्ष्मं रूपं पश्यन्त्याख्यं मध्यमाख्यं च पूरकचक्रे विशुद्धचक्रे च उपेत्य प्राप्य वक्त्रेषु मात्रा ह्रस्वादिः स्वर उदात्तादिः वर्णाश्चाकारादिरित्येवं वैखर्याख्यः स्थविष्ठोऽतिस्थूलः नानाविधशास्त्रात्मको भवति ॥ १७ ॥

क्रमेणाभिव्यक्तौ दृष्टान्तः। यथेति। यथा अग्निः खे दारुगताकाशे ऊष्मा प्रथममथने अव्यक्तोष्मरूपः ततो दारुण्यधिकं मथ्यमानः अनिलसहायः सन् अणुः सूक्ष्मविस्फुलिङ्गादिरूपो भवति ततश्च प्रजातः प्रकर्षेण स्थूलतया जातः हविषा समिध्यते प्रवर्द्धते तथैव मे व्यक्तिमदाविर्भावरूपा इयं वेदलक्षणा वाणी अतोऽस्या अतिगूढमर्थं मां विना को ज्ञास्यति ज्ञात्वा च जीवस्य संसारनिस्तारणार्थान् भक्तिज्ञानकर्मादिरुपायान् को व्यवस्थास्यतीत्यतस्त्वयि परमयोग्ये पात्रे स्वतुल्ये तानुपायान् साम्प्रतं कृपया न्यस्यामि त्वत्तो वदरिकाश्रमस्था मुनयः प्राप्य कृतार्था भविष्यन्तीति भावः ॥ १८ ॥

किञ्च मत्स्वरूपभूता वेदलक्षणा वाणी यथा ब्रह्मशरीरादुद्भूता तथैव प्राकृत्यपि वाणी प्राकृतलोकव्यवहारप्रयोजनादिरूपा समुद्भवतीत्याह। एवं गदिर्वागिन्द्रियव्यापारो भाषणं तथा च श्रुतिः—

चत्वारि वाक् परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः। गुहायां त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्तीति अस्या अर्थः वाक् वचनानि चत्वारि परिमितानि पदानि सुप्तिङन्तानि तत्र त्रीणि परापश्यन्तीमध्यमाख्यानि प्राणमनोबुद्धिस्थानि आधारनाभिहृदयेषु स्फुरन्त्यपि नेङ्गयन्ति स्वरूपं न प्रकाशयन्ति तुरीयं वैखर्याख्यं वागिन्द्रियगतं वाचो वचनमिति तथा गदिरेवमेव समष्टिव्यष्टीनां सर्वेन्द्रियव्यापारो ममैव प्राकृताभिव्यक्तिरित्याह। कर्म हस्तयोर्व्यापारः गतिः पादयोः विसर्गः पायूपस्थयोरिति कर्मेन्द्रियाणां घ्राणोऽवघ्राणः रसो रसनं दृक् दर्शनं स्पर्शः स्पर्शनं श्रुतिः श्रवणमिति ज्ञानेन्द्रियाणां सङ्कल्पो मनसः विज्ञानं बुद्धिचित्तयोः अभिमानोऽहङ्कारस्य सूत्रं प्रधानस्य रजःसत्त्वतमसां विकारोऽध्यात्मादिस्त्रिविधः प्रपञ्चः मे व्यक्तिर्मायिकीति पूर्वेणान्वयः ॥ १९ ॥

तस्मादीश्वराभिव्यक्तिरूपः प्रपञ्चो नेश्वराद्भिन्न इति वक्तुं प्रथममीश्वरमाह। अयञ्जीव ईश्वरस्त्रिवृत् त्रिगुणमायाश्रयः त्रिवृद्रूपत्वेनैव अब्जयोनिः अब्जस्य लोकपद्मस्य कारणभूतः प्रथमं सृष्टेः पूर्वमव्यक्त एक एव वयसा कालेन स एव आद्य ईश्वरः प्रपञ्चात्मको भवतीत्याह। विश्लिष्टशक्तिर्विश्लिष्टाः पृथक् पृथक् विभक्ता वागादीन्द्रियरूपाः शक्तयो यस्य तथाभूतः सन् बहुधा देवमनुष्या-

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

त्रिबहुप्रकारको भाति एकस्य बहुधा भाने दृष्टान्तः योनिं क्षेत्रं प्रतिपद्य प्राप्य बीजानि यद्वत् एकैकस्यापि बीजस्य बहुशः उद्गमा भवन्तीत्यर्थः ॥ २० ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

संशयनिवारणाय सर्वकारणत्वादिना सर्वात्मत्वमाह । स इत्यादिना । "सर्वाणि नामानि यमाविशन्ति सर्वे वेदा यत्रैकीभवन्ति एकमेवाद्वितीयम् ऐतदात्म्यमिदं यः सर्वज्ञः सर्ववित् यतो वा इमानि भूतानि जायन्ते" इत्यादिषु प्रसिद्धो यः स एव त्वदग्रचरोऽहं जीवः सर्वचेतनाचेतनचेतयिता विवरे हृत्पद्मे प्रसूतिरभिव्यक्तिर्यस्य सः भयस्वरूप इत्यर्थः । घोषेण परावस्थारूपशब्दवता प्राणेन सहशक्लिेशात्मना गुहामाधारचक्राख्यां प्रविष्टः सन् मनोमयं पश्यन्त्याख्यं सूक्ष्मं रूपं मध्यमाख्यं च मणिपूरकचक्रे विशुद्धचक्रे चोपेत्य प्राप्य मुखे मात्रा ह्रस्वादिः स्वर उदात्तादिः वर्णः ककारादिरित्येवं वैखर्याख्यः स्थविष्ठः अतिस्थूलः पदवाक्यादिरूपो भवति अत्र—

चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः । गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्तीति श्रुतिरनुसन्धेया ॥ १७ ॥

अव्यक्तस्य सतः सूक्ष्ममध्यमक्रमेणाभिव्यक्तिं दृष्टान्तेन स्पष्टयति । यथेति । यथा दारुण्यनलोऽग्निरव्यक्तो बलेन मथ्यमानः सन् प्रथमसूक्ष्मात्मकः तदनन्तरमणुस्वरूपस्तदनन्तरं प्रकृष्टो जातः अनिलबन्धुः वायुसहायः खे हविषा समिध्यते तथैवेयं वाणी मे व्यक्तिः ममाभिव्यक्तिः ॥ १८ ॥

गदिः वागेन्द्रियव्यापाररूपं गदनं भाषणं यथा मे व्यक्तिः पूर्वम् प्रतिपादिता एवं कर्म हस्तेन्द्रियस्य गतिः पादेन्द्रियस्य विसर्गः पायूपस्थयोः घ्राणः अवघ्राणं घ्राणेन्द्रियस्य रसः रसनं रसनेन्द्रियस्य दृक् दर्शनं चक्षुरिन्द्रियस्य स्पर्शस्त्वगिन्द्रियस्य श्रुतिः श्रवणं श्रोत्रेन्द्रियस्य संकल्पः मननं मनसः विज्ञानं बोधनं चिन्तनं च बुद्धिचित्तस्य च अभिमानः देहादावहङ्कारस्य व्यापारः । ममाभिव्यक्तिः किंबहुना सूत्रं महतः पूर्वरूपं रजःसत्त्वतमोविकारः सर्वोऽपि संसारः मे चिदचिच्छक्तिमतोऽभिव्यक्तिः "आत्मकृतेः परिणामात्" इति सूत्रात् "तदात्मानं स्वयकुरुतेति" श्रुतेश्च सर्वनिमित्तोपादानकारणत्वात्सर्वात्मात्मेत्यर्थः ॥ १९ ॥

संसाराभिव्यक्तिं प्रपञ्चवत् तर्हि सर्वात्मनस्तव विकारित्ववस्त्वादिप्रसङ्गः इति शङ्कां निराकरोति । अयमिति । अयं त्वत्पुरःस्थितः एकः अद्वैतरूपः बहुधा द्वैतरूपश्च भाति "उभयव्यपदेशादहिकुण्डलवत्" इत्यादिसूत्रेभ्यः हि यतः विश्लिष्टशक्तिः विशेषतः श्लिष्टाः संश्लिष्टाः चिदचिद्रूपाः शक्तयो यस्मिन्स्य शक्तिशक्तिमद्वैलक्षण्यया द्वैतरूपसमानाधिकरणार्थान्तराभावात् अद्वैतरूपः एवं स्वाभाविकद्वैतरूपः विकारित्वादयः आविच्छिकधर्माः वस्त्वादयश्चाच्छिकधर्माः अतो नोक्तदोषप्रसङ्गः आद्यः कारणरूपः अव्यक्तः अनभिव्यक्तनामरूपः वयसा कालेन त्रिवृत् त्रिसर्गरूपः जगदाकारः बीजानि इव यथा एकैकानि योनिं क्षेत्रं प्रतिपद्य वृक्षरूपाणि भवन्ति तद्वत् तत्र चेतनाचेतने जगति प्रविष्टः अब्जयोनिः ब्रह्मादिजनकः जीवः सर्वप्राणप्रदः परमेश्वरः ॥ २० ॥

---

### भाषा टीका ।

#### श्रीभगवान् उवाच ।

यह आत्मा शब्दरूप से प्रगट होता है आधारादिक चक्रों में से प्रगट होने वाला है तिस में पहिले नाद वाले प्राण के सहित आधार चक्र में प्रवेश करता है तब परा नाम से कहा जाता है फिर सूक्ष्म मनो मय रूप को प्राप्त होकर पश्यन्ती रूप मध्यमा रूप हो जाता है फिर विशुद्ध चक्र में आकर मुख में से वैखरी रूप होता है तब ह्रस्वादि मात्रा उदात्तादि स्वर ककारादिवर्ण रूप से स्थूलाकार से प्रगट होता है ॥ १७ ॥

जैसे कि अग्नि पहिले अत्यन्त सूक्ष्म रूप से काष्ठ के आकाश में रहता है फिर काष्ठ के मन्थन करने से वायु के सहायता से बल पडने से सूक्ष्म चिनगारी रूप से पैदा होता है छोटा हो कर भी फिर घृत हविष के डालने से अच्छे प्रकाश हो कर जलने लगता है तिसी प्रकार से हमारी वाणी प्रगट होती है ॥ १८ ॥

इसी प्रकार से भाषण प्रगट होता है फिर क्रिया होती है फिर चलना होता है फिर मलादि त्याग क्रिया होती है ऐसे कर्मेन्द्रिय होते हैं घ्राणेन्द्रिय फिर रस फिर दर्शन फिर श्रवण ऐसे ज्ञानेन्द्रिय फिर सङ्कल्प फिर विज्ञान फिर अभिमान फिर प्रधान का सूत्र फिर रज सत्त्व तम इन का विकार अधि दैवादिक होता है ऐसे सब प्रपञ्च होता है ॥ १९ ॥

यह आत्मा पहिले आद्य एक रहता है फिर काल से उस की शक्तियों का विभाग होता है तब तीनों गुणों के आश्रय होने से लोक पद्म का कारण होता है तब बहुत प्रकार से भान होता है जैसे कि धान्यादिक बीज खेत में पडने से नाना अंकुर रूपी हो जाता है तैसे ॥२०॥

यस्मिन्निदं प्रोतमशेषमोतं पटो यथा तन्तुवितानसंस्थः ।
य एष संसारतरुः पुराणः कर्मात्मकः पुष्पफले प्रसूते ॥ २१ ॥
द्वे अस्य बीजे शतमूलस्त्रिनालः पञ्चस्कन्धः पञ्चरसप्रसूतिः ।
दशैकशाखो द्विसुपर्णनीडस्त्रिवल्कलो द्विफलोऽर्कं प्रविष्टः ॥ २२ ॥
अदन्ति चैकं फलमस्य गृध्रा ग्रामेचरा एकमरण्यवासाः ।
हंसा य एकं बहुरूपमिज्यैर्मायामयं वेद स वेद वेदम् ॥ २३ ॥
एवं गुरूपासनयैकभक्त्या विद्याकुठारेण शितेन धीरः ।
विवृश्च्य जीवाशयमप्रमत्तः सम्पद्य चात्मानमथ त्यजास्त्रम् ॥ २४ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां
संहितायां वैयासिक्यामेकादशस्कन्धे
द्वादशोऽध्यायः ॥ १२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

तस्मात्त्वन्मायाविलसितत्वात्सदामसमिदं जगत् ततः पृथगिति सदृष्टान्तमाह । यस्मिन्निति । तन्तुविताने संस्थितिर्यस्य स पटो यथा यस्मिन्निदं विश्वमोतं दीर्घतन्तुषु पट इव प्रोतं तिर्यक्तन्तुष्विव एवं भूतं समष्टिव्यष्ट्यात्मकं विश्वमाविद्ययाऽऽत्मन्यध्यस्तं वृक्षरूपं जीवस्य कर्तृत्वादिसंसारहेतुस्तत्तद्विवेकज्ञानेन कर्मादिसर्वं त्याज्यमित्युक्तमित्याशयेनाऽऽह । य एष इति सार्धैस्त्रिभिः । पुराणोऽनादिः कर्मात्मकः प्रवृत्तिस्वभावः पुष्पफले भोगापवर्गौ कर्मतत्फले वा प्रसूते जनयति ॥ २१ ॥

वृक्षरूपकं प्रपञ्चयति । द्वे इति । द्वे पुण्यपापे अस्य बीजे स च शतमूलः शतमपरिमिता वासना मूलानि यस्य त्रयो गुणा नालानि प्रकाण्डा यस्य पञ्च भूतानि स्कन्धा यस्य पञ्च रसाः शब्दादिविषयास्तेषां प्रसूतिर्यस्मात् दश च एका च शाखा इन्द्रियाणि यस्य द्वयोः सुपर्णयोर्जीवपरमात्मनोर्नीडं यस्मिन् त्रीणि वल्कलानि त्वचो वातपित्तश्लेष्माणो यस्य द्वे सुखदुःखे फले यस्य सः अर्कं प्रविष्टः सूर्यमण्डलपर्यन्तं व्याप्तः तं निर्भिद्य गतस्य संसाराभावात् ॥ २२ ॥

तत्फलभोक्तॄनाह । गृध्यन्ति अभिकाङ्क्षन्त इति गृध्राः कामिनो ग्रामे चरा गृहस्था अस्य वृक्षस्यैकं फलं दुःखमदन्ति । परिणामतः स्वर्गादेरपि दुःखरूपत्वात् हंसा विवेकिनोऽरण्यवासाः संन्यासिन एकं फलं सुखमदन्ति । एकं परमात्मानं मायामयमेव बहुरूपमिज्यैर्गुरुभिः कृत्वा यो वेद स वेदं वेद तत्त्वार्थं वेद ॥ २३ ॥

त्वञ्चैवं ज्ञात्वा कृतकृत्यः सर्वं साधनं त्यजेत्याह । एवमिति । एकान्तभक्त्या शितेन तीक्ष्णेन विद्याकुठारेण स्वतन्त्रता वा द्वयोर्ज्ञानभक्त्योर्जीवोपाधिं त्रिगुणात्मकं लिङ्गशरीरं विवृश्च्य छित्वा परमात्मानञ्च सम्पद्य प्राप्याथास्त्रं साधनं त्यजेति ॥ २४ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
द्वादशोऽध्यायः ॥ १२ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

समष्टिर्घनवत् सर्वं जगत् व्यष्टिर्वृक्षवत् प्रत्येकं शरीरं तदात्मकं तद्विवेकज्ञानेन तस्मादप्येतद्विश्वस्मात् पृथक्त्वज्ञानेन य एष इति सार्धकम् ॥ २२ ॥

विश्वात्मकवृक्षफलभोजनक र्तॄन् ॥ २३ ॥

अथानन्तरं शीघ्रमित्यर्थः ॥ २४ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीराधारमणदासगोस्वामिकृतदीपिकादीपने टिप्पणे
द्वादशोऽध्यायः ॥ १२ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

यस्मिन् जीवे इदं मनुष्यादिशरीरं पटवत् प्रोतं वृक्षमिव शरीरं विभाति स इति पूर्वेणान्वयः इति संसरतीति संसारः संसरत्यनेनेति वा शरीरं कर्मात्मनः कर्माधीनस्य जीवस्य स एष संसारतरुः ।

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

पुराणः अनादिः पुष्पस्थानीयं कर्म फलस्थानीयं सुखदुःखं पुष्पफले प्रसूते ॥ २१ ॥

अस्य संसारतरोः द्वे पुण्यपापे बीजे अयं तरुः रागादिदोषशतमूलः गुणत्रयनालः त्रिनालः पञ्चतन्मात्रस्कन्धः शब्दादिविषयजन्यपञ्चविधरसप्रसूतिः एकादशेन्द्रियशाखः जीवपरमात्मरूपपक्षियुगलान्वितहृत्पद्मनीडः तेजोऽबन्नरूपत्रिवल्कलः द्विफलः भोगमोक्षफलः अर्कं प्रविष्टः आध्यात्मिकादितापाविष्टः ॥ २२ ॥

गृध्राः फलं गृध्यन्तः हंसाः संन्यासिनः बहुविधरूपनिष्ठाः यस्य तं मायामयं प्रकृतिपरिणामरूपं वृक्षं यो वेद स वेदविदित्यर्थः ॥ २३ ॥

एकभक्त्येति उपासना विशेष्यते एकारूपा स्थिरा भक्तिर्यस्याः तया जीवाशयं जीवेष्ववस्थितमिति वृक्षविशेषणं विवृश्च्य छित्त्वा अस्त्रं शस्त्रं विद्याख्यम् आत्मानं सम्पद्य परमात्मानं प्राप्य अस्त्रं त्यज नतु प्रागेव आमोक्षाद्विद्यामनुवर्तयेदर्थः ॥ २४ ॥

इति श्रीमद्भागवतव्याख्याने एकादशस्कन्धीये
श्रीसुदर्शनसूरिकृतशुकपक्षीये
द्वादशोऽध्यायः ॥ १२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

कस्तर्हीन्द्रियाद्यधिष्ठानामित्यादिसंशयं निराकरोति । यस्मिन्निति अशेषमिदमिन्द्रियप्राणजातं यस्मिन्नोतं प्रोतं च स एष संसारतरुरिति सम्बन्धः सर्वेन्द्रियगणोतप्रोतत्वे दृष्टान्तः पटो यथा तन्तुवितानसंस्थ इति । तन्तुवितानस्य तन्तुविततेरोतप्रोतरूपा संस्था सम्यक् स्थितिर्यस्मिन् स पटो वस्त्रं यथा तद्वत् संसारयतीति संसारः संसरत्यनेनेति वा संसारो देहः पुराणः प्रवाहतोऽनादिः कर्मात्मकः प्रवृत्तिस्वभावः पुष्पफले पुष्पस्थानीयं कर्म फलस्थानीयं सुखं दुःखं च प्रसूते जनयति कर्मात्मक इति पाठे कर्मवीजस्य जीवस्य भोगार्थं सुखदुःखे जनयतीत्यर्थः ॥ २१ ॥

तामेव संसारस्य तरुरूपतां प्रपञ्चयति । द्वे अस्येति श्लोकेन । अस्य संसारतरोर्द्वे पुण्यपापे बीजे शतं रागद्वेषभयादीनि मूलानि यस्य सः त्रिनालः गुणत्रयं नालाः प्रकाण्डानि यस्य सः पञ्च भूतानि स्कन्धा यस्य सः पञ्चानां रसानां शब्दादिविषयाणां प्रसूतिर्यस्मिन् दश ज्ञानकर्मात्मकेन्द्रियाणि एकं मनः एतान्येव शाखा यस्य सः द्विसुपर्णनीडः जीवपरमात्मरूपपक्षियुगलान्वितहृत्पद्मरूपनीडयुक्तः त्रिवल्कलः त्रीणि वल्कलानि त्वचो वातपित्तश्लेष्माणो यस्य सः द्विफलः भोगमोक्षफलः जीवरूपिणः पक्षिणः प्रवृत्तिकर्मात्मकत्वे भोगफलकः निवृत्तिधर्मात्मकत्वे तु मुक्तिफलक इत्यर्थः । अर्कं प्रविष्टः आध्यात्मिकादितापत्रयात्मकार्के प्रतिष्ठितः ॥ २२ ॥

द्विफलत्वमेव प्रपञ्चयति । अदन्तीति । ग्रामेचरा गृध्राः शब्दादिविषयाभिलाषिणो जीवा अस्य संसारतरोरेकं सुखदुःखात्मकं फलमदन्ति भुञ्जते एकं मोक्षाख्यं फलं स्वरण्यवासा हंसा अदन्ति ज्ञानकर्मयोगयोरपि शरीरसाध्यत्वं तत्फलयोर्भोगमोक्षयोरपि तद्द्वारा तत्साध्यत्वाभिप्रायेणास्य फलमित्युक्तं यः पुमानेकं संसारतरुं मायामयं प्रकृतिपरिणामात्मकं बहुरूपं देवत्वमनुष्यत्वाद्यनेकरूपम् इज्यैः पूज्यैर्गुरुभिः कृत्वा वेद स एव वेदं वेद वेदविदित्यर्थः । बहुरूपरूपमिति पाठे बहुरूपाणि देवमनुष्यत्वादीनि तान्येव रूपं यस्य तमित्यर्थः ॥ २३ ॥

एवं चेत्थमिमं ज्ञात्वा एका एकरूपा स्थिरा भक्तिर्यस्यां तया गुरूपासनया लब्धेन शिक्षितेन शितेन विद्याकुठारेण उपदिष्टया सोपासनान्यतरविद्यात्मककुठारेण परशुना स्वशक्त्यनुगुणेन धीरः अकुतोभयः जीवाशयं जीवे व्यवस्थितं वृक्षं छित्त्वा निःशेषशरीरसम्बन्धमपोह्येत्यर्थः । तत्र न्यासयोगपक्षेऽप्रमत्तः महाविश्वासविषयकप्रमादरहितः आत्मानं मां सम्पद्याथास्त्रं त्यज महाविश्वासात्मकं शस्त्रं यावन्मत्प्राप्त्यनुवर्तस्वेत्यर्थः ॥ २४ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
द्वादशोऽध्यायः ॥ १२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

नन्वेवं तर्हि चतुर्मुख एव जगदाकारेण विवर्तत इति किं न स्यादत्राह । यस्मिन्निति । यस्मिन्विरिञ्चे तन्तूनां वितानस्य पद्माद्याकारस्य संस्थावस्थितिः पटाधारतया तन्तुविरचितपद्माद्याकारस्य पटाद्यथा भेदः प्रत्यक्षसिद्धस्तथा विरिञ्चाधारं जगत् विरिञ्चाद्भिन्नम् उपलक्षणमेतत् । विरिञ्चश्च श्रीश्च महाधारौ मद्भिन्नाविति । तदुक्तम्—

यथैव वस्त्रे दीर्घं च तिर्यग्वापि सुसंस्थिता ।
तन्तुभिः क्रियमाणेव पद्माद्याकारसंस्थितिः ॥
यथा जीर्णानि वस्त्राणि तन्त्वाधाराणि वा पुनः ।
कन्थावयवभूतानि तद्वदेतच्चतुर्मुखे ॥
सोऽपि तद्वद्धरौ नित्यं संश्रिता श्रीरपि स्फुटमिति ।

उक्तं विशिनष्टि । स एष इति । स एष संसारतरुर्जगद्वृक्षः पुष्पफले स्वर्गमोक्षौ प्रसूते स विरिञ्चे ओतप्रोतश्च इति शेषः ॥ २१ ॥

जगद्वृक्षस्य ब्रह्म बीजमित्युक्तं तद्विवृणोति । द्वे अस्येति—

जगद्वृक्षस्य बीजे द्वे ब्रह्मा चैव सरस्वती ।
मूलभूतानि कर्माणि मनोबुद्धिरहङ्कृतिः ॥
नालत्वेन समुद्दिष्टाः खमाद्याः स्कन्धसंज्ञिताः ।
एकादशेन्द्रियाण्येव शाखास्तु त्रिगुणास्त्वचः ॥
प्रवृत्तं च निवृत्तं च फले अस्य प्रकीर्तिते ।
पुष्पमैहिकमुद्दिष्टं रसाः शब्दादयस्तथा ॥
प्रवृत्ताश्च निवृत्ताश्च पक्षिणस्तत्र संस्थिताः ।
वृक्षस्य पृथिवी वल्ली विष्णुराकाशवायुवत् ॥
तस्या आपि सदाधार एवं ज्ञात्वा विमुच्यते ।

इत्यनेन व्याख्यातोऽयं श्लोकः तथापि स्पष्टत्वाय किञ्चिदुच्यते अस्य जगद्वृक्षस्य जलवद्भूमिवच्च ब्रह्मासरस्वत्यौ द्वे बीजे व्यञ्जके न तु वटबीजादिवदङ्कुरोत्पत्त्यनन्तरं नाशवत्त्वे अत एव स्वकार्यतो गुणतो रूपतश्च महत्यौ शतमित्युपलक्षणमनेकवि-

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

धान्यसङ्ख्यातानि कर्माणि मूलानि यस्य शतमूलो जगत्तरुः अयो नाला अहङ्कारबुद्धिमनोभिमानिनो रुद्रेन्द्रचन्द्रा यस्य स त्रिनालः पञ्चाकाशादिभूतानि स्कन्धा यस्य स पञ्चस्कन्धः पञ्चानां शब्दादीनां प्रसूतिर्यस्मात्स पञ्चरसप्रसूतिः दश एकश्चेन्द्रियाणि शाखा यस्य स एकादशेन्द्रियशाखः द्विविधाः सुपर्णाः प्रवृत्तिमार्गस्था निवृत्तिमार्गस्थाश्च पक्षिणः पुण्यपापलक्षणापत्यवन्तस्तेषां नीडं यस्मिन् स द्विसुपर्णनीडः त्रीणि सत्त्वरजस्तमोलक्षणानि त्रिवल्कलानि त्वचो यस्य त्रिवल्कलः द्वे प्रवृत्तिनिवृत्तिलक्षणे फले यस्य स द्विफलः सं विष्णवाख्यमाकाशं प्रविष्टः अत्रेदं तात्पर्यं लक्ष्म्यादेरव्यापनात् ब्रह्मोदकरुद्रादेरपि लयकर्तृत्वादग्निवदाधारत्वात्सुखदत्वाच्च वायुवदवकाशदत्वाच्च व्योमवद्विष्णुः—

बीजभूतावपि ह्यस्य ब्रह्मा चैव सरस्वती ।
न दृश्येते जगत्सृष्टौ वटवृक्षादिबीजवत् ॥
स्वकार्यतो महान्तौ च गुणतो रूपतस्तथा ।
पृथिव्युदकवत्तस्माद्बीजत्वं न तु बीजवत् ॥
स्वस्याङ्कुरत्वाच्च चाद्यत्वान्महाक्ष्मावद्रमा स्मृता ।
अण्डो महाक्ष्मा सम्प्रोक्तस्ततः पृथ्व्युदकं तथा ॥
जायते नित्यशस्तस्माद्भुक्तं भुक्तं न हीयते ।
तथाप्युदकवद्ब्रह्मा मूलञ्चापि सरस्वती ॥
जलाधारा यतो मृच्च सर्वाधारा व्यवस्थिता ।
अन्यथा तु रजोभूता नीयते वायुनाखिला ॥
अथवा सर्वनाशः स्याज्जलाधारा ततः स्मृता ॥
वटादि बीजवत्तस्य पुण्यापुण्यमुदीरितम् ।
वाह्योदकञ्चाग्निवच्च विष्णुरेव प्रकीर्तितः ॥

इत्येतत्—

ब्रह्मादिवत्तु मूलत्वं कर्मणां जगतः स्मृतम् ।
उदकपृथिवीवच्च ब्रह्मणो वाच एव च ॥
मूलभूताच्छ्रियश्चैव मूलभूरण्डमुच्यते ।
वाह्योदाग्निरस्तं चतु विष्णोर्बीजत्वमुच्यते ॥

इत्येतच्च प्रोक्तार्थं प्रमाणं तत्तज्जीवदेहादिषु स्थित्वा तत्तन्मनआदीन्द्रियाणां तत्तद्योग्यतानुसारेण श्रीहरिगुणोपसंहारे प्रेरयित्वा हरिभक्त्यादिसाधनसामग्रीसम्पादनेन हरेः प्रीतिसमुद्रेऽस्मिन् ब्रह्मा सर्वाधिकारिस्य उत्तमोत्तम इति ज्ञायते तदुक्तम्—

देहेन्द्रियमनश्चक्षुःस्थितो भक्त्यादिसाधकः ।
सुपर्णशेषरुद्रादेरपि ब्रह्मा चतुर्मुखः ॥
अतो भक्त्यादिकाः सर्वे गुणास्तस्यैव सर्वगाः ।
अतिरिक्ताश्च सम्पूर्णाः सुपर्णादेः शताधिकाः ॥
सुपर्णादिभिरज्ञातास्तदभीमानवर्जिताः ।
ब्रह्मणस्तु पुनः सन्ति तेषां कर्ता जनार्दनः ॥
तस्मात्सर्वाधिको ब्रह्मा गुणैः सर्वैर्न संशयः ।
वर्णस्थो वर्णनामासौ स्वरस्थः स्वरनामकः ॥
मनःस्थश्च मनोनामा तन्नामा चक्षुरादिगः ।
तस्य सर्वाणि नामानि मुख्यतः कवयो विदुः ॥
तत्स्थानत्वादिन्द्रियादेर्वर्णादेश्चोपचारतः ।
एवमन्योपचारेण विष्णोः साक्षात्तु मुख्यतः ॥

इति अनेन मात्रा स्वरो वर्ण इति क्रमेणोक्तादिना वर्णस्वरादीनां विष्णोरनन्तरं चतुर्मुखे मुख्यत्वमुक्तमिति ज्ञातव्यं किञ्च—

कृष्णप्रियाभ्यो गोपीभ्यो भक्तितो द्विगुणाधिकाः ।
महिष्योऽष्टौ विना याश्च ताः कथिताः कृष्णवल्लभाः ॥
ताभ्यः सहस्रसमिता यशोदानन्दरोहिणी ।
ततोऽप्यभ्यधिका देवी देवकी भक्तितस्ततः ॥
वसुदेवस्ततो जिष्णुस्ततो रामो महाबलः ।
न ततोऽप्यधिकः कश्चिद्रुद्रत्वादौ पुरुषोत्तमे ॥
विना ब्रह्माणमीशेशं स हि सर्वाधिकः स्मृतः ।

इत्यनेन सर्वाधिकारिभ्यो ब्रह्मणोऽधिकभक्तिमत्त्वं गोपिकादिष्वपि भक्तितारतम्यमस्तीत्युक्तम् अतो रमेण सार्धं मथुरां प्रयाति श्वाफल्किमेत्याद्यो प्रतीयमानभक्तितारतम्याभावशङ्कानिरस्ता—

पापद्वेषादिका दोषा अवराणां न संशयः ।
भक्त्यादिगुणपूगस्तु परेषामाविरिष्यतः ॥
ज्ञानाद्यास्तेऽत्र देहेषु स्थितानामपि सर्वशः ।
स्पृश्यन्ते नैव दोषैस्ते गुणादानैकतत्पराः ॥

यत्तु किञ्चेमाः प्रजाः शोचन्त्यमेवसान्तद्भवति पुण्यमेवामुं गच्छति नह वै देवान् पापं गच्छतीति श्रुतिस्मृतिभ्यां प्रजार्जितभक्त्यादिगुणपूगस्यैव मनआदीन्द्रियाणामभिमानिदेवानां ननु तदर्जितपापादिस्पर्श इति निर्णीतत्वान्नात्र शङ्का कार्येति ॥ २२ ॥

अस्य जगद्वृक्षस्यैकं फलं प्रवृत्तकर्मफलं स्वर्गादिलक्षणं ग्रामेचरा गृध्राः विषयलोलुपाः कर्मिणोऽश्नन्ति एकं निवृत्तलक्षणं कर्मफलं मोक्षम् अरण्यवासा हंसाः श्रीनारायणाख्यसुरपालिनो ज्ञानिनो भुञ्जत इति एतद्वृक्षज्ञानफलमाह । य इति । यः पुरुषः एवं बहुरूपं बहुविधमिह भोगायतनत्वेनाभीष्टं मायामयं भगवदिच्छानिमित्तमूलप्रकृत्युपादानकत्वेन जगद्वृक्षं वेद स पुरुषो वेदं वेद यतः प्रसूता जगतः प्रसूतिरित्यादिश्रुत्यर्थं वेदेति ॥ २३ ॥

एतद्विद्याफलमाह । एवमिति । एवमुक्तप्रकारेण सद्गुरूपासनया प्रधानभक्त्या निशितेन विद्याकुठारेण प्राकृतान्तःकरणजन्यज्ञानपरशुना जीवाश्रयं आद्यान्तःकरणं विवृश्च्य छित्वा निर्मलीकृत्य प्राकृतान्तःकरणजन्यज्ञानमस्त्रं संसारनिवर्तकं त्यज अथ तज्ज्ञानत्यागानन्तरं निजज्ञानेनात्मानं परमात्मानं सम्पद्य मुक्तो यथायोग्यसुखमनुभवसि चेति भावः—

प्राकृतान्तःकरणजं ज्ञानमस्त्रं सृतिच्छिदम् ।
तद्दृष्ट तेन सञ्छेद्यं चित्तप्रकृतिसम्भवम् ॥
तेनैव सह सन्त्यज्य नैव पूर्वं कुदाचन ।
ज्ञानं प्रकृतिजं चापि मूलनाशे विनश्यति ॥
ततः परं स्वरूपेण ज्ञानेनैव जनार्दनम् ।
वेत्ति मुक्तस्तथात्मानं जीवानन्यांश्च सर्वशः ॥

इति वाक्यात्स ज्ञानमात्रोच्छेदो विवक्षितः किन्तु प्राकृतस्येति ॥ २४ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
द्वादशोऽध्यायः ॥ १२ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ॥

अतएव यस्मिन्निति विशेषबोधार्थं जगदेव रूपकेण वर्णयति। य एष इति सार्द्धकेन ॥ २१ ॥ २२ ॥

तदेवं वेद्यं जगच्च निरूप्य तस्मात्त्वमुद्धवोत्सृज्येति पर्यवसानं पूर्वोक्तं वेदार्थमेव समासेन दर्शयति द्वाभ्यां तत्र वेदोक्तसाध्येष्वपि स्वर्गादिभेदमाह। अहन्तीत्येकेन। तत्र सन्यासिनः सुखमिति तत्फलेन ब्रह्मलोकगतानां तत्रैव ब्रह्मणा सह मोक्षं प्राप्स्यतां पाताभावात्। एकमेव स्वरूपशक्तिवैचित्र्या बहुरूपं चतुर्व्यूहादिलक्षणं किञ्चिन्मायामयं मायाशक्त्या जगद्रूपञ्च यो वेद मामिति शेषः स वेद वेद तत्त्वार्थं वेत्तीति ॥ २३ ॥

तदेवं वेदार्थे प्रदर्श्य तस्मात्त्वमुद्धवोत्सृज्येत्यादिवाक्यैकार्थ्येन निगमयति। एवमिति। एवं पूर्वोक्तप्रकारेण मद्रूपस्य सुदृढा अतएव गुरूपासनया जातेन तेन विद्याकुठारेण शुद्धजीवात्मज्ञानस्वरूपेण परशुना जीवाशयं भयमयसंसारतरुरूपं मद्वयवधायकं विवृश्च्य छित्त्वा गुरूपासनयैव जातया प्रेमलक्षणयैकान्तभक्त्या आत्मानं सर्वाश्रयस्वरूपं मां सम्पद्य साक्षात्कृत्य अथानन्तरमथास्त्रं तद्रूपत्वेन कृतरूपकं विद्याकुठारं त्यज तस्य तद्वृश्चनमात्रप्रयोजनत्वात् त्यागो युक्तः भक्तेस्तु स्वैरेव सदा तत्साक्षात्कारे हेतुत्वात्त युक्त इति भावः। वक्ष्यते च यस्त्विह इहेमनुमानसयुक्तितर्कविज्ञानासिना भजत माखिल संशयाधिमिति ॥२४ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
द्वादशोऽध्यायः ॥ १२ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

तन्मायारचितत्वात्सत्यमपीदं जगन्न मतः पृथगिति सदृष्टान्तमाह। यस्मिन्निति। तन्तुविताने संव्या स्थितिर्यस्य स पटो यथा तथा यस्मिन्निदं विश्वम् ओतं दीर्घतन्तुषु प्रोतं तिर्यक् तन्तुषु पट इव। एवं भूतं समष्टिव्यष्ट्यात्मकं शरीरमेव संसारहेतुत्वात् संसारवन्तं तरुरूपकेण वर्णयति। य इति। पुराणः अनादिः कर्मात्मकः कर्मप्रवाहमयः पुष्पं फलस्याविर्भावो भागः शुभाशुभतुरद्वे फले सुखदुःखे ॥ २१ ॥

रूपकं विवृणोति। द्वे इति। द्वे पुण्यपापे अस्य बीजे शतमपरिमिता वासना मूलानि यस्य त्रयो गुणा नालानि प्रकाण्डा यस्य पञ्च भूतानि स्कन्धा यस्य पञ्च रसाः शब्दादिविषयास्तेषां प्रसूतिर्यस्मात् दश एका च शाखा इन्द्रियाणि यस्य द्वयोः सुपर्णयोर्जीवपरमात्मनोर्नीडं वासो यस्मिन् त्रीणि वल्कलानि त्वचो वातपित्तश्लेष्माणो यस्य द्वे सुखदुःखे फले यस्य सः अर्क प्रविष्टः सूर्यमण्डलपर्यन्तं व्याप्तः तं भित्त्वा गतस्य संसाराभावात् ॥ २२ ॥

तत्फलभोक्तॄनाह। गृध्यन्तीति गृध्राः कामिनः ग्रामेचराः गृहस्थाः अस्य वृक्षस्यैकं फलमविद्यामयं दुःखमदन्ति अविद्यामयस्य नरकस्वर्गादेरपि दुःखस्वरूपत्वात् अरण्यवासाः सन्यासिनः हंसा विवेकिनः एकं फलं विद्यामयं सुखमदन्ति ज्ञानवस्तुनः सर्वथा सुखरूपत्वात् एवं बहुरूपं मायाशक्त्या समुद्भूतत्वान्मायामयम् इज्यैः पूज्यैर्गुरुभिः कृत्वा यो वेद स वेदं वेद तत्त्वार्थं वेद ॥ २३ ॥

त्वं चैवं ज्ञात्वा कृतकृत्यः सन् सर्वसाधनं सन्त्यजेत्याह। एकया गुणीभूतयापि मुख्यया भक्त्या शितेन तीक्ष्णीकृतेन ज्ञानकुठारेण जीवोपाधिं त्रिगुणात्मकं लिङ्गशरीरं विवृश्च्य छित्त्वा परमात्मानं च सम्पद्य प्राप्य अथास्त्रं ज्ञानरूपं साधनं त्यजेति सर्ववाक्यानां मया त्वमेव लक्ष्मीक्रियसे यथा गीता शास्त्रे पूर्वमर्जुन इत्यतः स्वस्यानिष्टं नाशङ्कनीयमिति भावः ॥ २४ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्।
एकादशे द्वादशोऽयं सङ्गतः सङ्गतः सताम् ॥ १२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

तन्तुविताने संव्या स्थितिर्यस्य स पटो यथा तद्वत् यस्मिन्परमेश्वरे इदमशेषं जगदोतं दीर्घतन्तुषु पट इव प्रोतं तिर्यक् तन्तुष्विव इदं पदार्थं विवृणोति तरुरूपकेण। य इत्यादिना। पुराणि कारणे ब्रह्मणि सूक्ष्मरूपेण सद्रूपतया स्थितः प्रसृत उत्पत्तिसम्भवात् कर्मात्मकः अनादिकर्मनिर्मितः पुष्पफले कर्म तत्फलं प्रसूते जनयति ॥ २१ ॥

अस्य बीजे द्वे पुण्यपापे शतमूलः बहुवासनामूलः त्रिनालः त्रयो गुणाः नालानि यस्य सः पञ्च भूतानि स्कन्धा यस्य सः पञ्चरसानां श्रोत्रादिविषयाणां शब्दादीनां प्रसूतिरुत्पत्तिर्यस्मात्सः दशेन्द्रियाणि च एकमन्तःकरणं च शाखा यस्य सः द्विसुपर्णयोः जीवपरमात्मनोर्नीडं यस्मिन् सः त्रीणि वातपित्तकफलक्षणानि वल्कलानि यस्य सः द्वे सुखदुःखे फले यस्य स तथा अर्के प्रविष्टः सर्वप्रकाशकपरमेश्वरप्रकाशितः ॥२२॥

गृध्यन्तीति गृध्राः बुभुक्षवः ग्रामेचराः ग्राम्यधर्मरताः मायामयं प्राकृतं फलं दुःखोदर्कं सम्पर्कजमित्यर्थः "ये हि संस्पर्शजा भोगा दुःखयोनय एव ते" इति गीतोक्तेः अरण्यवासाः विविक्तवासाः हंसाः तत्त्वविदः मुमुक्षवस्ते एकं परमात्मध्यानसुखमदन्ति तेषां तत्त्ववेत्तृत्वमभिनन्दति इज्यैर्गुरुभिः एकं बहुरूपमुक्तप्रकारेण विश्वाभिन्नाभिन्नं ब्रह्म यो वेद स वेदं वेदार्थं वेद ॥ २३ ॥

अहं किं कुर्यामित्यत आह। एवमिति। त्वं तु धीरः अप्रमत्तश्च सन् एवं विद्याकुठारेण जीवाशयं जीवस्य आशयो वासना यस्मिन्तं संसारं विवृश्च्य निराकृत्य गुरूपासनया लब्धया एकस्य सर्वात्मभूतस्य मम भक्त्या आत्मानं सर्वात्मानं मां सम्पद्य अस्त्रं साधनं त्यज ॥ २४ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
द्वादशाध्यायार्थप्रकाशः ॥ १२ ॥

---

भाषा टीका ।

जिस परमेश्वर में यह जगत आढेटेढे तंतुओं में जैसे पट पोहा रहता है तैसे पोहा है यही एक संसार रूपी वृक्ष है सो केवल त्रिगुण से निर्मित है इसी से पुण्य पाप रूप दो फलों को पैदा करता है ॥ २१ ॥

इस संसार वृक्ष के पुण्य पाप दो बीज हैं कर्म वासना रूप सैकडों इस के मूल हैं तीन गुण इसके पोधा हैं पांच भूत इसके छोटे पोधा हैं शब्दादिक पांच इस के रस हैं ग्यारा इन्द्रिय इस के शाखा हैं जीव ईश्वर दो पक्षियों का इस में खोंतर है वात पित्तादिक तीन इस में वल्कल हैं सुख दुःख दो इस के फल हैं यहां से सूर्य मण्डल पर्यंत यह वृक्ष व्याप्त हो रहा है ॥ २२ ॥

फलों की आकांक्षा करने वाले ग्रामवासी गृहस्थ लोग इसके एक दुःख रूपी फल को भक्षण करते हैं जंगल में वास करने वाले विरक्त परमहंस लोग इसके मोक्ष सुख रूप दूसरे फल को भोगते हैं इस प्रकार से एकही परमेश्वर को अपनी माया ज्ञान से नाना रूप भये पूज्य गुरु जनों से जो जानता है सोई वेद को जानत है ॥ २३ ॥

तुम तो इस प्रकार गुरुकी उपासना से मेरी एकान्त भक्ति से विद्या रूपी तीक्ष्ण कुल्हाडी से सावधान होकर लिङ्ग शरीर संसार रूप इस वृक्षको काट कर फिर परमात्म स्वरूप को प्राप्त होकर उस साधन रूपी अस्त्र को त्याग दो ॥ २४ ॥

इति श्रीमद्भागवत एकादशस्कन्ध में द्वादशाध्याय भाषा टीका समाप्त ॥ १२ ॥

---

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे द्वादशोऽध्यायः ॥ १२ ॥

—:*:—

## अथ त्रयोदशोऽध्यायः ।

——:*:——

सत्त्वं रजस्तम इति गुणा बुद्धेर्नचात्मनः ।
सत्त्वेनान्यतमौ हन्यात् सत्त्वं सत्त्वेन चैव हि ॥ १ ॥
सत्त्वाद्धर्मो भवेद् (१)वृद्धात् पुंसो मद्भक्तिलक्षणः ।
सात्त्विकोपासया (२)सत्त्वं ततो धर्मः प्रवर्त्तते ॥ २ ॥
धर्मो रजस्तमो हन्यात् सत्त्ववृद्धिरनुत्तमः (३) ।
आशु नश्यति तन्मूलो ह्यधर्म उभये हते ॥ ३ ॥
आगमो(४)ऽपः प्रजा देशः कालः कर्म च जन्म च ।
ध्यानं मन्त्रोऽथ(५) संस्कारा दशैते गुणहेतवः ॥ ४ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

अथोदशेऽत्र सत्त्वस्य वृद्ध्या विद्योदयक्रमः ।
हंसेतिहासतश्चित्तगुणविश्लेषवर्णनम् ॥

विद्याकुठारेण जीवाशयं विवृश्च्य साधनं त्यजेत्युक्तम् ननु तत्र तमआदिगुणत्रयवृत्तिप्रतिबन्धे सति कथं विद्योत्पत्तिरित्याशङ्क्य तन्निवृत्त्या विद्योत्पत्तिप्रकारमाह । सत्त्वमिति त्रिभिः । यद्यानन्दादिवदात्मधर्मा गुणाः स्युस्तर्हि तत्स्वरूपत्वात्तेषामनिवृत्त्या विद्योत्पत्तिर्न स्यान्न त्वेतदस्तीत्याह । बुद्धेः प्रकृतेरेते गुणा न त्वात्मन इति अतः सत्त्वेन सत्त्ववृद्ध्याऽन्यतमौ हन्यात् रजस्तमोवृत्तीर्जयेदित्यर्थः । सत्त्वं च सत्यदयादिवृत्तिरूपमुपशमात्मकेन सत्त्वेनैव हन्यात् ॥ १ ॥

ननु गुणत्रयवृत्तीनां परस्परोपमर्दनरूपत्वात्कथं सत्त्ववृत्त्यैवेतरवृत्त्योर्नियमेन हन्तव्यत्वं तत्राऽऽह । सत्त्वादिति । मद्भक्तिं लक्षयति यो धर्मः स मद्भक्तिरूप एव वा सत्त्वमेव कथं वर्धेत तत्राऽऽह । सात्त्विकानां पदार्थानामुपासया सेवया सत्त्वं वृद्धं भवतीत्यर्थः ॥ २ ॥

स च धर्मो रजस्तमश्च हन्यात् कुतः न विद्यते उत्तमो यस्मात्स सर्वोत्तमः यतः सत्त्ववृद्धिः सत्त्वस्य वृद्धिर्यस्मिन् कारणे सः अत एव तत्कार्यो धर्मप्रतिबन्धोऽपि नास्तीत्याह । तस्मिन्नुभयस्मिन् हते तन्मूलः ते रजस्तमसी रागद्वेषादिना प्रमादालस्यादिना च मूलं यस्य सः ॥ ३ ॥

सात्त्विकोपासया सत्त्वं वर्धेत इत्युक्तं तानेव सत्त्ववृद्धिहेतून् दर्शयितुं सामान्यतो गुणत्रयवृद्धिहेतूनाह । आगमः शास्त्रम् अपः आपः क्वचिदागमोऽर्थ इति पाठः ॥ ४ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

अथ द्वादशाध्यायानन्तरं चित्तस्य गुणानां च परस्परं विश्लेषस्य विभागस्य वर्णनं कथनं पूर्वाध्यायार्थेन सह निर्वाह्यनिर्वाहकसङ्गतिमवतारयति । विद्याकुठारेणेति । तत्र विद्योत्पत्तौ गुणत्रयप्रतिबन्धे गुणत्रयलक्षणे विघ्ने सति तन्निवृत्त्या गुणत्रयनिरासेन तत्र गुणत्रयप्रतिबन्धे तत्स्वरूपत्वात् धर्मत्वेनात्मस्वरूपत्वात् एतत् गुणानामात्मधर्मत्वम् अतः गुणानामात्मधर्मत्वाभावात् अन्यतमौ रजस्तमसी तत्र तयो रागमापायित्वाद्धननासम्भवाद्वृत्त्या तयो रजस्तमसोर्वृत्तिजयो व्याख्यातः अत एव इत्यर्थ इत्युक्तं तत्र कामेहामदाद्या वक्ष्यमाणाश्चतुर्दश रजोवृत्तयः क्रोधलोभानृताद्याः षोडश तमोवृत्तयस्ता जयेत् उपशमात्मकेन चित्तसमाध्यात्मकेन ॥ १ ॥

लक्षयति ज्ञापयति धर्मो मदर्पितवर्णाश्रमादिलक्षणः द्वितीयेऽर्थे मद्भक्तिरूप एवेति धर्मः स्वनुष्ठितः पुंसामित्यादिदिशा श्रवणादिनवविधभक्तिरूपः सात्त्विकानां पदार्थानां वक्ष्यमाणानिवृत्तिशास्त्रादीनाम् ॥ २ ॥

स च सत्त्वेन भूतः यस्मात् कारणादिति यद्यपि सत्त्वाद्धर्मो भवति तथापि मिथः सम्पर्ककरणाद्धर्मादपि सत्त्वस्य वृद्धिः सम्भवतीति तथा व्याख्यातं यस्मिन् कारणमिति पाठे कारणपदस्याध्याहारकल्पनेति ज्ञेयम् अत एव रजस्तमोनाशादेव तत्कार्यः रजस्तमोजन्यः उभयस्मिन् रजस्तमोरूपे ॥ ३ ॥

अर्थ इति पाठेऽभिधेयः तत्र निवृत्तिपरत्वेन व्याख्याने सात्त्विकोऽर्थः प्रवृत्तिपरत्वेन तद्राजसः वेदबाह्यपरत्वेन तत्तामस इति ज्ञेयम् अर्थ इत्यत्राश्रम इति च पाठः क्वचिदेव ॥ ४ ॥

---

(१) गुणाः का (२) ज्ञानं (३) मनुत्तमा (४) यजनं देशः (५) संस्कारो नवैते इति वि० पाठः ।

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

बुद्धेः अन्तःकरणस्य अन्यतमौ रजस्तमोगुणौ सत्त्वं सत्त्वेन हन्यादिति सत्त्वोत्पादितेन ज्ञानेन त्रैगुण्यनिवृत्तौ सत्त्वमपि निवृत्तं भवतीत्यर्थः । भक्तिलक्षणः प्रकाशकः भगवद्भक्तेरन्तरङ्गतया तद्दीपकः चिन्हभूतः ॥ १ ॥

सात्त्विकोपासया सात्त्विकपुरुषसेवया सात्त्विकाहारसेवया च रजस्तमोहन्यात् पूर्वमीषदुत्पन्नो भगवद्भक्तिचिन्हभूतो धर्मः उत्तरोत्तररजस्तमोऽवृद्धयहेतुरित्यर्थः । उभये रजसि तमसि च हते तन्मूलः रजस्तमोमूलः अधर्मः नश्यति नोत्पद्यत इत्यर्थः ॥ २ ॥ ३ ॥

आगमः शास्त्रं प्रजाः पुत्रादयः कर्म सदाचारः सन्ध्योपासनादिः जन्म ब्राह्मणादिजन्म ध्यानं देवताविषयं मन्त्रस्तत्स्मारकः संस्कारः उपनयनादिः गुणहेतवः ॥ ४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथ हि जीवनिवृत्तिस्वनेन जीवस्य गुणत्रयपारवश्यकृतो गुणत्रयपरिणामात्मकदेहसम्बन्धरूपः संसारस्तन्निवृत्तिश्च यथा स्यात्तथानुगुणान्यासोपासनान्यतरयोगेनेत्युक्तम् ननु सत्येव गुणपारवश्ये कथमनुष्ठितोपायस्याप्युपायविषयप्रमादादिराहित्यमतोऽवश्यं गुणजयेन भवितव्यं तत्रापि यदि सत्त्वादयो गुणा ज्ञानानन्दात्मकत्वादिवदात्मनः स्वाभाविकास्तर्हि न जेतुं शक्यास्ततः कथं गुणजयः कथंतरामप्रमत्तत्वादिकमित्यभिप्रायमालक्ष्याह । सत्त्वमिति । बुद्धेः प्रकृतिपरिणामात्मकमनसो गुणाः सत्त्वादयो न त्वात्मनोऽजीवस्यातःप्राकृतान्तःकरणसम्बन्धनिमित्तत्वात्सत्त्वादिगुणानामौपाधिकत्वेन निरसितुं शक्यन्त एवेति भावः । तन्निरसनोपायमेवाह सत्त्वेनेति प्रवृद्धेनेति शेषः । अन्यतमौ रजस्तमोगुणौ हन्यान्निरस्येदित्यर्थः एवमपि निरासकसत्त्वस्यावस्थानाद्गुणपारवश्यं स्थितमेवेत्यत्राह सत्त्वं सत्त्वेन चैव हीति । सत्त्वेनैव सत्त्वमपि हन्यात् सत्त्वोत्पादितेन ज्ञानेन मुक्त्यात्मकत्रैगुण्यनिवृत्त्या सत्त्वमपि निवृत्तं भवतीत्यर्थः ॥ १ ॥

सत्त्वप्रवृद्धौ पूर्वोदितभक्तियोगः सुकर एवेत्याह सत्त्वादिति भक्तिलक्षणो धर्मः पुंसः सत्त्वाभिवृद्धाद्वृद्धः समृद्धो भवेद्धर्मेत इत्यर्थः । कुतस्तर्हि सत्त्ववृद्धिरित्यत आह । सात्त्विकोपासयेति । सात्त्विकानामाहाराणां शास्त्राभ्यनिमित्तानुष्ठानामुपासया सेवया सत्त्वमूलं सर्वेन्द्रियविज्ञानपरिणामेन सत्त्वस्थः ततः वृद्धात्सत्त्वात्समेः भक्तिलक्षणः प्रवर्तते भवत्यहरहरभ्यासाहितातिशययुक्तो भवति॥२॥

प्रवृद्धस्यापि सत्त्वस्य न साक्षाद्रजस्तमउपघातकत्वमपि तु भक्त्यादिलक्षणधर्मद्वारेत्याह । धर्म इति । सत्त्वाद्वृद्धो धर्मः रजस्तमश्च हन्यादतः सत्त्ववृद्धिरनुत्तमः नास्त्युत्तम उपायो यस्मात्तथाविधमोक्षोपाय इत्यर्थः । ननु रजस्तमसोरुपघातेऽपि तन्मूलयोरनादिपुण्यपापयोर्मुक्तिप्रतिबन्धकयोः सत्त्वात्कथं सत्त्ववृद्धेरनुत्तमत्वमत आह । आश्विति । उभये रजसि तमसि च हते सति तन्मूलः उभयमूलः अधर्मः पुण्यपापात्मकः आशु नश्यति पापस्य पुण्यस्यापि स्वफलजननद्वारा मुक्तिप्रतिबन्धकत्वान्मुमुक्षोरिष्टफलप्रतिबन्धकत्वात्मिष्टफलसाधनत्वादिरूपाधर्मत्वमवृत्तिनिमित्तयोगात् ॥ ३ ॥

न केवलं सात्त्विकोपासनैव सत्त्वविवृद्धिहेतुरपि त्वन्येऽपीत्याह । आगम इति । आगमादयो दशैते गुणहेतवः सत्त्वगुणविवृद्धिहेतवः तत्रागमो वेदपञ्चरात्रादिरूपो भगवद्धर्मप्रकाशकेतिहासपुराणादिरूपश्च सात्त्विकागमानेव सेवेत नच राजसतामससङ्कीर्णानित्यर्थः 'महान् प्रभुर्वै पुरुषः सत्त्वस्यैष प्रवर्तक' इति श्रेयस्कानामपि प्रकृष्टसत्त्वगुणस्वरूपस्य भगवतः कटाक्षाधीनत्वभवणादप्राकृतशुद्धसत्त्वसमाश्रयत्वाद्भगवतस्तत्प्रतिपादकानां सात्त्विकत्वमितरेषां राजसतामसत्वादिकमवगन्तव्यं तथा च स्मरति भगवान् मनुः—

> या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः ।
> सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृता इति ॥

कुदृष्टयः कुत्सितदर्शनानि कुमतानीत्यर्थः । तेषां वेदविरुद्धत्वं वेदान्तसिद्धभगवद्धर्माप्रतिपादकत्वदेवतान्तरपारम्यप्रतिपादकत्वेन पुराणेषु सात्त्विकादिविभागा मात्स्ये प्रोक्ताः—

> सङ्कीर्णास्तामसाश्चैव राजसाः सात्त्विकाः स्मृताः ।
> कल्पाश्चतुर्विधाः प्रोक्ता ब्रह्मणो दिवसाश्च ते ॥
> यस्मिन् कल्पे तु यत्प्रोक्तं पुराणं ब्रह्मणा पुरा ।
> तस्य तस्य तु माहात्म्यं तत्स्वरूपेण वर्ण्यते ॥
> अग्नेः शिवस्य माहात्म्यं तामसेषु प्रकीर्तितम् ।
> राजसेषु च माहात्म्यमधिकं ब्रह्मणो विदुः ॥
> सङ्कीर्णेषु सरस्वत्याः पितॄणां च निगद्यते ।
> सात्त्विकेषु च कल्पेषु माहात्म्यमधिकं हरेः ॥
> तेष्वेव योगसंसिद्धा गमिष्यन्ति परां गतिमिति ।

तथा कौर्मे च —

> असंख्यातास्तथा कल्पा ब्रह्मविष्णुशिवात्मकाः ।
> कथिता हि पुराणेषु मुनिभिः कालचिन्तकैः ।
> सात्त्विकेष्वपि कल्पेषु माहात्म्यमधिकं हरेः ।
> तामसेषु शिवस्योक्तं राजसेषु प्रजापतेरिति ।

यत्रेदं सात्त्विकपुराणादिविभागप्रकथनं तत्सात्त्विकमित्यवगन्तव्यं बाधकाभावात् परस्परविरुद्धार्थपुराणबलाबलविवेकापेक्षायां तद्व्यवस्थापकतयैव प्रवृत्तत्वाद्गुणस्वभावोचितत्वाच्च प्रजाः साधुजनास्तानेव सेवेत नतु विषयलम्पटानिति भावः । अप अपः गङ्गादिपुण्यजलानि नतु गन्धोदकसुरोदकादीनि देशो विविक्तदेशः नतु यत्र पानक्रीडतादीनि स देशः कालो ब्राह्ममुहूर्तादिरूपः नतु निशीथादिरूपः कर्म फलाभिसन्धिरहितं नत्वभिसंहितफलं जन्म शौक्लं सावित्रं याज्ञिकं च "स हि विद्यातस्तं जनयति तच्छ्रेष्ठं जन्म" इत्युक्तविधं नतु शैवदीक्षादिलक्षणं ध्यानं विष्णुविषयकं नतु देवतान्तरविषयकं मन्त्रो विष्णुस्मारकः नतु देवतान्तरस्मारकः संस्कारः—

तापः पुण्ड्रं तथा नाम मन्त्रो यागश्च पञ्चम इत्युक्तपञ्चविधः नतु

> मुद्रिकाषट्कतत्त्वज्ञः परमुद्राविशारदः ।
> भगासनस्थमात्मानं ध्यात्वा निर्वाणमृच्छति ।
> कर्णिका रुचकं चैव कुण्डलं च शिखामणिः ।
> भस्म यज्ञोपवीतं च मुद्राषट्कं प्रचक्षते ।
> आभिर्मुद्रितदेहस्तु न भूय इह जायते ।
> रुद्राक्षकङ्कणं हस्ते जटा चैका च मस्तके
> कपालं भस्मना स्नानम् ॥

तत्तत्सात्त्विकमेवैषां यद्वृद्धाः प्रचक्षते ।
निन्दन्ति तामसं तत्तद्राजसं तदुपेक्षितम् ॥ ५ ॥
सात्त्विकान्येव सेवेत पुमान् सत्त्वविवृद्धये ।
ततो धर्मस्ततो ज्ञानं यावत् स्मृतिरपोहनम् ॥ ६ ॥
वेणुसंघर्षजो वह्निर्दग्ध्वा शाम्यति तद्वनम् ।
एवं गुणव्यत्ययजो देहः (१)शाम्यति तत्क्रियः ॥ ७ ॥

उद्धव उवाच ।

विदन्ति मर्त्याः प्रायेण विषयान् पदमापदाम् ।
तथाऽपि भुञ्जते कृष्ण ! तत्कथं श्वखराजवत् ॥ ८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

भूतः सत्त्ववृद्धिः पुनस्तस्मात्सत्त्ववृद्धिर्भवेत् ततश्चाभवे उभौ गुणौ रजस्तमसी अधर्मो यस्य तस्मिन्नुभयस्मिन् हते सति तन्मूलोऽधर्म आशु शीघ्रमेव नश्यति एतेन सत्त्ववृद्ध्यभिभवे रजस्तमसोर्ध्वंसं तत्राधर्मोऽप्युद्भवेदेव कारणस्य सत्त्वादिति भावः ॥ ३ ॥

ननु न केवलं वृद्धं सत्त्वमेवान्यगुणावभिभवति किन्तु रजस्तमसोरपि वृद्धं तदन्यगुणौ हन्त्यादेव कथं सात्त्विकोपासया सत्त्वमित्येवोक्तं तत्राह यद्यत्सेवयैते त्रयो गुणा वर्धन्ते ते पदार्थाः निर्दिष्टव्या इति चेत्तथा श्रुतिवल्लङ्घाकृत्याह । आगम इति । आगमः शास्त्रम् अपो द्रव्यम् अप इति वा पाठः प्रजा जनाः जन्म दीक्षा स्पष्टार्थमन्यत् एते दश पदार्थाः गुणाहेतवस्त्रयाणां गुणानां वृद्धिहेतवो भवन्ति त्रिविधा दश पदार्था इति भावः ॥ ४ ॥

---

भाषा टीका ।

श्रीभगवान् उवाच सत्व रजः तम ये सब गुण बुद्धि के हैं आत्मा के नहीं हैं तिस से सत्वगुण की वृद्धि करके रजोगुण तमोगुण का नाश करै सत्व के कार्य भी सत्वही से निवृत्त हो जाँयगे ॥ १ ॥

पुरुष के सत्वगुण के बढ़ने से मेरी भक्ति के जनाने वाला धर्म उत्पन्न होता है और सात्विक पदार्थों के सेवा से सत्व की वृद्धि होती है तब धर्मही बढ़ता है ॥ २ ॥

धर्म रजोगुण तमोगुण को नाश करता है इसी से सत्व की वृद्धि होती है फिर अधर्म के मूल दोनों गुणों के नाश होने से अधर्म शीघ्रही नष्ट हो जाता है ॥ ३ ॥

शास्त्र जल मनुष्य देश काल कर्म जन्म ध्यान मन्त्र संस्कार ये दश पदार्थ गुणों के बढ़ने में हेतु हैं ॥ ४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

एषु सात्त्विकादिनिर्णयमाह । एषामेव मध्ये यद्वृद्धाः शास्त्रज्ञाः प्रचक्षते प्रशंसन्ति तत्तत्सात्त्विकम् यत् निन्दन्ति तत्तामसम् यद्वृद्धैरुपेक्षितं न स्तुतं नच निन्दितं तद्राजसम् ॥ ५ ॥

सात्त्विकान्येवेति । निवृत्तिशास्त्राण्येव सेवेत न प्रवृत्तिपाखण्डशास्त्राणि तीर्थोद एव न गन्धोदकसुराद्याः प्रजा जनाः निवृत्तान् जनांश्च प्रवृत्तदुराचारान् विविक्तदेशं न रथ्याद्यूतदेशान् कालं ब्राह्ममुहूर्तादिकं ध्यानादौ न प्रदोषनिशीथादीन् कर्म च नित्यं न काम्याभिचारादीनि । जन्म च वैष्णवशैवदीक्षालक्षणं न शाक्तक्षुद्रदीक्षारूपम् ध्यानं श्रीविष्णोर्न कामिनीविद्विषाम् मन्त्रं प्रणवादिकं न काम्यक्षुद्रान् संस्कारमात्मनः शोधकं नतु केवलं देहगृहादीनाम् ननु ज्ञानं महावाक्यश्रवणादेवोत्पद्यते किं तत्र सत्त्वसंवृद्ध्या धर्मेण वाऽत आह यावत्स्मृतिरात्मापरोक्ष्यम् यावच्च देहद्वयतत्कारणभूतगुणापोहः तावत्पर्यन्तं ज्ञानं भवतीत्यर्थः ॥ ६ ॥

ननु गुणव्यतिकराज्जातो देहः कथं स्वाश्रयभूतान् गुणान् स्वत एवोत्पन्नया विद्ययाऽपोह्य स्वयमप्युपरमेत्तत्राह । वेणूनां संघर्षाज्जातोऽग्निर्यथा स्वत एवोत्पन्नाभिर्ज्वालाभिस्तद्वनं सर्वं दग्ध्वा पश्चात्स्वयं शाम्यति एवं देहोऽपि तत्क्रियस्तद्वत्प्रेरित क्रिया ज्ञानपरो यस्य सः ॥ ७ ॥

ननु नियतेन्द्रियतया सात्त्विकसेवायामिथानादिति पुरुषार्थस्तथाऽपि राजसादीन् विषयान् दुःखमिति जानन्तोऽपि कथं सेवन्त इति पृच्छति । विदन्तीति । एवं श्वानो यथा भर्त्स्यमाना अपि खरा यथा पद्भ्यां ताड्यमाना अपि खरीमनुधावन्तः अजा यथा निर्लज्जा हन्तुमानीता अपि तद्वत् ॥ ८ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

यावागमादिषु वृद्धाः व्यासादयः सात्त्विकादीनां गुणदोषौ यथोत्तरमपेक्षे दर्शितौ इतः ॥ ५ ॥

---

(१) देह इति शुकपक्षीय विज० पाठः ।

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

महावाक्यानि तत्त्वमसीत्यादिद्वादश तेषां श्रवणात् तदुक्तं तत्रैव "ऐक्यज्ञानं यदा जातं महावाक्येन चात्मनः । तदाऽविद्या स्वकार्यैश्च नश्यत्येव न संशय" इति तावत् पर्यन्तमिति तथाच शास्त्रादैक्यज्ञानं परोक्षात्मकमेव स्यात् नत्वपरोक्षम् आत्माऽपरोक्षत्वन्तु सात्त्विकपदार्थजनितभक्तिलक्षणाधर्मादेव "प्रीतिर्न यावन्मयि वासुदेवे न मुच्यते देहयोगेन तावत्" इत्याद्युक्तेरित्यर्थः ॥ ६ ॥ ७ ॥

इत्यात्मापरोक्ष्यपर्यन्तः प्रायेणेति ये तावन्न विदन्ति ते श्वादितुल्याः भुञ्जतां नामेत्यर्थः । तत्र श्वा मैथुनान्ते शुन्यां बन्धं न जानाति खरश्च रजकदर्शिततृणमुष्टिभोगान्ते महाभारवहनं न जानाति अजस्तु नित्यनानाभोजनाद्यन्ते शिरश्छेदं न जानाति इति त एव दृष्टान्तिताः ॥ ८ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

तस्मात्सात्त्विकमिति फलाभिसन्धिरहितं नित्यं नैमित्तिकं विवक्षितं तामसमभिचारादिजं राजसम्पुत्रपश्वन्नादिप्रदम् कर्म ॥ ५ ॥

धर्मः अपूर्वशब्दवाच्य ईश्वरानुग्रहः स्मृतिः अविच्छिन्नस्मृतिसन्ततिः अपोहनं शब्दादिविषयस्मृत्यभावश्च यावज्ज्ञानमुत्पद्यते "परमात्मनि यो रक्तो विरक्तोऽपरमात्मनी"तिन्यायेन विषयान्तरविमुखभगवदेकस्मृतिसन्ततिरूपज्ञानं भवतीत्यर्थः ॥ ६ ॥

उत्पाद्यस्य स्वोत्पादकविनाशेन स्वनिवृत्तौ दृष्टान्तमाह । वेणुवदिति । वेदः वेदनम् । अतिक्रियः बन्धहेतुभूततत्क्रिया शून्यं स्मृतिरूपमुपायभूतं हि ज्ञानं मोक्षदशायां निवर्तते ॥ ७ ॥

श्वखराजवत् श्ववत्खरवदजवच्च ॥ ८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सात्त्विकाद्यागमादीनां विभाजकं लक्षणमाह । तद्वदिति । वृद्धाः भगवद्भक्ता भगवद्भक्तियोगस्यैव प्रकृतत्वात्तन्निष्ठा एवात्र वृद्धशब्दविवक्षिताः प्रचक्षते प्रकृष्टं वदन्ति तद्वदेवैषामागमादीनां मध्ये सात्त्विकं यद्यत् ते निन्दन्ति तत्तामसं यद्यच्चैतैरुपेक्षितं न स्तुतं न निन्दितं च तद्राजसमिति ॥ ५ ॥
ततः किमत आह । सात्त्विकान्येवेति । ततो विवृद्धात्सत्त्वात् धर्मः भक्तिलक्षणः ततो धर्मात् ज्ञानं मत्स्वरूपस्वभावयाथात्म्यगोचरज्ञानं स्मृतिः मद्विषयकस्मृतिसन्ततिः यावत्कालस्यैनापोहनं शब्दादिविषयान्तरस्मृत्यभावनिश्चयश्च भवेत् "परमात्मनि यो रक्तो विरक्तोऽपरमात्मनी"ति न्यायेन विषयान्तरविमुखभगवदेकस्मृतिसन्ततिरूपज्ञानं भवतीत्यर्थः ॥ ६ ॥

नन्वाशु नश्यति तन्मूलो ह्यधर्म उभये हते इत्यनेन गुणत्रयपरिणामात्मकदेहसाध्यसात्त्विकाद्यागमादिसेवामयाद्युत्पादितसत्त्ववृद्धिनिमित्तभक्तियोगात्मकविद्यया निरवशेषं रजस्तमसोरपहतयोर्देहसम्बन्धाजनकपुण्यपापात्मकाऽधर्मोपहतिरुक्ता

[ ८४ ]

तत्र गुणत्रयोत्पाद्यदेहः कथं स्वोत्पाद्यसत्त्ववृद्ध्युपचितभक्तिद्वारा स्वमूलभूतगुणत्रयं निवर्तयन् स्वयमपि निवर्तते इत्यभिप्रायमालक्ष्य उत्पाद्यस्य स्वोत्पादकविनाशेन स्वनिवृत्तौ दृष्टान्तमाह । वेणुसंघर्षज इति । यथा वेणूनां संघर्षाज्जातः वह्निः स्वस्मादेवोत्पन्नाभिर्ज्वालाभिः स्वहेतुभूतं वनं दग्ध्वा स्वयमपि शाम्यति एवं गुणव्यत्ययजः गुणवैषम्यजो देहोऽपि तात्क्रियः तद्वद्वेणुवह्निवत्क्रिया व्यापारो यस्य सः तद्वदात्मोत्पादकयोरुभयोरपि निवर्तक इत्यर्थः । अतत्क्रिय इति पाठान्तरं तत्रातत्क्रियः स्वसजातीयदेहान्तरसम्बन्धरूपबन्धहेतुतत्क्रियाशून्यः स्वयमपि शाम्यति स्वमूलभूतगुणत्रयं शमयन् स्वयमपि शाम्यति उपरमते स्मृतिरूपमुपायभूतं ज्ञानं हि मोक्षदशायां निवर्तते अतो यावन्मोक्षमुपायनिष्पत्त्यनुगुणं व्याप्रियमाणो देहः स्वमूलभूतगुणकर्मसम्बन्धादिकमात्मनो निवर्तयन् स्वयमपि निवर्तेत इत्यर्थः ॥ ७ ॥

सात्त्विकान्येव सेवेत पुमान् सत्त्वविवृद्धय इत्यनेनासात्त्विकसेवया रजस्तमसोर्विवृद्धिस्ततः पुण्यपापात्मको ऽधर्मस्ततो देहात्माभिमानाद्यज्ञानं शब्दादिविषयस्मृतिसन्ततिस्ततोऽन्ततो दुःखावाप्तिश्चेति सूचितं तत्र पृच्छत्युद्धवः । विदन्तीति । यद्यपीत्थं प्रायेण केचिन्मर्त्याः विषयानापदां दुःखानां पदं स्थानं विदन्ति तथापि हे कृष्ण ! भुञ्जते विषयानेवानुभवन्ति नतु तेभ्यो विरज्य मुक्तये यतन्ते इत्यर्थः । श्वखराजवत् श्ववत् खरवत् अजवत् श्वानो यथा भर्त्स्यमाना अपि खरा यथा पदाहता ताड्यमाना अपि शुनीं खरीं चानुधावन्ति अजा यथा निर्लज्जा हन्तुमानीता अपि तद्वदित्यर्थः । ततः किमत आह । तत्कथमिति । विषयाणामापत्पदत्वविदः पुनर्विषयानेव भुञ्जते इत्येतत्कथं नहि कश्चित् श्वभ्रपतनस्यानर्थहेतुतां जानन्नपि तत्र पततीति अतस्तत्र किंकारणमिति प्रश्नः ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तद्वद्वेदज्ञानं कथमत्राह । तद्वदिति । ज्ञानवृद्धा एषामागमादीनां मध्ये यद्यत् सादिवाति प्रचक्षते तत्तत्सात्त्विकं यद्यन्निन्दन्ति तत्तामसं यदुपेक्षितं प्रचक्षते तद्राजसमिति जानीहीति शेषः ॥ ५ ॥

किमर्थमेवं विभागवचनं येनोपयोग्यं स्यादत्राह । सात्त्विकानीति । सत्त्वं सत्त्वस्वभावस्तद्विवृद्धये किं तत इति तत्राह । तत इति । ततः सत्त्वाद्भक्तिसाधनं धर्मः ततो धर्मात् ज्ञानं स्यात् किञ्च हरिविषयवाचो हरिविषया स्मृतिरपोहनं भगवद्विरुद्धत्यागः इत्येते भवन्ति ॥ ६ ॥

एवमुत्पन्नवृत्तिज्ञानस्य नाशं सदृष्टान्तमाह । वेणिवति । तन्मूलनिर्वाणं यथा तथा कथयामः तथाहि । यस्मिन्वने वेणवः सन्ति तेषां वेणूनां संघर्षाज्जातो वह्निस्तद्वनं दग्ध्वा स्वयमपि शाम्यत्येवं गुणव्यत्ययजः सत्त्वादिगुणानां व्यत्ययादन्योऽन्यनाशात्पृथक्स्थितावुद्रिक्तात्सत्त्वाज्जातो वेदो वृत्तिज्ञानं स्वकारणमन्तःकरणं विनाश्य निर्मूलं स्वयं च विनश्यतीत्यन्वयः "विनिषेधे पृथग्भाव इति अतिक्रमादधिकार्थोक्तौ प्रशंसायामति क्रमे" इति यादवः वेदशब्दस्य प्रसिद्धार्थे परित्यज्याप्रसिद्धकल्पने किं नियामकम् उच्यते उपक्रमं ब्रूमः—

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मुक्ताश्चाधीयते वेदान् जडज्ञानविवर्जिताः ।
स्वरूपभूतज्ञानेन पश्यन्तः सर्वमञ्जसेति ॥

वाक्यं च विद ज्ञान इति धातोश्च । "अविनाशी वा अरेऽयमात्मानुच्छित्तिधर्मे"ति श्रुतेः न स्वरूपज्ञाननाश उपपन्नः स्वरूपहानिप्रसङ्गात् एतत्साम गायन्नास्ते इत्यादिश्रुतिविरोधाच्च वेदोपशमो नोपपन्न इति ॥ ७ ॥

विषयाणामापदां पदत्वं जानन्तोऽपि तानेव सेवन्ते तत्र किङ्कारणमिति भावेन पृच्छति । विन्दन्तीति । श्वा च खरश्च अजश्च श्वखराजाः तद्वत् ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

वृद्धाः श्रीव्यासादयः सात्त्विकादीनां गुणदोषौ पाद्मोत्तरखण्डे दर्शितौ वर्त्तेते ॥ ५ ॥

सात्त्विकान्येवेत्यस्य टीकायां तावदेव ज्ञानं भवतीत्यर्थः इति तावच्छब्दस्यात्यपरोक्षज्ञानमेवानुवर्त्तते तत आत्मापरोक्षार्थं सात्त्विकान्येव सेवेतेत्यर्थः ॥ ६ ॥ ७ ॥

यद्यपि विदन्ति तथापि श्वादयो ये न विदन्ति तद्वत्कथं भुञ्जते प्रायेणेति । ये न विदन्ति ते श्वादिनिर्विशेषास्तावद्भुञ्जतामित्यर्थः । विषयांस्त्वादीन् आपदां भाविदुःखानां पदमव्यभिचारिस्थानं दुःखोदर्काणि संपश्यन्निति वक्ष्यमाणात् तत्र श्वा मैथुनान्ते शुन्यां बन्धं खरो रजकदर्शिततृणमुष्टिभोगान्ते महाभारवहनञ्च अजो नित्यनानाभोजनाद्यन्ते शिरश्छेदं न जानन्तीति तथा दृष्टान्तितम् ॥ ८ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

एषां मध्ये प्रवृत्ते प्रशंसन्ति तदुपेक्षितं तैर्न स्तुतं नापि निन्दितमित्यर्थः ॥ ५ ॥

सात्त्विकानि निवृत्तिशास्त्राण्येव नतु राजसतामसानि प्रवृत्तिपाषण्डशास्त्राणि सेवेत तीर्थाप एव न गन्धोदकसुरोदकाद्याः जनान् निवृत्तानेव न प्रवृत्तदुराचारान् देशान् विविक्तानेव नतु रथ्याद्यूतसद्मानि कालान् ब्राह्ममुहूर्त्तप्रातरादीन् न प्रदोषनिशीथान् कर्माणि नित्यनैमित्तिकानि न काम्याभिचारादीनि जन्मानि प्रणवदीक्षाविधिलक्षणानि न शाक्तक्षुद्रमन्त्रदीक्षालक्षणानि ध्यानानि पञ्चवर्षाभिधार्मिकाणां नतु कामिनीविलिप्तां मन्त्रान् प्रणवादीन् नतु काम्यक्षुद्रान् संस्कारान् आत्मशोधकान् नतु देहगेहसूनाद्यानादिशोधकान् ततः सत्त्ववृद्धेस्ततः धर्मः धर्माच्च ज्ञानं किंपर्यन्तं स्मृतिरात्मापरोक्ष्यं यावत् देहद्वयाध्यासतत्कारणभूतगुणापोहश्च यावत् तावत्पर्यन्तं भवेत् तदेव ज्ञानं विद्या सैव जीवोपाधिं दग्ध्वा निरिन्धनाग्निवत् स्वयमपि शाम्यतीत्यर्थः ॥ ६ ॥

ननु गुणव्यतिकरभववुद्धीन्द्रियादिभ्य एव साधनाभ्यासेनोत्पन्नं ज्ञानं कथं स्वहेतुभूतान् गुणान् निरस्येतत्राह । वेणूनां संघर्षजातोऽग्निर्यथा तद्वनं वेणुवनं दग्ध्वा शाम्यति एवमेव गुणव्यत्ययजो देहः देहोत्थं ज्ञानं तत्क्रियः तस्याग्नेरिव क्रिया यस्य सः जीवोपाधिं दग्ध्वा पश्चात् स्वयं शाम्यति ॥ ७ ॥

ननु ये न जानन्ति ते दुर्विषयान् भुञ्जतां सात्त्विकसेवया स्यात् पुरुषार्थः स्यादिति जानन्तोऽपि तान् कथं भुञ्जत इत्याह । विन्दन्तीति । श्वानो यथा भर्त्स्यमाना अपि उच्छिष्टग्रासं खरा यथा पद्भ्यां ताड्यमाना अपि खरीम् अजा यथा हन्तुमानीता अपि तद्वत् ॥ ८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ननूक्तशास्त्रादिदशकस्य गुणत्रयहेतुत्वमित्युक्तं तत्स्यात् तथापि सात्त्विकादिनिर्देशेन ते विवेचनीया इत्यपेक्षायामाह । तद्दिति । एषामागमादिदशानां मध्ये यद्यद्वृद्धाः प्रवृत्ते प्रशंसन्ति तत्तदेव सात्त्विकं ज्ञेयमिति शेषः । यद्यन्निन्दन्ति तत्तत्तामसं यद्यदुपेक्षितं तैर्वृद्धैरुपेक्षितं न स्तुतं न वा निन्दितं तत्तद्राजसं ज्ञेयम् अत्र वृद्धा ज्ञानवृद्धा विवक्षिता नतु वयोवृद्धाः ज्ञानप्रकरणत्वात् नहि ज्ञाने वयसः कारणत्वम्—

न तेन स्थविरो भवति येनास्य पलितं शिरः ।
यो वा युवाप्यधीयानस्तं देवाः स्थविरं विदुः ॥
विप्राणां ज्ञानतो ज्यैष्ठ्यं क्षत्रियाणां तु वीर्यतः ।
वैश्यानां धान्यधनतः शूद्राणामेव जन्मतः ॥

इति मनुवचनात् ॥ ५ ॥

सात्त्विकानीति । एवं तत्र मुमुक्षुः सत्त्वविवृद्धये सात्त्विकान्येव वस्तूनि सेवेत तत्र शास्त्रं भगवज्ज्ञानभक्तिप्रतिपादकतया मोक्षफलकं सात्त्विकम् । प्रवृत्तिमार्गेण बहुधनायाससाध्यनश्वरस्वर्गादिफलकं राजसं प्रमादमोहाज्ञानमारणाभिचारादिकर्मप्रतिपादकतया नरकफलकं तामसं च न सेवेतेत्यर्थः । एवं सर्वत्र योजनीयम् अथ मन्त्रधनादिकं द्रव्यं शुद्धाचारकुलादिभ्य एव नतु राजान्त्यजगणिकादिभ्यः अपः आपः जलं शुद्धं तीर्थादिकं भगवदर्पितमेव नतु गन्धादियुक्तं सुरादि वा जनान् निष्कामधर्मचारिणो ज्ञानिभक्तानेव नतु सकामधर्मनिष्ठान् लुब्धान् प्रमादिनो दुराचारिणो वा देशं भगवद्भजनध्यानाद्यनुकूलतीर्थक्षेत्रादिविविक्तमेव नतु मार्गसंसदादि अन्त्यजवेश्यादिस्थानं वा कालं ध्यानाद्युपयोगि ब्राह्ममुहूर्त्तादिकं न मध्याह्नादिनिशीथादिरूपस्य कर्म नित्यनैमित्तिकावश्यकार्चनादिकं नतु काम्यान्यदेवार्चनादि अभिचारादि वा जन्म दीक्षालक्षणं सा च वैष्णवी एव न सौरशैवशाक्तक्षुद्रदेवतासम्बन्धिदीक्षारूपा अत्र मायावादिना जन्म च वैष्णवशैवदीक्षालक्षणं न शाक्तक्षुद्रदीक्षारूपमिति व्याख्यातं तत्र शिवदीक्षाया अपि सत्त्वशुद्धिहेतुत्वग्रहणं तच्छास्त्रविरुद्धत्वादयुक्तं शैवदीक्षायाः सात्त्विकत्वं केनापि शास्त्रेण वक्तुमशक्यत्वात् यदि शिवस्यैव सर्वेतिहासपुराणादिषु तामसत्वाभिधानं किं पुनस्तद्दीक्षायाः तथोक्तं वाराहे अगस्त्यरुद्रसम्वादे—

यत्सत्त्वं तद्धरिर्देवो यो हरिस्तत्परं पदम् ।
सत्त्वं रजस्तम इति त्रितयं चैतदुच्यते ॥
तमः शिवो रजो ब्रह्मा सत्त्वं नारायणात्मकम् ।

श्रीभगवानुवाच ।

अहमित्यन्यथा बुद्धिः प्रमत्तस्य यथा हृदि ।
उत्सर्पति रजो घोरं ततो वैकारिकं मनः ॥ ९ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

रजसा सत्त्वयुक्तेन भवेच्छ्रीमान् यशोऽधिकः ॥
तच्च वै तामसं वृत्तं सर्वशास्त्रेषु पठ्यते ।
यद्धर्म्याद्यकर्म स्यात् मामुद्दिश्योपसेवते ॥
तद्रौद्रमिति विख्यातं निकृष्टगतिदं नृणाम् ।
अज्ञानतपसा युक्तं केवलं तामसं तु यत् ॥
तद्दुर्गतिप्रदं नृणामिह लोके परत्र चेति ।

लिङ्गे चतुर्दशाध्याये

हिरण्यगर्भो रजसा तमसा शङ्करः स्वयम् ।
सत्त्वेन सर्वगो विष्णुः स चात्मा सहशम्भवः

तत्रैव चतुर्विंशेऽध्याये—

त्वत्कोपसम्भवो रुद्रस्तमसा च समावृतः ।
त्वत्प्रसादाज्जगद्धाता रजसा च पितामहः ॥
सत्त्वरूपः स्वयं विष्णुः पुरुषः पुरुषोत्तमः ।

स्कन्देऽपि प्रथमस्कन्धे—

मुमुक्षवो घोररूपान् हित्वा भूतपतीनथ ।
नारायणकलाः शान्ताः भजन्ति ह्यनसूयवः ॥

भूतपतीन् शिवादीन् भूतपतित्वं शिवस्यैव भूतेशः खण्डपरशुः पिनाकी प्रमथाधिप इत्यमरकोशात् दशमेऽपि परिक्षित्प्रश्नः—

देवासुरमनुष्येषु ये भजन्त्यशिवं शिवम् ।
प्रायस्ते धनिनो भोजा नतु लक्ष्म्याः पतिं हरिमिति ॥

अशिवमिति तामसमित्यर्थः तामसत्वं प्रश्नोत्तराभ्यां प्रतिपाद्य—

हरिर्हि निर्गुणः साक्षात् पुरुषः प्रकृतेः परः ।
स सर्वदृगुपद्रष्टा तं भजन्निर्गुणो भवेदित्युक्तम् ॥

ध्यानं श्रीविष्णोरेव न सूर्याग्निरुद्रभैरवादीनां मन्त्रं रामकृष्णनारायणविष्णुनृसिंहसम्बन्धिनमेव न तु हैरण्यगर्भसौरादिशैवशाक्तादिकं वा संस्कारं स्वरूपशोधकं भगवत्स्वरूपादिविषयकज्ञानमक्तिरूपमेव—

धर्मज्ञस्येश्वरज्ञानाच्छुद्धिः परमा मतेति ।

याज्ञवल्क्यस्मृतेः भक्तिः पुनाति मन्निष्ठा श्वपाकानपि संभवादिति भगवदुक्तेः न तु देहगेहादीनामेव ततो वृद्धात्सत्त्वाद्युक्तलक्षणो धर्मो भवेत्ततो ज्ञानं भवेत्ननु "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेने" ति श्रुतिविहितस्ववर्णाश्रमोचितवेदाध्ययनयज्ञादिधर्मेणैव ज्ञानं भवत्येवं किमुक्तलक्षणधर्मेण, किस्वा सत्त्ववृद्धचर्थमुक्तशास्त्रादिस्थानेनेति तत्राह । यावत्स्मृतिरित्यादि । फलरूपा भक्त्यपरपर्याया ध्रुवा स्मृतिर्यावत्पर्यन्तं स्यात्तावत् "आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवास्मृति"रिति श्रुतेः पुनः कथम्भूतं ज्ञानम् अपोहनं संसृतिहेतुभूतगुणाकार्यदेहः सकारणोऽपोह्यतेऽपसर्यतेऽनेनेत्यपोहनं तत्सत्त्वनाशाय कारणमित्यर्थः । एवम्भूतं ज्ञानं भक्तिलक्षणधर्मेणैव जायते नतु यज्ञादिरूपसाधारणधर्मेणेति भावः ॥ ६ ॥

ननु गुणतत्कार्यापोहेऽपि सूक्ष्मदेहस्य विद्यमानत्वात् पुनस्तत्सम्बन्धः स्यादिति चेत्सोऽपि नश्यतीत्याह । वेणुवेति । वेणूनां सङ्घर्षाज्जातो वह्निर्यथा स्वस्मान्निर्गतज्वालाभिस्तद्वनं दग्ध्वा शाम्यति एवं गुणव्यतिकराज्जातो देहः सूक्ष्मशरीरं स्वोत्पन्नज्ञानेन स्वकारणं विनाश्य स्वयमपि शाम्यति कथम्भूतः तत्क्रियः तस्याग्नेरिव क्रिया यस्य सः ॥ ७ ॥

एवं सात्त्विकपदार्थानां सेवनस्य परम्परया सर्वानर्थनिवृत्तिपूर्वकनिरतिशयफलकत्वे सिद्धे सति सर्वानर्थहेतून् राजसतामसान् विषयान् जानन्तोऽपि बहवो जनाः कथं सेवन्ते इति सन्दिह्य पृच्छति उद्धवः । विदन्तीति । मर्त्याः विषयानापदास्पदं दुःखरूपं स्थानं प्रायेण बहुशः प्रत्यक्षानुमानशास्त्रद्वारा विदन्ति जानन्ति तथापि तान् भुञ्जते तत्र दृष्टान्तः श्वखराजवत् श्ववत् खरवत् अजवत् हे कृष्ण ! तत्कथं केन हेतुनेत्यर्थः ॥ ८ ॥

---

### भाषा टीका ।

इन पदार्थों मे जिन जिन पदार्थों को शिष्ट जन प्रशंसा करैं वेही सात्विक पदार्थ हैं जिनकी वे निंदा करते हैं वे तामस हैं जिसको उनने नहीं कहा है वह राजस है ॥ ५ ॥

पुरुष को चाहिये कि सत्वकी वृद्धि के लिये सात्विकही पदार्थों का सेवन करै तिस से धर्म बढेगा फिर ज्ञान बढैगा यावत्पर्यंत अज्ञान रहैगा ऐसा करने ही से ठीक होगा ॥ ६ ॥

जैसे कि बांसों के घिसने से पैदा हुआ अग्नि सब वन को जला कर आप भी शांत हो जाता है तैसे ही गुणों के व्यतिक्रम से भया देह भी उसी के क्रिया की नांई शांत हो जाता है ॥ ७ ॥

उद्धव उवाच ।

हे श्रीकृष्ण ! प्रायः करके सब मनुष्य इन विषयों को दुख का ही हेतु जानते हैं तो भी कुत्ता बकरी गधा सरीके फिर भी उनहीं विषयों को भोगते हैं इसका क्या कारण है सो कहिये ॥ ८ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

मिथ्याऽभिनिवेशान भुञ्जत इति सहेतुकमाह । अहमिति त्रिभिः । प्रमत्तस्य विवेकशून्यस्य देहादावहमिति मिथ्याबुद्धि-

रजोयुक्तस्य मनसः संकल्पः सविकल्पकः ।
ततः कामो गुणाध्यानाद्दुःसहः स्याद्धि दुर्मतेः ॥ १० ॥
करोति कामवशगः कर्माण्यविजितेन्द्रियः ।
दुःखोदर्काणि सम्पश्यन्रजोवेगविमोहितः ॥ ११ ॥
रजस्तमोभ्यां यदपि विद्वान् विक्षिप्तधीः पुनः ।
अतन्द्रितो मनो युञ्जन् दोषदृष्टिर्न सज्जते ॥ १२ ॥
अप्रमत्तोऽनुयुञ्जीत मनो मय्यर्पयन् शनैः ।
अनिर्विण्णो यथा कालं जितश्वासो जितासनः ॥ १३ ॥
एतावान् योग आदिष्टो मच्छिष्यैः सनकादिभिः ।
सर्वतो मन आकृष्य मय्यद्धा वेश्यते यथा ॥ १४ ॥

उद्धव उवाच ।

यदा त्वं सनकादिभ्यो येन रूपेण केशव ! ।
योगमादिष्टवानेतद्रूपमिच्छामि वेदितुम् ॥ १५ ॥

श्रीभगवानुवाच ।

पुत्रा हिरण्यगर्भस्य मानसाः सनकादयः ।
पप्रच्छुः पितरं सूक्ष्मां योगस्यैकान्तिकीं गतिम् ॥ १६ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

हृदि यथावदुत्सर्पति ततोऽहंबुद्धेश्च वैकारिकं सत्त्वप्रधानमपि मनः अतिघोरं दुःखात्मकं रज उत्सर्पति मनो व्याप्नोतीत्यर्थः ॥ ९ ॥

इदमेवमिदमेवं भोग्यमिति सविकल्पः सङ्कल्पः स्यात्ततश्च अहोरूपमहोभाव इति गुणाभिध्यानाद्दुर्धरः कामः स्यात् ॥ १० ॥

ततो विषयान् भोक्तुं कर्माणि करोति ॥ ११ ॥

एवं चेत् कस्यापि दुःखनिवृत्तिः स्यादित्याशङ्क्याऽऽह । यद्यपि रजस्तमोभ्यां विक्षिप्तधीर्मूढधीश्च तथापि विद्वान्विवेकी पुनर्मनो निरुन्धन्न सज्जते ॥ १२ ॥

विषयदोषदृष्ट्याऽपि मनोनिरोधाशक्तौ सुखं तन्निरोधोपायमाह । अप्रमत्त इति । अनिर्विण्णोऽनलसः यथाकालं त्रिषवणम् मयि परमानन्दरूपेऽर्पयन्समादध्यात् ॥ १३ ॥

विषयैः संग्रथितस्य मनसस्तद्वियोगेनेश्वरनिष्ठत्वमसम्भावितं मन्यमानं प्रति तन्निरूपणार्थमितिहासमुपक्षिपति । एतावानिति । यथा यथावन्मय्यावेश्यते एतावानित्यर्थः ॥ १४ ॥

मच्छिष्यैरित्युक्ते तेषामतिज्यायसामनेन रूपेण निरूपणाद्विस्मयवान्पृच्छति । यदेति । तं कालं तदेतद्रूपं च वेदितुमिच्छामि तत्कथयेति ॥ १५ ॥

मानसाः पुत्राः सूक्ष्मां दुर्ज्ञेयाम् ऐकान्तिकीं गतिं परां काष्ठाम् ॥ १६ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

मिथ्याभिनिवेशो नाम ज्ञात्वापि स्वीकृतस्य पुनस्त्यागाऽसहिष्णुत्वं तेनैव भुङ्क्ते इति सयुक्तिकमाहेत्यर्थः । युक्तिश्चेयं विषयाणां दुःखरूपत्वज्ञानेऽपि मनुष्या देहादौ यथावन्मिथ्याज्ञानवन्तः यथावद्विवेकशून्यत्वात् पश्वादिवदित्याद्याकारा ज्ञेया विवेकशून्यस्येति पूर्वकर्मविशेषणेति शेषः ॥ ९ ॥

एवमिदमित्यादिविशेषचिन्तनस्याभिनयः ततश्च सङ्कल्पविकल्पविशेषानन्तरं गुणाध्यानाच्छ्रेष्ठत्वारोपात् दुर्धरोऽसह्यः ॥ १० ॥

दुःखोदर्काणि दुःखोत्तरफलानीति सम्पश्यन् जानन्नपि ॥ ११ ॥

एवं चेदिति चेदादि दुःखोदर्कत्वज्ञानेऽपि कर्मकरणं तर्हि विरक्त्यभावाच्च कस्यापि दुःखनिवृत्तिः स्यादित्यर्थः ॥ १२ ॥

सुखं मयि मनोऽर्पणानायासं यथा स्यात्तथा तन्निरोधोपायं मनोनिरोधसाधनं स्वस्मिन् परमसुन्दरे तत्स्मरणम् ॥ १३ ॥

तद्वियोगेन विषयविच्छेदेन असम्भावितमघटितं तन्निरूपणाय ईश्वरनिष्ठत्वोपपादनाय उपक्षिपति आरभते अद्धा साक्षात् इति वैराजकारणा व्याख्या ॥ १४ ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

अतिदर्वायसामतिवृद्धानामनेन कृष्णाख्येन त्वं मिथ्यनरा-कृतिपरब्रह्मरूपः सर्वावतारी येन रूपेणावतारेण तत् कथादि ॥ १५—१६ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

प्रमत्तस्य आत्मन्यनभिसंहितस्य उष्णजलमितिवद्देहात्मनोः संसर्गात् स्थूलोऽहं कृशोऽहमित्यहङ्कारो भवति तेन रजोमयं रजो युक्तम् आहङ्कारिकं मनउत्सर्पति व्याप्रियते ममकारं जनयति रजःशब्दः रजोयुक्तपरः रजायुक्तस्येत्यनन्तरोक्तेः ॥ ९ ॥

मनसः प्रवृत्तिं विवृणोति रजोयुक्तस्येति । सङ्कल्पः मनुष्योऽहं पशुरहमित्यात्माभिमानानुगुणेषु ओदनवसना-दिषु भेदेषु भोग्यताबुद्धिः सङ्कल्पः स्रक्चन्दनस्त्र्या-दिगताकारवैविध्यप्रतिपत्तियुक्तः ततः कामः भोग्यता-बुद्धिलक्षणात्सङ्कल्पात् कामः भोगेष्विच्छा स च कामः भोग्य-गतसौन्दर्यमाधुर्यादिगुणध्यानात् सुदुःसहः स्यात् अलब्ध्वा स्थातुमशक्तः पुरुषः स्यादित्यर्थः ॥ १० ॥ ११ ॥

सम्पश्यन्नपि रजस्तमोभ्यामिति रजः कर्महेतुः तमस्तदनु-बन्धिदोषदर्शननिवारकं कामविजयोपायमाह । अतन्द्रित इति आत्मानुगुणेषु वस्तुषु भोग्यताबुद्धिरूपात्सङ्कल्पाद्धि कामो भोग्यताबुद्धिश्च गुणध्यानादिना सा तु दोषदर्शनान्निवर्तते मधुरतरे फले विषमिति श्रुत्वा ज्ञानाद्भोग्यताबुद्धिर्निवर्तते इत्यर्थः ॥ १२ ॥

दोषदृष्ट्या विषयान्तरेभ्यो निवृत्तस्य मनसः अविक्षेपोपाययोग-माह अनिर्विण्णः अन्तरायैरविषण्णः जितश्वास इति मनसो मय्य-र्पणमेव योगशरीरं प्राणायामादयो मनसो मदर्पणस्योपकारका इत्यभिप्रायः ॥ १३—१९ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सकृदित्थं विषयाणामापातदर्शनवतोऽपि देहात्माभिमा-नत्यजनमाशित्रुकं मन एव प्रसह्य भोजयतीत्युत्तरमाह श्रीभग-वान् । अहमिति । यथा प्रमत्तस्यात्मन्यनवहितस्य हृदयमित्य-न्यथा बुद्धिर्जायते उष्णं जलमिति यद्देहात्मनोः संसर्गात्स्थू-लोऽहं कृशोऽहमित्यहङ्कारो भवतीत्यर्थः । ततोऽन्यथाबुद्धेर्हेतोः रजो वैकारिकशब्दो तत्कार्ययोर्वर्तते वैकारिकं सात्त्विकाहङ्कारकार्यं मनः मनो वैकारिकाज्जज्ञ इति श्रुतिवेऽभिधानात् घोरं महाघनं महा-पाप्मानं रजः रजोगुणकार्यं कामं तद्विरोधे सति क्रोधं च्योत्सर्पति अनुवर्तते कामक्रोधाविष्टं भवतीत्यर्थः कामक्रोधयोः रजोगुणप्रभवत्वं भगवतैव गीतम्—

काम एष क्रोध एष रजोगुणसमुद्भवः ।
महाशनो महापाप्मा विद्ध्येनमिह वैरिणमिति ॥ ९ ॥

उत्सर्पणं न साक्षात्किन्तु सङ्कल्पद्वारेत्याह । रजोयुक्त-स्येति । मनसो रजोगुणयोगस्तु राजसाहङ्कारसहकृतवैकारिका-हङ्कारिकाहङ्कारकार्यत्वादवगन्तव्यः अतो विकल्पसहितः सङ्कल्पो भवति । रजोगुणस्य विक्षेपकत्वात्तद्योगाच्च मनसः सङ्कल्पविकल्परूपव्यापारो भवत इत्यर्थः । रजः कर्महेतुस्तमस्तु तदनुबन्धिदोषदर्शनवारकं तत्र सङ्कल्पो नाम मनुष्योऽहमित्या-त्माभिमानानुगुणेष्वोदनक्षीरादिषु इत्येषु भोग्यताबुद्धिः विकल्पस्तु स्रक्चन्दनस्त्र्यादिगताकारवैविध्यप्रतिपत्तिरूपः ततश्च कामः भोग्यताबुद्धिलक्षणात्सङ्कल्पात्कामः भोगेष्विच्छा स च कामः दुर्मे-तदेहात्माभिमानिनो जीवस्य गुणध्यानाद्भोग्यगतसौन्दर्यमाधुर्या-दिगुणध्यानात् दुःसहः स्यात् अलब्ध्वावस्थातुमशक्तः स्यादि-त्यर्थः ॥ १० ॥

ततः किमत आह । करोतीति । कामस्य दुःसहस्य वशङ्गतः प्राप्तः संपश्यन् जानन्नपि कर्माणि भोगफल-फलत्वाभिमानविषयाणि वस्तुतः दुःखोत्तरफलानि करोति कुतः यतोऽयमविजितेन्द्रियः रजोवेगेन कामवेगेन मोहितश्च एवं जानन्तोऽपि कथं भुञ्जते इत्यस्योत्तरमुक्तम् ॥ ११ ॥

एवं चेद्विषयाणामापातदर्शनानुचिन्तनेऽपि तान्द्वरागपूर्वकमुक्तयुपा-यानुष्ठानाधिकारो न कस्यापि स्यादित्यत आह । रजस्तमोभ्यामिति । यदपि यद्यपि रजस्तमोभ्यां विक्षिप्तधीर्मूढधीश्च तथापि विद्वान् विवेकी पुनः मनोरुन्धन् सङ्कल्पविकल्पप्रवणं कुर्वन् विषयेषु सदा दोषदृष्टिः तेषामापातरमणीयत्वदर्शनस्वभावः अतन्द्रितः तद्विषयप्रमादरहितः न सज्जते विषयानुभव इति शेषः एवंविधेनापि एवमधिक्रिया सम्पाद्येति भावः ॥ १२ ॥

आत्मानुगुणेषु वस्तुषु भोग्यताबुद्धिरूपात्सङ्कल्पाद्धि कामः भोग्यताबुद्धिश्च गुणध्यानादिना सा तु दोषदर्शनान्निवर्तते मधुरेऽपि पयसि विषमिश्रत्वज्ञानाद्भोग्यताबुद्धिर्निवृत्तिर्दृष्टा दोषदृष्ट्या विषयान्तरेभ्यो निवृत्तस्य मनसो विषयं दर्शयन्नधिकारिणं विशिंषन् योगं विदधाति । अप्रमत्त इति । दोषदृष्ट्येत्थं विषय-भोगानासक्तः अप्रमत्तः अतन्द्रितश्च यथाकालं तत्तत्कालमेव-न्दिनसायंकालानतिक्रमेण जितासनः चिरमुपविष्टस्यापि श्रमराहित्यापादनात्मकाभ्यासविशेषरूप आसनजयः श्वास-जयो नाम पूरणरेचनकुम्भनाद्युपायैः प्राणवशीकारः अनिर्विण्णः अनलसः शनैःशनैः मयि शुभाश्रयभूतेऽर्पयन् आत्मानियुञ्जीत युज समाधौ ध्यानपूर्वकसमाधाननिष्ठो भवेदित्यर्थः । अविषण्ण इति पाठान्तरेअन्तरायैरविषण्णचित्त इत्यर्थः । तत्र मनसो मय्यर्पणेन समाधियोगस्वरूपं प्राणायामादयस्तु तस्योपकारकास्ते यमनियमा-दीनामपीतराङ्गानामुपलक्षकाः ॥ १३ ॥

एवं योगस्य स्वरूपमुक्तम् अथ निष्कृष्य योगस्वरूपमेव वक्ष्यन्नुक्तप्रश्नोत्तरानुसन्धानादिहंसः सनकादिसम्वादं वक्तुं तत्पूर्व-वृत्तान्तं उपाख्यानमुपक्षिपति । एतावानिति । मच्छिष्यैः हंसरूपेण वर्तमानस्य मे शिष्यतां प्राप्तैः सनकादिभिरेतावानेव योग आदिष्ट उपदिष्टः मदुपदेशलब्धो योगो ऽन्येभ्योऽप्युपदिष्ट इत्यर्थः । कियान्सर्वतः सर्वेभ्यो विषयेभ्यो मन आकृष्य मय्यद्धा मय्येव अद्धेत्यवधार-णार्थको निपातः यथा यथावाभिवेश्यते इत्येतावानित्यर्थः ॥ १४ ॥

तत्र लब्धावसरः पृच्छति । यदा त्वमिति । येन रूपेण किंप्रकृत-श्रीकृष्णरूपेण किंवा रूपान्तरेण यथा यादृशं योगमावि-ष्टवान् उपदिष्टवानेतद्रूपं तद्योगोपदेष्टृरूपं योगं चेत्यपि बोध्यं वेदितुमिच्छामि ॥ १५ ॥

विवक्षितं सम्वादं वक्तुं प्रस्तौति । पुत्रा इति । पितरं हिरण्यगर्भं प्रति सूक्ष्मां दुर्ज्ञेयामेकान्तिकीमत्याज्यां योगस्य गतिं प्रकारं पप्रच्छुः ॥ १६ ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अकर्तर्यात्मनि अहङ्कर्तेति कर्तृत्वाभिमानमेति तन्मूलरागोत्सिक्तमनः कारकः कामः कारणमित्युत्तरमाह । अहमितीति । अयमत्रार्थः यदा प्रमत्तस्य हृद्यहङ्कर्तेत्यन्यथा बुद्धिरुत्सर्पति । उत्कर्षति तथा घोरं रज उत्सर्पति उदेति ततो रागोदयादुच्छ्रितं मनो वैकारिकं विविधविकाराकरो भवति ॥ ९ ॥

रजसा विकारस्य मनसो विविधकल्पनया पुनः सङ्कल्प इदमित्थं करिष्यामि इदमेवं करिष्ये इत्यादिलक्षण उदेति एवंविविधसङ्कल्पेन दुर्मतेरशोभनबुद्धेः गुणानां शब्दादीनां ध्यानाद्दुःसहः कामः स्यादित्यन्वयः ॥ १० ॥

कामस्य दुःसहत्वमुपपादयति । करोतीति । रजोवेगविमोहितत्वेन कामवशङ्गतः तस्मादविजितेन्द्रियस्तस्मात्कर्माणि दुःखोदर्काणि सम्पश्यन्नपि पुनः कर्माणि करोतीत्यन्वयः यद्वा काममयत्वेन अविजितेन्द्रियो भवति तेन चक्षुरादीन्द्रियजयाभावेन वनितादिरूपं पश्यन् रजोवेगेन वीर्योद्रेकेण विमोहितः विवेकज्ञानशून्यत्वेन विवर्द्धिताङ्गो दुःखफलानि कर्माणि करोति कामसौख्याय विषयान् भुङ्क्ते इति ॥ ११ ॥

ननु विषयाणां समुद्रतरङ्गवदावर्तमानत्वाच्च संसारादुत्थानं स्यात् पुरुषायुषसहस्रेणापि तस्मान्मोक्षशास्त्रविधानं व्यर्थमित्याशङ्क्य अथाप्येवं न तत्पक्षस्येत्याह । रजस्तमोभ्यामिति । विद्वच्छब्दाभिधेयं दोषदृष्टिरिति । पुनःशब्दो वीप्सार्थो दोषदृष्टिरित्यनेन सम्बध्यते विद्वान् यद्यपि यद्यपि रजस्तमोभ्यां विक्षिप्तधीः तथाप्यतन्द्रितो भूत्वा हरौ मनो युञ्जन् पुनर्दोषदृष्टित्वाद्विषयेषु न सज्जते शरीरयात्रार्थं विषयान् सेवमानोऽपि तैः प्रतिबद्धो न भवतीति ॥ १२ ॥

एतदेव विवृणोति । अप्रमत्त इति । हिशब्दः सर्वशास्त्रप्रसिद्धत्वद्योतकः मनो विषयेभ्य आकृष्य शनैर्मय्यर्पयन् स्थापयन् युञ्जीत ध्यायेत् योगः संहननोपायध्यानसङ्गतिमुक्तिरिति यावत् मामिति शेषः अनिर्विण्णः अनालस्यः * अलमितिबुद्धिवैराग्यशून्यो वा ॥ १३ ॥

सनकादियोगीन्द्रयोगसम्प्रदायमावाल्नाय योगः साधीयान् आह । एतावानिति । यथा मनो मय्येव व्यावेश्यते तादृशो योगः एतावान्नान्य इति सनकादिभिरादिष्ट इत्यन्वयः अत्यम् अन्य प्रत्यञ्चस्त्यपारिति च ॥ १४ ॥

लोकोपकाराय मेरुशृङ्गोपरिस्थितौ यद्योपदेशपरसनकाद्याद्विष्टयोगोपदेशनमित्यश्रद्धेयमिति भावेन पृच्छति । यदेति ॥ १५ ॥

स्वस्याधनाववोधकत्वेनादिमूलकत्वेन वेद एव प्रमाणमिति श्रद्धेयमित्याशयेन परिहर्तुमितिहासमाह । पुत्रा इति । योगस्य ज्ञानस्य गतिम् ॥ १६ ॥

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

प्रमत्तस्य पूर्वकर्मविशेषेण लुप्तविवेकस्य देहादावहमित्यन्यथा बुद्धिर्हृदि यदोत्सर्पति अतिशेते तदा रजोऽप्युत्सर्पति ततो हेतोर्वैकारिकं सात्त्विकमपि मनः उत्सर्पति दुर्वशं भवति ॥ ९ ॥

तदेवाह । रजोयुक्तस्येत्यर्धकेन ॥ १० ॥

दुःखोदर्काणीति जानन्नपि ॥ ११—१३ ॥

अद्धा साक्षात् ॥ १४ ॥

त्वं नित्यनराकृतिपरब्रह्मरूपः सर्वावतारी यदा येन रूपेणावतारेण तं समयं तद्रूपं च वेदितुमिच्छामि ॥ १५—१७ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ये दुर्विषयान् भुञ्जते ते विद्वांस एव नोच्यन्ते किंतु विद्वन्मानिन एव ते विषयान् निन्दन्तोऽपि यथा भुञ्जते तत्र प्रकारं प्रपञ्चयत्याह । अहमिति त्रिभिः । प्रथमं देहादावहमिति हृदि मिथ्या बुद्धिरुत्कर्षेण सर्पति ततः प्रमत्तस्य तस्य घोरं रजः कर्तृ वैकारिकं सात्त्विकमपि मनः प्रति उत्सर्पति मनो व्याप्नोतीत्यर्थः ॥ ९ ॥

प्रथममिदं भोग्यमिति सविकल्पः ततश्च इदमेवं भोग्यमिदमेवं भोग्यमिति सविशेषः संकल्पः स्यात् ततश्च अहो रूपमहो भाव इति दुर्निरोधः कामः स्यात् ॥ १० ॥

ततस्तद्विषयप्राप्त्यर्थं कर्माणि दृष्टादृष्टफलानि तानि च दुःखोदर्काणि पश्यन् जानन्नपि ॥ ११ ॥

विद्वांस्तु यद्यपि रजस्तमोभ्यां विक्षिप्तधीः परतन्त्रधीश्च कथंचित् स्यात्तदपि ॥ १२ ॥

अतन्द्रित इत्यस्यार्थमाचष्टे । अप्रमत्त इति । कुत्र मनो युञ्जन्नित्यत आह । मयि अनुयुञ्जीतेति अनिर्विण्ण इति यदपि मनोनिरोधो यदि न स्यात् तदपि तत्प्रयत्नात् विरमेदिति भावः ॥ १३ ॥ १४ ॥ १५ ॥

ऐकान्तिकीं गतिं परां काष्ठाम् ॥ १६ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

विपर्ययज्ञानादित्युत्तरमाह । अहमिति त्रिभिः । प्रमत्तस्य परमार्थविषयेऽनवहितस्यान्यथाज्ञानवत इत्यर्थः । देहेऽहमित्यन्यथा बुद्धिर्यथा यथावत् हृदि उत्सर्पति आरोहतीत्यर्थः । ततोऽहमुखे वैतोर्वैकारिकं सत्त्वकार्यमपि मनः घोरं रजो रजोगुणम् उत्सर्पति व्याप्नोति मनोरथे प्रतिहते मातृपितृगुर्वादिहननमपि स करोतीत्यतो घोरमित्युक्तम् ॥ ९ ॥

रजोयुक्तस्येति । ततो रजोगुणयुक्तस्य मनसः सविकल्पकः इदं रूपादिमद्वस्तु मे स्यात्कथं वा स्यादित्यादिरूपः सङ्कल्पो भवेत् ततः सङ्कल्पानन्तरं तस्य दुर्मतेरिदमेवातिभोग्यं भाग्येनैव मे भवेदिति गुणध्यानात् एतत्प्राप्त्यैव मम जीवनमित्येवं रूपः दुःसहः कामः स्यात् ॥ १० ॥

करोतीति । यतोऽविजितेन्द्रियस्तत्कामवशगः विषयान्भोक्तुं दुःखोदर्काणि विषयिणां दुःखमेवोत्तरोत्तरं येभ्यस्तथा भूतानि कर्माणि पश्यन्नपि करोति तत्कुतः यतो रजोवेगविमोहितः ॥ ११ ॥

*हारिस्वेवणोति शेषपूरणम् ।

सनकादय ऊचुः॥

गुणेष्वाविशते चेतो गुणाश्चेतसि च प्रभो!।
कथमन्योऽन्यसंत्यागो[1] मुमुक्षोरतितितीर्षोः॥ १७॥

श्रीभगवानुवाच॥

एवं पृष्टो महादेवः स्वयंभूर्भूतभावनः।
ध्यायमानः प्रश्नबीजं नाभ्यपद्यत कर्मधीः॥ १८॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

ननु स्यादेतत्प्रमत्तस्य दुर्मतेर्विपर्ययज्ञानाद्दुःखावाप्तिरेवेति विदुषोऽपि रजस्तमोयोगविक्षेपप्रमादादिकं चेत्तर्हि का गतिरित्यत आह रजस्तम इति। विद्वान् गुणदोषविवेकज्ञः केनचिदनादिकर्मणा रजस्तमोभ्यां यद्यपि यद्यपि विक्षिप्तधीर्भवेत्तथापि पुनर्विविच्य संसारे दोषदृष्टिः अतन्द्रितः अनलसः सन्मनो ध्येयवस्तुनि युञ्जन् सन् विषयेषु न सज्जते॥ १२॥

ननु दोषदृष्टौ सत्यामपि मनोनिरोधो दुःशक इति चेत्तत्राह। अप्रमत्त इति। त्वया सत्यमुक्तं तथापि, अप्रमत्तः कर्तव्यविषये सावधानः अनिर्विण्णः कतिवारं नियुक्तमपि मनो वशं नापद्यतेऽतः परं न नियोक्ष्यामीत्येवं निर्वेदमकुर्वन् अनुयुञ्जीत पुनः पुनर्नियुञ्ज्याद् यथा काले नियमेन कालमनतिक्रमयेन यथा स्यात्तथा शनैर्मनः शुभाश्रये मय्यर्पयेत् जितासनो जितश्वासश्च भवेत्॥ १३॥

स्यादेतद्यथा कथं विदुक्तप्रकारेण त्वयि मनसि नियुक्ते तदनन्तरं किङ्कर्तव्यमित्यपेक्षायामियमेव योगकाष्ठेति द्रढयितुमेवं भूतयोगकर्तुरुपदेष्टारं प्रमाणयितुं स्वतोऽधिकस्याभावादेवं विधयोगसम्प्रदायं च प्रवर्तयितुं सर्वयोगाधीशान् स्वशिष्यानेव प्रमाणयन्नेवोदाजहारैतावानिति सर्वविषयेभ्यो मन आकृष्य यथावत् परमानन्दरूपे सर्वपुरुषार्थदातरि मयि अद्धा साक्षादावेश्यते मच्छिष्यैः सनकादिभिरेतावान् योग आदिष्टः नह्यतोऽधिक इत्यर्थः अस्त्यनेन भगवद्ध्यानविश्रान्तिभूतमहत्त्वरूपाप्राकृत्याकृतिः सूचिता मुमुक्षुणा न ते ध्येया इत्यर्थः। आवेश्यते इत्यस्य यथा विषयिणां रूपादिविषयेष्वत्यन्तावेशो भवति तद्वदित्यर्थः। मच्छिष्यैरित्यनेन तद्वचने मदनुवर्तिनां सर्वेषां प्रामाण्यतरत्वं तदनङ्गीकारिणां दुर्योधनादिभूतत्वमिति दर्शितम्॥ १४॥

सर्वविदुवादीनामपि पूर्वेषां सनकादीनामनेन रूपेणोपदेशमसम्भावितं मन्वानः पृच्छत्युद्धवः। यदेति। हे केशव! यदा यस्मिन्काले येन रूपेण त्वं सनकादिभ्यो योगमुपादिष्टवानेतदहं वेदितुमिच्छामि कृपया वद॥ १५॥

तदर्थं प्रार्थितो भगवांस्तत्कालं तद्रूपं च ज्ञापयितुमितिहासमवतारयति। श्रीभगवानुवाच पुत्रा इति। हिरण्यगर्भस्य मानसाः पुत्राः सनकादयः योगस्य सूक्ष्मां दुरूहाम् एकान्तिकीमेकस्मिन् भगवत्येवान्तोऽवसानं यस्यास्तां गतिं गच्छत्यनयेति गतिः साधनमित्यर्थः पितरं पप्रच्छुः॥ १६॥

भाषा टीका।

श्रीभगवान् उवाच।

प्रमादी पुरुष के मैं देहादिक हूं ऐसी बुद्धि होती है एस हृदय में होते ही सात्विक बुद्धिवाले का मन भी घोर रजोगुण युक्त हो जाता है॥ ९॥

मनमें रजोगुण के होते ही विषयों का संकल्प विकल्प होता है फिर गुणों के ध्यान होने से काम होता है दुर्मति पुरुष को अति दुःसह होने से वह काम छूटता नहीं है॥ १०॥

फिर अजितेन्द्रिय होने से काम के वश होकर रजोगुण के वेग से मोहित होने से दुःख के फल दायक उन कर्मों को देखता हुआ भी फिर करता ही रहता है॥ ११॥

जो विवेकी है सो तो रजोगुण तमोगुण से बुद्धि के विक्षेप होने पर भी उनमें दोष की दृष्टि करने से सावधान होकर मनको रोकता है तब उन विषयों में बंधता नहीं है॥ १२॥

इस कारण से सावधान होकर आलस को छोड़कर प्रात आदि काल में दृढ आसन लगाकर प्राणायाम से श्वास को रोक कर मनको धीरे मेरे मे अर्पण करता हुआ रोकने का अभ्यास करे॥ १३॥

मेरे शिष्य सनकादि कों ने भी इतना ही योग का उपदेश किया है जोकि सब तरफ से मनको खैंचकर मेरे मे अर्पण करना हो जावे॥ १४॥

उद्धव उवाच हे केशव! आपने जिस समय मे जिस रूप से सनकादिको को योगका उपदेश किया है उस रूप को मैं जानने चाहता हुं॥ १५॥

श्रीभगवान् उवाच ब्रह्मा के मानस पुत्र जो सनकादिक हैं उनने अपने पिता ब्रह्माजी से योगकी एकांत सूक्ष्म गतिको पूछा॥ १६॥

श्रीधरस्वामिकृतभावार्थदीपिका।

तदेवाऽऽह। गुणेष्विति। विषयेषु स्वभावतो रागादिवशाच्चेतः प्रविशति ते चानुभूता विषया वासनारूपेण चेतसि प्रविशन्ति। अतितितीर्षोर्विषयानतिक्रमितुमिच्छोः॥ १७॥

एवमिति। महान् देवोऽपि स्वयम्भूरपि भूतानां स्रष्टापि ध्याय-

(१) मुमुक्षोः स्वेतितीर्षतः इति वि॰ पाठः

स मामचिन्तयद्देवः [1] प्रश्नपारतितीर्षया ।
तस्याहं हंसरूपेण सकाशमगमं तदा ॥ १९ ॥
दृष्ट्वा मां त उपव्रज्य कृत्वा पादाभिवन्दनम् ।
ब्रह्माणमग्रतः कृत्वा पप्रच्छुः को भवानिति ॥ २० ॥
इत्यहं मुनिभिः पृष्टस्तत्त्वजिज्ञासुभिस्तदा ।
यदवोचमहं तेभ्यस्तदुद्धव ! निबोध मे ॥ ॥ २१ ॥
वस्तुनो यद्यनानात्वमात्मनः प्रश्न ईदृशः ।
कथं घटेत वो विप्रा ! [2] वक्तुर्वा मे क आश्रयः ॥ २२ ॥
पञ्चात्मकेषु भूतेषु समानेषु च वस्तुतः ।
को भवानिति वः प्रश्नो वाचारम्भो [3] ह्यनर्थकः ॥ २३ ॥
मनसा वचसा दृष्ट्या गृह्यतेऽन्यैरपीन्द्रियैः ।
अहमेव न मत्तोऽन्यदिति बुध्यध्वमञ्जसा ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

मानो विचारयन्नपि प्रश्नस्य बीजं यदज्ञानादयं प्रश्नस्तन्नाविन्दत यतः कर्मविक्षिप्तधीः ॥ १८ ॥

प्रश्नस्य पारमुत्तरमभिप्रायो वा तस्य तितीर्षया जिज्ञासया हंसरूपेणेति यथा हंसो नीरं क्षीरं च पृथक्कर्तुं शक्त एवमहं गुणांश्चेतश्चेति द्योतयितुं हंसरूपेण गतोऽस्मीति ॥ १९—२० ॥

इत्यहं मुनिभिः पृष्ट इति पृथक् वाक्यम् यदवोचमिति च पृथक् अतोऽस्मच्छब्दावृत्तिरदोषः तेभ्यो यदवोचं तन्मे वचनं निबोध ॥ २१ ॥

देहादिविविक्तात्मज्ञाने सति तन्निष्ठस्य रागाद्यसंभवात्स्वयमेव विषयचेतसोर्विश्लेषो भवतीति वक्तुं प्रश्नखण्डनमिषेणैव तावदात्मानात्मविवेकमाह । वस्तुन इति त्रिभिः । किमात्मनोऽयं प्रश्नस्तदुपाधेर्भूतसंघस्य वा यद्यात्मनस्तर्हि तस्य वस्तुनः परमार्थरूपस्यानानात्वे सति हे विप्रा ! वो युष्माभिः कृतः प्रश्न ईदृशो वस्तुनिर्धारणरूपः कथं घटते वक्तुरुत्तरदातुर्वा मे मम क आश्रयः अविशेषे आत्मनि कं जातिगुणादिविशेषमाश्रित्योत्तरं वक्ष्यामीत्यर्थः ॥ २२ ॥

भूतसंघविषयत्वेऽप्ययं वः प्रश्नो वाचारम्भो वाङ्मात्रेणारब्धः यतोऽनर्थकः कुतः भूतेषु देवमनुष्यादिदेहेषु पञ्चभूतात्मकेष्वतः समानेष्वभिन्नेषु पुनश्च वस्तुतः परमकारणात्मनाभिन्नेषु 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमिति श्रुतेः ॥ २३ ॥

तत्र पञ्चात्मकत्वं प्रत्यक्षादिसिद्धमेवेति परमकारणाभेदमेवोपपादयति । मनसेति । मनआदिभिर्गृह्यते तदहमेवेत्यर्थः अञ्जसा तत्त्वविचारेण एतेनैव सर्वात्मकोऽहमित्यञ्जसोत्तरमुक्तं भवति ॥ २४ ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

तदेवैकान्तिकगतेः प्रश्नकरणमेव । स्वभावतः स्वरसत एव रागादिवृत्त्याश्लिष्ट अनुकूलेषु रागः प्रीतिः आश्लिष्टा प्रतिकूलेषु द्वेषस्तद्वशात् वासनारूपेण संस्काररूपेण ॥ १७ ॥

यदज्ञानात् यस्यात्मस्वरूपस्याज्ञानात् अयमन्योऽन्यत्यागरूपः प्रश्नः तत् आत्मरूपम् ॥ १८ ॥

सकाशं समीपम् ॥ १९ ॥

कृतपादाभिवन्दनत्वान्तःज्ञानजोऽयं को भवानितिप्रश्नः किन्तु प्रश्नेनैव हंसाभिप्रायज्ञानेन पूर्वप्रश्नोत्तरणार्थं अत एवाग्रे तत्त्वजिज्ञासुभिरित्युक्तम् ॥ २० ॥

अतः पृथग् वाक्यत्वात् ॥ २१ ॥

तदुपाधेः आत्मोपाधेः भूतसंघस्य देहादेः यद्यात्मनः आत्मसम्बन्धी प्रश्नः अनानात्वे एकत्वे सति ॥ २२ ॥

प्रश्नस्य भूतसङ्घातविषयत्वे देहविषयत्वे अनर्थकः विचारे सति अभिधेयशून्यः अतः पञ्चभूतात्मकत्वात् कारणेनाभिन्नत्वे श्रुतिः प्रमाणं वाचारम्भणमिति व्याख्यातं च भगवद्भाष्यकृद्भिः यतो वाचारम्भणं विकारो नामधेयं वाचैव केवलमस्तीत्यारभ्यते विकारो घटः शराव उदञ्चनञ्चेति नतु वस्तुवृत्तेन विकारो नाम कश्चिदस्ति नामधेयमात्रमेतदनृतं मृत्तिकेत्येव सत्यमिति एष ब्रह्मणो दृष्टान्तः आम्नातः तत्र श्रुताद्वाचारम्भणशब्दात् दार्ष्टान्तिकेऽपि ब्रह्मव्यतिरेकेण कार्यजातस्याभाव इति गम्यत इति ॥ २३ ॥

तत्र पञ्चात्मकपरमकारणाभेदयोगेऽपि उपपादयति युक्त्या साधयति युक्तिश्चानायोत्तिदर्शनात् मनआदिग्राह्यस्याधिष्ठानाभिन्नमन्तरा प्रतीत्यनुपपत्त्या कल्पितस्याधिष्ठानाभेदः

(१) प्रश्नपारविनिश्चयम् (२) वक्तुं वा (३) निरर्थकः इति वि० पाठः ।

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

कल्प्यते इति । चस्वरूद्धयोगस्यपरत्वादित्यर्थं इत्युक्तम् एतेनैव परमकारणाभेदोपपादनेनैव उत्तरमप्युक्तमित्यपरम्वयः ॥ २४ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

गुणाश्चेतांसि आविशन्ति शब्दादिगुणाः स्मर्यमाणाः चेतसो नापगच्छन्तीत्यर्थः । अन्योऽन्यसंत्यागः चेतसा गुणत्यागः गुणैश्चेतस्त्यागः ॥ १७ ॥

प्रश्नबीजं प्रश्नविषयं काव्यस्य बीजमितिवत् ॥ १८—२१ ॥

वस्तुनो यदीति । प्रश्नस्य साक्षादुत्तरमुत्तरत्र वक्ष्यन् प्रथमं प्रश्नं खण्डयन्निव समस्तचिदचिद्वस्तुनि व्याप्तिं दर्शयति तत्र सर्वान्तरात्मानमीश्वरं जानतां ज्ञानिनां केवलमचिन्मात्रदेहमेव पश्यतामज्ञानिनां च नैवं प्रश्नो घटत इत्यभिप्रायः प्रथममीश्वरव्याप्यत्वज्ञानवतां प्रश्नप्रतिवचनानुपपत्तिमाह । वस्तुनो यदीति । कस्यचिदपि वस्तुनः नानात्वं पृथक्त्वं मया विनाभावोऽस्ति चेत् एवं प्रश्नः स्यात् प्रष्टारो भवन्तोऽप्यस्मदविनाभूता मम सर्वजीवशरीरकत्वात् तदा युष्मच्छरीरकोऽहमेव प्रष्टा स्यां शरीरमात्रस्य वक्तृत्वादर्शनात् ततश्च प्रतिवक्तृतयाभिमतोऽहमेव प्रष्टेत्यत्यन्तमनुपपन्नं मम वक्तुर्वा क आश्रयः को विषयः वक्तव्यस्य सर्वस्य मदात्मकत्वादहमेव वक्तव्यः स्यामतः प्रष्टा प्रतिवक्ता वक्तव्यश्चैक एवेति प्रश्नप्रतिवचने अनुपपन्ने इत्यर्थः ॥ २२ ॥

एवं प्रष्टॄणां युष्माकमप्यहमन्तरात्मेत्युक्तं भवति अचेतनं शरीरमेव जानतामपि एवं प्रश्नोऽनुपपन्न इत्याह । पञ्चात्मकेष्विति । अहं तावत्स्वरूपेण अव्ययः अतो न जातिः प्रष्टव्या अस्मज्जातीयानां भूतानां सर्वेषां पाञ्चभौतिकत्वं समानमिति न कारणमपि प्रष्टव्यं तस्मादस्मत्प्रतिवचनरूपवाग्व्यवहारारम्भकं वचः प्रश्नप्रतिवचननिरपेक्षत्वादनर्थकमित्यर्थः ॥ २३ ॥

एवं प्रश्नखण्डनव्याजेनोपदिष्टं समस्तचिदचिद्वस्तुनः स्वान्तरात्मत्वं स्फुटमेवाह । मनसेति । मनसा योगपरिशुद्धेन देहादिव्यावृत्ततया आत्मात्मस्वरूपं चक्षुरादिभिर्ग्राह्यमचेतनं तत्सर्वं मच्छरीरतया मदात्मकं ननु स्वाभिष्टमतः सर्वान्तरात्माहमेव सर्वशब्दवाच्य इति बुध्यध्वमित्यर्थः ॥ २४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

प्रश्नमेवाह । गुणेष्विति । गुणेषु शब्दादिविषयेषु चेतः आविशते तेषु भोगस्यानुवृत्त्या आविष्टं भवतीत्यर्थः । तथा गुणाः स्मर्यमाणाश्चेतश्चाविशन्ति ततो नापगच्छन्ति तद्विषयतां न त्यजन्ति इत्यर्थः । अनेनाद्यमित्यन्यथा , मुक्तिरित्यादेर्मोहित इत्यन्तयोरपत्ययोरर्थयोः निष्कृष्य प्रदर्शितः अन्योऽन्यसन्त्यागः चेतसा गुणत्यागः गुणैश्चेतसस्त्यागः मुमुक्षोः प्रकृतिसम्बन्धस्यानर्थहेतुत्वाध्यवसायेन तस्मान्मोक्तुमिच्छोरत एतत्त्यक्त्वा तितीर्षोर्विषयानतिक्रमितुमिच्छोः कथं स्यादित्यर्थः । अनेन रजस्तमोरूपात्मिकायाद्विमोक्षोपायभूतस्य योगस्य प्रश्न उक्तः ॥ १७ ॥

सनकादीनां प्रश्नस्य ब्रह्मणाप्यविज्ञातप्रतिवचनतामाह । एवमिति । भूतभावनः भूतानि व्यष्टिभूतानि भावयत्युत्पादयतीति तथा अनेन कृत्स्नब्रह्माण्डान्तर्गतभूतस्रष्टृत्वयुक्तज्ञानशक्त्यादिसम्पन्नोऽपीत्युक्तं महादेव इत्यनेन सृज्यरुद्रादिभ्योऽप्यतिशयितज्ञानादिसम्पत्त्या दीप्यमानत्वं विवक्षितं प्रश्नबीजं प्रश्नो बीजं कारणं यस्य तत्प्रतिवचनं तस्यैव प्रश्ने प्रतिवचनोदयात्तस्य तत्कारणत्वं ध्यायमानः विचारयन्नपि नाभ्यपद्यत नाविन्दत यतः सोऽपि कर्मधीः कर्मणा सङ्कुचितज्ञानः अत एवं इत्यर्थः ॥ १८ ॥

तर्हि स तेषां प्रश्नः किम्प्रतिवचनरहित एवासीदित्यत आह । स मामिति । सः अनभिपन्नप्रश्नबीजो ब्रह्मा प्रश्नपारतितीर्षया प्रश्नस्य पारमुत्तरं तस्य तावदेवानुवृत्तेः तितीर्षा जिज्ञासा तया मां सर्वज्ञमचिन्तयत् हंसरूपेणात्मनेन यथा हंसः क्षीरं नीरं च पृथक्कर्तुं शक्तः एवमहं गुणांश्चेतश्च समीचीनोपायोपदेशेन पृथक्कर्तुमवतीर्णोऽस्मीति द्योतयितुमित्यवगम्यते । तस्येति । तस्य चिन्तयतो ब्रह्मणः सकाशं समीपगमं गतवानस्मि ॥ १९ ॥

ततः किन्तदाह । दृष्ट्वेति । तदा ते सनकादयः ब्रह्माणमग्रतः कृत्वा मामुपव्रज्य प्रत्युत्थानप्रणामादिभिः उपलभ्य प्रष्टव्यमपृष्ट्वैव तावत्को भवानिति पप्रच्छुरित्यर्थः ॥ २० ॥

तत्र हेतुं वदन् इत्यमापृष्टोऽहं यत्तावदुक्तवानस्मि तद्ब्रवीमि शृणुतेत्याह । इतीति । तावत्तत्त्वजिज्ञासुभिः किं परिदृश्यमानचिदचित्सजातीयस्त्वमुत तद्विलक्षणस्तर्हि के ते वैलक्षण्यापादकधर्मा इत्येवं परमात्मयाथात्म्यं ज्ञातुमिच्छद्भिः को भवानिति पृष्टः ॥ २१ ॥

तत्र तावत् सर्वज्ञो हंसरूपी भगवानपृष्टमपि प्रष्टव्यं तदभिप्रायमाकलय्य प्रतिवक्ष्यंस्तावत्प्रश्नं खण्डयन्निव जिज्ञासितं तत्त्वं निरूपयितुमात्मनः समस्तचिदचिद्व्याप्तिं दर्शयति । वस्तुन इति त्रिभिः । तत्र तावत्सर्वान्तरात्मानमीश्वरं जानतां ज्ञानिनां केवलमचिन्मात्रमेव पश्यतामज्ञानां च नैवंविधः प्रश्नो घटते इत्यभिप्रेत्य प्रथममीश्वरव्याप्तिं जानतां प्रश्नानुपपत्तिमाह । वस्तुन इति । वस्तुनः चिदचिद्वस्तुनः अनानात्वं अपृथक्स्थितत्वं तेनात्मायत्तसत्तास्थितिप्रवृत्तिकत्वं शरीरत्वं चाभिप्रेतं युष्माभिर्यदि ज्ञातमित्यर्थः । तदात्मनो मम मद्विषयक इत्यर्थः । ईदृशः को भवानित्येवं विप्रा वो युष्माकं प्रश्नः हे विप्राः । कथं घटेत अयम्भावः यदि कस्यचिदपि चिदचिद्वस्तुनो मत्पृथक्त्वं तदैवं प्रश्नः स्यात् प्रष्टारो भवन्तोऽप्यस्मदविनाभूताः मम सर्वजीवशरीरकत्वात् तदा युष्मच्छरीरकोऽहमेव पृष्टवानस्मि शरीरमात्रस्य वक्तृत्वादर्शनात् ततश्च प्रतिवक्तृतयाभिमतोऽहमेव प्रष्टेत्यनुपपन्नमिति किञ्च वक्तुर्मे क आश्रयः विषयः वक्तव्यस्य सर्वस्य मदात्मकत्वादहमेव वक्तव्यः स्याम् अतः प्रष्टा प्रतिवक्ता च वक्तव्यश्चैक एवेति प्रश्नप्रतिवचने अनुपपन्ने इत्यर्थः । एवं प्रष्टॄणां युष्माकमप्यहमन्तरात्मेत्युक्तं भवति ॥ २२ ॥

अचेतनं शरीरमेव जानतामप्येवं प्रश्नोऽनुपपन्न इत्याह । पञ्चात्मकेष्विति । अहं तावत्स्वरूपेण अव्ययः अतो न जातिः प्रष्टव्या अस्मज्जातीयानां सर्वेषां पाञ्चभौतिकत्वेन समानानां

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सतां न कारणमपि प्रष्टव्यं तस्माद्वाचारम्भः प्रतिवचनरूपवाग्व्यवहारारम्भो वः प्रश्नः प्रतिवचननिरपेक्षत्वादनर्थक इत्यर्थः ॥ २३ ॥

इत्थं प्रश्नखण्डनव्याजेनोपदिष्टं यच्चिदचिद्वस्तुनः सकाशात्मनो वैलक्षण्यावहं समस्तचिदचिद्वस्तुनः स्वान्तरात्मकत्वं तत्स्फुटमेवाह । मनसेति । मनसा योगपरिशुद्धेनापि मनसा तत्र योगपरिशुद्धेन मनसा देहादिव्यावृत्ततया ग्राह्यमात्मस्वरूपमपरिशुद्धेन तेन चक्षुरादिभिश्च ग्राह्यमचेतनं च तदेतत्सर्वमहमेव शरीरात्मभावनिबन्धनमिदं सामानाधिकरण्यं मच्छरीरतया मदात्मकं ननु स्वनिष्ठमतः सर्वान्तरात्माहमेव सर्वशब्दबुद्धिविषयः न मत्तोऽन्यत् इत्यञ्जसा तत्त्वविचारेण बुध्यध्वम् ॥ २४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

किं ज्ञानविषयोऽयं प्रश्न इति तत्राह । गुणेष्विति । पुंसां चेतो गुणेषु शब्दादिष्वाविशते गुणाः शब्दादिविषयाश्चेतसि संस्कारूपेण वर्तन्ते तत्र संतितीर्षोः संसारनदीं तर्तुकामस्य मुमुक्षोर्मुक्तियोग्यस्याधिकारिणः कथमन्योऽन्यसंत्यागः विषयेभ्यश्चेतसः आकर्षणं चेतसा विषयाणामाकर्षणं पृथक्करणमित्यर्थः तदुच्यतामिति शेषः ॥ १७ ॥

तत्र ब्रह्मणा किमुक्तमिति तत्राह । एवमिति । प्रश्नो बीजं यस्य सः प्रश्नबीजः तत्परिहारम् अन्यमनस्क इव स्थितत्वादित्याह । कर्मधीरिति । अस्यार्थः गुणानां चेतसश्च कर्म कारणमिति मन्वानः अन्यमनस्कत्वे किं कारणमित्यस्यैवमेवोत्तरं कर्मणि सर्वकर्तरि हरौ धीर्यस्य कर्मणा हरिणैव परिहारो वक्तव्य इति धीर्यस्य स तथा कर्म भगवन्तमेव ध्यायतीति वा तदेतदुक्तम्—

> ब्रह्मा पृष्टस्तु योगीन्द्रैः सनकाद्यैर्मनोगतैः ।
> कारणं विषयेष्वस्य कर्मेति प्रत्यपद्यत ॥
> हेतुरन्योऽपि तत्रास्तीत्येवं जानन्नपि प्रभुः ।
> विशेषतो मनस्तत्र नाधाज्जानन् हरेः प्रियम् ॥
> स्वात्मन्यपरिहारोक्तिस्तदा ह्यासीद्धरेः प्रिया ।
> अतः स तत्प्रियं जानन्नाकरोत्तद्विचारणाम् ॥
> तमेवाचिन्तयद्देवः प्रश्ननिर्णयकारणात् ।
> भ्रमतीव मनः क्वापि ब्रह्मणो विष्णुमायया ॥
> सर्वज्ञस्यापि यत्रात्मा वक्तुमिच्छेज्जनार्दनः ।
> तज्ज्ञात्वा चिन्तितं तस्य चिन्तयत्यमुमेव तु ॥
> न स्वयं चिन्तयत्यर्थं स हि तद्भावविस्तदा ।
> अन्ये स्वज्ञानसंयुक्ता मोहमीयुर्यथाक्रमम् ॥
> तस्य मध्यन्दिने सूर्ये चाभवत्तामसात्मकम् ।
> नैवाज्ञानं यथा सूर्ये तमो नास्ति कदाचनेति ॥

एतदभिमन्त्रय ॥ १८ ॥

नन्वेवं तर्हि सनकादीनां प्रश्नो निरर्थो वाक्प्रश्नवादिति शङ्कामाभूदिति भावेनाह स मामिति । प्रश्नस्य पारः पूरणं परिहार इति यावत्तत्र सन्निश्चयो यस्य स तथा तम् ॥ १९—२१ ॥

ज्ञानविधुरयोनित्वेन संशयविषयेण स्वेनोक्तार्थं प्रामाण्यजननाय को भवानिति तत्प्रश्नं विघटयति । वस्तुन इति । आत्मनो वस्तुनः परमात्मवस्तुनो भवत्पक्षे यद्यनानात्वमेकत्वं विवक्षितं तर्हि अनानात्वे एकत्वपक्षे को भवानितीदृशः प्रश्नः कथं घटेत सिद्धविषयत्वादिति शेषः । हे विप्राः वः प्रश्नो यद्यनेकाश्रयः नानात्वाश्रयः तथापि को भवानिति वक्तुं कथं घटेत अनेकस्मिन् बहुत्वसंख्याविशिष्टे वस्तुनि एकत्वसंख्याविशिष्टत्वेन वक्तुमनुपपन्नत्वात् ॥ २२ ॥

सिद्धविषयत्वं कथमत्राह । पञ्चात्मकेष्विति । देवमनुष्यपितृगन्धर्वासुरभेदेन पञ्चविधेषु भूतेषु जीवेषु हिरण्यगर्भावरत्वाद्यनुत्वाभावापेक्षया वस्तुतो वस्तुवृत्त्या समानेषु सत्सु ब्रह्मादिवन्दितचरणारविन्दं मामुद्दिश्य को भवानिति वाचारम्भो यस्य स तथा वाचारब्ध इत्यर्थः वः प्रश्नो निरर्थकः निर्विषय इति ॥ २३ ॥

कुतो निरर्थक इति तत्राह । मनसेति । मनआदीन्द्रियैर्यद्गृह्यते तदहं न भवास्येवेति यस्मात्तस्मान्निर्विषय इत्यन्वयः । ननु त्वमपि त्वत्प्रसादाद्गृह्यसे तस्मात्प्रश्नः कृत इति तत्राह । मत्तोऽन्यदिति नेत्यनुषज्यते अन्यदिति भावनिर्देशः यन्मनआदिभिर्विचार्य मत्तोऽन्यत्वेनैव ज्ञायते तदहं न भवाम्येवेति बुध्यध्वमिति अञ्जसा तत्त्वम् अञ्जसा त्वरिते तत्त्वमित्यभिधानम् विचार्य निर्णीतस्यापि पुनः संशयकारणं परिकल्प्यात्मसंशयो न कर्तव्यः अतः को भवानिति प्रश्नो नारब्धव्यः किन्तु गुणेष्वाविशते चेत इत्येव प्रश्न आरब्धः इति भावः—

> न युष्माकं मयि प्रश्नो घटतेऽयं कथंचन ।
> मामृते न हि यन्त्योऽस्ति विरिञ्चेः कापि कश्चन ॥
> अभिवन्दितपादं मां विरिञ्चेन कथं पुनः—
> पृच्छथान्ये समा यस्मादवरत्वे चतुर्मुखात् ।
> देवा मनुष्याः पितरो गन्धर्वा असुरास्तथा ॥
> इति पञ्चात्मकं सर्वं ब्रह्मणस्त्ववरं यतः ॥
> यन्मदन्यद्विचारेण गृह्यते तन्न चास्म्यहम् ।
> इति जानीध्वमत्रैव मत्प्रसादाद्धि मद्दृशः ॥
> अन्यत्स्वभावतो ह्ययं मम प्रेरणयैव तु ।
> तस्माद्विवक्षितार्थे तु प्रश्नारम्भो न मद्गतः ॥

इति समाख्यानबलादुक्त एवार्थो नान्यः स्वकपोलकल्पित इति किञ्च इदं हि विश्वं भगवानिवेतरो इत्यतश्च सुरेर्जगतो भेदः सिद्ध इति सकलशास्त्राणां मोक्षे हि तात्पर्यं मोक्षश्च प्रकृतिप्राकृतविवेकज्ञानाद्विष्णोः तदुक्तम्—

> प्रकृतेर्व्यतिरिक्तो यः पुरुषश्चेति कथ्यते ।
> तं विद्वान् परमात्मानं ते यान्ति परमं पदम् ॥
> नैतदिच्छन्ति पुरुषमेकं कुरुकुलोद्वह ।
> बहूनां पुरुषाणां हि यथैका योनिरुच्यते ॥
> तथा तं पुरुषं विश्वमाख्यास्यामि गुणाधिकमिति ।

बहुषमाणेषु ॥ २४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

एवमिति—

यावानहं यथाभावो यद्रूपगुणकर्मकः ।
तथैव तत्त्वविज्ञानमस्तु ते मदनुग्रहादिति ॥
एतन्मतं समातिष्ठ परमेण समाधिना ।
भवान्कल्पविकल्पेषु न विमुह्यति कर्हिचित् इति ॥

ऋषिमाद्यं न बध्नाति पापीयांस्त्वां रजोगुण इतिलब्धभगवद्वरत्वेऽपि न भारती मेऽङ्ग मृषोपलक्ष्यते इत्यादिना व्यञ्जिततादृशस्वानुभवत्वेऽपि योऽन्तर्हित इत्यादौ पित्रानुवर्णितत्वेऽपि श्रीभगवन्तं प्रति सनकादीनां वाक्यत्वेऽपि च ब्रह्मणः कर्मधीत्वं सम्प्रति स्वमहिमव्यञ्जनाय श्रीभगवदिच्छयैव ज्ञेयं हंसोपनिषदि वाध्वादिव्याकितत्वमनतिहासवत् ॥ १८ ॥

हंसरूपेण गतोऽस्मीत्यभिप्राय इति शेषः ॥ १९–२० ॥

कृतपादाभिवन्दनत्वात्को भवानिति प्रश्नोनाज्ञानजः किन्तु तेनैव तदभिप्रायज्ञानार्थः अत एवाह तत्त्वजिज्ञासुभिरिति ॥ २१ ॥

किं मां जीवं ज्ञात्वायं को भवानिति प्रश्नः क्रियते भौतिकदेहं ज्ञात्वा वा किमीश्वरं ज्ञात्वेति विकल्पः जीवपक्षं दूषयति आत्मनो जीवरूपस्य वस्तुनो यद्यनानात्वं सर्वस्यापि तस्य चिदेकरूपतया विशेषांशानिर्देशायोग्यत्वं तर्हि वः प्रश्नः कथं घटेत यदीति निश्चये तस्मात् हे विप्राः ! वो युष्माकं प्रष्टॄणां वक्तुर्वा मम क आश्रयः युष्माभिः किं जात्यादिविशेषमाश्रित्य क इति प्रयुक्तं मया चोत्तरयितव्यमित्यर्थः ॥ २२ ॥

देहपक्षं दूषयति । पञ्चेति । वस्तुतो वस्तुविचारे सति भूतानां पञ्चात्मकत्वात्को भवानित्येकत्वेन प्रश्नोऽयं नार्थवान् यदि च देहरूपाणां तेषां मिलितत्वेनैकत्वं मन्यध्वे तथाप्यात्मवत्समानत्वात् प्रश्नोऽयं नार्थवान् ननु विदुषामपि व्यवहारोऽयं दृश्यते यतो भवतापि विप्रा इति व इति चोक्तमित्याशङ्क्याह । वाचारम्भ इति वाङ्मात्रेणारभ्यते मद्विधेन तदपोहार्थमेव तदनुवादः क्रियते भवद्भिश्च मद्विधवदितिचेत् ज्ञातमेव तत्त्वं किं पृच्छ्यत इति भावः ॥ २३ ॥

ईश्वरपक्षं दूषयति । मनसेति । मनआदिभिर्यद्गृह्यते तत्सर्वमहमेव कुतः यतो न मत्तोऽन्यत् परमकारणं मां विना तत्कार्यत्वेनेत्यर्थः । तथापि प्रश्नोऽयं न घटत इति भावः ॥ २४ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

गुणेषु विषयेषु स्वभावतो रागादेव चेतः प्रविशति ते चानुभूता विषयाः चेतसि प्रविशन्ति अतितितीर्षोः विषयानतिक्रमितुमिच्छोः ॥ १७ ॥

महान् देवोऽपि स्वयंभूरपि भूतानां स्रष्टापि ध्यायमानः विचारयन्नपि प्रश्नस्य बीजं यदज्ञानादयं प्रश्नस्तत् शुद्धं स्वरूपार्थं तत्त्वं नाभ्यपद्यत ज्ञातुं नाशक्नोदित्यर्थः । यतः कर्मधीः स्वीयसृष्टिमात्रकर्मासक्तबुद्धिः ॥ १८ ॥

हंसरूपेणेति । यथा हंसो नीरं क्षीरं च पृथक्कर्त्तुं शक्तस्तथाहं गुणांश्चेतश्चेति खोनायितुमिति भावः ॥ १९—२० ॥

अहन्तेभ्यः अहन्ता अभिमानस्तस्या इभ्यः स्वामी तन्नियन्ता ननु तन्नियम्यः इभ्य आढ्यो धनी स्वामीत्यमरः ॥ २१ ॥

किं मां जीवं ज्ञात्वा को भवानिति प्रश्नः क्रियते भौतिकदेहं ज्ञात्वा वा परमेश्वरं ज्ञात्वा वेति विकल्प्य प्रथमं जीवपक्षं दूषयति । वस्तुनो वस्तुभूतस्य आत्मनो जीवस्य यदि प्रश्नस्तदा सर्वस्यापि तस्य चिदेकरूपतया जातिगुणादिविशेषाभावेन च वस्तुनः खलु नानात्मकत्वाद्यनानात्वे सति को भवानिति वः प्रश्नः कथं घटेत वक्तुरुत्तरदातुर्वा क आश्रयः कञ्जातिगुणादिविशेषमाश्रित्यामुकोऽहमित्युत्तरं दास्यामीत्यर्थः ॥ २२ ॥

देहपक्षं दूषयति । पञ्चेति । वस्तुतो वस्तुविचारे सति देहस्थानां भूतानां पञ्चात्मकत्वात् को भवानित्येकत्वेन प्रश्नो न घटते तस्मात्के यूयं पञ्चेत्युच्यतामिति भावः । ननु तेषां पञ्चानां मिलितत्वेनैकत्वं मन्यामहे इत्यत आह । समानेषु सर्वत्रापि मनुष्यादिदेहेषु तेषु पञ्चसु समानेषु सत्सु समानत्वादेव पूर्वोक्तजीववदैक्यात् को भवानिति पुनरपि प्रश्नो न घटते ननु च विदुषामपि प्रश्नोत्तरत्वेनैव व्यवहारो दृश्यते यतो भवतापि वो विप्रा इति चोक्तमित्याशङ्क्याह । वाचारम्भ इति मम त्वयं वाचारम्भो ह्यनर्थक एव मया तु वाङ्मात्रेणारभ्यते युष्मत्प्रश्नवदघटमानत्वादनर्थः वचनानुकारीत्या तथैवास्माभिरपीति चेद्ब्रूध्वे तर्हि यूयमज्ञानिन एव कथं तत्त्वं जिज्ञासध्वे किमत्र न वक्तव्ये इति भावः ॥ २३ ॥

परमेश्वरपक्षं दूषयति । मनसेति । अयमर्थः परमेश्वरान्तराभावान्मम सजातीयभेदो नास्त्येव यच्च मनआदिभिर्गृह्यते तदहमेव ननु मत्तोऽन्यत् मच्छक्तिकार्यत्वादिति विजातीयभेदोऽपि नास्त्यतः को भवानिति प्रश्नो न घटत इति भावः ॥ २४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

प्रश्नमेवाह । सनकादय ऊचुः गुणेष्विति । गुणेषु विषयेषु अनादितत्संस्कारविशिष्टं चेतो विशति ते गुणाश्च वासनावद्धाश्चेतसि प्रविशन्ति हे प्रभो ! जगत्पते अतितितीर्षोः संसारमतिक्रम्य गन्तुमिच्छोर्मुमुक्षोरन्योऽन्यसन्त्यागो विश्लेषः कथं स्यात्तद्ब्रूहीति शेषः ॥ १७ ॥

तदा तेन किमुक्तमित्यत आह श्रीभगवानुवाच । एवमिति । एवमुक्तप्रकारेण पृष्टः महादेवः सर्वदेवाधिपः स्वयम्भूर्भूतभावनः जगत्स्रष्टा ध्यायमानः एकाग्रीभूतोऽचिन्तयत् केन हेतुना एतैः प्रश्नः कृतस्तं प्रश्नबीजं नाभ्यपद्यत न निश्चितवान् तत्कुतः यतः कर्मधीः कर्मसु धीर्यस्य तथाभूतस्याश्चिन्ताव्याकुलचित्त एवासीदित्यर्थः ॥ १८ ॥

ततः किंवृत्तमित्यपेक्षायामाह । स इति । स देवः ब्रह्मा प्रश्नपारं तितीर्षया प्रश्नस्योत्तरं दातुमिच्छया मामचिन्तयत्तदा तस्मिन्काले हंसरूपेण तस्य सकाशमगमं हंसरूपेणाविर्भावे यथा हंसो मिश्रितक्षीरनीरे पृथक्कर्त्तुं समर्थस्तथाहं गुणचेतसोर्विश्लेषं कर्तुमनेन रूपेणागतोऽस्मीति भावः ॥ १९ ॥

दृष्ट्वेति ततश्च ते ब्रह्मपुत्रा मां दृष्ट्वा समीपमागत्य पादा-

गुणेष्वाविशते चेतो गुणाश्चेतसि च प्रजाः ! ।
जीवस्य देह उभयं गुणाश्चेतो मदात्मनः ॥ २५ ॥
गुणेषु चाविशच्चित्तमभीक्ष्णं गुणसेवया ।
गुणाश्च चित्तप्रभवा मद्रूप उभयं त्यजेत् ॥ २६ ॥
जाग्रत्स्वप्नः सुषुप्तं च गुणतो बुद्धिवृत्तयः ।
तासां विलक्षणो जीवः साक्षित्वेन विनिश्चितः ॥ २७ ॥
यर्हि संसृतिबन्धोऽयमात्मनो गुणवृत्तिदः ।
मयि तुर्ये स्थितो जह्यात्त्यागस्तद्गुणचेतसाम् ॥ २८ ॥

भाषा टीका ।

मेरा चिंतन किया तब हंस के रूप से उस समय उनके पास हम गये ॥ १९ ॥

मेरे को देख कर वे सनकादिक चरणों में नमस्कार करके ब्रह्माजी को आगे खडे करके पूछते भये कि आप कौन हो ॥ २० ॥

हे उद्धवजी ! तत्त्वकी जिज्ञासा करने वाले उन मुनियों ने जब मेरे को ऐसे पूछा तब मैंने जो उन से कहा तिस बात को तुम सुनो ॥ २१ ॥

हे विप्रो हो ! यदि तुमारे मन में वस्तु एकही मानी है तब तो एक आत्मा जानने वाले का यह प्रश्न कैसे हो सकता है और कहने वाला मैं भी किस आधार से कहूंगा ॥ २२ ॥

यदि सब का शरीर पंचभूत का है तो यथार्थता से बरोबरही हैं तब आप कौन हो यह प्रश्न आप का अनर्थक वाग्जाल मात्रही है ॥ २३ ॥

यदि यथार्थ ज्ञान से देखो तो मैं सब जगत्का शरीरी हूं व्यापक हूं तब मन से वचन से दृष्टि से तथा और भी इन्द्रियों से जो गृहीत होता है सो हम से पृथक् कुछ नहीं है ऐसे सीधा आप लोग समुझ जाओ ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

एवं प्रश्नखण्डनमिषेणैवाऽऽत्मस्वरूपं सामान्यतो निरूप्य ब्रह्मणोऽपि दुष्परिहरं यत्पृष्टं तत्रोत्तरमाह । गुणेष्वित्यादिना-पञ्चदशाध्यायसमाप्ति । अयमभिप्रायः यदि कर्तृत्वभोक्तृत्वादिरूपतया विषयैः संग्रथितं चित्तं बुद्ध्यादिशब्दवाच्यमेवं जीवस्य स्वरूपं भवेत्ततस्तद्वियोगो न घटेत तस्य तु स्वरूपमहंब्रह्मैव चित्ताध्यासेन तु तत्स्वभावतया विषयैः संग्रथितम् अतः स्वस्य ब्रह्मत्व-भावनया विषयाणां च मिथ्यात्वानुसन्धानेन सर्वतो निर्विद्य भगवन्तं भजतो भवत्येव परिपूर्णस्वरूपावस्थानमिति हे प्रजाः ! पुत्रकाः सत्यं गुणेषु चेत आविशति गुणाश्च चेतसि एवं



गुणाश्चेतश्चोभयं ग्रथितं मदात्मनो ब्रह्मस्वरूपस्य जीवस्य देहो-ऽस्त्येते उपाधिनं तु स्वरूपम् ॥ २५ ॥

तस्मादभीक्ष्णं पुनःपुनर्गुणसेवया तत्संस्कारेण गुणेष्वावि-शच्चित्तं ते च पुनर्वासनारूपेण चित्ते प्रकर्षेण भवन्तीति तथा ते गुणाश्चेतश्च एवं एतदुभयं तन्मद्रूपः संस्त्यजेत् ॥ २६ ॥

ननु जाग्रदाद्यवस्थावतः कुतः कूटस्थस्वरूपता तत्राह । जाग्रज्जागरः स्वप्नः सुषुप्तं चेति बुद्धेरेता वृत्तयो न तु जीवस्य ताश्च न स्वाभाविक्यः किंतु —

सत्त्वाज्जागरणं विद्याद्रजसा स्वप्नमादिशेत् ।
प्रस्वापं तमसा जन्तोस्तुरीयं त्रिषु सन्ततमिति ॥

वक्ष्यमाणक्रमेण गुणत एव जीवस्तु विलक्षणस्तदवस्था-रहित एव विनिश्चितः कुतः तासां साक्षित्वेन ॥ २७ ॥

ननु तर्हि कथमहं जागर्मीत्यादिप्रतीतिस्तत्राह । यर्हि यस्मात्संस्मक् सृतिः सरणमनयेति संसृतिर्बुद्धिस्तया बन्धोऽ-यमात्मनो गुणवृत्तीर्ददाति तस्मान्मयि तुर्ये स्थितः सन्निमं संसृतिबन्धं जह्यात् तदा गुणचेतसां गुणानां चेतसश्चान्योऽन्य त्यागो भवति ॥ २८ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

दुष्परिहरमशक्यमोत्तरं गुणचित्तयोरन्योऽन्यत्यागः कथमिति यत् पृष्टं तत्र प्रश्ने बुद्ध्यादिशब्दवाच्यं लिङ्गशरीरमेव । ततः चित्तादुपाधेर्जीवस्वरूपत्वे तद्वियोगो विषयवियोगः । तस्य जीवस्य । चित्ताध्यासेन चित्तमेवाहमित्यभिमानेन । तत्स्वभावतया चित्तस्वभावत्वात् । चित्तस्य संग्रथितत्वे जीवस्वरूपमपि संग्रथितमित्यर्थः । अतः जीवस्य ब्रह्म-स्वरूपत्वात् ॥ २५ ॥

तस्मात् अध्यस्तोपाधित्वात् एवमन्योऽन्यसङ्ग्रथितं यदु-भयं तत्पादसंयुक्तान्योऽन्यमायतनतुल्यवत् परित्यजेदित्यर्थः ॥ २६ ॥

बुद्धेर्वृत्तयोऽवस्थाविशेषाः तासां बुद्धिवृत्तीनां साक्षित्वेन साक्षाद्द्रष्टृत्वात् यो यद्द्रष्टा स तद्भिन्न इति व्याप्त्या तद्-द्रष्टा तदोभिन्न इत्यर्थः ॥ २७ ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी।

तया बुद्ध्याध्यस्तया अयमध्यासनिबन्धनो बन्ध आत्मनो जीवस्य गुणवृत्तीर्जाग्रदाद्यवस्थाः आत्मन्यसतीरपि ददाति प्रत्यापयति तदा स्वरूपानुसन्धानेनाध्यासपरित्यागकाले स्वत एवाचेतनानां तेषां मिथस्त्यागो भवतीत्यर्थः ॥ २८ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

अथ चेतसो गुणानां चान्योऽन्यसन्त्यागः कथमित्याद्यप्रश्नस्य साक्षादुत्तरं वक्तुमारभते। गुणेष्विति। मदात्मनः अहमन्तरात्मा यस्येति स मदात्मा मदात्मकस्य जीवस्य देह उभयं चेतश्च स्मर्यमाणा गुणाश्च भवन्तीत्यर्थः ॥ २५ ॥

स्मर्यमाणतया शब्दादिगुणानां चेतसि प्रतीयमानत्वं विवक्षितं चित्तप्रभवाः पूर्वसंस्कारवशाच्चित्ते प्रकाशमानाः मद्रूप इति सप्तमी मद्रूपे चिन्त्यमाने उभयं त्यजेत् चित्तं गुणांस्त्यजति गुणाश्च चित्तं त्यजन्तीत्यर्थः। कथमन्योऽन्यसन्त्याग इत्युपक्रमवशादयमेवार्थः एवं मद्रूपध्यानं शब्दादिगुणपरित्यागोपाय इत्युक्तम् ॥ २६ ॥

अथ जीवस्य देहाद्विलक्षणत्वानुसन्धानं च गुणपरित्यागोपाय इति वक्ष्यन् जाग्रदाद्यवस्थात्रयस्य प्रकृतिसम्बन्धोपाधिकत्वं प्रपञ्चयति। जाग्रदादिबुद्धिवृत्तयः ॥ २७ ॥

तुरीयेऽवस्थात्रयातीते जीवशरीरके मयि स्थितत्वमेव गुणचेतसामन्योऽन्यत्यागः स्यात् यद्वा गुणचित्तानां त्यागः स्यात् ॥ २८ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

अथाभिप्रायमालक्ष्य ब्रह्मणां प्रतिपृष्टं प्रति वक्ति। गुणेष्वित्यादिना। प्रजाः! हे पुत्राः अहमन्तरात्मा यस्य स मदात्मा तस्य देहे देहसम्बन्धे सति चेतो गुणेष्वाविशते ते च तस्मिन्नाविशन्तेऽतो गुणाश्चेतश्चेत्युभयं मिथो न त्यजतीति शेषः इति प्रश्नानुवादः देह इत्यनेन परस्परात्यागो देहसम्बन्धनिमित्त इतिद्योतितम् ॥ २५ ॥

अनूदितं प्रश्नमेवोपपादयति। गुणेषु चेति। सति देहसम्बन्धेऽभीक्ष्णं पुनः पुनः गुणसेवया चित्तं गुणेष्वाविशदाविष्टं भवति चकाराद्गुणाश्च तस्मिन्नाविशन्तो भवन्ति कथं बाह्याभ्यन्तरयोर्गुणचेतसोर्मिथ आवेश इत्यत आह। गुणाश्च चित्तप्रभवा इति। प्रभवत्वमत्र प्रतीयमानत्वं पूर्वसंस्कारवशाच्चित्ते प्रकाशमाना भवन्ति चित्तमपि तत एव तान् विषयीकुर्वदेवावतिष्ठत इत्यर्थः। गुणाः पुनः चित्तप्रभवाः चित्ते प्रकर्षेण भवन्ति ततो नापगच्छन्ति कश्च तर्हि परस्परत्यागोपायः येन देहसम्बन्धोऽपि निवर्तेत इत्यत आह। मद्रूपे चिन्त्यमाने सत्युभयं गुणाश्चेतश्चेत्युभयं कर्तृ त्यजेत् अन्योऽन्यमिति कर्मपदमध्याहर्तव्यं चित्तं गुणांस्त्यजति गुणाश्च चित्तं त्यजन्तीत्यर्थः। कथमन्योऽन्यसन्त्याग इत्युपक्रमवशादयमेवार्थः ॥ २६ ॥

एवमात्मस्वरूपध्यानं शब्दादिगुणपरित्यागोपाय इत्युक्तम् अथ जीवस्य देहाद्विलक्षणत्वानुसन्धानं च गुणपरित्यागोपाय इति विवक्षुस्तावज्जीवस्य प्रकृतिविलक्षणत्वज्ञापनाय तं ततो विविनक्ति। जाग्रदिति। जाग्रच्छब्दस्य कर्तरि शत्रन्तस्य व्युत्पन्नत्वेऽपि तदाश्रितजाग्रदाद्यवस्थायामत्र लक्षणया वृत्तिः जाग्रदादयस्तिस्रोऽवस्था गुणतः प्रकृतिगुणेभ्यः सत्त्वादिभ्यः हेतुभ्यः बुद्धेरन्तःकरणस्य वृत्तयः प्रवृत्तयः तद्व्यापारनिमित्ता इत्यर्थः तथाच विविच्य वक्ष्यति—

सत्त्वाज्जागरणं विद्याद्रजसा स्वप्नमादिशेत्।
प्रस्वापं तमसा जन्तोस्तुरीयं त्रिषु सन्ततमिति ॥

यद्यपि सुषुप्तेरन्तःकरणेष्विन्द्रियेषु निर्व्यापारेषु सत्स्वहमहमित्यवभासमात्ररूपत्वान्न तस्या बुद्धिवृत्तित्वं तथापि निर्व्यापारे सत्येवान्तःकरणे मनुष्यत्वब्राह्मणत्वसुखित्वदुःखित्वादिबाह्याभ्यन्तराद्यवभासविधुरकेवलतथाविधोऽवभास इति तावन्मात्रेण तस्माद्वृत्तित्वव्यवहार इति बोध्यम् अनेन जीवस्य जागराद्यवस्थात्रयान्वयः प्रकृतिसंबन्धप्रयुक्तत्वेनौपाधिको न स्वाभाविक इति प्रकृतितत्कार्यतत्सम्बन्धतत्प्रयुक्तादिभ्योऽतिरिक्तं प्रत्यगात्मस्वरूपमित्युक्तं भवति तदाह। तासां विलक्षण इति। साक्षिविलक्षणपदद्वयान्वयाभिप्रायेण तासामित्यपादानस्य शेषत्वविवक्षया षष्ठी ताभ्यो विलक्षण इत्यर्थः। कथं ताभ्यो विलक्षणस्य तदन्वय इत्यत आह। साक्षित्वेन विनिश्चित इति। तासां साक्षित्वेनेति सम्बन्धः साक्षित्वं च साक्षाद्द्रष्टृत्वं तदेवावस्थात्रयान्वयात्मकमिति विलक्षणस्याप्यवस्थात्रयान्वय उपपद्यत इति भावः ॥ २७ ॥

ततः किमत आह। यर्हीति। यर्हि यतोऽयं संसृतिबन्धः देहसम्बन्धरूपसंसारबन्धः आत्मनो जीवस्य गुणवृत्तिदः गुणानां शब्दादिविषयाणां चेतसश्च परस्परावेशेन या वृत्तयः सङ्कल्पविकल्पात्मिकाः ता ददातीति तथा यद्वा आत्मनो मनसः गुणवृत्तिदः गुणेषु शब्दादिषु वृत्तीर्भोग्यतादिबुद्ध्यात्मिकाः ददातीति तथाऽतस्तुर्ये स्वतोऽवस्थात्रयरहिते जीवशरीरके मयि स्थितः मनः परस्यात्मन इत्यस्य प्रथमान्ततया विपरिणामेन कर्तृतयान्वयः मयि स्थित आत्मा मनः जह्यात् गुणवृत्तीस्त्यजेदित्यर्थः प्रकृतिविविक्ते मदात्मकं स्वभावतोऽवस्थात्रयरहिते जीवस्वरूपे स्थितः तद्याथात्म्यानुसन्धानपर आत्मा गुणवृत्तीर्जह्यादित्यर्थः। ततः गुणवृत्तित्यागाद्गुणचेतसां त्यागः स्यात् परस्परावेशत्यागः स्यात् प्रकृतिविलक्षणमदात्मकजीवस्वरूपयाथात्म्यानुसन्धानेन चेतोवृत्तित्यागस्ततो गुणचेतसां त्यागः ततो देहसम्बन्धत्यागः ततो निरवशेषवैषयिकसुखदुःखनिवृत्तिर्निरतिशयानन्दप्राप्तिश्चेत्युक्तं भवति अवस्थात्रयरहितजीवस्वरूपानुसन्धानेऽप्यात्मनो विशेष्यतयानुसन्धानमपि कार्यमिति द्योतनाय मयीति विशेष्यत्वनिर्देशः जीवस्य परमात्मानं प्रति नियतविशेषणता हि तत्स्वरूपनिरूपणोपयुक्ता ॥ २८ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

इदानीं सनकादीनां प्रश्नं परिहरति। गुणेष्वित्यादिना। हे प्रजाः ब्रह्मजत्वेन प्रकृष्टजन्मत्वात्तथा सम्बोधनं वः चेतो गुणेष्वाविशते गुणाश्चेतसीति प्रश्नस्यायं परिहारः मय्येव आत्मा मनः यस्य स इत्यस्योभयपरित्वे एतद्रूपं सिध्यति ॥ २५ ॥

एवं धातुवद्गुणचित्तयोरन्योन्यभावो ज्ञानाग्निनेत्युक्तं तत्र स केन प्रकारेणोदेतीत्यत्राह। गुणेष्विति। अभीक्ष्णं निरन्तरं गुणानां विषयाणां सेवया चित्तं चेतो गुणेषु विषयेष्वाविशदे-

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

कानष्ठ वर्तते गुणाश्च चित्तप्रसवाः चित्ते प्रभवो येषां ते तथा चित्ते संस्काररूपेण वर्तन्ते हरिस्मरणमतिक्रम्य प्रतीयन्त इत्यर्थः। ततः किमत्राह। मद्रूप इति। तत्र विद्वान्मद्रूपे मम स्वरूपे चेतो गुणाश्चेत्युभयं त्यजेत् इदमुक्तं भवति मनआदीन्द्रियाणि मदन्तर्यामिणि हरौ स्थितानि तदाधाराणि तत्प्रेरितानि विषयेषु वर्तन्ते विषयाश्च विष्णुस्था विष्णवाधारा विष्णुप्रेरिता मम भोगसाधनानीत्ययं विष्णौ गुणादित्याग इति—

> विष्णुस्था विषयाः सर्वे विष्णावेव मनो मम।
> इति मत्वैव तत्सर्वं त्यजेत्तत्र बाधतः॥

इति वचनात् मुमुक्षुभिरेवमेव नित्यमनुसन्धेयम् ॥ २६ ॥

नन्वस्य गुणसङ्गस्य स्वाभाविकत्वे पुरुषायुषानन्त्येनापि त्यागो न सुलभ इति तत्राह। जाग्रदिति। जाग्रदाद्यवस्था गुणतो गुणद्वारेण बुद्धिवृत्तयः बुद्ध्या प्रकृत्या वृत्तिर्वर्तनं यासां तास्तथा प्रकृतिगुणसम्बन्धाज्जीवस्य जाग्रदाद्यवस्थावर्तित्वं न स्वाभाविको गुणसङ्ग इत्यर्थः। तात्पर्यमाह। तासामिति। तासां जाग्रदाद्यवस्थानां साक्षित्वेन वर्तमानो जीवः स्वतस्ताभ्यो विलक्षणो विनिश्चित इत्यन्वयः॥ २७॥

नन्वयमस्वाभाविकः स्वत एव निवर्तते न तत्साधनप्रयत्नापेक्षेत्याशङ्कां परिहर्तुमुक्तानुवादपूर्वकं तत्साधनं कथयति। यर्हीति। आत्मनो जीवस्यायं संसृतिबन्धः सत्त्वादिगुणप्रवृत्तितः इति यर्हि यस्माद्धेतोस्तुर्ये गुणत्रयातीते मयि स्थितं स बन्धं जह्यात् मदुपासनासमुद्रेकसमुद्भूतज्ञानाविर्भूतमत्प्रसादेन बन्धं त्यजतीत्यर्थः। कोऽयं बन्धत्यागो नाम येन हेयत्वेन वर्ण्यते इति तत्राह। त्याग इति। विषयारूढबाह्यान्तःकरणत्याग एव बन्धत्यागो नामान्यदिति ॥ २८ ॥

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

नन्वेवं सति गुणाश्चेतश्च मिथः प्रसज्यैव स्थितानि भवन्त्वपि प्रसज्जन्ति किमुत जीवे इत्यस्माकं त्रिगुणीभूयैव प्रश्नो जात इत्याशङ्क्य जीवे तेषामस्वाभाविकसम्बन्धं कथयन् स्वस्मिंस्तत्कैमुत्यं दर्शयति। गुणेष्विति। गुणेष्वित्याद्युक्तं सत्यमेव किन्तु जीवस्य तदुभयमपि देह उपाधिमाश्रयैव जीवे सम्बद्धमित्यर्थः यतो मदात्मनः मद्धमेवात्मा परमांशिरूपो यस्य तस्य मदंशस्य ततो मयि तु तत्सम्बन्धः सुतरामेव नास्तीत्यर्थः। अयं भावः यथा सूर्यांशानां रश्मीनां सूर्यकार्यभूतेन मेघेन स्वाभाविकसम्बन्धो नास्ति सूर्यस्य तु दूरत एव तद्वार्त्ता तथा जीवानां मम च सम्बन्ध इति ॥ २५ ॥

तदेवमपि जीवस्तु स्वशक्त्या तान् वियोजयितुं न शक्नोति किन्तु मद्भक्तोपासनादिलब्धमच्छक्त्यंशेनैवेत्याह। गुणेषु चेति। मद्रूपः मदभेदभावनाविष्टः इति ज्ञानानुसारेणोक्तं भक्तिरूपोपासना चेत् मम रूपं यत्र स ध्यातेति ज्ञेयम् ॥ २६ ॥

जीवस्य तैः स्वाभाविकसम्बन्धाभावं दर्शयति। जाग्रदिति तैः ॥ २७ ॥

जीवस्य स्वतोऽशक्तिं दर्शयंस्तदेव द्रढयति। यर्हीति। मयि तुर्ये इति "विराट् हिरण्यगर्भश्च कारणं चेत्युपाधयः। ईशस्य यत्त्रिभिर्हीनं तुरीयं तत्पदं विदु"रिति न्यायेन एतदेव मूलप्रश्नस्योत्तरमित्याह। त्याग इति। ततः स्वत एवाचेतनानां तेषां मिथस्त्यागो भवतीति भावः॥ २८ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

नन्वेवं चेत् सत्यमज्ञानिन एव वयं स्म किन्तु भवानेव चेत् सर्वं तर्हि चेतश्च गुणाश्च त्वमेवातश्चेतो वृत्तिषु विषयाः प्रविष्टा विषयेष्वपि चेतोवृत्तयः प्रविष्टा इत्युभयेषामेषामन्योऽन्यसन्त्यागं भवानेवास्माभिः प्रष्टव्योऽभूस्ततः कृपयोत्तरं देहीत्यत आह। गुणेष्विति। हे प्रजाः हे पुत्रकाः। सत्यं गुणेषु चेत आविशति गुणाश्च चेतसि एवं गुणाश्चेतश्चोभयं मदात्मनश्चिन्मयत्वेन ब्रह्मस्वरूपस्य जीवस्य देह अध्यस्तम् उपाधिरेव न तु स्वरूपम् एवं च चेतसो गुणानां च परस्परसन्त्यागार्थं कथं यतध्वे उभयमेव तदनर्थकारि दूरतस्त्यक्त्वा कथं न निर्द्वन्द्वीभवतेति ध्वनिः ॥ २५ ॥

तदुभयपरस्परसंत्यागश्च दुर्घट एवेत्याह। गुणेष्विति। अनादित एवासीक्षणं गुणसेवया दृढतरेण तत्संस्कारेण गुणेष्वाविशदेव चित्तं वर्तते कथं तांस्त्यक्तुं प्रभवत्विति भावः गुणाश्च पुनः पुनर्वासनारूपेण चित्ते प्रकर्षेण भवन्ति सदा तत्र वर्तन्त इति ते गुणाश्च कथं वा तत्यक्तुं प्रभवन्त्विति भावः। किञ्च ज्ञानिनां कष्टेन परस्परतदुभयत्याजना च निष्प्रयोजनैव तैरुभयैरपि प्रायः प्रयोजनं तेषां नास्तीत्याह। मद्रूपः मदभेदभावनावेशान्मन्मयः सन् ज्ञानी उभयं त्यजेत भक्तानां तु मत्सेवामेव परमपुरुषार्थत्वेन निश्चितवतां मद्रूपगुणलीलारसनिमग्नचेतसः सकाशात् स्वत एव गुणा अपयान्तीति न तेषां चेतोगुणयोः परस्परसन्त्यागो दुर्घटो मन्मयीभावस्तु तेषां नेष्ट इति ज्ञेयम् ॥ २६ ॥

वस्तुतस्तु निर्लेपजीवस्य गुणैश्चित्तादिभिश्च सम्बन्ध एव नास्ति मिथ्याध्यासत्याग एव तत्याग उच्यत इत्याह। जाग्रदिति जाग्रत् जागरः—

> सत्त्वाज्जागरणं विद्याद्रजसा स्वप्नमादिशेत्।
> प्रस्वापं तमसा जन्तोस्तुरीयं त्रिषु सन्ततमिति॥

वक्ष्यमाणगुणात एव हेतोर्बुद्धेर्वृत्तयः जीवस्तु विलक्षणस्तत्तदवस्थारहित एव कुतस्तासां साक्षित्वेनैव विनिश्चितः ॥ २७ ॥

किञ्च यद्यपि गुणाः सर्वथैव जीवस्य न भवन्ति तदापि देहाध्यासप्रसादाद्गुणवृत्तीः सः प्राप्नोति ततश्च देहाध्यासभङ्ग सत्येव तान् स त्यजतीत्याह। यर्हि आत्मनो जीवस्यायं देहाध्यासरूपः संसारबन्धोऽभूत्तर्ह्येव स गुणवृत्तिदः जीवाय तस्मै गुणवृत्तिप्रदोऽभूत् यर्हि च मयि तुर्ये स्थितः सन् जह्यात् इमं संसृतिबन्धं त्यजेत् तदा गुणचेतसां गुणानां चेतसश्चान्योऽन्यं स्वत एव त्यागो भवति ॥ २८ ॥

अहंकारकृतं बन्धमात्मनोऽर्थविपर्ययम् ।
विद्वान्निर्विद्य संसारचिन्तां तुर्ये स्थितस्त्यजेत् ॥ २९ ॥
यावन्नानार्थधीः पुंसो न निवर्तेत युक्तिभिः ।
जागर्त्यपि स्वपन्नज्ञः स्वप्ने जागरणं यथा ॥ ३० ॥
असत्त्वादात्मनोऽन्येषां भावानां तत्कृता भिदा ।
गतयो हेतवश्चास्य मृषा स्वप्नदृशो यथा ॥ ३१ ॥
यो जागरे बहिरनुक्षणधर्मिणोऽर्थान् भुङ्क्ते समस्तकरणैर्हृदि तत्सदृक्षान् ।
स्वप्ने सुषुप्त उपसंहरते स एकः स्मृत्यन्वयात्त्रिगुणवृत्तिदृगिन्द्रियेशः ॥ ३२ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एवं स्वस्वरूपं निर्दिश्य ब्रह्मणोऽपि यद्दुरूहं पृष्टं तस्योत्तरमाह । गुणेष्वित्यादिभिः । हे प्रजाः ! पुत्राः गुणेषु विषयेषु चेतो विशते गुणाश्च चेतसि विशन्तीति सत्यं गुणाश्चेतश्चोभयं मदात्मनो मदंशस्य जीवस्य देहः देहस्य हेतुत्वात् गुणवासनामयं चेत एव जीवस्य विविधदेहधारणे हेतुरित्यर्थः ॥ २५ ॥

कथं तर्हि तत्त्यागस्तत्राह । गुणेषु चेति । चित्तमभीक्ष्णं गुणसेवया पुनः पुनस्तत्संस्कारेण गुणेषु आविशत् गुणाश्च चित्तप्रभवा अभीक्ष्णं तद्वासनायुक्ताच्चित्तात्प्रकर्षेण भवन्त्युत्पद्यन्ते तथा यद्यपि परस्परं ग्रथितमेतदुभयं तथापि जीवो मद्रूपः सन् त्यजेत् अहं सच्चित्स्वरूपो भगवदात्मकः सदा निर्विकारः गुणचेतसी मम स्वरूपनिबन्धने न भवतः किन्त्वनित्ये इति भगवत्स्वरूपवद्गुणादिवैलक्षण्यज्ञानवान् सन् त्यजेदित्यर्थः "धर्मो नित्यः सुखदुःखे त्वनित्ये जीवो नित्यो हेतुरस्याप्यनित्य" इति भारते व्यासवचनात् ॥ २६ ॥

ननु जाग्रदाद्यवस्थावतो जीवस्य कुतो निर्विकारत्वं कुतो वा गुणादिवैलक्षण्यमिति चेत्तत्राह । जाग्रदिति । जाग्रदाद्यवस्था गुणतो गुणैः सत्त्वादिभिर्हेतुभूतैर्बुद्धिवृत्तयो भवन्ति न तु जीवस्वरूपे स्वतो भवन्ति यतो जीवस्तासां वृत्तीनां साक्षित्वेन साक्षाद्द्रष्टृत्वेन विनिश्चितः विवेकिभिरितिशेषः अहं स्वप्नानद्राक्षं सुखमहमस्वाप्सं न किञ्चिदवेदिषमित्यादिप्रत्यभिज्ञानात् तस्मात्ताभ्यो ऽवस्थाभ्यो विलक्षणो जीवः ॥ २७ ॥

ननु यद्येवमवस्थाविलक्षण एव जीवस्तर्हि अहमस्वाप्समहं जागर्मीत्याद्यवस्थावत्वप्रतीतिः कथं कदा वा तद्राहित्यमिति चेत्तत्राह । यर्हीति । संसरणेनानात्मन्यात्मानं बध्नातीति संसृतिबन्धोऽहङ्कारः स आत्मनो गुणवृत्तिदः आत्मनो जीवस्य गुणकार्यवृत्तीः स्वप्नाद्यवस्था ददातीति तथा तस्मादयं जीवात्मा तुर्ये मयि अवस्थात्रयातीते मयि वर्तमाने तुर्ये शुद्धस्वरूपे जीवेऽवस्थितस्तुष्टः तुरीयस्वरूपानुसन्धानवानिति यावत् यर्हि यदा जह्यात् तं संसृतिबन्धनमहङ्कारं त्यजेत् तस्मिन् काले गुणचेतसों त्यागः गुणानां चेतसश्च त्यागो विश्लेषो भवेत् ॥ २८ ॥

---

### भाषा टीका ।

हे पुत्रो हो ! गुणों मे चित्त प्रविष्ट होता है चित्त में गुण प्रविष्ट होते हैं हमारा शरीर भूत जो आत्मा है तिसके देह मे गुण चित्त ए दोनों विद्यमान हैं ॥ २५ ॥

निरन्तर गुणों की सेवा करने से चित्त गुणों मे प्रविष्ट होता है चित्तकी वासनाओं से गुण भी चित्तमे प्रविष्ट होते हैं जिसका चित्त मेरे रूप मे आसक्त होजाता है वह इन दोनों को छोड़ देता है ॥ २६ ॥

जाग्रत् स्वप्न सुषुप्ति ए तीनों वृत्ति जीव के त्रिगुणों से होती हैं और जीव तो इन का साक्षी होने से इन अवस्थाओं से भिन्न ही है यह निश्चित है २७ ॥

जब पर्यन्त यह बुद्धि गुणों की वृत्तियों से युक्त है तब पर्यन्त यह संसार बन्ध है जब मेरे शरीर तुर्य रूप जीव मे मनको युक्त करै तब तो उन वृत्तियों के छूटने से चित्त तथा गुण दोनों का वियोग होजाता है ॥ २८ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

कथं संसृत्या बन्धः कथं च तं जह्यात्तदाह । अहंकारेण कृतं बन्धमात्मनोऽर्थविपर्ययमानन्दाद्यावरणेनानर्थहेतुं विद्वान् जानन् संनिर्विद्य दुःखमेतदिति ज्ञात्वा तुर्ये स्थितो भूत्वा संसारचिन्तां संसारोऽबुद्धिकृतं किमहिचन्तामभिमानं तत्कृतां भोगचिन्तां च त्यजेदिति ॥ २९ ॥

यावदेवं न त्यजेत्तावत्तस्य कर्मज्ञानादि सर्वं व्यर्थमित्याह । यावदिति । यद्यपि जागर्ति कर्मादिषु तथाऽपि स्वपन्स्वप्नानपश्यन्निव भवति यतोऽज्ञः असम्यग्दर्शी अज्ञजागरस्य स्वप्नत्वे दृष्टान्तः स्वप्न इति ॥ ३० ॥

ननु कथं चैवंप्रमितवर्णाश्रमकर्मादिनानार्थधीर्निवर्तेत तत्राह । असत्त्वादिति । भावानां देहादीनां तत्कृता भिदा वर्णाश्रमादिरूपा गतयः स्वर्गादिफलानि हेतवः कर्माणि चास्याऽऽत्मनो मृषा अविद्यावच्छिन्नो वेद इति भावः ॥ ३१ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

युक्तिभिरित्युक्तं ता युक्तीराह । य इति । यथा स्थूलान्देहादीन्समस्तकरणैश्चक्षुरादिभिर्भुङ्क्ते कथंभूतान् अनुक्षणधर्मिणः बालकबाल्यतारुण्यादिधर्मवतो यश्च स्वप्ने हृदि जागरदृष्टसदृशान्वासनामयान्भुङ्क्ते यश्च सुषुप्ते तान् सर्वानुपसंहरति स एकः कुतः त्रिगुणवृत्तीरवस्थात्रयद्रष्टा ननु जाग्रदवस्थां सर्वेन्द्रियाणि पश्यन्ति स्वप्नं मनः सुषुप्तिं तत्संस्कारशेषा बुद्धिः कथमात्मा तद्द्रष्टा तत्राऽऽह । इन्द्रियेशः ननु इन्द्रियेशा अपि विश्वतैजसप्राज्ञा भिन्नाः न कुतः स्मृत्या प्रतिसंधानेन सर्वावस्थास्वन्वयात् यः स्वप्नानद्राक्षं यश्च तदनन्तरं न किंचिदवेदिषं स एवेतर्हि जागर्मीत्युपाधिभेदेन विश्वादिव्यवहार इति भावः । एतेन बाल्याद्यवस्थास्वपि प्रतिसन्धानेनाऽऽत्मैक्यं द्रष्टव्यम् ॥ ३२ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

तं बन्धं संसारे बुद्धौ चिन्तामध्यासमभिमानं श्लेषेण बुद्ध्याऽध्यस्तया चिन्तां भोगचिन्तां तथाच तत्कृतां भोगचिन्तामिति व्याख्यातम् ॥ २९ ॥

एवं निर्वेदप्रकारेण यावदभिमानकृतनानात्वं न त्यजेत् युक्तिभिर्या जागर इत्यत्र वक्ष्यमाणाभिः ॥ ३० ॥

शङ्कते । नन्विति । वेदप्रमिता वेदप्रमाणज्ञापिता वर्णाश्रमकर्मादिरूपा नानाधीर्भेदबुद्धिः कथं निवर्तेत आदिना फलग्रहः आत्मनोऽन्येषाम् आत्मव्यतिरिक्तानां भावानां देहादीनामसत्त्वाभिप्रायत्वात् तत्कृता देहादिकृता भिदा वर्णाश्रमादिरूपो भेदः एवं गतयः स्वर्गादिफलानि हेतवस्तत्साधनानि कर्माणि च अस्यात्मनः सम्बन्धे मृषैव स्वप्नद्रष्टुः स्वप्ने दृश्यमानराजादिभेदवत् तत्कथमर्थं आज्ञामुपलभेत स्वाराज्यकामो राजा राजसूयेन यजेतेत्यादिभेदप्रतिपादकवेदस्य का गतिरिति चेत् आह अविद्याविषय इति । अविद्या स्वरूपाज्ञानं तद्वन्त एव विषया अधिकारिणो यस्य तादृशो वेदः तथाच त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुनेतिवदात्मानुभविनो न तत्राधिकार इत्यर्थः ॥ ३१ ॥

देहादीनित्यादिना गृहपुत्रादिपरिग्रहः वासनामयान् सूक्ष्मान् तान् सर्वान् स्थूलान् सूक्ष्मांश्च सर्वान् विषयानुपसंहरते अज्ञाने लीनान् करोति न पश्यतीत्यर्थः । तत्संस्कारशेषा तदवस्थाद्वयस्य संस्कारः शेषो यस्याः सा तथा इन्द्रियेशः बहिरिन्द्रियाणामन्तरिन्द्रिययोर्मनोबुद्ध्योश्चेशः स्मृत्यान्वयं दर्शयति । य एवेति अनुस्मृत्यनुभूत्योः समानाधिकरणत्वात् सोऽहं स्वप्नसुषुप्त्योर्द्रष्टाऽभवं स एवाहमिदानीं जागर्मीत्येकस्यैव स्मृत्या सर्वावस्थान्वयाच्च विश्वादयो भिन्नाः किन्तु विशेषणभेदेन विश्वादिव्यवहार औपाधिक एव न वास्तव इत्यर्थः । एतेन जाग्रदाद्यवस्थासु स्मृत्याऽऽत्मन ऐक्येन बाल्ययुवाद्यवस्थास्विति योऽहं बाल्ये क्रीडासक्तो यश्च तारुण्ये तरुणीसक्तः स एवाहमिदानीं वृद्धोऽस्मीति स्मृत्याऽऽत्मैक्यं द्रष्टव्यमित्यर्थः ॥ ३२ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अर्थविपर्ययम् अस्वे स्वमिति बुद्धिरूपं ममकारम् अहङ्कारानन्तरं पठितत्वात् प्रयोजनं विघातं वा निर्विद्येत्युक्तत्वात् तुर्ये स्थितः इति अवस्थात्रयातीतपरिशुद्धजीवात्मस्वरूपानुसन्धाता ॥ २९ ॥

नानाधीर्देवमनुष्याद्यभिमानबुद्धिः युक्तिभिः देहात्मभेदप्रतिपादकयुक्तिभिः यद्यपि जागर्ति तथापि स्वपन् स्वपिति जाग्रद्दशायामप्ययं इत्यर्थः । भ्रान्तिदशायामेव जागराभिमाने दृष्टान्तमाह । स्वप्न इति ॥ ३० ॥

भावानां देवमनुष्याद्याकाराणामात्मन्यसत्त्वात् किं कृता भिदा देवादिभेदः किं कृत इत्यर्थः । तत्कृतेति पाठे देवादिशरीरकृतो भेदः गतयस्तद्बुद्धयः तद्धेतवो दोषाश्च मृषा स्वप्नज्ञानादय इव विनाशिन इत्यर्थः ॥ ३१ ॥

अनुक्षणधर्मिणः प्रतिक्षणपरिणामिनः समस्तकरणैः अपास्तोपरतबाह्यकरणैः सुप्तः सुषुप्तः विलयाद्धरतीति शेषः स एकः अवस्थात्रयेऽप्येकः अन्वयात्प्रत्यभिज्ञानादित्यर्थः त्रिगुणवृत्तिदृक् गुणत्रयफलद्रष्टा ॥ ३२ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

मयि तुर्ये स्थित इत्यनेन यथावस्थितस्वात्मपरमात्मयाथात्म्यानुसन्धानविधुरस्यानादिदेहात्माभिमानस्वतन्त्रात्माभिमानप्रयुक्तो देहसम्बन्धात्मको बन्धस्ततश्च गुणचेतसां परस्परावेश इति सूचितं तत्स्फुटमेवाह । अहङ्कारकृतमिति । अहङ्कारो ज्ञानैकस्वरूपे आत्मनि देवत्वमनुष्यत्वादिभेदाभिमानरूपः स्वातन्त्र्याभिमानरूपश्च तेनानादिना कृतमात्मनो बन्धमर्थविपर्ययमर्थस्य परमपुरुषार्थस्य विपर्ययो विघातो यस्मात्तथाभूतं विद्वान् जानन्निर्विद्य संसारबन्धनादिति शेषः । तुर्ये स्थितः मय्य पूर्ववदर्थः संसारचिन्तां संसृतिबन्धात्कथं मुच्येयमिति चिन्तां त्यजेत् ॥ २९ ॥

अहङ्कारस्य सर्वानर्थनिदानतामाह । यावदिति । नानार्थधीः देवत्वमनुष्यत्वाद्यभिमानबुद्धिः युक्तिभिर्देहात्मभेदप्रतिपादकयुक्तिभिः यावन्न निवर्तेत तावज्जागर्त्यपि यद्यपि जागर्ति तथाप्ययं स्वपित्येव जाग्रद्दशायामपि सुप्त इवास्ते इत्यर्थः भ्रान्तिदशायामेव जागराभिमाने दृष्टान्तमाह । स्वप्ने जागरणं यथेति । नहि स्वप्नं प्रपश्यन् तं स्वप्नमिति जानाति किन्तु जागरमेवाभिमन्यते एवमज्ञानेन देहमात्मत्वेन पश्यन् तद्भ्रमात्मकमिति जानाति किन्तु यथार्थमवैति अतो यावद्देहविलक्षणमात्मानं यथावन्न जानाति तावन्निपुणोऽप्यज्ञ एवातश्चानर्थ इति भावः ॥ ३० ॥

ननु तुर्यस्थितिमात्रेण कथमनादिकालानुवृत्ताहङ्कारादित्याग इत्यत आह । असत्त्वादिति । आत्मनः सतो ज्ञानैकरूपस्यान्येषां भावानां देवमनुष्याद्याकाराणामौपाधिकत्वेन नित्यमस-

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

त्वादभावात् मुक्तात्मस्वदर्शनादिति भावः । तत्कृता भिदा देवादिशरीरकृतो बालत्वयुवत्वब्राह्मणत्वादिभेद गतयस्तद्धुतयः तत्तत्तयोऽन्ये इतरे दोषाश्च कर्मवश्यत्वादयो मृषाभूता इवानित्या इत्यर्थः । मृषाभूतस्य हि शुक्तिरजतादेरधिष्ठानासाधारणाकाराग्रहणप्रयुक्तप्रतीतेस्तदग्रहरूपनिवृत्तिसामग्रीसमवधाने सति निवृत्तिदर्शनादनित्यत्वं तद्वदहङ्कारप्रयुक्तानां देवाद्याकारतत्कृतभेदतद्धितद्धेतुभूतदोषाणामनादित्वेऽपि मुक्तात्मस्वदर्शनेनाग्नत्वस्वनिश्चयादनित्यत्वात् भ्रान्त्यानां विनाशसामग्रीसमवधाने सति विनाशदर्शनात्तुर्यस्थितिमात्रेण तत्त्यागः सम्भवतीति भावः । यद्वा देवाद्याकाराणामात्मनोऽसत्त्वात्तेषां प्रकृतिपरिणामरूपत्वेनातद्भूतत्वादात्मस्वरूपेऽभावात्तत्कृतभेदादयो मृषा आत्मस्वरूपे न सन्ति असतां च कथञ्चिदन्यत्र प्रतीयमानानां प्रतीतिमूलभूतदोषनिवृत्तौ निवृत्तिर्दृष्टा यथा परमार्थभूताङ्गुलपवष्टम्भजतिमिरादिनिवृत्तौ चन्द्रे द्वित्वनिवृत्तिः यथा पित्तोपहतचक्षुषः सम्यक्चिकित्सया पित्तोपहतौ तन्निमित्तस्य शङ्खगततया प्रतीतस्य पीतिम्नो निवृत्तिः तद्वत्तुरीयस्थित्यात्मकसमीचीनोपायेन निरवशेषमहङ्कारनिवृत्तौ तत्प्रयुक्तदेवाद्याकारतत्कृतभेदादिनिवृत्तिः निरवशेषमहङ्कारनिवृत्तिश्च मुक्तिदशायामेव ब्रह्मविदामप्युपायदशायां तिमिरपित्तादिसद्भावदशायां द्वित्वपीतिमादिरिवाहङ्कारस्यानुवृत्तिदर्शनात् देवाद्याकारतत्कृतभेदादीनां मिथ्यात्वमभ्युपगत इति न भ्रमितव्यम् अन्यत्र सतां ततोऽन्यत्र तेषां मिथ्यात्वेऽपि स्वाश्रये सत्यत्वात् यद्वा आत्मन इति पञ्चम्यन्तं ज्ञानैकस्वरूपस्वभावादात्मनोऽन्येषां भावानामसत्त्वादसच्छब्दवाच्याचेतनकार्यत्वात्तत्कृता भेदादयः गतीनामसत्त्वं प्रकृतिपरिणामात्मकान्तःकरणव्यापारत्वेनेत्यवगन्तव्यं मृषा आत्मस्वरूपे मिथ्या न सन्तीत्यर्थः । अतो निवर्त्तन्ते इतिभावः । यथा स्वप्नदृशः स्वप्नदर्शनानि सम्यक्प्रबोधेन निवर्तन्ते तद्भेदादयोऽप्यामोक्षानुवृत्ता तुर्यस्थित्या निवर्तन्त इत्यर्थः ॥ ३१ ॥

तदेवं सत्त्वरजस्तमोगुणनिमित्तजागराद्यवस्थारूपबुद्धिवृत्तिसाक्षित्वेऽपि वस्तुतस्तदन्वयरहितस्य जीवस्वरूपस्य ब्रह्मात्मकत्वेनोपासनमपि गुणचेतसां मिथस्त्यागहेतुरिति सूचितं तदेव स्फुटमाह । य इति त्रिभिः । यो जीवः । जागरे समस्तैः करणैरिन्द्रियैरनुक्षणं प्रतिक्षणपरिणामात्मको धर्मः स्वभावो येषामस्ति इति तथा तानर्थान् शब्दादिविषयान् भुङ्क्ते शब्दादिविषयाणां हि—

तदेव प्रीतये भूत्वा पुनर्दुःखाय जायते ।
तदेव कोपाय यतः प्रसादाय च जायते ॥

इत्युक्तरीत्या सुखदुःखाद्यापादनरूपानुक्षणधर्मित्वं यतश्च स्वप्ने तत् सदृशान् जागरावस्थानुभुक्तविषयसमानान् स्वप्नद्रष्टृकानुभाव्यत्वतत्कालमात्रावस्थायित्ववैधर्म्यसद्भावात्सदृशानित्युक्तं साधर्म्यस्य वैधर्म्यगर्भत्वादन्यथा तत्तदेव स्यादिति न सारूप्यम् अर्थान् भुङ्क्ते इत्यनुषज्यते यश्च यः स्वप्ने सुषुप्तौ उपसंहरते विषयभोगानिति शेषः स एकः एकरूपः ज्ञानैकस्वरूपस्वभाव इत्यर्थः । यद्वा सः अवस्थात्रयान्वयी जीवः एक एव ननु प्रत्यवस्थं भिन्नः अनेन 'स एव तु कर्मानुस्मृतिशब्दविधिभ्यः' इत्यधिकरणपूर्वपक्षनिरासः तत्र हि किं सुप्त एव पुनर्जागरसमये उत्तिष्ठति उतान्य इति संशय्य तस्य सकलोपाधिविनिर्मुक्तस्य ब्रह्मणि सम्पन्नस्य मुक्तादविलक्षणत्वेन प्राचीनशरीरेन्द्रियसम्बन्धाभावादन्य एवेत्याशङ्कनम् ऐक्ये हेतुः । स्मृत्यन्वयादिति । स्मृतिरनुस्मृतिः प्रत्यभिज्ञा प्रत्यभिज्ञानादित्यर्थः स्मृतिग्रहणं कर्मशब्दविधीनामप्युपलक्षणं तत्र स्मृतिरेवाह सुप्तः स एव प्रतिबुद्धोऽस्मीत्येवरूपा कर्म तु सुषुप्तेन पूर्वकृतं पुण्यपापरूपं तत्त्वज्ञानात्प्राक् तेनैव भोक्तव्यं शब्दोऽपि सुप्तः प्रबुद्धः स एवेति दर्शयति "त इह व्याघ्रो वा सिंहो वे"त्यादिना यद्यद्भवन्ति तथा भवन्तीत्यनेन विधयश्च मोक्षार्थाः सुषुप्तस्य मुक्तत्वेऽनर्थकाः स्युरिति तदधिकरणसिद्धान्तार्थहेतवः । त्रिगुणवृत्तिदृक् त्रिगुणवृत्तीनां जागरादीनां दृग्द्रष्टा तत्र हेतुरिन्द्रियेशः कर्मनिमित्तप्राकृतेन्द्रियप्रवर्तनवान् इत्यर्थः ॥ ३२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

नन्वनेनोपायेन गुणनिमित्तबन्धत्यागोऽस्तु अहङ्कारनिमित्तबन्धत्यागस्य क उपाय इतिमन्दाशङ्कामहङ्कारकृतबन्धोऽपि गुणहेतुक एवेत्येकएव नामान्तरेणोच्यत उपायोऽप्ययमेवेत्याशयेन परिहरति । अहङ्कारकृतमिति । अस्वरूपेऽप्यहङ्कारममकाराभ्यां रजोगुणोत्कार्यताभ्यां कृतमिमं बन्धमात्मनो जीवस्यार्थविपर्ययं दुःखलक्षणमर्थं विद्वान् निर्विद्य नित्यासारता बुद्धिं कृत्वा तुर्ये भगवति स्थितः संसारचिन्तां त्यजेदित्यन्वयः ॥ २९ ॥

ननु कियन्तं कालं संसारानुवृत्तिरत्राह यावदिति । हरेः स्वातन्त्र्यादियुक्तिभिर्जीवस्यास्वातन्त्र्यादियुक्तिभिरनयोर्जीवपरयोरेकत्वबुद्धिः एकस्य हरेर्भिन्नत्वबुद्धिरिति नानार्थधीमिथ्याज्ञानं यावन्न निवर्तेत तावदसौ जाग्रत्यपि स्वपन् निद्रालुरज्ञः संसारयैव स्वप्नजागरणं यथा जाग्रत्त्वबुद्धिः—

भिन्नस्य त्वेकभावेन तथैकस्य च भेदतः ।
ज्ञानं नानार्थधीः प्रोक्ता नानात्वादर्थतद्धियोरिति

वचनात् उक्त एवार्थो नान्य इति ॥ ३० ॥

अभेदज्ञानस्य श्रुतियुक्तिसिद्धत्वात्तस्यैव मुक्तिहेतुत्वात्तस्य च ग्राह्यत्वाच्चेतनाद्भिन्नस्य जडस्य तदेकत्वकल्पनमद्वितीयस्यात्मनो भेदकल्पनं नानार्थधीरित्यर्थकल्पनोपपत्तेरुक्तमानस्यात्मेतरस्य मिथ्यात्वेन सर्वस्योपपत्तिरिति तत्राह । असत्त्वादिति । आत्मनो ज्ञानादिगुणपूर्णस्य हरेरन्येषां भावानां ब्रह्मादिसर्वपदार्थानामसत्त्वादशक्तत्वात्तेषां सर्वशक्तिमता हरिणा अभिदा किं कृत्वा कया युक्त्या केन मानेन वा कृता सिद्धा केनापि न सिद्धेत्यर्थः । तत्त्वमस्यात्माद्वितीयः बोधत्वादित्यादिमानसद्भावादत्राह । गमयन्त्यवगमयन्त्यभीष्टमर्थमिति गतयो वचनानि गतय इति । गमयन्त्यवगमयन्त्यभीष्टमर्थमिति गतयो वचनानि हेतवो लिङ्गज्ञानानि चात्याभिमतानि मृषा न साधकानि स्वप्नदृशो यथा स्वप्नस्य जाग्रत्त्वज्ञानानि यथा अविद्यमानानि न स्वाभीष्टसाधकानि स्वमतरीत्या चैवमित्यभिप्रायः—

अभिदा किंकृतैतेषां भावानां परमेश्वरे ।
यतो सत्त्वमशक्तत्वाद्भावानां तस्य शक्तता ॥
ततः सत्त्वे साधुभावः सत्त्वमित्युच्यते बुधैः ।
साधुभावश्च शक्तस्य ततोऽन्या साधुता कुतः ।
अभेदे जगतो विष्णोर्या वाचो ये च हेतवः ॥
स्वप्नजाग्रत्कल्पनवत्सर्वे ते भ्रमवादिनः ।

इतिवचनात् ॥ ३१ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ननु परमात्मभेदस्याप्राप्तत्वेन तद्भेदस्य भ्रमत्वं कथमापाद्यत इत्याशङ्क्य प्राप्तिमापाद्य प्रतिषेधति । यो जागर इति । यो जीवस्य दक्षिणाक्षिस्थितो विश्वाख्यो हरिर्जागरे जाग्रदवस्थायां गुणधर्मिणः चक्षुरादिवर्तिनः क्षणधर्मवतो बहुविधानर्थान् भुङ्क्ते अस्वतन्त्रजीवस्य दर्शयति स्वप्ने च कण्ठस्थः समस्तकरणः संवशीकृतेन्द्रियः तैजसाख्यो विष्णुः हृदि मनसि संस्काररूपेण स्थितांस्तत्सदृशान् जाग्रदर्थसदृशान् पदार्थान् जीवस्य दर्शयति यश्च सुप्ते सुप्त्यवस्थायां हृदि स्थितः प्राज्ञाख्यः परः उपसंहरते इन्द्रियाणि ओषः विषयेभ्य इन्द्रियाण्याहृत्य जीवानन्दं पश्यति तस्य स्वरूपानन्दं भोजयति स्वयं च विहितानन्दं भुङ्क्ते स विश्वादित्रिरूप एकः भेदरहितः कुत इति तत्राह । स्मृत्यन्वयादिति । स्मृतीत्युपलक्षणं श्रुतिस्मृतिमानेभ्य इत्यर्थः भुङ्क्ते इत्यस्यानुभवतीत्यर्थं परित्यज्य दर्शयति इत्यर्थकथने किन्नियामकमत्राह । त्रिगुणेति त्रिगुणवृत्तीः जाग्रत्स्वप्नसुषुप्तीः पश्यतीति त्रिगुणवृत्तिदृक्—

> दक्षिणाक्षिस्थितो विष्णुर्भुङ्क्तेऽर्थान् जाग्रति स्थितान् ।
> कण्ठसंस्थस्तथा स्वप्नान् जीवानन्दं च सुप्तिगः ॥
> श्रुत्यन्वयात्स्मृतिभ्यश्च स एकः परमेश्वरः ।
> अस्वतन्त्रस्य जीवस्य स्वतन्त्रो जाग्रदादिदः ॥
> स्वयं स्वप्नादिहीनः सन् क्रीडते पुरुषोत्तम इति ।

स्वप्ने शारीरमभिप्रहत्यासुप्तः सुप्तानभिचाकशीतीत्यादिश्रुतिस्मृतिभ्य उक्त एवार्थः अत्र हरेः साक्षित्वं सुखैकभोक्तृत्वं च तात्पर्यार्थः नत्वनानन्दानुभवस्तदतीतत्वात् कुत इति तत्राह । इन्द्रियेश इति । इन्द्रियप्रवृत्तिसमर्थस्य तद्भोग्यदुःखानुभवस्यानुचितत्वात् अनेन तुर्यस्य विश्वाद्यैकत्वमुक्तं भवति ॥ ३२ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

पुनर्विविच्य तत्त्यागमेव शिक्षयति । अहमिति । तुर्यं मय्येवेति ज्ञेयम् ॥ २६—३२ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

उक्तमेवार्थं स्पष्टयन्नाश्वासयति । अहंकारेण देहे अहम्बुद्ध्यैव कृतबन्धं विद्वान् जानन् कीदृशम् आत्मनोऽर्थविपर्ययं आनन्दाद्यावरणेनानर्थहेतुं निर्विद्य तं त्यक्त्वा तुर्यं मद्यानन्दरूपे स्थितः सन् संसारभयभावनां त्यजेत् ॥ २९ ॥

किञ्च यावन्नानार्थधीः नानाविषयग्रहणं न मम धर्म इत्याकारकयुक्तिभिर्न निवर्तेत तावत् जागर्त्यपि संसारबन्धान्मुक्तोऽपि स्वपन् संसारबद्ध एव अज्ञः सः अज्ञान्येवोच्यते स्वप्नमध्ये एव स्वप्नाद्यथा जागरणं तथैव तस्य अज्ञानमध्ये एव ज्ञानमित्यर्थः ॥ ३० ॥

ननु कथं वेदप्रमितवर्णाश्रमकर्मादिनानाधीर्ज्ञानिनो निवर्तेत तत्राह असत्त्वादिति । अन्येषां भावानां देहाद्यभिमानानाम् असत्त्वाभि-
व्याप्त्वात् तत्कृता देहाद्यभिमानकृता वर्णाश्रमादिरूपा भिदा गतयः स्वर्गादिफलानि च हेतवः कर्माणि च अस्य जीवात्मनो मृषा मिथ्यैवेत्यर्थः देहादीनां तदभिमानानां स्वर्गादीनां फलानां तत्साधनानां च प्रातीतिकत्वेन सत्यत्वेऽपि जीवस्य तत्सम्बन्धाभावात्ते मिथ्यैव शृङ्गस्य सत्यत्वेऽपि शशस्य शृङ्गसम्बन्धाभावात् शशशृङ्गं मिथ्यैवेत्यर्थः स्वप्नदृशः स्वप्ने द्रष्टुर्जीवस्य स्वाप्निकवस्तूनां मिथ्यात्वं पुनश्च स्वप्नजन्ये स्वप्ने परमान्नभोजनस्य तत्साधनस्य दुग्धतण्डुलाद्याहरणस्य च मिथ्यात्वं यथा ॥ ३१ ॥

युक्तिभिरित्युक्तं ता एव युक्तीराह । यः खल्वर्थान् देहादीन् समस्तकरणैश्चक्षुरादिभिर्भुङ्क्ते कथंभूतान् अनुक्षणधर्मिणः क्षणिकबाल्यताारुण्यादिधर्मवतः यश्च स्वप्ने हृदि जागरदृष्टसदृशान् वासनामयान् भुङ्क्ते यश्च सुषुप्ते तान् सर्वानुपसंहरति स एकः कुतः त्रिगुणवृत्तिदृक् अवस्थात्रयद्रष्टा ननु जाग्रदवस्थां सर्वेन्द्रियाणि पश्यन्ति स्वप्नं मनः सुषुप्तिं तत्संस्कारशेषा बुद्धिः कथमात्मा तद्द्रष्टा तत्राह । इन्द्रियेशः । ननु इन्द्रियेशा अपि विश्वतैजसप्राज्ञा भिन्ना एव न स्मृत्या प्रतिसन्धानेन सर्वावस्थास्वन्वयात् योऽहं स्वप्नानद्राक्षं पश्चात् न किञ्चिदवेदिषं स एवेदानीं जागर्मीत्युपाधिभेदेनैव विश्वादिव्यवहार इति भावः । एतत्क्रमेणैव देहादात्मनः पार्थक्यं द्रष्टव्यम् ॥ ३२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

इममेवार्थं स्पष्टयति । अहंकारेति । अहङ्कारेण कृतं बन्धमनात्मन्यात्माभिनिवेशम् आत्मनोऽर्थविपर्ययं सुखत्वानुकरणेन दुःखत्वापादकं विद्वान् जानन् सन् निर्विद्य अहं ममास्पदेभ्यो निर्विद्य दुःखहेतुज्ञानेन वैराग्यं कृत्वा संसारचिन्तां संसरणहेतुभूतविषयचिन्तनं तुरीयस्वरूपे स्थितः संत्यजेत् ॥ २९ ॥

एवं विचारेण मुमुक्षुणाविद्विषयाः त्यजेत्तावत्तस्य संसारनिवृत्तिर्नेत्याह । यावदिति । पुनाति पवित्रयत्यात्मानं संसाराग्निः सारयतीति पुमान्पुरुषार्थाद्धः "पुरुषत्वे चाविस्तरामात्मा स हि विज्ञानेन संपन्नतमो विज्ञानं वदती"त्यादिश्रुतेः तस्य पुंसः यावन्नानार्थधीः नानाविषयेषु पुरुषार्थबुद्धिः युक्तिभिर्विषयानर्थरूपत्वेन प्रतिपादिकाभिर्न निवर्तेत तत्र दोषबुद्धिर्न जायते तावत्स विषयेषु जागर्त्यपि स्वपन् स्वपित्येव यतोऽज्ञः तत्र दृष्टान्तमाह । स्वप्ने जागरणं यथेति । यथा कश्चित्पुरुषः स्वप्ने जागरित्वा कं चिद्व्यापारं करोति पुनः परमार्थतो जागरणे तद्व्यवहारो मृषा भवति तथा नानार्थे अर्थबुद्धिर्यस्य न निवर्तेत तस्य सर्वकर्म ज्ञानादिकौशलं व्यर्थमेव ॥ ३० ॥

ननु रूपरसादिमन्नानापदार्थानां प्रत्यक्षादिप्रमाणसिद्धत्वाद्दुर्घनप्रयत्नसाध्यत्वाच्च कथं तद्विषया बुद्धिर्निवर्तेतेति चेत्तत्र युक्तिभिरित्युक्तं ताभिरेव समाधानमाह । असत्त्वादिति । आत्मनोऽन्येषां भावानां रूपरसादिमत्कार्यद्रव्याणाम् असत्त्वात्परिणामित्वात्तत्कृता भिदा तादृग्गुणविशिष्टपदार्थकृता भिदा भेदः इयं स्त्री सुन्दरी इयं कुरूपा इदमन्नं सुरसगन्धस्पर्शादिमत्त्वात्प्रियं इदं सुर-

एवं विमृश्य गुणतो मनसस्त्र्यवस्था मन्मायया मयि कृता इति निश्चितार्थाः ।
संछिद्य हार्दमनुमानसदुक्तितीक्ष्णज्ञानासिना भजत माऽखिलसंशयाधिम् ॥ ३३ ॥
ईक्षेत विभ्रममिदं मनसो विलासं दृष्टं विनष्टमतिलोलमलातचक्रम् ।
विज्ञानमेकमुरुधेव विभाति माया स्वप्नस्त्रिधा गुणविसर्गकृतो विकल्पः ॥ ३४ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सगन्धादिविरहितत्वादप्रियमेव वस्त्रगृहादिकमुहलीयं तथा तेषां गतयो हेतवश्च गम्यन्ते प्राप्यन्ते विषया आभिरिति गतयः साधनभूताः क्रियाः तथा तेषां हेतवः कारणानि वर्णाश्रमधनादयः यद्यप्य-ज्ञस्य प्रवृत्तिनिष्ठस्य सत्या नित्यसुखरूपाः प्रतीयन्ते तथाप्यस्य मुमुक्षोर्विदुषः परमार्थोपयोगित्वाभावात्स्वप्नवदेव न श्वरत्वाच्च किञ्चित्करत्वेन मृषैव तत्र दृष्टान्तः स्वप्नदृशो यथा स्वप्नान् पश्यतः पुरुषस्य तत्कालः स्वाप्निकाः पदार्थाः सत्या अपि तस्यैव प्रबुद्धस्य ते मृषा न किञ्चिदप्यर्थं कुर्वन्तीत्यर्थः । तत्र तावत् मुमुक्षोर्विदुषः स्त्रीमात्रप्रसङ्गः "स्त्रीणां स्त्रीसङ्गिनां सङ्गं त्यक्त्वा दूरत आत्मवानि"ति वाक्यात्त्याज्य एव परन्तु तस्यापि तत्त्वविचारार्थं भगवद्भजनार्थं वा देहनिर्वाहमात्रमपेक्षितं तत्तु प्रारब्धप्राप्तेन यादृशतादृशान्नवस्त्रनिवासस्थानेन भवत्येव नतु रसगन्धादिमद्द्रव्यस्यावश्यकत्वं तथोक्तं महाभारते—

शरीरं व्रणवत्पश्येदन्नं च व्रणलेपवत् ।
व्रणशोधनवत्पानं वस्त्रं च व्रणपट्टवदिति ॥

अत्र मायावादिनः ननु कथं वेदप्रतिपादितवर्णाश्रमकर्मादीनामनिर्वर्तनत्याज्यत्व साधनानां वेदानामसत्यासत्कृता भिदा वर्णाश्रमादिरूपा गतयः स्वर्गादिफलानि कर्माणि चात्मनो मृषा अविद्याविषयो वेद इति व्याख्यातवन्तः "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ती"त्यादिश्रुत्या तत्त्वविविदिषार्थं वर्णाश्रमादिकर्मणां सर्वैर्विद्वद्भिरङ्गीकृतत्वात्तद्विरोधापत्तेः किञ्च वेदस्याविद्यावद्विषयत्वे वर्णाश्रमाणां तद्धर्माणां च वेदविहितत्वेन मृषात्वे सति सन्यासाश्रमतद्धर्मस्यापि तदन्तःपातित्वेन कर्मत्यागपूर्वकशिखामुण्डनं दण्डधारणं भिक्षाटनमेकाहारोपवासादिरूपज्ञानविचारप्रणवजपादिरूपसन्यासिधर्मानुष्ठातृणां भूतभविष्यद्वर्तमानानां सन्यासिनामप्यविद्यावत्त्वाविशेषात्संसारिधर्मवत्त्वेन मुमुक्षुत्वव्याघातः अपिच मोक्षफलस्य श्रवणमनननिदिध्यासनज्ञानभक्त्यादिरूपसाधनस्यापि वेदप्रतिपाद्यत्वात्तस्यापि मृषात्वापत्त्या वेदान्तादिसर्वशास्त्रस्य मृषात्वेन सङ्कोचापादकं विकल्पं तस्माद्ईश्वरफलस्य स्त्रीपशुपुत्रादिकामुककर्माभिकृत्यतत्फलविधायकवेदभागस्य तथात्वमुच्यते चेत्तत्रवतु तथा नतु सर्ववेदस्य तथात्वं तत्कुशुचितमुक्तदोषप्रसङ्गात् ॥ ३१ ॥

पूर्वमात्मनो ऽवस्थात्रयवैलक्षण्यं तत्साक्षित्वं चोक्तं तदेवोपपादयति । यदिति । यो जागरे जाग्रदवस्थायां बहिरर्थान् बाह्यविषयान् रूपरसगन्धादिमद्द्रव्याणि समस्तकरणैश्चक्षुरादिभिः सर्वेन्द्रियैर्भुङ्क्ते कथं भूतान् क्षणभङ्गुरान् तथा क्षणे परिणामित्वाद्-अनित्यत्वात् यश्च स्वप्ने हृदि तत्सदृशान् तद्वदेव जाग्रदनुभूतसदृशसंस्कारात्मना हृदि मनसि स्थितान् यश्च सुषुप्ते सुषु-प्त्यवस्थायां तान् सर्वानुपसंहरते स एकः तत्र हेतुः इन्द्रियेशः चक्षुरादिबाह्येन्द्रियाणां मनसो बुद्धेश्चेशः स्वामी प्रेरक इत्यर्थः यद्यपि जाग्रदाद्यवस्थानां विश्वतैजसप्राज्ञा अधिष्ठातारः प्रसिद्धास्तेषामवस्था भेदेन भिन्नत्वान्नात्येकरूपता तथाप्यात्मनोऽवस्थानां साक्षित्वेनैकत्वमाह । त्रिगुणवृत्तिदृगिति त्रिगुणवृत्तीनामवस्थानां द्रष्टा एक इत्यर्थः । आत्मन एकत्वे प्रत्यभिज्ञाप्रमाणमाह । स्मृत्यन्वयादिति । यः स्वप्नान्तमद्राक्षं यश्च तदनन्तरं सुषुप्तमस्वाप्सं न किञ्चिदवेदिषं स एव जागर्मीति प्रतिसन्धानेन सर्वास्ववस्थास्वन्वयात् अनुगतत्वात् अवस्थानां व्यभिचारात्तिस्रुणामवस्थावैलक्षण्यं तत्साक्षित्वं चात्मन इति ॥ ३२ ॥

---

### भाषा टीका ।

देहादिकों में अहंकार के करने से यह बन्धन है जिससे कि आत्मा के अर्थका विपरीत भाव होरहा है तिससे विद्वान् पुरुष उसको दुःख रूप जानकर मेरे शरीर जीव दुर्ग रूप में आश्रित होकर संसार की चिन्ता को त्याग देवै ॥ २९ ॥

जब तक शब्दादि विषयों में पुरुषकी नाना प्रकारकी बुद्धि युक्तियों से निवृत्त नहीं होती है तब तक वह पुरुष जगा हुआ भी सोताही सरी का है जैसे कि स्वप्न में अपने को जगा हुआ देखने से भी जागना नहीं होता है ॥ ३० ॥

आत्मा के साथ में और देहादि पदार्थों का यथार्थ सम्बन्ध न होने से गुण कृत होने से उन सबों से आत्मा में देवादि भेद प्रतीत होता है तथा इसकी कर्म कृत जो गति है औ जो उसके हेतु हैं वे सब इसके कर्म कृत अज्ञान से हो रहे हैं जैसे कि स्वप्न में क्षणिक पदार्थ भी चिरस्थायी मालूम पड़ते हैं ॥ ३१ ॥

जो आत्मा जाग्रत अवस्था में बाहिर के क्षणिक पदार्थो को सब इन्द्रियों से भोगता है और स्वप्न में उसी प्रकार के पदार्थों को हृदय मात्र में भोगता है और स्वप्न में सब भोगों को समेट लेता है वह आत्मा एकही है क्यों कि वह सब इंद्रियो का प्रेरक है और जागरण में उसको तीनों अवस्थाओं के भोगों का स्मरण होता है ॥ ३२ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

ततः किमत आह । एवमिति । गुणतो या एता मनसस्त्र्यवस्थास्ता मदविद्यया मयि कृता न तत्त्वतः सन्तीति निश्चित

दृष्टिं ततः प्रतिनिवर्त्य निवृत्ततृष्णस्तूष्णीं भवेन्निजसुखानुभवो निरीहः।
संदृश्यते क्व च यदीदमवस्तुबुद्ध्या त्यक्तं भ्रमाय न भवेत् स्मृतिरानिपातात्॥ ३५ ॥
देहं च नश्वरमवस्थितमुत्थितं वा सिद्धो न पश्यति यतोऽध्यगमत्स्वरूपम्।
दैवादपेतमुत दैववशादुपेतं वासो यथा परिकृतं मदिरामदान्धः ॥ ३६ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका।

आत्मरूपोऽर्थो येन ते यूयमखिलसंशयानामाधिम् आधीयन्तेऽस्मिन्नित्याधिरहंकारस्तं संछिद्य हार्दं हृदि स्थितं मां भजत केन च्छित्त्वा तदाह॥ अनुमानैः सदुक्तिभिः सतामुपदेशैः श्रुतिभिश्च तीक्ष्णेन ज्ञानखड्गेन॥ ३३ ॥

अनुमानानि दर्शयति। इंक्षेतेति। इदं जगद्विभ्रममीक्षेत तत्र हेतवः मनोविजृम्भितत्वात् दृष्टत्वाद्विनाशित्वाच्च स्वप्नवत् प्रतिचञ्चलत्वाच्चालातचक्रवत्। ननु, भ्रमोऽपि निर्विषयः कथं स्यात् तत्राह॥ विज्ञानमिति। निगमनम् तस्मात्त्रेधा योऽयं गुणपरिणामकृतो विकल्पो भेदः स मायेति॥ ३४॥

तस्मात्ततो दृश्याद्दृष्टिं प्रतिनिवर्त्य निजसुखानुभवो भवेत् तन्नैश्चल्यार्थं च निवृत्ततृष्णस्तूष्णीं निरीहश्च भवेत् मनोवाक्कायव्यापाररहित इत्यर्थः। ननु, देहवतः सर्वथाप्येतद्दृष्टिप्रतिनिवर्तनायोगात्पुनः संसारः स्यादेव तत्राह। संदृश्यत इति। क्वचिदावश्यकाहारादिषु यद्यपीदं संदृश्यते तथापि पूर्वमवस्तुबुद्ध्या त्यक्तं तत्पुनर्मोहाय न भवेदेव किंतु देहपातपर्यन्तं स्मृतिरिव स्मृतिः संस्कारमात्रेणावभासो भवेदित्यर्थः॥ ३५ ॥

एतदेवोपपादयति। देहमिति। आसनादुत्थितमुत्थाय तत्रैव स्थितं ततः क्वचिदपेतं निर्गतं पुनस्तत्रैवोपेतं वा देहमपि नानुसन्धत्ते कुतोऽन्यत् यतो येन देहेन स्वरूपमध्यगमज्ज्ञातवांस्तं देहं यतः कारणादिति वा परिकृतं परिहितं वासो गतं स्थितं वा यथा न वेत्ति तद्वत्॥ ३६॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी।

ततः सर्वावस्थास्वात्मनः ऐक्यज्ञानानन्तरम् एवं विमृश्य मननं कृत्वा। मदविद्यया मम स्वरूपविषयकाज्ञानेन। कृताः कल्पिताः तदाह तत्र छेदनसाधनमाहेत्यर्थः॥ ३३ ॥

अनुमानानि ज्ञानोत्पत्तौ सहकारीणि। तत्र विभ्रमत्वे। निर्विषयाः निराश्रयाः। निगमनमिति। अयं भावः परार्थानुमाने हि पञ्चावयववाक्यं तत्र जगद्विभ्रममीक्षेतेति प्रतिज्ञा (१) दृष्टत्वादि हेतुः (२) यद्यद्दृष्टत्वाद्यवच्छिन्नं तत्तद्भ्रममात्रं यथा स्वप्नादि इत्युदाहरणम् (३) यथा भ्रमत्वव्याप्यदृष्टत्वादिमान् स्वप्नादिस्तथा चेदं जगदित्युपनयः (४) तस्मात् त्रिधा योऽयं गुणपरिणामकृतो विकल्पः स माया मिथ्येति साध्योपसंहाररूपं निगमनमिति (५)॥ ३४॥

तन्नैश्चल्यार्थं सुखानुभवस्य स्थिरत्वार्थं निवृत्ततृष्णा इत्यादि पदत्रयस्य यथा सङ्ख्यं मनोवाक्कायव्यापाररहिता इत्यर्थः संस्कारेति। प्रारब्धजसंस्कारमात्रेण जीवन्मुक्तस्य दग्धपटवत् छिद्रलादिवदवभासो बाधितानुवृत्तिमात्रं भवेदित्यर्थः॥ ३५॥

एतदेव संस्कारमात्रेणावभासनमेव। तत्र आसन एव॥ ३६॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

मायामयं प्रकृतिकार्यम् अखिलसंशयरूपमाधिं संछिद्य मां भजतेत्यन्वयः॥ ३३॥

इंक्षेतेति। इदं स्थूलोऽहमित्याद्यनुसन्धानं मनसो विलासं मनःकार्यं विभ्रममीक्षेत तदेवोपपादयति। इदं मनुष्यादिशरीरं हि अलातचक्रवत् प्रतिक्षणध्वंसि तद्वत्स्यादनित्यं शरीरं नित्य आत्मा भवति माया स्वप्ने प्रकृतिकार्यं स्वप्ने भ्रमे ज्ञानस्वरूपात्मा बहुधा देवादिरूपेणाभाति जाग्रदादिरूपेण त्रिधा विकल्पश्च गुणविसर्गकृत इत्यर्थः॥ ३४॥

ततः शरीरादिभावाच्च दृष्टिं प्रतिनिवर्त्येति ज्ञानेन्द्रियनियमनमुक्तं निवृत्ततृष्ण इति मनोनियमनं तूष्णीमिति वागादिकर्मेन्द्रियनियमनमुक्तं निजसुखानुभव इति समाधिरुक्तः भ्रमाय न भवेत्समाधिं न गलयेदित्यर्थः आनिपातात् आमरणात्स्मृतिर्भगवद्ध्यानं कर्तव्यम् अन्यथा मनः कालुष्यात्समाधिरेव गलितः स्यादिति भावः॥ ३५॥

समाधिदशायां देहाकारो न प्रतिभातीत्याह। देहं चेति। अवस्थितमासीनमुत्थितं वेत्यतिशयोक्तिः तिष्ठतोऽपि कदाचित्समाधिसम्भवात् तदुक्तः सिद्धः निष्पन्नसमाधिः अध्यगमत् साक्षात्कृतवान् स्वरूपं निष्कृष्टस्वरूपं दैवादुपेतमित्यादि वासोविशेषणम्॥ ३६॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

एवं मनसस्त्रिधा ऽवस्थाश्च मन्मायया स्वस्वकर्मानुगुणमदीयसङ्कल्परूपज्ञानेन गुणतः सत्त्वादिमनोनिष्ठगुणेभ्यो निमित्तेभ्यो मयि कृता इत्येवमित्थं विमृश्य विचार्येति सम्बन्धः आत्मनः कृत्स्नचिदचिदुपादानकारणत्वाच्चिदचिद्गतावस्थानां तद्द्वारा स्वात्मपर्यन्तत्वाभिप्रायेण मयीत्युक्तं निश्चितोऽर्थः सकलानर्थनिवारकमत्प्राप्तिसाधनं मदुपासनमेव परमप्रयोजनं येस्ते यूयं हार्दं हृद्गतमखिलसंशयाधिमनुमानसदुक्तितीक्ष्णज्ञानासिना संछिद्य मां भजतेत्यन्वयः संशयाः किमहं देहाकार उत तद्विलक्षणः किं स्वतन्त्रः किं वा परतन्त्र इत्यादिरूपाः त एवाधिः पीडा ज्ञानमत्र यथावस्थितात्मपरमात्मस्वभावानुसन्धानात्मकम् अनुमानं देहेन्द्रियविषयाणामन्ततो दुःखावहत्वानित्यत्वहेयत्वादिव्याप्तिग्रहणं तेन तन्मूलं वैराग्यं विवक्षितं सदुक्तयः

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

शारीरकन्यायात्मिका: वेदान्तार्थविचारवैराग्याभ्यां निशितेन तीक्ष्णेन ज्ञानरूपेणासिना इत्यर्थः ॥ ३३ ॥

अनुमानमेव दर्शयति । ईक्षतेति । विशेषेण भ्रमः आत्मत्वभोग्यत्वादिभ्रमो यस्मिन् मनसो विलासो यस्मिन्सङ्कल्पविकल्पविषयमित्यर्थः । इदं देवादिशरीरतदुपभोग्यविषयादिकं सर्वमिति धर्मिणो निर्देशः विनष्टमिति साध्यस्य दृष्टमिति साधनस्यालातचक्रमिति दृष्टान्तस्य तद्विशेषणमतिलोलमिति ईक्षेत इत्थमनुमिनुयादित्यर्थः अथ सदुक्तिविचारात्मकज्ञानाकारं दर्शयति । विज्ञानमिति विज्ञानं जीवस्वरूपं "विज्ञानं यज्ञं तनुते, यो विज्ञाने तिष्ठन्" इति श्रुतेः तदेकं ज्ञानैकस्वरूपस्वभावम् उरुधेव देवमनुष्यादिरूपेण बहुधेव विभाति न तत्स्वरूपेऽस्ति देवमनुष्यादिभेद इति भावः । स च विकल्पो देवमनुष्यादिभेदः त्रिधा त्रिप्रकारा ये गुणाः सत्त्वादयस्तेषां विसर्गः परिणामः तेन कृतः मायास्वप्नः सर्वस्य सर्वशक्तेर्मम मायया प्रकृत्या सङ्कल्परूपज्ञानेन वा निमित्तेन स्वप्नः स्वप्न इव कृतः यथा स्वप्नः सङ्कल्पविकल्पप्रवणमतस्सः प्रतीयमानः पुनः प्रबोधेन निवर्तते तद्वत् स्वात्मपरमात्मयाथात्म्यानुसन्धातुरात्मगतत्वेन प्रतीयमानः पुनरामोक्षानुवृत्तात्मोपासनान्निवर्तत इति ॥ ३४ ॥

दृष्टिमिति ततः शब्दादिभ्यः दृष्टिं प्रतिनिवर्त्य शब्दादिबाह्यविषयानगृह्णन्नित्यर्थः निवृत्ता तृष्णा विषयाभिलाषो यस्य सः निरीहः निर्व्यापारः तत्र दृष्टिं प्रतिनिवर्त्येति बाह्यज्ञानेन्द्रियाणां चक्षुरादीनां नियमनमुक्तं निवृत्ततृष्ण इति मनसः निरीह इति कर्मेन्द्रियाणां निजसुखानुभव इति समाधिरुक्तः तूष्णीं भवेदिति देहानुचिन्तननिषेधः एवं विधस्य पुंसः पूर्वमवस्तुबुद्ध्या अनात्मबुद्ध्या—

> यत्तु कालान्तरेणापि नान्यसंज्ञामुपैति वै ।
> परिणामादिसम्भूतां तद्वस्तु नृप ! तच्च किम् ॥

इत्यात्मन्येव वस्तुशब्दस्य मुख्यवृत्तत्वस्मरणात् त्यक्तमिदं देहादिकं च समाधिव्यतिरिक्तशयनासनभोजनादिदशासु यद्यपि स्वदृश्यतेऽनुसन्धीयते तथापि तद्भ्रमाय समाधितत्त्वज्ञानाय न भवेत् यद्वा पुनर्देहान्तरसम्बन्धनिमित्तदेहात्माभिमानादिरूपभ्रमाय न भवेत् । ननु, तुर्यं स्थितः अनुमानसदुक्तितीक्ष्णज्ञानासिना निजसुखानुभव इति तुर्यस्थितिज्ञानानुषङ्गशब्दविवक्षितं ज्ञानं किं तत्त्वमस्यादिवाक्यजन्यरूपं किं वा ध्यानोपासनादिशब्दवाच्यं ध्यानादिशब्दवाच्यत्वेऽपि किञ्चित्कालानुवृत्तिरूपं किं वा आपच्छरीरपातानुवृत्तिरूपमित्यत्राह । स्मृतिरानिपातादिति । स्मृतिर्भगवद्ध्यानं आशरीरपातात्कर्तव्यमित्यर्थः । अन्यथा मनःकालुष्यात्समाधिरेव गलितः स्यादिति भावः । आनिपातादित्यनेन क्षिप्रावृत्तज्ञानव्युदासः स्मृतित्वेन वाक्यजन्यस्य ॥ ३५ ॥

तूष्णीं भवेदित्युक्तं तूष्णीम्भावं विवृणोति—देहं चेति । सिद्धः निष्पन्नसमाधिमान् देहमवस्थितमासीनमुत्थितं वा न पश्यति नानुसन्धत्ते तत्र हेतुत्वेन देहं विशिनष्टि । नश्वरमिति । हेयत्वादिति भावः । किञ्च, यतः स्वरूपं निष्कृष्टात्मस्वरूपमध्यगमत्साक्षात्कृतवान् अतः समाधिदशायां देहो न प्रत्येतव्य इत्यर्थः । दैवादुपेतमिति वासोविशेषणं यथा छदिरामदेन मद्यपानमदेनान्धो विवेकरहितः पुमान् परिकृतं परिधृतं वासो वस्त्रं दैववशादुपेतं प्राप्तमथ तस्मादपेतं वा नानुसन्धत्ते तद्वदित्यर्थः ॥ ३६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

उक्तार्थानुवादपूर्वकमुक्तज्ञानफलं विधत्ते । एवमिति । एवमुक्तविधं विमृश्यालोच्य कथमित्युक्तं स्मारयति । गुणत इति । सत्त्वादिगुणात् उद्भूता मननात्मन उद्दिष्ट इति मनसो जीवस्य जाग्रदाद्यवस्था मन्मायया मदिच्छया मयि मदाधारत्वेन कृता विहिताः पर्याप्ता इति निश्चितार्थाः यूयमनुकूलश्रुत्यादिमानेन सतां महताम् उक्त्या वचनेन तीक्ष्णेन निशितधारेण ज्ञानखड्गासिना हार्दं हृदि रूढमखिलसंशयाधिं संछिद्य मा मां भजतेत्यन्वयः अनेन मुक्तिरप्युक्ता भवतीति ज्ञातव्यम् ॥ ३३ ॥

ननु, जाग्रदादिषु प्रवर्तकत्वेन वर्तमानस्य हरेः निश्चादिरूपाणां भेदो नास्तीत्युक्तं तत्र वृत्तिभेदेन प्रतीयमानो भेदः कथं प्रत्येतव्य इत्यत आह । ईक्षेतेति । जाग्रदादिषु प्रतीयमानमिमं परमात्मभेदं विभ्रमज्ञानमूलं वीक्षेत—

> जाग्रदादिकरो देवः परमात्मैक एव तु ।
> इति वीक्षेत सततं मुच्यते संसृतेरतः ॥

इतिवचनात् अज्ञाननिमित्तहेतुमाह । मनस इति । मनसो विलासं मनोविकाररूपत्वात् एतत्कुतोऽत्राह । दृष्टमिति । गुरूपदिष्टशास्त्रदृष्ट्या यदा विभ्रमोऽयमिति दृष्टस्तदैव नष्टो भवति यस्मात् इतोऽपि मनोविलास इत्याह । अतिलोलमिति । अस्यादिविचारे क्षिप्रविनाशित्वात् अत्र लुप्तोपममाह । अलातचक्रमिति । अलातचक्राकारभ्रमवत् परमात्मभेदभ्रमं विद्यादित्यर्थः । एवं सुरनराद्याहितलक्षणवस्तुभेदोऽपि भ्रान्त इत्याशयेनाह । विज्ञानमिति । विज्ञानमानन्दं ब्रह्मेति श्रुतेः । एकं स्वगतभेदशून्यं ब्रह्म नानारूपमिव भाति । अज्ञानामिति शेषः । यथा स्वप्ने एकैव गजादिमाया बहुधा प्रतीयते तथेति मिथ्याज्ञानकारणमाह । त्रिगुणेति । सत्त्वादिभिस्त्रिभिर्गुणैस्तत्सर्गैस्तत्कार्यैः पापादिभिश्च कृतः पर्याप्तो विकल्पो मिथ्याज्ञानं कारणमिति शेषः । तमआदिगुणनिमित्तपापादिदुष्कर्मकलुषितान्तःकरणानामज्ञानामसुरप्रकृतीनां सच्चिदानन्दरूपमेकं बहुधेव प्रतीयत इति भावः । "देहमेकं स्ववस्थासु प्रादुर्भावेषु केवलं । ज्ञानानन्दैकसद्रूपं भ्रान्त्या भिन्नं प्रपश्यति । सा च भ्रान्तिर्विनश्येत यदा भ्रान्तित्ववेदनम् । भातिचिरं विनश्येच्च न स्थिरं दिग्भ्रमादिवत् । त्रिगुणैर्मोहिता जीवा भ्रान्तिमात्रं जनार्दनम् । पश्यन्ति बहुधा स्वप्ने यथैकं बहुधा क्वचित् । अभिन्नेऽपि विभिन्नेषु व्यवहारो यथा भवेत् तथैव व्यवहाराय शक्तत्वान्नैव दूषणम् । ईशस्य तु तदन्येषामपि यच्छक्तिदायकः" इत्यनेन मानेन—

> अशक्यकोऽन्यतिशक्योऽपि विनिवर्तयितुं भ्रमः ।
> ईशस्य गुरुसत्पस्या यदि शुद्धमनाः पुमान् ॥

इत्यनेन मानेन निर्णीतत्वादिदमेव तात्पर्येण ज्ञातव्यम् अन्यदुःशास्त्रमिति सिद्धम् ॥ ३४ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

एवंविधं मिथ्याज्ञानं मोक्षार्थिना हेयमिति भावेनाह। दृष्टिमिति। यतो पापफलं मिथ्याज्ञानं ततो निवृत्ततर्षः विषयाभिलाषरहितः दृष्टिं मिथ्याज्ञानं प्रतिनिवर्त्य परमात्मभेदादिदर्शनरहितो भूत्वा तूष्णीं भवेत् निरन्तरध्यानमन्तरया प्रवृत्त्यन्तरविधुरः स्यात् किमनेन पाषाणवदवस्थानेनेति तत्राह। निजेति। अनेन स्वरूपसुखस्यानुभवो यस्य स तथा। ननु, नित्यनैमित्तिकादिक्रियादर्शनात् प्रवृत्त्यन्तरशून्यः कथमत्राह। निरीह इति। निषिद्धचेष्टाविधुरो भवति न तु क्रियामात्रशून्यः। ननु, संसारवशात् वर्तन् मूढजनस्थितं भ्रमं दृष्ट्वा स्वयं मुह्यतीति किं न स्यादित्यत्राह। संदृश्यत इति। यदि क्वचिन्मूढजने स्थितमितं परमात्मभेदज्ञानं ज्ञानिनां संदृश्यते तथाप्यवस्तुबुद्ध्या आविद्यमानोऽयं भवभ्रम इति ज्ञानेन त्यक्तं मिथ्याज्ञानं पुनर्भ्रमाय भ्रमजननाय न भवेत् तत्र निमित्तमाह। स्मृतिरानिपातादिति। नैरन्तर्यभावेन पातो यस्मिन् तन्निपातनमन्धन्तमः मोक्षमारभ्य तावत्पर्यन्तं स्मृतिर्यस्मात् ज्ञानिनो निपातपर्यन्तं स्मृतिज्ञानमस्तीति यत्तस्मादित्यर्थः। ज्ञानफलं मोक्षः कर्मफलं स्वर्गं एवं मिथ्याज्ञानफलमन्धन्तमः इति स्मरति ज्ञानीति "निस्त्रैगुण्यभावनिकामयोः" इति याद्वः॥ ३५॥

ननु, त्रिगुणसर्गकृतो विकल्प इत्यत्र त्रिगुणवक्तॄणां विकल्प इत्युक्तम्, तत्र ज्ञानिनोऽपि देहवत्त्वेन त्रिगुणात्वाद्विकल्पः सम्भाव्यत इत्यत्राह। देहञ्चेति। निरन्तरं भगवन्तं ध्यायन् जीवस्वरूपमारभ्य परमात्मपर्यन्तानि तत्त्वानि तत्तत्स्वरूपं यथावदागमदृष्ट्यादिविलक्षणतया तारतम्यतापरोक्षीचकारेति यत्तस्माद्देहाभिमानरहितो ध्यानरूढो नावस्थितमुत्थितं वा देहं नाऽनुपश्यति कीदृशं देहम्? दैवादुपेतं प्राप्तं दैववशाद्भगवत्प्रेरितकर्मवशात् वियुक्तं च मदिरामदान्धः मद्यपानजातमदविस्मृतात्मज्ञानः पुरुषः परिहृतम् आच्छादितं वासो यथा दृढीकरणाय यत्नं न करोतीत्यतः त्रिगुणकृतदेहाभिमानाभावात्तत्कृतविकल्पो नास्तीति भावः॥ ३६॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

पूर्वं तस्मात्त्वमुद्धवोत्सृज्येत्यादिना यदुक्तं तदेव खलु एवं गुरूपासनयेत्यादिना स्थापितं तदेव पुनः श्रीहंसवाक्येन द्रढयति। एवं विमृश्येति। एवं विमृश्य मननं कृत्वा भजत ध्यायत यूयम्॥ ३३॥

ततश्च ज्ञानोत्पत्तिप्रकारमाह। ईक्षेतेति। इदं जगत् विभ्रमं विशेषेण भ्रमो यत्र तद्रूपमीक्षेत यतो मनोविलासमयं तथा दृष्टं यद्यद्घटादि तत्सद्विनष्टं नश्वरमिति सर्वमीक्षेत अलातचक्रवदतिलोलं सन्ततभ्रमणानुकूलं चेक्षेत। यस्माद्विज्ञानं परमात्मचैतन्यं सर्वैकमेव। माययैव तु उरुधेव भाति इत्यशक्तेस्तस्याः स्वातन्त्र्यं वारयति परमात्मसान्निध्यमात्रबलत्वात् तस्माद्गुणविसर्गकृतो विकल्पः स्वप्न इव मायामात्रबलस्फूर्तिरित्यर्थः॥ ३४—३५॥

जीवन्मुक्तमाह। देहं चेति द्वाभ्याम्॥ ३६—३७॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

ततः किमत आह—एवमिति। गुणतो या एता मनसो बुद्धेऽवस्थास्ता मदविद्यया मयि कृता न तत्त्वतः सन्तीति निश्चित आत्मरूपोऽर्थो यैस्ते यूयम् अनुमानैः सदुक्तिभिः सतामुपदेशैः श्रुतिभिश्च तीक्ष्णेन ज्ञानखड्गेन हार्दं हृद्भवमवस्थात्रयं सञ्छिद्य मां माम् अखिलसंशयानामाधिं पीडकं नाशकं भजत॥ ३३॥

एवमवस्थात्रयाभिःसम्बन्धस्यात्मनः पार्थक्यमनुभूय पूर्वं यदहन्तास्पदं ममतास्पदीभूतं वस्त्वासीत्तदिदं जगत् विभ्रमं विशिष्टो भ्रमो यत्र तथा भूतमीक्षेत कोटिकोटिजन्मसु तत्र भ्रमादेवाहंताममतयोरारोपितत्वात् मनसो विलासं कौतुकास्पदं मनसो विशिष्टो लासो नृत्यं यत्र तदिति वा विनष्टमनित्यं तत्राप्यलातचक्रवदतिलोलम्। ननु, तर्ह्येवंभूतद्वैतदर्शनान्निर्भेदब्रह्मानुभवो नोपपद्येत? तत्राह। विज्ञानमेकं यद्ब्रह्म तदेव उरुधेव विभाति न तु परमार्थत उरुधा यतो माया माययैव त्रिधा गुणविसर्गकृतो विकल्पः स्वप्नः स्वप्नवदचिरस्थायी॥ ३४॥

यस्मादेवं तस्मात्ततो दृश्यात् दृष्टिं प्रतिनिवर्त्य तस्मिन् निवृत्ततृष्णस्तूष्णीं च भवेत्। मनोवाग्व्यापाररहित इत्यर्थः तत्र सामर्थ्यमाह। निजसुखानुभव इति। अतो निरीहः कायिकव्यापाररहितश्च ननु देहवतः सर्वथैतद्दृष्टिप्रतिबन्धायोगात् पुनः संसारः स्यादेव तत्राह। संदृश्यते इति। कदाचिदावश्यकाहारादिषु यद्यपीदं संदृश्यते तथापि पूर्वमवस्तुबुद्ध्या यत्त्यक्तं तत्पुनर्मोहाय न भवेदेव किन्तु देहपातपर्यन्तस्मृतिरिव स्मृतिः संस्कारमात्रेणावभासो भवेदित्यर्थः॥ ३५॥

ज्ञानसिद्धस्य जीवन्मुक्तस्य दशामाह। देहमिति द्वाभ्याम्। आसनादुत्थितम् उत्थाय पुनस्तत्रैव वा स्थितं न पश्यति नानुसन्धत्ते यतः स्वरूपं ब्रह्मानुभवम् अध्यगमत् प्राप्तः अत्र दृष्टान्तः दैवादुपेतं कदाचित्कस्मादागतं कदाचित्परिधापनादुपेतं वा वासः परिकृतं परिहितं मदिरामदान्धो नानुसन्धत्ते॥ ३६॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

अवस्थावैलक्षण्ये तत्साक्षित्वनिरूपणस्य प्रयोजनमाह। एवमिति। एवमुक्तप्रकारेण विमृश्य विचार्य गुणतः सत्त्वादिगुणहेतो मनसो निमित्तभूतस्य तिस्रोऽवस्था व्यवस्था। अयम्भावः यद्यपि जाग्रदवस्था बाह्येन्द्रियैः स्वप्नो मनसा सर्वलयेन सुषुप्तिरिति सर्वसम्मता प्रक्रिया तथापि जाग्रदवस्थायामपि सर्वव्यवहाराणां मन एव निमित्तभूतं मनस्युपात्त सर्वेन्द्रियाणां वा न सम्यक्कार्यं निष्पद्यते सुषुप्तिरपि नेन्द्रियमात्रस्य लयेन जायते किन्तु मनस एवातः सर्वत्र मनसः प्रधाननिमित्तत्वान्मनस इत्युक्तम् ता मन्मायया ममानादिकर्मरूपाविद्यापरपर्यायभूतमायया मयि जीवे कृता इत्येवं निश्चितार्थाः सद्गुरूपदेशार्थं निश्चितोऽर्थ आत्मावस्थाविरूपो यैस्ते तथाभूताः सन्तः अनुमानसदुक्तितीक्ष्णज्ञानासिना अखिलसंशयाधिं सञ्छिद्य हार्दं मां भजतेत्यन्वयः। तत्र श्रुत्यनुकूलस्तर्कोऽनुमानं न तु शुष्कतर्कः सदुक्तयः सतां वेदस्य

तत्सर्वव्यापकं चित्तमाकृष्यैकत्र धारयेत् ।
नान्यानि चिन्तयेद्भूयः सुस्मितं भावयेन्मुखम् ॥ ४३ ॥
तत्र लब्धपदं चित्तमाकृष्य व्योम्नि धारयेत् ।
तच्च त्यक्त्वा मदारोहो न किंचिदपि चिन्तयेत् ॥ ४४ ॥
एवं समाहितमतिर्मामेवाऽऽत्मानमात्मनि ।
विचष्टे मयि सर्वात्मन्ज्योतिर्ज्योतिषि संयुतम् ॥ ४५ ॥
ध्यानेनेत्थं सुतीव्रेण युञ्जतो योगिनो मनः ।
संयास्यत्याशु निर्वाणं द्रव्यज्ञानक्रियाभ्रमः ॥ ४६ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां
संहितायां वैयासिक्यामेकादशस्कन्धे
चतुर्दशोऽध्यायः ॥ १४ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

यादृशमित्यध्येयत्वेन सविशेषणमुक्त्वा ब्रह्मात्मकमित्यध्येयतया शनैर्विशेषणत्यागेन ध्यानमेव समाधिपर्यन्तमाह । तदिति त्रिभिः । एकत्राङ्गे अन्यान्यङ्गानि न चिन्तयेत् एकत्रेति यदुक्तं तदेवाङ्गं दर्शयति । सुस्मितमिति ॥ ४३ ॥

व्योम्नि सर्वकारणरूपे तच्च कारणत्वमपि त्यक्त्वा मदारोहो मयि शुद्धे ब्रह्मण्यारूढः सन् किञ्चिद्ध्यातृध्येयविभागमपि न चिन्तयेत् ॥ ४४ ॥

मामेवाऽऽत्मनि विचष्टे आत्मानं च सर्वात्मनि मयि संयुतं विचष्टे ज्योतिर्ज्योतिषि संयुक्तमिवेत्यन्वयः ॥ ४५ ॥

एवंभूतसमाधिपर्यन्तध्यानस्य फलमाह । ध्यानेनेति । मनो युञ्जतः सम्बन्धिनः द्रव्यज्ञानक्रियाभ्रमोऽधिभूताधिदैवाध्यात्मरूपो दृश्यद्रष्टृदर्शनरूपो वा भ्रमो निर्वाणं शान्तिं सत्वरमाप्नोतीति ॥ ४६ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
चतुर्दशोऽध्यायः ॥ १४ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

इन्द्रियार्थेभ्यः इन्द्रियाणि श्रोत्रादीनि । सारथिना सहायरूपेण ॥ ४२ ॥

सर्वव्यापकं सर्वाङ्गाभिनिविष्टम् ॥ ४३ ॥

सर्वैकमिसङ्गे मुखे ॥ ४४ ॥

मां तत्पदार्थमेव चिद्रूपत्वेनानुगतमात्मनि त्वम्पदार्थे विचष्टे आत्मानं त्वम्पदार्थं ज्योतिः किरणमिव ज्योतिषि किरणमालिनि संयुतं नित्याश्रितं विचष्टे ॥ ४५ ॥

एवम्भूतेति । एवम्भूतः परस्परं ध्यातृध्येयैक्यभावनाभूतो यः समाधिस्तत्पर्यन्तस्य ध्यानस्य । द्रव्यादिपदानां यथासंख्यमर्थत्रयं ज्ञेयम् ॥ ४६ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीराधारमणदासगोस्वामिकृतदीपिकादीपने टिप्पणे
चतुर्दशोऽध्यायः ॥ १४ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

द्युमत् द्युतिमत् ॥ ४१ ॥

बुद्ध्या भगवद्रूपमेव ध्येयं नान्यच्चिन्त्यमित्यध्यवसायेन सर्वव्यापकं शब्दादिसर्वविषयप्रवणम् एकत्र भगवद्विग्रहे अन्यानि रूपाणि विशेषतो मनोहारित्वादाह । सुस्मितमिति । आकृष्य विषयान्तरेभ्यः आकृष्य ॥ ४२ ॥ ४३ ॥

तत्र विग्रहे लब्धपदमित्यन्वयः व्योम्नि व्योमवदपरिच्छिन्ने दिव्यात्मस्वरूपे कं ब्रह्म खं ब्रह्मेति हि श्रुतिः मदारोहः मत्स्वरूपानुसन्धाननिष्ठः तच्च धारणामपि त्यक्त्वा न किञ्चिदपि चिन्तयेत् समाधौ ध्येयमेव पश्यति ध्यानक्रियामपि न जानाति कुतो विषयान्तरज्ञानमित्यर्थः ॥ ४४ ॥

समाधिदशायां परिशुद्धे जीवात्मन्यन्तरात्मतयाऽवस्थित एव भगवाननुसंधेयः नतु केवल इत्याह । एवं समाहितेति ॥ ४५ ॥

ध्यानेनेति । द्रव्यज्ञानक्रियाश्रमं द्रव्यं तमः ज्ञानं सत्त्वं क्रिया रजः तत्कृतभ्रमान्वितस्मनः उक्तलक्षणं ध्यानेन निर्वाणं मुक्तिं विषयान्तरावगाहनात्समर्थं प्राप्नोतीत्यर्थः ॥ ४६ ॥

इति श्रीमद्भागवतव्याख्याने एकादशस्कन्धीये
श्रीसुदर्शनसूरिकृतशुकपक्षीये
चतुर्दशोऽध्यायः ॥ १४ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

द्युमद्भिर्द्युतिमद्भिः। किरीटादिभिः समन्तात् सुष्ठु अलङ्कृतं तत्र सूत्रं ब्रह्मसूत्रं कटिसूत्रं च सर्वेष्वङ्गेष्ववयवेषु सुन्दरं हृद्यं मनोहरं प्रसादसुमुखेक्षणमनुग्रहसूचकशोभनमुखेक्षणयुक्तं सुकुमारमतिकोमलं तदेवंभूतं मम रूपं सर्वेषु पादादिमूर्धान्तेष्वङ्गेषु मनो दधद्धारयन्नभिध्यायेदिति धारणाध्याने उक्ते ॥ ४१ ॥

इन्द्रियार्थेभ्यः शब्दादिविषयेभ्यो मनसा करणभूतेनेन्द्रियाणि श्रोत्रादीन्याकृष्य प्रत्याहृत्य सारथिना सहायभूतया भगवद्रूपमेव ध्येयं नान्यच्चिन्तयितव्यमित्यध्यवसायात्मिकया बुद्ध्या तन्मनोऽप्याकृष्य सङ्कल्पविकल्पात्मकव्यापारादुपरतं कृत्वा एवं प्रत्याहार उक्तः तन्मानसमाकृष्टमानसं मयि निरतिशयानन्दावहे मयि प्रणयेत्समादध्यादिति समाधिरुक्तः एवं षाडङ्गं चेति अष्टाङ्गयोगस्समुक्तं भवति ॥ ४२ ॥

धारणां प्रपञ्चयति। तदिति। ततः सर्वव्यापकं सर्वं कृत्स्नं विग्रहं व्याप्नोतीति तथा कृत्स्नदिव्यविग्रहगोचरमित्यर्थः—चित्तमाकृष्य एकत्र एकस्मिन्नङ्गे धारयेत् नान्यान्यङ्गानि चिन्तयेत् किन्त्वेकमङ्गं यत्र धार्यं मनोऽत्र आह। भूयः सुस्मितं भावयेन्मुखमात। विशदतो मनोहारित्वादिति भावः। आकृष्येत्यस्य विषयान्तरेभ्य इति शेषः ॥ ४३ ॥

तत्र सुस्मिते मुखे लब्धपदं लब्धं चित्तमनुभूतं पदं भूमरूपविषयं येन तच्चित्तं तत आकृष्य व्योम्नि व्योमवन्निर्मलेऽपरिच्छिन्ने च निरस्तनिखिलदोषे समस्तकल्याणानन्तत्वादिगुणगणयुक्ते च दिव्यात्मस्वरूपे धारयेत् दिव्यात्मस्वरूपस्य व्योमत्वं कं ब्रह्म खं ब्रह्मेति श्रुतिप्रसिद्धम्। व्योम्नि धारयेदित्यनेन यज्ञात्मकमित्यस्योत्तरमुक्तं भवति समाधिस्वरूपमाह। तच्चेति। मदारोहः मत्स्वरूपरूपानुसन्धाननिष्ठः तच्च धारणामपि त्यक्त्वा न किञ्चिदपि चिन्तयेत् समाधिर्हि ध्येयैकस्वरूपः अतो ध्यातृध्यानक्रियादिकमपि नानुचिन्तयेदित्यर्थः ॥ ४४ ॥

समाधिदशायां परिशुद्धं जीवात्मन्यन्तरात्मतयाऽवस्थित एव भगवाननुसन्धेयो न तु केवल इत्याह। एवं समाहितमतिः सर्वात्माऽस्य सर्वेषां सर्वात्मतया तत्र सर्वेषामात्मन्यन्तः प्रविश्य धारके मय्यात्मानं प्रत्यगात्मानम् आत्मनि प्रत्यगात्मनि च मां अन्तरात्मानं विचष्टे पश्यति ज्योतिः सूर्यादिप्रभा ज्योतिषि दीपादौ संयुतमिवात्यन्तम् ॥ ४५ ॥

एवंभूतसमाधिपर्यन्तध्यानस्य फलमाह। ध्यानेनेति। सुतीव्रेणान्तरायानुपहतेन ध्यानेनेत्थं मनो युञ्जतः समादधतो योगिनः द्रव्यज्ञानक्रियाभ्रमः भूतपञ्चकज्ञानेन्द्रियाणि कर्मेन्द्रियाणि द्रव्यज्ञानक्रियाशब्दैर्विवक्षितानि तेषां भ्रमः भूतेन्द्रियसङ्घातात्मकदेहसम्बन्धप्रयुक्तो देहात्मभ्रमः स्वतन्त्रात्मभ्रमश्च स आशु निर्वाणं शमं संयाति भ्रममिति पाठे द्रव्यं तमः ज्ञानं सत्त्वं क्रिया रजः तत्कृतभ्रमान्वितं मनः उक्तलक्षणेन निर्वाणमर्हति विषयान्तराग्रहणाद्दग्धमिव वासनात्यर्थः ॥ ४६ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
चतुर्दशोऽध्यायः ॥ १४ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

विषयपाशाकृष्टत्वेन चित्तेन्द्रियैर्ध्यानं कथमुपपद्यत इत्यतस्तदुपायमाह। इन्द्रियाणीति। तस्मिन् ध्येय एव स्थितमनाः ॥ ४२ ॥

सर्वव्यापकं सर्वाङ्गविषयं चित्तमाकृष्यैकत्र एकस्मिन्मुखाद्यवयवे सर्वावयवस्मरणाशक्तावेकस्मिन्नवयवे धारयेदित्यर्थः ॥ ४३ ॥

तत्र मुखादौ लब्धपदमाकृष्य व्योम्नि सर्वाङ्गेषु धारयेदित्यर्थः। "व्योमेति व्याप्तशब्दः कथञ्चिद्देशादौ न मतः" इति वचनात् विशेषादेकत्वमवयवानामित्यर्थः॥ मय्येव मनस आरोहो यस्य स मदारोहः पुरुषः तच्च धारणाख्यं ध्यानं त्यक्त्वा स्वत एव मनसस्तत्रैव समाहितत्वादयत्नेन जलधौ गाङ्गप्रवाहगमनवच्चिन्तयेत् तदुक्तम्—

यावत्समग्रस्मरणमचलं केशवे भवेत्।
समग्रं चिन्तयेत्तावद्यदा तु विचलेत्ततः॥
प्रत्यङ्गधारणां कुर्यान्मनो यावत्समग्रगम्।
प्रत्यङ्गाभ्यासतो यावत्समग्रेषु स्थिरं मनः॥
तदा पुनः समग्रं तु धारयेद्यत्नतो बुधः।
यदा तु धारणोत्साहं विना तत्राचलं मनः॥
तिष्ठेत्त्यक्त्वा तमुद्योगं शङ्खचक्राम्बुजाङ्किते॥
आरूढचेताः परमे श्रृङ्गाराद्येकधामनि।
नैवान्यच्चिन्तयेत्तस्मात्पूर्णानन्दाच्चतुर्भुजात्॥
ततोऽन्यस्मरणे तस्मान्मनश्चलति सुस्थिरम्।
धारणामपि प्रयत्नेन तस्मात्तूभयं त्यजेत्॥
यावत्स्वारूढचेताः स्याद्विष्णोरूपे चतुर्भुजे।

॥ इति ४४ ॥

उपासनाफलमाह। एवमिति। एवं निरन्तराभ्यासरतं प्रतिदिनं प्रवृद्धप्रेम्णा मय्येव समाहितमतिस्तत्परिपाके सर्वात्मनि देहे आत्मानं ज्ञानादिभिः सादृश्येन स्वामिनं मामेव विचष्टे जीवात्पृथक्स्थितं पश्यति। विनिषेधे पृथग्भाव इति वाक्यः सर्वात्मन् सर्वस्वामिनि ज्योतिषि ज्योतिर्मये मयि संयुतं मदाधारतया स्थितं तस्माज्जातं तस्मिन्नेवोतमिति ज्योतिर्जीवं च पश्यति तारतम्येन बिम्बभावेन स्थितास्तत्त्वाभिमानिन्यो देवताः दृष्ट्वा सर्वाधारं मामन्ते पश्यतीति भावः—

समाधियोगे स्वपूर्णे हृदि पश्यति केशवम्।
जीवं तत्प्रतिबिम्बं च तेनैव सह संस्थितम्॥
तदाधारं तदन्तःस्थं तेनैव सदृशं सदा।
आनन्दज्ञानशक्त्याद्यैः सदा तदवरं गुणैः॥
जीवन्मुक्तौ च मुक्तौ वा सततं तद्वशे स्थितम्।

इत्येतदत्र मानम्—

स्वप्रकाशस्वरूपत्वाज्जीवोऽपि ज्योतिरुच्यते।

इति च ॥ ४५ ॥

दर्शनफलमाह। ध्यानेनेति। सुतीव्रेण निश्चितेन इत्थमुपध्यानेन निदिध्यासनदर्शनेन युञ्जतः सर्वस्मात्प्रेष्ठोऽयमिति ध्यायतो योगिनो ज्ञानिनो द्रव्यज्ञानक्रियाभ्रमः मद्योऽयमिति

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

देहादिविषये ज्ञानेन्द्रियकर्मेन्द्रियविषये च भ्रमतीति भ्रमरूपं प्राकृतमनो निर्वाणं नाशम् आशु संयास्यति यातीत्यन्वयः ॥ ४६ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्

चतुर्दशोऽध्यायः ॥ १४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ॥

अत्र स्वध्येयपदमित्यादिकं मुमुक्षुध्यानत्वात् यद्वा तदनन्तरं ब्रह्मानुसन्धानं मायाबुद्धिसंवेशावशेषलोपेच्छया तल्लोपे च स्वतः श्रीभगवत्स्फूर्त्तिर्भवतीति ब्रह्मभूतः प्रसन्नात्मेतिवत् ॥ ४४ ॥

ज्योतिः किरणं ज्योतींषि किरणमालिनीव संयुतं नित्याश्रितमित्यन्वयः ॥ ४५–४६ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे

चतुर्दशोऽध्यायः ॥ १४ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

साङ्गध्यानार्थं मनस एकाग्रप्रकारमाह । इन्द्रियाणि । चक्षुरादीनि विषयेभ्यो रूपादिभ्यः सकाशात् मनसा आकृष्य मनश्चैव प्रणयेत् तन्मनः बुद्ध्या आकृष्य मयि सर्वतः सर्वाङ्गयुक्ते प्रणयेत् प्रकर्षेण नयेत् ॥ ४२ ॥

सर्वव्यापकं सर्वाङ्गेषु सञ्चरत् चित्तम् आकृष्य एकत्र एकस्मिन्नङ्गे तदेवाह । मुखमिति ॥ ४३ ॥

स्वध्येयपदं ततोऽन्यत्रागच्छत्तत्रैव स्थिरीभूतमित्यर्थः । तस्य तत्र मुखध्यान एव स्वध्येयपदं मुखध्यानमजहदेवेत्यर्थः । आकृष्य देहेन्द्रियादिभ्यः पृथक् कृत्य ननु ध्यानभक्तेरपि पृथक्कुर्यादित्यर्थः । व्योम्नि आकाशे धारयेत् ततश्च तच्च चित्तमपि त्यक्त्वा मदारोहः मयि ब्रह्मण्यारूढः सन् न किञ्चिदपि चिन्तयेत् किन्तु भक्तिकणिकायुक्तो जीवो ब्रह्मैवानुभवेदिति भावः श्रीहंसदेवेन गुणाचेतसोस्त्यागो य उक्तस्तस्यायमेवप्रकार इति ज्ञेयं भक्त्यात्मार्पितमना न पृथग्विचक्षीतेति श्रीकपिलदेवोक्तेः कर्मज्ञानादित्यागस्यैव ध्यानभाक्त्यागस्य तस्यागेच्छायाश्च निषिद्धत्वात् ॥ ४४ ॥

किन्तु ध्यानमपीमयैवेत्याह । एवमिति । समाहिता समाधियुक्ता मतिर्यस्य सः मामेव ब्रह्म आत्मनि जीवात्मनि विचष्टे आत्मानं च सर्वात्मनि मयि संयुतं विचष्टे ज्योतिर्ज्योतिषि संयुतमिति ब्रह्मजीवयोरप्राकृतत्वोपपूर्णज्योतिर्ज्योतिः कर्णार्थं ज्ञापितम् ॥ ४५ ॥

एवंभूतसमाधिपर्यन्तध्यानस्य फलमाह । ध्यानेनेति । युञ्जतः समादधतः द्रव्यज्ञानक्रियासु अधिभूताधिदैवाध्यात्मसु भ्रमः अध्यासरूपः निर्वाणं शान्तिं सम्यक् याति यास्यति ॥ ४६ ॥

इति सारार्थ दर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।

एकादशे सङ्गतः सतसङ्गतोऽभूच्चतुर्दशः ॥ १४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

शुभाङ्गैः किरीटादिभिः आ समन्तात् युतं युक्तं प्रसादेन शोभनं मुखमीक्षणं च यस्मिन् तत् ॥ ४१ ॥

इन्द्रियार्थेभ्यः मनसाकृष्येति प्रत्याहारो दर्शितः क्रमोऽत्र न विवक्षितः प्राणायाममपि संवमः इत्यनेन धारणापि सूचिता ॥४२॥

एकत्र धारयेदित्युक्तं तदेवाह । सुस्मितमिति । मुखमिति चरणाद्युपलक्षणम् ॥ ४३ ॥

श्रीविग्रहध्यानमुक्त्वा स्वरूपध्यानं यदात्मकमित्यध्यात्मरमाह । तत्रेति । तत्र श्रीविग्रहैकदेशे सुस्मितमुखादौ स्वध्येयपदं चित्तम् व्योम्नि व्योमवत्सूक्ष्मे स्वरूपे धारयेत् मदारोहः ध्यानेन मयि आरूढः तच्च स्वरूपध्यानमपि त्यक्त्वा किञ्चिदपि न चिन्तयेत् ध्येयदर्शनजन्यानन्दसंप्लवे निमग्नो भवेदित्यर्थः ॥ ४४ ॥

उपसंहरति । एवमिति द्वाभ्याम् । एवमुक्तप्रकारेण समाहितमतिः आत्मनि ध्यातरि मां ध्येयम् आत्मानं ध्यातारं सर्वात्मन् सर्वात्मनि ज्योतिर्ज्योतिषि सर्वावभासके मयि विचष्ट पश्येत् ॥ ४५ ॥

द्रव्ये देहादौ अहमित्यादिरूपः ज्ञाने स्वपरयोः स्वरूपैकत्वादिरूपः क्रियायां कर्मणि स्वर्गादिपरत्वरूपश्च भ्रमः निर्वाणं शमं संयास्यति ॥ ४६ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे

चतुर्दशाध्यायार्थप्रकाशः ॥ १४ ॥

---

भाषा टीका ।

प्रकाशमान किरीट कडा कौधनी बाजूबंध इनों से सुंदर शोभित सब अंगों से सुंदर मनोहर कृपा करने की सुंदर मुख नेत्र युक्त का ध्यान करै ॥ ४१ ॥

ऐसे सुकुमार रूप को सब अंगों में मन को लगाकर ध्यान करै उस मूर्त्ति में तन्मय होकर सब विषयों से मन के द्वारा इंद्रियों को खैंच कर मनको उसी में लगा देवै ऐसा धीर पुरुष बुद्धि का साहाय लेकर चारों ओर से मेरे में मन को लगावै ॥ ४२ ॥

सब तरफ चले जाने वाला जो मन है तिसको खैंच कर एक ठिकाने मूर्त्ति में धारणा करै फिर भी और अंगों की चिन्ता न करके केवल मंद हास युक्त भगवन्मुख की भावना करै ॥ ४३ ॥

उस मुखारविंद में जब चित्त स्थिर होजावै तब

भाषा टीका।

वहां से उस मन को खैंचकर आकाश सरी के निर्मल समस्त कल्याण गुण युक्त हेय गुण रहित परमात्मस्वरूप में धारणा करै फिर उसको भी छोडकर मेरे में दत्त चित्त होकर फिर कुछ भी चिन्त न नहीं करै इहां ( तच्च त्यक्त्वा ) इसके कहने से परमात्मा के स्वरूप के छोडने का अर्थ नहीं है क्योंकि आगे ( मदारोहः ) यह भी तो कहा है तिससे इहां ऐसा क्रम है कि पहिले से यम नियम आसन प्राणायाम प्रत्याहार ए छै अंग योग के कह आये हैं अब मुखके ध्यान करने में धारणा का कथन किया है उस धारणा का छोडना कहा है तिसके पीछे समाधि लगा कर हमारे स्वरूप के विना दूसरे पदार्थों का स्मरण न करै यह कहने का तात्पर्य है नहीं तो भगवत्स्वरूप को छोडदेगा तो समाधि ही क्या होगा ॥ ४४ ॥

इस प्रकार से सावधान बुद्धि होजाने से अपने आत्मा के विषे इम परमात्मा को सर्वात्मरूप से देख लेता है जैस कि अग्नि के कण और अग्नि का भेद है तिस प्रकार जीवात्मा परमात्मा प्रकाश रूपका भेद है ॥ ४५ ॥

इस प्रकार से अतिशय ध्यान के करने से योगिका मन युक्त होता है तब शीघ्र ही सत्व रजतम तीनों गुणों का भ्रम शांत होजाता है ॥ ४६ ॥

इति श्रीमद्भागवत एकादशस्कन्ध में चौदहवां अध्याय की

श्री वृन्दावनस्थ पं० लक्ष्मणाचार्यकृत

भाषा टीका समाप्त ॥ १४ ॥

---

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे चतुर्दशोऽध्यायः ॥ १४ ॥

## अथ पञ्चदशोऽध्यायः ।

---

श्रीभगवानुवाच ।

जितेन्द्रियस्य युक्तस्य जितश्वासस्य योगिनः ।
मयि धारयतश्चेत उपतिष्ठन्ति सिद्धयः ॥ १ ॥

उद्धव उवाच ।

कया धारणया कास्वित्कथंस्वित्सिद्धिरच्युत ! ।
कति वा सिद्धयो ब्रूहि योगिनां सिद्धिदो भवान् ॥ २ ॥

श्रीभगवानुवाच ।

सिद्धयोऽष्टादश प्रोक्ता धारणायोगपारगैः ।
तासामष्टौ मत्प्रधाना दशैव गुणहेतवः ॥ ३ ॥
अणिमा महिमा मूर्तेर्लघिमा प्राप्तिरिन्द्रियैः ।
प्राकाम्यं श्रुतदृष्टेषु शक्तिप्रेरणमीशिता ॥ ४ ॥
गुणेष्वसंगो वशिता यत्कामस्तदवस्यति ।
एता मे सिद्धयः सौम्य ! अष्टावौत्पत्तिका मताः ॥ ५ ॥
अनूर्मिमत्त्वं देहेऽस्मिन् दूरश्रवणदर्शनम् ।
मनोजवः कामरूपं परकायप्रवेशनम् ॥ ६ ॥
स्वच्छन्दमृत्युर्देवानां सह क्रीडानुदर्शनम् ।
यथासंकल्पसंसिद्धिराज्ञाप्रतिहता गतिः ॥ ७ ॥
त्रिकालज्ञत्वमद्वन्द्वं परचित्ताद्यभिज्ञता ।
अग्न्यर्काम्बुविषादीनां प्रतिष्टम्भोऽपराजयः ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

ततः पञ्चदशे प्रोक्ताः सिद्धयो धारणानुगाः ।
श्रीविष्णुपदसम्प्राप्तावन्तरायतया मताः ॥

एवं मनो युञ्जतो योगिनोऽन्तरा विभूतयः सिद्धयोऽप्यन्तरायप्राया भवन्ति ताः परित्यज्य परमेश्वरपद एव मनो देयमिति वक्तुं सिद्धीराह । जितेन्द्रियस्येति । युक्तस्य स्थिरचित्तस्य ॥ १ ॥

कयेति वितर्के काश्चित्किंनामा कथंचित्कीदृशी वा धारणायाश्च कतीति प्रश्नान्तरे वाशब्दः त्वमेवैतज्जानासि नान्य इत्याशयेनाह । योगिनामिति ॥ २ ॥

धारणास्वष्टादशयोगपारगैः । योगपारगैरिति । त्रिकालज्ञत्वादिक्षुद्रसिद्धीरन्येऽपि जानन्तीति भावः । मह्यमेव प्रधानं मुख्यः स्वभावत आश्रयो यासां ताः मत्सारूप्यं प्राप्तेषु किंचिन्न्यूना भवन्तीति भावः । गुणहेतवः सत्त्वोत्कर्षहेतुकाः ॥ ३ ॥

ताः स्वरूपेणोपदिशति । अणिमेति सार्धैः पञ्चभिः । अणिमा महिमा लघिमा च मूर्तेर्देहस्य तिस्रः सिद्धयः प्राप्तिर्नाम सिद्धिः सर्वप्राणिनामिन्द्रियैः सह तत्तदधिष्ठातृदेवतारूपेण सम्बन्धः । श्रुतेषु पारलौकिकेषु दृष्टेषु दर्शनयोग्येष्वपि सर्वेषु भूविवरादिपिहितेष्वपि प्राकाम्यं भोगदर्शनसामर्थ्यं सिद्धिः शक्तीनां मायातत्कार्यभूतानां प्रेरणम् तच्चेश्वरे मायया अन्येषु वर्तमानां प्रेरणमीशिता नामसिद्धिः ॥ ४ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

विषयभोगेष्वसङ्गो वशिता सिद्धिः यत्कामो यत्सुखं कामयते तत्तदवस्यति तस्य तस्य सीमानं प्राप्नोतीति अष्टमी सिद्धिः औत्पत्तिकाः स्वाभाविक्यो निरतिशयाश्चेत्यर्थः ॥ ५ ॥

गुणहेतुसिद्धीराह । अनूर्मिमत्त्वं क्षुत्पिपासादिराहित्यम् दूरे श्रवणं दर्शनं चेति द्वे सिद्धी मनोवेगेन देहस्य गतिः कामितरूपप्राप्तिः परकाये प्रवेशः ॥ ६ ॥

स्वच्छन्दमृत्युः अप्सरोभिः सह देवानां याः क्रीडास्तासामनुदर्शनं प्राप्तिः संकल्पानुरूपप्राप्तिः अप्रतिहता आ समन्तादुद्गतिर्यस्याः सा आज्ञा चेत्येता दश ॥ ७ ॥

क्षुद्रसिद्धीश्च पञ्चाऽऽह । त्रिकालज्ञत्वमिति । अद्वन्द्वं शीतोष्णाद्यनभिभवः अग्न्यादीनां स्तम्भनम् ॥ ८ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

तदेवं चतुर्दशाध्यायानन्तरम् । धारणानुगतसाधारणाऽनुष-सक्तिभ्यः अन्तरायतया विघ्नतया । अन्तरायप्राया एव विघ्न-प्राया एव कर्मादिविधानान्तु, तावद् योगमतिमिमंतिरप्रमत्तो यावद्भवाब्जकथासु रतिं न कुर्यादित्यनुसारेण सिद्धिमध्येऽपि नान्तराया इति प्रायप्रश्नाय । मयि चेतो धारयत इति स्वार्थे-शिक्षधारणायां मे तत्र मुख्यो हेतुरिति सूचितं तदेवाग्रे व्याख्या-स्यते ॥ १ ॥

कीदृशी किंलक्षणा ॥ २ ॥

धारणाश्चेति कथयतोऽध्याहृतः । मत्प्रधाना इति प्रधानलक्षणा-विशेषणेन किंचिदन्यतोपाधिगतिः मुख्याश्रयत्वञ्च भगवत एव स्वरूपभूतत्वात् भूमानां तासां तत एवान्यत्रोपासकेष्वाविर्भावात् योगिषु तु तदाभास एवेति ज्ञेयं तेषां सम्यक् भगवत्पदाश्रया-भावात् यत्किञ्चित् तत्परत्वाभावे तु तदाभासोऽपि दुर्लभः प्रधानात् सांख्ययोगाभ्यासिनामादेः । अतएव किञ्चिन्न्यूना भव-न्तीति व्याख्यातम् ॥ ३ ॥

स्वरूपेण वस्तुयुक्तसिद्धिसंख्यानं च । अणिमेति युग्मकम् । योगिदेहस्य शिलादावपि प्रवेशप्रयोजकोऽणुत्वलक्षणो गुणोऽणिमा । तथा तस्यैव सर्वव्यापनलक्षणो महिमा । येन सूर्यमरी-चिरूलग्नस्य देहस्य सूर्यलोकप्राप्तिर्भवति स लघुत्वलक्षणो गुणो लघिमा भोगदर्शनसामर्थ्यं पारलौकिकेषु विषयेषु तथा भूवि-वरादिपिहितेषु द्रव्येषु यद्भोगदर्शनं भोगप्राप्तिस्तत्सामर्थ्यं प्राका-श्यमित्युच्यते । नच दर्शनशब्दस्य प्राप्त्यर्थकत्वं कथमिति वाच्यम् । स्वामिभिरपि स्वहक्रीडानुदर्शनमित्यत्रानुदर्शनं प्राप्ति-रिति व्याख्यातत्वात् । परन्तु सूत्रोपाधिकोपासनायास्तत्प्राप्ति-साधनत्वेन वक्ष्यमाणत्वात् । तस्मात् प्राकाम्यमित्येव पाठः प्राचीनः । वाचस्पतिप्रभृतिभिः प्राकाम्यमिच्छानभिघात इति व्याख्यानात् सिद्धिप्रसङ्गे सर्वत्र कोषादौ प्राकाम्यशब्द एव श्रूयते न तु प्राकाश्यमिति तस्माद्दर्शनसामर्थ्यमिति व्याख्या-नस्य दुष्टत्वमत्र केनचित् प्राकाश्यमिति पाठः कल्पित इति गम्यते । तत्र मायावरणमूलप्रकृतौ मध्ये ॥ ४-५ ॥

अनूर्मिमत्त्वमिति सार्धत्रिकम् । कामितरूपप्राप्तिः कामित-स्याभीष्टस्य रूपस्य देवादिरूपस्य प्राप्तिः ॥ ६ ॥

सहेति । तद्दर्शनादप्सरोभिरध्याहृतम् ॥ ७ ॥

स्तम्भनमग्न्यादीनां दाहादिशक्तिप्रतिबन्धनम् ॥ ८ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

॥ १-३ ॥

प्राप्तिः अङ्गुल्या विदूरस्थस्पर्शादिः प्राकाम्यं धारणादि-व्यापारेष्वन्येभ्यः प्रभूतव्यापारक्षमत्वम् ॥ ४ ॥

यत्कामस्तदवस्यति यत्र कामना तं देशं तत्क्षणमेव प्राप्य स्थितो भवति यद्वा दृष्टाद्यभिमतसाधको भवति ॥ ५ ॥

अनूर्मिमत्त्वं पार्थिवादिराहित्यम् अशनाद्यतीतत्वं वा दूर-श्रवणं सर्वभूतरुतज्ञानम् ॥ ६-८ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

न केवलमस्य समाधिपर्यन्तस्य परिनिष्पन्नध्यानयोगस्य निरवशेषद्रव्यज्ञानक्रियाप्रमलयात्मकमुक्तिरेव फलमपि त्वणिमादि-सिद्धयोऽपीत्याह । जितेन्द्रियस्येति । युक्तस्य स्थिरचित्तस्य तत्र हेतुः जितबाह्येन्द्रियस्य जितप्राणस्य च मय्येव चेतो धार-यतो योगिनः सिद्धयः उपतिष्ठन्ति उपस्थिता भवन्ति केवल-मुपतिष्ठन्ते न त्वन्तरायभूतासु तासु सक्तो भवेदित्यनेन सूच्यते तदेतदग्रे स्पष्टमेव वक्ष्यति । अन्तरायान् वदन्त्येता-निति ॥ १ ॥

धारयतः सिद्धय उपतिष्ठन्तीत्युक्तं तत्र धारणाप्रकारस्तत्प्र-युक्तसिद्ध्युपस्थितिविशेषं बुभुत्सया पृच्छति । कयेति । कया कथंप्रकारयेति धारणाप्रकारप्रश्नः किंस्विदिति किंस्वित् किंस्वित्कामाः कथं वा सिद्धिरिति सिद्धिप्रकारप्रश्नः कति चेति तत्संख्याप्रश्नः ब्रूहीत्यत्र हेतुत्वेन विशिनष्टि । सिद्धिद इति । तत्तद्धारणानुगुणसिद्धिरूपफलप्रदः अतस्तत्स्वरू-पप्रकारज्ञस्त्वमेवेति भावः ॥ २ ॥

धारणाः कति चेति प्रश्नयोरुत्तरमाह । सिद्धय इति । धार-णात्मको यो योगस्तस्य पारं साकल्येन स्वरूपप्रकारादिकं गच्छन्ति जानन्तीति तथा तैः प्रोक्ताः तत्रावान्तरविभागमाह । तासामष्टादशसंख्यानां सिद्धीनां मध्येऽष्टौ सिद्धयः मत्प्रधानाः अहमेव प्रधानं मुख्यप्रयोजनभूतो यासां ताः मत्प्राप्त्येकमुख्य-प्रयोजना इत्यर्थः । अन्यास्तु दश गुणहेतव एव विषयानुभव-हेतव एव पुनः संसारहेतव इति यावत् ॥ ३ ॥

ताः स्वरूपकथनपूर्वकमुद्दिशति । अणिमेति सार्धैः पञ्चभिः । मूलस्थदेहस्याणिमाऽणुत्वं सूक्ष्मत्वमिति यावत् महिमा महत्त्वं मूर्त्तेः सूक्ष्मतापत्त्या सूक्ष्मवस्तुप्रवेशसामर्थ्यप्रापिका तथा महद्रूपोऽपि तथा महत्त्वापत्तिर्महिमेत्यर्थः लघिमा लघु-रूपोऽपि तथा लघुत्वापत्तिः प्राप्तिर्नाम सिद्धिः सर्वप्राणिना-मिन्द्रियैः सह तत्तदिन्द्रियसम्बन्धरूपा तत्तदधिष्ठातृदेवतारूपेण सम्बन्धरूपेति केचित् प्राकाम्यमिति श्रुतेषु पारलौकिकेषु दृष्टेषु

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

दर्शनयोग्येऽत्रापि दृष्टादृष्टार्थव्यापारेष्वन्येरूपोऽतिशयितरूपं प्राकाम्यं पञ्चमी सिद्धिरित्यर्थः । ईशित्वं शक्तिप्रेरणं सर्वविषयकस्वपरसामर्थ्यापादनमीशित्वं नाम षष्ठी सिद्धिरित्यर्थः ॥ ४ ॥

विषयभोगेऽप्यसङ्गो वशित्वं सप्तमी सिद्धिरित्यर्थः । यत्कामस्तदवस्यति । यद्यत्र सुखे कामः अवश्यत्यवसानं वयं प्राप्नोति । समुद्रे विप्रुडिव तत्सुखमष्टमी सिद्धिरित्यर्थः । यद्यप्यमरकोशे अणिमा महिमा चैव गरिमा लघिमेति गरिमा सिद्धिस्तृतीया सिद्धिरुक्ता भगवता तु गरिमाणमनुक्त्वा निरतिशयसुखमष्टमी सिद्धिरुक्ता तथापि भक्तुर्वैलक्षण्याद्भगवदुक्तमेव ग्राह्यं हे सौम्य । एता अष्टौ सिद्धयः औत्पत्तिकाः अग्नेरूर्ध्वज्वलनमिव वायोस्तिर्यग्गमनमिव निष्पन्नसमाधियोगपर्यन्तयोगस्य स्वभावतः सिद्धा इत्यर्थः । अनेनासां वक्ष्यमाणमुक्त्यन्तरायत्वमिति सूचितं तेन तासामष्टौ मत्प्रधाना इत्युक्त्यात्मप्राधान्यं स्पष्टीकृतम् ॥ ५ ॥

अथ गुणहेतून् दश सिद्धीराह । अनूर्मिमत्त्वमिति त्रिभिः । अस्मिन् योगिनः शरीरेऽनूर्मिमत्त्वं वलीपलितादिराहित्यमशनायाद्यतीतत्वं वा दूरश्रवणं नाम दूरस्थसर्वभूतशब्दश्रवणं दूरदर्शनं नाम दूरस्थसर्ववस्तुसाक्षात्कारः मनोजवः यत्र मनस्तत्र देहस्य वेगेन गतिः कामरूपं यथाभिमताकारापत्तिः परकायप्रवेशनं मृतराजादिशरीरानुप्रवेशः तत्र कामरूपतानाम तस्यैव शरीरस्याभिमताकारान्तरापत्तिः परकायप्रवेशनं नाम देहं स्वकीयेन्द्रियैः सह परशरीरानुप्रवेश इति विभागः ॥ ६ ॥

अप्सरोभिः सह देवानां याः क्रीडाकृतास्तासामनुदर्शनं प्राप्तिः यथासङ्कल्पसंसिद्धिः सङ्कल्पानुसारिणी सिद्धिः अप्रतिहता आज्ञा गतिश्चेति दश ॥ ७ ॥

त्रिकालज्ञत्वं भूतभविष्यद्वर्तमानकालगतार्थाभिज्ञत्वम् अद्वन्द्वम् शीतोष्णादिभिरनभिभवः परचित्ताद्यभिज्ञाशब्देन तच्चेष्टादिसंग्रहः । अग्न्यादीनां स्तम्भनमपराजयः । कुतश्चिदपि पराजयराहित्यम् ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

परं ज्ञानफलमुक्तमेव न किन्त्वणिमादिसिद्धिरप्यैहिकीत्येतदस्मिन्नध्याये निरूपयति । तत्रादौ नापृष्टः कस्यचिद्ब्रूयादित्यतः प्रश्नबीजमुत्थापयति । जितेन्द्रियस्येति ॥ १ ॥

सिद्धय इति शुश्रुवानुद्धवः कीदृश्या धारणया का का सिद्धिः ताश्च कति संख्याताः सन्तीति पृच्छति । कयेति ॥ २ ॥

कतिवेति प्रश्नं परिहरति । सिद्धय इति । धारणायोगपारगैः धारणाख्ययोगपारङ्गतैरनुत्पन्नज्ञानस्यापि तत्तद्योगसिद्धये तत्तदधिष्ठानगततत्तद्भगवद्रूपविशेषानुस्मरणं धारणेत्युच्यते तस्मात् सिद्धीनां मुख्यतो ज्ञानफलत्वेऽपि धारणाफलत्वमुपचारोऽन्यथानुत्पन्नज्ञानस्यापि धारणामात्रेण तत्सिद्धिप्रसङ्ग इति अष्टादशा तु भगवत्कल्पमायाद्येनव इति च तासामष्टादशसिद्धीनां मूलभूता अष्टौ सिद्धयो मय्येव प्रधाना मुख्या अन्येषु देवेषूपचरिता इति मत्प्रज्ञानाः—

सर्वाधिका अणिमाद्याः विष्णोरनन्यस्य कस्य चित् ।
स्वाभाविका विरिञ्चस्य मत्प्रसादात्पराधिका इति ॥

स्वाभाव्येष्विति वचनात् ता एव अष्टैव गुणभूतानामनूर्मिमत्त्वाद्यानामपि हेतवः—

निःसीमाष्टगुणाभावात्सिद्धयोऽष्टादश स्मृताः ।
देवेभ्योऽन्यत्र देवानां सिद्धयोऽष्टैव सम्मताः ॥

इति ॥ ३ ॥

कास्ता अष्टेति तत्राह । अणिमेत्यादिना मूर्तेः स्वरूपस्याणिमादिसिद्धिः इन्द्रियैरन्येन्द्रियैर्विषयप्राप्तिः श्रुतेषु दृष्टेषु वस्तुषु प्राकाश्यशक्तिप्रेरणमीशितृत्वं गुणेष्वसङ्ग एव वशित्वं यत्कामो यस्य स यत्कामस्तत्काममवाप्स्यति इति यत्प्राकाम्यम्—

यादृशानन्दकामः स्यात्तादृशानन्दसम्भवः ।
भोगान्विनैव प्राकाम्यमणिमादेः पृथक्पत इति

वचनात् ॥ ४—५ ॥

इदानीमष्टादश सिद्धीरुद्दिशति । अनूर्मिमत्त्वमित्यादिना । अणिमामहिमालघिमाप्राप्तिप्राकाश्येशितावशिताप्राकाम्यमित्यष्टमहासिद्धयः अनूर्मिमत्त्वं दूरश्रवणम् दूरदर्शनं मनोजवः कामरूपं परकायप्रवेशनम्—

स्वच्छन्दमृत्युर्देवानां सह क्रीडानुदर्शनम् ।
यथासङ्कल्पसंसिद्धिराज्ञाप्रतिहता गतिः ।

अद्वन्द्वं त्रिकालज्ञत्वं परचित्ताद्यभिज्ञता अग्निस्तम्भः अर्कस्तम्भः जलस्तम्भो विषादिस्तम्भः अत्रादिशब्देन शस्त्रास्त्रनखदन्तताडनशापादिभिरप्रतिहतिर्गृहीता इयं सम्भूय सप्तदशी सिद्धिः अपराजय इत्यष्टादशसिद्धयः अणिमाद्यष्टसिद्धयो जाताः एवमुभये सम्भूय षड्विंशाः गरिम्णा सह सप्तविंशाः अथान्तर्भावभेदेनाष्टादशसिद्धयोऽष्टसिद्धय इति केषाञ्चित्पक्षः तथाहि । अनूर्मिमत्त्वस्य प्राकाम्यान्तर्गतत्वेन ते उभे एका दूरश्रवणादूरदर्शनत्रिकालज्ञत्वपरचित्ताद्यभिज्ञतानां प्राकाश्यान्तर्भावेन चतस्र एका कामरूपत्वस्याणिमामहिमालघिमान्तर्भावेनैका अग्निस्तम्भार्कस्तम्भजलस्तम्भविषस्तम्भशस्त्रास्त्रशापादिस्तम्भानामीशित्ववशित्वान्तर्भावेन पञ्च अपराजयोऽपि ईशित्वान्तर्गत इति षट् मनोजवकामरूपपरकायप्रवेशस्वच्छन्दमृत्यूनां देवैः सहितसत्क्रीडानुदर्शनाज्ञाप्रतिहतानां प्राप्त्यन्तर्भावेन षट् अत्र कामरूपत्वस्य द्विवारोक्तिः रूपभेदेन न विरुध्यते—

गरिम्णः सैव हेतुः स्यान्महिमा हेतुभावतः ।
प्रायोऽष्टसिद्धिकथनेऽथतो न पृथगुच्यत इति ॥
प्राप्तिप्राकाश्ययोश्चापि धारणैकापि सम्भवेत् ।
अत ऐक्येन तावुक्त्वा गरिमाणं पृथक् क्वचित् इति ॥
मूलभूतास्तु सिद्धीनां देवानामष्टसिद्धयः ।
सर्वसिद्धिप्रधानास्तास्तज्जा अष्टादश स्मृताः ॥
अष्टस्वन्तर्गतास्ताश्च तदपेक्षतयाल्पका इति ।
अनूर्मिमत्त्वसिद्धिस्तु प्राकाम्यान्तर्गता स्मृता ।
दूरश्रुतिर्दूरदृष्टिस्त्रिकालज्ञत्वमेव च ॥
परचित्ताद्यभिज्ञानं प्राकाश्यान्तर्गतानि च ।
अणिमादित्रयान्तश्च कामरूपत्वमिष्यते ॥
अग्न्यर्काम्बुविषादीनां प्रतिष्टम्भो वशित्वगः ।

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

सिद्धयो मूर्त्तेर्देहस्य इन्द्रियैः स्वेन्द्रियैः सर्वेन्द्रिय-प्रविष्टैरभीष्टसर्वविषयप्राप्तिरिति प्राप्तिर्नाम सिद्धिः श्रुतेषु दर्शनायोग्येषु दृष्टेषु दर्शनयोग्येष्वपि सर्वेषु भूविवरादिपिहि-तेष्वपि भोगदर्शनसामर्थ्यं प्राकाम्यं नामासिद्धिः शक्तिप्रेरणं जीवेषु स्वशक्तिसञ्चारणमीशितानामसिद्धिः ॥ ४ ॥

गुणेष्वसंगः विषयभोगेऽप्यनासक्तिर्वशिता नाम सिद्धिः यत्कामः यद्यत् सुखं कामयते तत्तदवस्यति तस्य सीमानं प्राप्नोतीत्यष्टमी कामावसायिता नाम सिद्धिः औत्पत्तिकाः स्वाभाविक्यः निरतिशयाश्च ॥ ५ ॥

गुणनिबन्धना दश सिद्धीराह । अनूर्मिमत्त्वं क्षुत्पिपासा-दिषडूर्मिराहित्यं दूरश्रवणदर्शनमिति दूरदर्शनं दूरश्रवणमिति द्वे सिद्धी इत्येके एकैवेत्यन्ये मनोजवः मनोवेगेन देहस्य गतिः कामरूपं कामितरूपप्राप्तिः ॥ ६ ॥

अप्सरोभिः सह देवानां याः क्रीडास्तासामनुदर्शनं प्राप्तिः यथा सङ्कल्पसंसिद्धिः सङ्कल्पितपदार्थप्राप्तिः । इयं किञ्चित् कायिकादिप्रयत्नसापेक्षेति कामावसायितातो भेदः कस्यचित् अप्रतिहता आज्ञा गतिश्चेत्येकैव सिद्धिरित्येके । अप्रतिहताज्ञत्व-मप्रतिहतगतित्वमिति द्वे सिद्धी इत्यपरे ॥ ७ ॥

क्षुद्रसिद्धीश्च पञ्चाह । त्रिकालज्ञत्वमिति । अद्वन्द्वं शीतो-ष्णाद्यनभिभवः अग्न्यादीनां स्तम्भनम् ॥ ८ ॥ ९ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सर्वासामपि सिद्धीनां साध्यसाधनयोः प्रभुः ।
श्रीकृष्ण आत्मनात्मा चेति पञ्चदशे स्थितम् ॥

ध्यानेन मोक्षप्रतिबन्धकनानाभ्रमनिवृत्तिः पूर्वाध्यायान्ते उक्ता पञ्चदशे तु नानोपायसाध्याः सिद्धयोऽपि ध्यानेनैव लभ्यन्ते इत्येवं ध्यानमाहात्म्यमुच्यते । जितेन्द्रियस्येति ॥ १ ॥

काश्चित् किंनामा कथं वा कीदृशी सिद्धिः कया धारणा-विशेषणा जायते कति संख्याकाः वा सिद्धयः सन्ति हे अच्युत ! नित्यगुणस्वरूपविग्रह यतो भवानेव योगिनां सिद्धिदः अतो ब्रूहि ॥ २ ॥

सिद्धयो धारणाश्च योगपारगैरष्टादश प्रोक्ताः तासां मध्ये अष्टौ मत्प्रधानाः मदंप्रधानाः स्वाभाविक्यः याभिः ताः योगिषु तु अपरिच्छिन्नत्वेन ताः लेशमात्रेण इति प्रकरणाज्ज्ञेयम् गुणहेतवः गुणो योगगुणो हेतुः साधको यासां ताः साकल्येन पुरुषप्रयत्न-साध्याः दशैव ॥ ३ ॥

एताः स्वरूपतो दर्शयति । अणिमेति सार्द्धैः पञ्चभिः । मूर्त्तेः अणिमा अणुत्वम् महिमा महत्त्वाप्तिः लघिमा लघुत्वाप्तिः प्राणिनामिन्द्रियैः सह प्राप्तिः सम्बन्धः श्रुतेषु आमुष्मिकेषु दृष्टेष्वैहिकेषु प्राकाम्यं दर्शनसामर्थ्यम् शक्तिप्रेरणं सर्वपदा-र्थसामर्थ्यप्रबोधनमीशिता ईशित्वम् ॥ ४ ॥

गुणेष्वसङ्गो वशिता वशित्वं यत्कामः तदवस्यति तदव-सानं प्राप्नोति इत्यवस्यतिः सिद्धिः एताः अष्टौ मे मदीया एव यतः औत्पत्तिकाः स्वाभाविक्यः निरतिशयाश्च साकल्येन पुरुषप्रयत्नसाध्या नेत्यर्थः । किंबहुना मत्प्रधानाः सिद्धयोऽपि यथा-संभवं योगेनोपतिष्ठन्तीति तद्वर्णनाभिप्रायः ॥ ५ ॥

दश गुणहेतुसिद्धीराह । अनूर्मिमत्त्वमक्षुत्पिपासादिमत्त्वम् दूरे श्रवणं दर्शनं चेति सिद्धिद्वयम् ॥ ६ ॥

देवानां सह क्रीडायाः समाजलीलायाः अनुदर्शनमनुप्रविश्य दर्शनमित्यर्थः । यथासङ्कल्पसंसिद्धिः सङ्कल्पमनतिक्रम्य प्राप्तिः अप्रतिहता आसर्वतो गतिर्यस्याः सा आज्ञा ॥ ७ ॥

पञ्च क्षुद्रसिद्धीश्चाह । त्रिकालज्ञत्वमिति । अद्वन्द्वं शीतोष्णा-दिद्वन्द्वानभिभवः अग्न्यादीनां प्रतिष्टम्भः संस्तम्भनम् ॥ ८ ॥ ९ ॥

---

भाषा टीका ।

श्रीभगवान् उवाच ॥

जो जितेन्द्रिय है योग में युक्त है श्वासका जीतनेवाला है और मेरे में चित्तको धारण करता है उसके पास में सिद्धि बहुत उपस्थित होती हैं ॥ १ ॥

उद्धव उवाच

हे अच्युत ! आप योगियों के सिद्धि देनेवाले हो सो मेरेसे यह कहिये कि सिद्धि कितनी हैं कौन सिद्धि किस प्रकारकी है और किस धारणा से कौन सिद्धि प्राप्तहो सकती है ॥ २ ॥

श्रीभगवान् उवाच

धारणाके योग के जाननेवाले पुरुषों ने सिद्धि अठारा प्रकारकी कहीहैं तिन में आठ तो मेरी स्वाभाविक सिद्धि हैं और दश तो गुणोंके हेतुसे होती हैं जो गुणों से संसार में लगाने वाली हैं ॥ ३ ॥

छोटा होजाना, बडा होजाना ये दो सिद्धि शरीरकी हैं तैसे हलका होजाना और इन्द्रियों से छिपीहुई वस्तुको जान जाना सुनी देखी सब वस्तुओं में इच्छा से व्यवहार करना शक्ति से सबकी प्रेरणा करदेना ये सिद्धि क्रमसे अणिमा महिमा, गरिमा, लघिमा, प्राप्ति, प्राकाम्य, ईशित्व इन नामों से कही जाती हैं ॥ ४ ॥

गुणों में आसक्ति नहीं होना इसका नाम वशिता सिद्धि है इनसे जो कामना करै सो होजाता है हे सौम्य ! उद्धवजी ये आठ हमारी स्वाभाविकी सिद्धि हैं ॥ ५ ॥

और इस शरीर में भूख प्यास नहीं लगना दूरकी बात को सुनलेना देखलेना मनसरीखा वेग होजाना इच्छाका रूप धारण करना दूसरेके शरीर में प्रवेश होजाना ॥ ६ ॥

इच्छा से मृत्युहोना देव अप्सरों के साथ क्रीडादेखना जैसा सङ्कल्प तैसी सिद्धि होजाना अपनी आज्ञा तथा गति कहीं नहीं रुकना ॥ ७ ॥

तीनों कालकी बातों को जानजाना शीतोष्णादिकोंका नहीं लगना दूसरेके मनकी बातको जानजाना अग्नि सूर्य जल विष इनकी शक्तिका रोकना किसी से पराजय नहीं होना ॥ ८ ॥

एताश्चोद्देशतः प्रोक्ता योगधारणसिद्धयः ।
यया धारणया या स्याद्यथा वा स्यान्निबोध मे ॥ ९ ॥
भूतसूक्ष्मात्मनि मयि तन्मात्रं धारयन्मनः ।
अणिमानमवाप्नोति तन्मात्रोपासको मम १०
महत्यात्मन् मयि परे यथासंस्थं मनो दधत् ।
महिमानमवाप्नोति भूतानां च पृथक् पृथक् ॥ ११ ॥
परमाणुमये चित्तं भूतानां मयि रञ्जयन् ।
कालसूक्ष्मार्थतां योगी लघिमानमवाप्नुयात् ॥ १२ ॥
धारयन्मय्यहंतत्त्वे मनो वैकारिकेऽखिलम् ।
सर्वेन्द्रियाणामात्मत्वं प्राप्तिं प्राप्नोति मन्मनाः ॥ १३ ॥
महत्यात्मनि यः सूत्रे धारयेन्मयि मानसम् ।
प्राकाम्यं पारमेष्ठ्यं मे विन्दतेऽव्यक्तजन्मनः ॥ १४ ॥
विष्णौ त्र्यधीश्वरे चित्तं धारयेत्कालविग्रहे ।
स ईशित्वमवाप्नोति क्षेत्रक्षेत्रज्ञचोदनाम् ॥ १५ ॥
नारायणे तुरीयाख्ये भगवच्छब्दशब्दिते ।
मनो मय्यादधद्योगी मद्धर्मा वशितामियात् ॥ १६ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

तत्तद्धारणाभिः सह विशेषतो निरूपयति । यथेति गाथ-ष्टमासि ॥ ९ ॥

भूतसूक्ष्मोपाधौ मयि तन्मात्रं भूतसूक्ष्माकारम् स तन्मात्रोपासकः मम महीयसमणिमानम् ॥ १० ॥

ज्ञानशक्तिमहत्तत्त्वोपाधौ मयि यथासंस्थं महत्तत्त्वाकारम् भूतानां चेति । आकाशादिभूतोपाधौ च मयि मनो धारयंस्तत्तद्भूतमहिमानं प्राप्नोतीत्यर्थः ॥ ११ ॥

वाय्वादिभूतानां ये परमाणवस्तन्मये तदुपाधौ मयि चित्तं रञ्जयन् योगी कालसूक्ष्मार्थतां कालपरमाणुरूपतामिति लघुत्वविवरणम् तदुक्तम् स कालः परमाणुर्वै यो भुङ्क्ते परमाणुताम् इति ॥ १२ ॥

वैकारिकाहङ्कारोपाधौ मयि अखिलमेकाग्रम् आत्मत्वमधिष्ठातृत्वम् अत्र हेतुः मन्मनाः मयि मनो धारणाप्रभावादेवं भवति नात्रातीव हेतुरनुसन्धेय इतिभावः । एवं सर्वत्रानुभावेन मद्योगबलमाश्रय इत्यादिषु द्रष्टव्यम् ॥ १३ ॥

क्रियाशक्तिप्रधानं महत्तत्त्वमेव सूत्रं तदुपाधौ मयि स मे पारमेष्ठ्यं सर्वोत्कृष्टं प्राकाम्यं विन्दते कथम्भूतस्य अव्यक्ताज्जन्म यस्य तस्य सूत्रस्य तदुपाधेर्ममेत्यर्थः ॥ १४ ॥

त्र्यधीश्वरे त्रिगुणमायानियन्तरि अत एव कालविग्रहे कालकचितृरूपेऽन्तर्यामिणि ईशित्वं विशिनष्टि । क्षेत्रज्ञानां जीवानां क्षेत्राणां तदुपाधीनां च चोदनां प्रेरणं नतु विश्वसृष्ट्यादिकर्तृत्वलक्षणमित्यर्थः ॥ १५ ॥

तुरीयाख्ये—
विराड् हिरण्यगर्भश्च कारणं चेत्युपाधयः ।
ईशस्य यत्त्रिभिर्हीनं तुरीयं तत्पदं विदुः ॥ इत्येवं लक्षणे
'ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः ।
ज्ञानवैराग्ययोश्चैव षण्णां भग इतीङ्गना' ॥
तद्वति भगवच्छब्दशब्दिते ॥ १६ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

उद्देशतः लक्षणपूर्वकसंज्ञामात्रतः । यथेत्युक्तम् । यथेति तत्साधनधारणाप्रश्नोत्तरम् । यथेति तत्प्रकारप्रश्नोत्तरम् ॥ ९ ॥

महीयसमणिमानमित्यणिम्नो महीयस्त्वमेकांशेनैव स्वयं "जगद्व्यापारवर्जम्" इति न्यायेन सर्वथा तत्प्राप्त्यभावात् ॥ १० ॥

महिमानं तादृशज्ञानशक्त्यवच्छिन्नमूर्तित्वम् । आकाशादिभूतोपाधौ आकाशादिशरीरके मयि तत्तद्भूतमहिमानं तत्तद्भूतशक्त्यवच्छिन्नमूर्तित्वम् आकाशादिभूतोपधौ चेत्यध्याहारादित्यर्थ इत्युक्तम् ॥ ११ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

वाय्वादिभूतानां ये परमाणवः भारशून्यपरमसूक्ष्मांशास्तदुपाधौ तत्तत्पार्थिवे मयि चित्तं रञ्जयन् योगी लघिमानं भारशून्यत्वमवाप्नोति । कालपरमाणूपाधिरूपतामिति । कालस्य यः परमाणुरूपोपाधिः परमसूक्ष्मदेशावच्छिन्नाकाशस्तद्रूपताम् । तद्वदतिलघुतामिति भारशून्यत्वपक्षस्य लघुत्वस्य विवरणम् । कालसूक्ष्मार्थतामिति पाठेऽर्थशब्द उपाधिपरः आत्मेति पाठे तु आत्मा देह उपाधिरित्यर्थः ॥ १२ ॥

अत्र इन्द्रियाधिष्ठातृत्वप्राप्तौ । एवं भवति इन्द्रियाधिष्ठातृत्वं भवति । अत्र प्राप्तिलक्षणसिद्धौ मद्धारणाशून्योऽपि हेतुतानुसन्धेयः किन्तु मद्धारणैवात्र हेतुरित्यर्थः ॥ १३ ॥

प्राकाम्यमिच्छानभिघातः दृष्टादृष्टभोगप्राप्तिसामर्थ्यम् ॥ १४ ॥

तदुपाधीनां जीवोपाधीनां शरीराणां नटित्वात् "जगद्व्यापारवर्जम्" इति न्यायात् ॥ १५ ॥

वशिता वशित्वं वशीकारवैराग्यम् ऐहिकामुष्मिकविषयजिहासाम् । तदुक्तं पातञ्जले । "दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम्" इति । विराट् स्थूलोपाधिः हिरण्यगर्भः सूक्ष्मोपाधिः कारणमविद्या । ऐश्वर्यस्येति समग्रस्येति सर्वशान्वितम् । त्रिपात् पादत्रिभूत्यधिष्ठातृत्वमैश्वर्यम् । वीर्यं पराक्रमः यशः सत्कीर्तिः । श्रीः सौन्दर्यं सम्पत्तिश्च । ज्ञानं स्वविषयं परविषयं च । वैराग्यं प्राकृतभोगसम्बन्धाभावः इच्छा लक्षणा ॥ १६ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ॥

तन्मात्रं तन्मात्रविषयं विषयान्तरनिवृत्तं तन्मात्रोपासकः मच्छरीरभूतभूतसूक्ष्मोपासकः ॥ १० ॥

भूतानां पृथिव्यादिस्थूलभूतानामात्मनि मयीत्यन्वयः ॥ ११ ॥

परमाणुमये भूतानां सूक्ष्मावयवव्यापिनां कालसूक्ष्मात्मतां सूक्ष्मकालावस्थितत्वं च ध्यायन्निति शेषः ॥ १२ ॥

इन्द्रियाणामात्मत्वमिन्द्रियाणि दूरदेशव्यापीनि भवन्ति तं भावं तथाभावं तदेव प्राप्तिः ॥ १३ ॥

पारमेष्ठ्यं परमेष्ठिविरिञ्चिसीश्वरेण सृष्ट्यादिनिर्वाहकत्वमिति ॥ १४–१६ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

स्वरूपकथनगर्भमुद्देशं निगमयति । एताश्चेति । अथ ता एव सिद्धीस्तत्साधनभूतधारणाभिः सह विशेषतो निरूपयितुमनुष्ठानमुत्पादयति । यथेत्यर्धेन ॥ ९ ॥

निरूपयति । भूतसूक्ष्मतात्मनीत्यादिना उपासकस्य माकमेवमित्यतः श्लोकेन । यः भूतसूक्ष्मात्मनि भूतसूक्ष्मशरीरके मयि । तन्मात्रं तावन्मात्रविषयं विषयान्तरनिवृत्तमित्यर्थः । तत् मनो धारयेत्सः अयं तन्मात्रोपासकः मच्छरीरभूतसूक्ष्ममात्रोपासकः अणिमानमवाप्नुयात् ॥ १० ॥

महतीति । महति महत्तत्त्वशरीरके परे आत्मन् परमात्मानं मयि यथासंख्यं विषयान्तरेभ्यो निवृत्तं सम्यक् स्थितं यथा स्यात्तथा मनो रञ्जयन् भूतानामाकाशादीनां पृथक् पृथग्यथा स्व योगमहिमा तथा तं प्राप्नोतीत्यर्थः ॥ ११ ॥

परमाणुमय इति । भूतानां परमाणुमये सूक्ष्मावयवव्यापिनि मयि चित्तं रञ्जयन्नासञ्जयन् कालसूक्ष्मार्थतां स कालः परमाणुर्वै यो भुङ्क्ते परमाणुतामित्युक्तविधः सूक्ष्मकालः । स एवार्थो वस्तु तस्य भावस्तत्ता तां सूक्ष्मकालावस्थितत्वं च ध्यायन्निति शेषः लघिमानमवाप्नुयात् ॥ १२ ॥

धारयन्निति । वैकारिकेऽहंतत्त्वे । वैकारिकाहङ्कारशरीरके मय्यखिलमेकाग्रं यथा तथा मनो धारयेत् एवं मय्येव मनो यस्य स मन्मनाः सर्वेन्द्रियाणां सर्वेषां प्राणिनां यानीन्द्रियाणि तेषामात्मा स्वभावः तत्तद्विषयव्याप्तिस्वभावस्तस्य भावस्तत्त्वमाधिष्ठातृत्वं वा प्राप्नोति ॥ १३ ॥

सूत्रे बहुमणीनां सूत्रे इव स्वकार्याणां बहूनामाधारभूते महति महत्तत्त्वशरीरके मयि मानसं धारयेत् सः प्राकाश्यं इष्टार्थव्यापारोपयुक्तज्ञानातिशयं परमेष्ठिनो भावः पारमेष्ठ्यम् परमेष्ठिन इवान्येभ्योऽतिशयितव्यापारक्षमत्वं चेत्यर्थः । अव्यक्तात्प्रधानाज्जन्म यस्य तस्मान्महत्तत्त्वान्मद्विशेषणत्वेनोपास्यमानाच्छरीरिणं ते इत्यर्थः । केवलमहत्तत्त्वशरीरकभगवद्विषयधारणायाऽणिमत्वप्राप्तिरुक्ता अत्र तु सूत्रात्मकजन्मत्वादिगुणविशेषयुक्तमहत्तत्त्वशरीरकभगवद्विषयकधारणया प्राकाश्यलाभ उच्यते ततश्च गुणविशेषयोगतद्भावकृतधारणाभेदात्सिद्धिभेद इत्यवगन्तव्यम् ॥ १४ ॥

विष्णाविति विष्णौ सर्वव्यापके त्र्यधीश्वरे सृष्टिस्थित्यादिव्यापारत्रयनिर्वाहके कालशरीरके मयि यश्चित्तं धारयेत् स ईशित्वमवाप्नोति ईश्वरत्वं विन्दतीति । क्षेत्रेति । शक्तिप्रेरणमीशत्वमुक्तं सर्वेषां क्षेत्रक्षेत्रज्ञानां देहानामात्मनां च चोदनां प्रेरणां सर्वविषयकसामर्थ्योपादानमित्यर्थः ॥ १५ ॥

नारायण इति तुरीयाख्ये जागरस्वप्नसुषुप्त्यवस्थात्रयरहितनुरीयशब्दवाच्ये परिशुद्धजीवात्मस्वरूपशरीरके नारायणे जीवानां प्राप्ये प्रापके आधारभूते च भगवच्छब्दवाच्ये ज्ञानशक्तिबलैश्वर्यवीर्यतेजोरूपषड्गुणपूर्णे मयि मनः मद्भावं धारयन् योगी मद्धर्मी ममेव धर्मो यस्य सः वशितां गुणेष्वसक्तरूपामित्यात्माप्नुयात् यथाहं गुणेष्वसक्तोऽस्मि तथैव मयि चेतो धारयन्नपि यातीत्यर्थः ॥ १६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मनोयोगेन यङ्कारणं ध्यानं तेन जायमानाः सिद्धयो योगधारणासिद्धयः सङ्ख्याविषयं प्रश्नं परिहृत्य इदानीं कया धारणया इत्यादिप्रश्नं परिहरति । यथेति ॥ ९ ॥

तत्र तावत्प्रथमोद्दिष्टाणिमासिद्धिप्रापकं ध्यानप्रकारमाह । भूतसूक्ष्मेति । भूतसूक्ष्माणां पार्थिवादिपरमाणूनामात्मनि नियामके परमाणुषु स्थिते मयि तन्मात्रपरिमितत्वेन मनो धारयन् स्वायत्ताणिमानमेवाप्नोति । अनेन यद्यदस्तूपमितं रूपं स्वयमपि तत्परिमितो भवतीत्युक्तं भवति—

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तन्मात्रावयवे सूक्ष्मे परमाण्वभिधानके ।
प्रत्येकमणुरूपं तु विष्णुं ध्यायन्नणुर्भवेदिति ॥

वचनात् प्रकारान्तरेणाणुत्वप्राप्तिप्रतिपत्तिमाह । तन्मात्रेति । मम तन्मात्रोपासकः तस्याकाशादिगुणस्य शब्दादेर्यत्सूक्ष्ममात्रं परिमाणं तत्परिमाणस्य मम स्वरूपस्योपासकोऽपि तत्परिमितरूपो भवतीत्यर्थः—

आकाशवत्सूक्ष्मतां यो व्यापित्वेनैव मन्यते ।
तन्मात्रव्यापिनं विष्णुश्चिन्तयन्स तथा भवेदिति ॥

वचनात् अणुत्वं च चक्षुरदृश्यत्वाणुत्वन्तु अणिमा सम्प्रकीर्तिता इत्युक्तविधं च ॥ १० ॥

व्याप्तस्य हरेरेकैकावयवध्यानं परिच्छिन्नवस्तुमहत्त्वकारणमाह । महतीति । महति व्याप्ते आत्मन् आत्मनि स्वामिनि मयि यथासंस्थं यथावस्तुपरिमाणं तथा स्थिते मनो दधत्पुरुषो महिमानं महत्त्वमवाप्नोति तदेव विशिनष्टि । भूतानामिति । अस्मात् स्थूलतां प्राप्नुवानीत्यपेक्षायां तस्मात् स्थूलतां प्राप्नोति ततोऽन्यस्मान्महत्त्वमाप्नवानीत्यपेक्षायां तस्मादिति पृथक् पृथक् भूतानां सकाशान्महत्त्वमाप्नोतीत्यर्थः ॥ परे परमात्मनि सर्वनामसंज्ञाविकल्पात् नास्त्यस्य ॥ ११ ॥

लघिमासिद्धिप्राप्तिं प्रतिपत्तिमाह । परमाणुमय इति । कालसूक्ष्मायां कालपरमाणुतामात्मके आत्मनि व्यापके तत्स्वरूपं विशिनष्टि । परमाणुमये भूतानां सकाशादतिशयेनाणुस्वरूपे मयि चित्तं रञ्जयन् अनुरक्तं कुर्वन् तदेकनिष्ठत्वेन कुर्वन् लघिमानमाप्नोति ॥ १२ ॥

प्राप्तिसिद्ध्यापादिकां धारणामाह । धारयन्निति । वैकारिके महत्तत्त्वे व्याप्ते मयि मनो धारयन्नखिलं निवृत्तबहिर्वृत्ति यथा तथा धारयन् सर्वेन्द्रियाणामात्मत्वं स्वामित्वेन स्वेच्छानियतत्वमाप्नोति । ततः किमत्राह । प्राप्तिमिति । अन्येन्द्रियैर्विषयदर्शनादिलक्षणप्राप्तिमाप्नोति अन्येन्द्रियैर्दर्शनादि यथासङ्कल्पवेगिता । प्राप्तिरित्युच्यते सद्भिरिति च सन्मना इत्यनेनान्तकाले अन्यमनस्कत्वं निवारयति ॥ १३ ॥

प्राकाश्यप्राप्तिप्रकारमुक्त्वयति । महतीति । महति महत्तत्त्वे सूत्रे मुख्यप्राणे वात्मनि व्याप्ते मयि मानसं धारयन्नव्यक्तजन्मनः अव्यक्तस्यापि विकारलक्षणस्थूलत्वापादनकर्तुर्मे प्रसादात्पारमेष्ठ्यं परमेष्ठिनो ब्रह्मणः प्रसादलभ्यं प्राणभारत्योः प्रसादाच्च सर्ववेदादिज्ञानश्रेष्ठ्यापादकं प्राकाश्यं विन्दत इत्यन्वयः—

प्राकाश्यं सर्ववेदादिज्ञानमेव विदो विदुः ।
सर्वे गुणास्तु प्राणस्य परमात्मप्रसादतः ॥
प्राणविष्णोः प्रसादेन भारत्याः सम्प्रकीर्तिताः ।
प्रसादात्तु त्रयाणां चाप्यानन्दादिः सदा गुणा इति ॥१४॥

ईशित्वप्राप्तिप्रकारमाह । विष्णाविति । परमाण्वादिरूपः कालो विग्रहः प्रतिमा यस्य स कालविग्रहः तस्मिन्नधीश्वरे अधीश्वरत्वगुणविशिष्टे अनेन यो यो गुण उपासकस्याभिलषितः तं तं गुणं तस्मिन्ननुपसंहृत्योपासनङ्कर्तव्यमित्युक्तं भवति सर्वत्राधीश्वरत्वादौ विद्यमानेऽपीत्यादि विष्णौ व्याप्ते मयि चित्तं धारयन्नीशित्वमवाप्नोति कीदृशं तत्र शरीरं स्थावरादिपदार्थसमूहो वा क्षेत्रज्ञा जीवा एषां चोदनं नियमनं यस्मात्तत् क्षेत्रज्ञचोदनं भुविस्थितैः प्राणिभिरुक्तकारकत्वं पूर्वशक्तेः कोटिगुणशक्त्युद्रेकश्चेत्युक्तमनेन ॥ १५ ॥

वशिताप्राप्त्युपायमाह । नारायण इति । नारायणे तुर्याख्ये भगवच्छब्दशब्दिते ऐश्वर्यादिषड्गुणानुपसंहृत्य मयि मन आदधद्योगी वशितामियादवाप्नोति असङ्गत्वादिलक्षणो मम धर्मो यस्य स मद्धर्मः ॥ १६ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

यथेत्यर्थकम् ॥ ६ ॥

भूतसूक्ष्मादयो वैकुण्ठादिगताः स्वरूपशक्तिविलासाः ज्ञेयाः तासामष्टावित्यादावुभयेषां भेदेनावश्यव्यवस्थाप्यत्वात् तन्मात्रोपासको ममेति पुनरुक्तेस्तदवधारणार्थत्वाच्च अणिमाभिमित्यत्रापि ममेत्यन्वयः किन्त्वणिमादिकमिदमंशेनैव ज्ञेयं "जगद्व्यापारवर्जम्" इति न्यायेन सर्वथा तद्धर्मप्राप्त्यसम्भवात् ॥ १० ॥

महिमानं तत्तच्छक्त्यलङ्कृतमूर्तित्वमित्यर्थः भूतानां चेति महत्त्वधारणायामेतदपीच्छावान्तरफलं भवतीत्यभिप्रायात् ॥ ११ ॥

भूतानां मध्ये यः परमाणुर्भारशून्याकाशपरमसूक्ष्मांशस्तदुपाधिके मयि चित्तं रञ्जयन् योगी लघिमानं भारशून्यत्वमवाप्नोति तमेव दर्शयति । कालस्य यः सूक्ष्मांशः परमाणुस्तस्यार्थं उपाधिः परमसूक्ष्मदेशावच्छिन्नाकाशः तद्रूपतां तद्वदतिलघुतामित्यर्थः । आत्मेति पाठे आत्मा देह उपाधिरित्यर्थः ॥ १२ ॥

वैकारिके शुद्धसत्त्वमये ॥ १३ ॥

अव्यक्तमिन्द्रियागम्यं जन्म प्रादुर्भावो यस्य तस्य मम यद्वा व्यक्तं जगति च प्रकटमित्यादि ॥ १४—१६ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

भूतसूक्ष्मात्मनि भूतसूक्ष्मोपाधौ मयि तन्मात्रं भूतसूक्ष्माकारं स तन्मात्रोपासकः मम मदीयमणिमानं परमाण्वाकारतां सिद्धिं यया शिलामपि प्रवेष्टुं शक्नोति ॥ १० ॥

महत्यात्मनि ज्ञानशक्तिमहत्तत्त्वोपाधौ मयि यथासंस्थं महत्तत्त्वाकारं महिमानं परममहदाकारतां यया सर्वमपि व्याप्तुं शक्नोति भूतानां चेति आकाशादिभूतोपाधौ च मयि मनो धारयन् तत्तद्रूपं महिमानं प्राप्नोतीत्यर्थः ॥ ११ ॥

परमाणुमये वाय्वादिभूतानां ये परमाणवस्तन्मये तदुपाधौ च मयि चित्तं रञ्जयन् कालसूक्ष्मार्थतां कालस्य यः सूक्ष्मांशः परमाणुः स एवार्थ उपाधिर्यस्य तत्तां तद्वदतिलघुत्वरूपं लघिमानं तदुक्तं स कालः परमाणुर्वै यो भुङ्क्ते परमाणुतामिति ॥ १२ ॥

वैकारिकाहङ्कारोपाधौ मयि अखिलमेकाग्रं सर्वेन्द्रियाणां सर्वेषामेवेन्द्रियाणामभीष्टविषयग्राहकाणामात्मत्वमात्मस्वरूपमाप्तोक्तृत्वमित्यर्थः ॥ १३ ॥

क्रियाशक्तिप्रधानं महत्तत्त्वमेव सूत्रं तदुपाधौ मयि प्राका-

**निर्गुणे ब्रह्मणि मयि धारयन् विशदं मनः ।**
**परमानन्दमाप्नोति यत्र कामोऽवसीयते ॥ १७ ॥**

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

स्वमैश्वर्यं विन्दते तदेव किम्पारमेष्ठ्यं परमेष्ठिनो भावः पारमेष्ठ्यं कथम्भूतस्य मे अव्यक्तजन्मनः अव्यक्ताज्जन्म यस्य तस्य सूत्रस्य सूत्रोपाधेरित्यर्थः ॥ १४ ॥

अधीश्वरे त्रिगुणमायानियन्तरि कालविग्रहे कालः कालयिता द्रष्टा तत्स्वरूपे ईशित्वं विशिनष्टि । क्षेत्रज्ञानां जीवानां क्षेत्राणां तदुपाधीनां च चोदनं प्रेरणं तत्र तत्र स्वशक्तिसञ्चारणमित्यर्थः ॥ १५ ॥

तुरीयाख्ये—

विराट् हिरण्यगर्भश्च कारणं चेत्युपाधयः ।
ईशस्य यत्त्रिभिर्हीनं तुरीयं तत्पदं विदुः

इत्येवं तुरीय आख्या यस्य तस्मिन्नित्यनेन भगवच्छब्दशब्दित इत्यनेन च नारायणस्य तुरीयत्वे षडैश्वर्यवत्त्वे च मनसा धार्यमाणे सत्येवेति भावः । अयमर्थः यस्य स्थूलं सूक्ष्मं चेति कार्यद्वयं नोपाधिः कारणं माया च नोपाधिः किन्तु तुर्यं सच्चिदानन्दवस्तु आख्या भाख्यागस्य आकारो यस्य तस्मिन् नारायणे स च केन शब्देनोच्यते तत्राह । भगवच्छब्दशब्दित इति । वशिता गुणेष्वसङ्गम् ॥ १६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अथ तत्तद्धारणया तां तां निरूपयत्यष्टभिः । भूतेति । भूतसूक्ष्मात्मनि भूतसूक्ष्मरूपे भूतसूक्ष्मावस्थापन्ने मयि तन्मात्रे तन्मात्रविषयं मनो धारयन् तन्मात्रोपासकः भूतसूक्ष्मरूपमात्रोपासकः मम भूतसूक्ष्मरूपिणः अणिमानं सूक्ष्मतामवाप्नोति भूतसूक्ष्मादिकार्यरूपेण स्वयमेवावस्थितस्तदैक्षत बहुस्यामित्यादिश्रुतेरतो मयीत्याद्यसंकुमूपपन्नः ॥ १० ॥

महत्त्वात्मनि मयि महत्तत्त्वरूपे मयि यथासंख्यं तन्मात्रविषयं मनो दधत् महिमानं तादृशरूपिणो मम महत्त्वमवाप्नोति परे इति विशेषणं कार्यरूपे परिच्छिन्नस्य कारणस्यैव बुद्धिः कर्तव्येति ज्ञापयति आकाशादिभूतानां च पृथक् पृथगुपासनया तत्तद्रूपिणो मे महत्त्वमवाप्नोतीत्यर्थः ॥ ११ ॥

भूतानां परमाणुमये सूक्ष्मावयवरूपे मयि मनो रञ्जयन् कालसूक्ष्मार्थतां कालस्य परमाणुरूपस्य ज्ञापयस्य सूक्ष्मो योऽर्थः ज्ञापकः भूम्यादिपरमाणुरूपस्तस्य भावस्तत्ता तां लघिमानं स कालः परमाणुर्वै यो भुङ्क्ते परमाणुतामित्यत्र दर्शितामित्यर्थः ॥ १२ ॥

वैकारिके तद्रूपत्वे वैकारिकाहङ्कारावस्थापन्ने मयि आखिलं तदेकविषयम् आत्मत्वमधिष्ठातृत्वम् ॥ १३ ॥

महत्तत्त्वकैवल्यावस्थामेतेन सूत्रमिति संज्ञा तस्मिन् पारमेष्ठ्यं परमेष्ठितुल्यं प्राकाश्यम् अव्यक्ताज्जन्म यस्य तस्य सूत्रात्मनो मम ॥ १४ ॥

एवमचेतनेषु स्वशक्तिपरिणामेषु स्वकार्येषु स्वदृष्ट्या धारणामुपदिश्य काले स्वदृष्ट्या धारणामुपदिशति । विष्णाविति । अधीश्वरत्वं विवृणोति । कालविग्रहे इति । भूतभविष्यद्वर्तमानव्यवहारनिर्वाहके कालमूर्त्तौ विष्णौ मयि क्षेत्राणां क्षेत्रज्ञानां देहदेहिनां चोदनां प्रेरणलक्षणामीशित्वमीशितामवाप्नोति ॥ १५ ॥

अथ त्वम्पदार्थे स्वदृष्ट्या धारणामुपदिशति । नारायणे इति तुरीयाख्ये तुरीयं त्रिषु सन्ततमित्येवं नामके—

उत्पत्तिं प्रलयं चैव भूतानामगतिं गतिम् ।
वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति

इति स्मृत्या भगवच्छब्देनापि शब्दिते मद्धर्मः मद्दृष्ट्यैव मम धारणालक्षणो धर्मो यस्य सः वशितामिपात् प्राप्नुयात् ॥ १६ ॥

भाषा टीका ।

यह योग धारणा की सिद्धि मैंने तुमारे आगे नाम से कही हैं अब जिस धारणा से जो सिद्धि जैसी होगी तिसको तुम मेरे से सुनो ॥ ९ ॥

भूत सूक्ष्मरूप मेरे में भूत तन्मात्रा के मन को स्थापन करै तो मेरे शरीररूप तन्मात्रा का उपासन करने वाला अणिमा सिद्धि को प्राप्त होता है ॥ १० ॥

महाभूत स्वरूप मेरे विषे यथा योग मन को स्थापन करने से अलग अलग सब भूतों की महिमा सिद्धि को प्राप्त होता है ॥ ११ ॥

सब भूतों के परमाणु स्वरूप मेरे में चित्त का रंजन करै तब योगी काल की सूक्ष्मता रूप लघिमा सिद्धि को प्राप्त होता है ॥ १२ ॥

मेरे मे मन को लगा कर सात्विक अहं तत्व रूप मेरे में अच्छे प्रकार से मनको धारणा करै तो सब प्राणि मात्र के इन्द्रियों से भोगरूप प्राप्ति नामक सिद्धि को प्राप्त होता है ॥ १३ ॥

सूत्रसंज्ञक क्रियाप्रधान महत्तत्वरूप मेरे विषे मनको धारणा करै तो अव्यक्त जन्मा सूत्रात्मा के पारमेष्ठ्य सर्वोत्तम पदवी को प्राप्त होता है ॥ १४ ॥

कालस्वरूप उत्पत्यादिलीलों के ईश विष्णु के विषे चित्त को धारणा करै तब वह योगी सब शरीर सब आत्माओं के प्रेरणा करनेकी सिद्धी को प्राप्त होता है ॥ १५ ॥

भगवतशब्द से जो कहे जाते हैं ऐसे तुरीय संज्ञक नारायण मेरे विषे मनको धारणा करै तो मेरे धर्म वाला हो जाता है औ वशिता सिद्धि को प्राप्त होता है जिससे कि सब उसके वश मे रहते हैं ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

यत्र परमानन्दरूपे सर्वाऽपि कामस्तत्तद्भूतोऽवसीयते समाप्यते तम् ॥ १७ ॥

श्वेतद्वीपपतौ चित्तं शुद्धे धर्ममये मयि ।
धारयन् श्वेततां याति षडूर्मिरहितो नरः ॥ १८ ॥
मय्याकाशात्मनि प्राणे मनसा घोषमुद्वहन् ।
तत्रोपलब्धा भूतानां हंसो वाचः शृणोत्यसौ ॥ १९ ॥
चक्षुस्त्वष्टरि संयोज्य त्वष्टारमपि चक्षुषि ।
मां तत्र मनसा ध्यायन् विश्वं पश्यति सूक्ष्मदृक् ॥ २० ॥
मनो[1] मयि सुसंयोज्य देहं तदनु वायुना ।
मद्धारणानुभावेन तत्राऽऽत्मा यत्र वै मनः ॥ २१ ॥
यदा मन उपादाय यद्यद्रूपं बुभूषति ।
तत्त[2]द्भवेन्मनोरूपं मद्योगबलमाश्रयः ॥ २२ ॥
परकायं विशन् सिद्ध आत्मानं तत्र भावयेत् ।
पिण्डं हित्वा विशेत्प्राणो वायुभूतः षडङ्घ्रिवत् ॥ २३ ॥
पार्ष्ण्याऽऽपीड्य गुदं प्राणं हृदुरःकण्ठमूर्धसु ।
आरोप्य ब्रह्मरन्ध्रेण ब्रह्म नीत्वोत्सृजेत्तनुम् ॥ २४ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

अतः परं गुणहेतुकाः सिद्धीराह । शुद्धे सत्त्वात्मके श्वेततां शुद्धरूपताम् ॥ १८ ॥

आकाशात्मा यः प्राणः समष्टिरूपस्तद्रूपे मयि मनसा घोषं नादं चिन्तयन्नसौ हंसो जीवस्तत्राऽऽकाश उपलब्धा ज्ञाता सर्वत्रस्था विचित्रा वाचः शृणोति यद्वा तत्राऽऽकाशे उपलब्धा अभिव्यक्ता या वाचस्ता दूरतः शृणोतीति ॥ १९ ॥

त्वष्टा आदित्यस्तस्मिन्नपरिच्छिन्ने चक्षुः संयोज्य तं च चक्षुषि संयोज्य तयोरुभयसंयोगे मां ध्यायन् विश्वं दूरतः पश्यति ॥ २० ॥

मनो देहं च तदनुवर्तिना वायुना सह मयि सुसंयोज्य या मद्धारणा क्रियते तस्याः प्रभावेण यत्र मनो याति तत्राऽऽत्मा देहो यातीत्यर्थः । यद्वा मनः कर्तृ आत्मानं वायुना सह देहं च मयि सुसंयोज्य यत्र याति तदनु तत्र देहो यातीति ॥ २१ ॥

मन उपादाय उपादानकारणं कृत्वा यद्यद्देवादिरूपं भवितुमिच्छति तत्तन्मनोरूपं मनसोऽभीष्टरूपं योगी भवेत् कुतः यतो मद्योगबलम् योऽहमचिन्त्यशक्तिर्नानाकारस्तस्मिन्मयि मनसो योगो धारणा तस्य बलं प्रभावः स एवाऽऽश्रयः कारणम् ॥ २२ ॥

यत्र प्रविविक्षति तत्राऽऽत्मानं चिन्तयेत् ततः पिण्डं स्वदेहं हित्वा प्राणः प्राणप्रधानलिङ्गशरीरोपाधिर्वायुभूतो बाह्यवायौ भूतः प्रविष्टस्तेन मार्गेणेत्यर्थः । षडङ्घ्रिवत् भृङ्गो यथा पुष्पात्पुष्पान्तरमनायासेन प्रविशति तद्वत् ॥ २३ ॥

पिण्डं हित्वेत्युक्तं तत्प्रकारं कथयन् स्वच्छन्दमृत्युमाह । पार्ष्ण्या पार्ष्णिना गुदं निरुध्य प्राणं प्राणोपाधिमात्मानम् ब्रह्मरन्ध्रेण मूर्धद्वारेण ब्रह्मेत्युपलक्षणं ब्रह्म वा अन्यद्वा अपेक्षितं स्थानं मनसा नीत्वा ॥ २४ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

निर्गुणे निर्विशेषब्रह्मणि । परमानन्दं ब्रह्मसायुज्यम् । तदंशभूतः ब्रह्मानन्दांशभूतः । "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती"ति श्रुतेः । एवञ्च ब्रह्मसायुज्यमपि सिद्धिमध्ये एव गणितम् ॥ १७ ॥

अतः परम् अष्टसिद्ध्यनन्तरम् । प्राकृतधर्मोपाधितयोपास्यमानत्वाद्गुणहेतुका इत्युक्तम् । धर्ममये प्राकृतसत्त्वधर्माधिष्ठातरि । शुद्धस्वरूपतां रजस्तमोऽमिश्रसत्त्वात्मताम् ॥ १८ ॥

तद्रूपे समष्टिप्राणोपाधौ मयि तत्रस्था आकाशस्था भूतानां विचित्रा विविधा वाचः शृणोतीति प्रथमोऽर्थः । तत्राकाशे ज्ञातृत्वं तद्गुणशब्दज्ञानेन प्राप्तमेवेति तत्रोपलब्धेत्याधिकमनुवादार्थत्वादितो यद्वेति । दूरत इति तु प्रकरणबलाद्व्याख्यातम् ॥ १९ ॥

अपरिच्छिन्ने नेत्रगोलकपरिच्छेदशून्ये । उभयसंयोगे त्वष्टृचक्षुःसंयोगे तन्नियन्तारं मां ध्यायन्निति ध्यानप्रभाव एव तत्र हेतुत्वेनोक्त इति ज्ञेयम् ॥ २० ॥

---

(१) मनो मनसि । (२) तत्तद्भजेत इति वि०

